॥ श्रीजिनाय नमः ॥

# ॥ श्रीलोकप्रकाशः ॥

( कर्त्ता श्रीविनयविजयजी उपाध्यायजी )



छपावी प्रसिद्ध करनार.

पंडित श्रावक हीरालाल हंसराज. ( जामनगरवाला )

संवत्—१९६७.    सने १९१०

किं. रु. १०—०—०

॥ श्रीजिनाय नमः ॥

## ॥ अथ श्रीद्रव्यलोकप्रकाशः प्रारभ्यते ॥

( कर्त्ता उपाध्यायजी श्रीविनयविजयजी महाराज )

छपावी प्रसिद्ध करनार—पंडित श्रावक हीरालाल हंसराज ( जामनगरवाळा )

### ॥ प्रथमः सर्गः ॥

ॐ नमः परमानंद—निधानाय महस्विने ॥ शंखेश्वरपुरोत्तंस—पार्श्वनाथाय तायिने ॥ १ ॥ पिपर्त्ति सर्वदा सर्व—कामितानि स्मृतोऽपि यः ॥ स कल्पद्रुमजित्पार्श्वो । भूयात्प्राणिप्रियंकरः ॥ २ ॥ पार्श्वक्रमनखाः पान्तु । दीप्रदीपांकुरश्रियः ॥ प्लुष्टप्रत्यूहशलभाः । सर्वज्ञावाऽवभासिनः ॥ ३ ॥ जयंति व्यंजिताऽशेष—वस्तवोऽस्ततमोद्रुहः ॥ गिरः सुधाकिरस्तीर्थ—कृतामज्ञानदीपिकाः ॥ ४ ॥ कृपाकटाक्षनिक्षेप—निपुणीकृतसेवका ॥ व्यक्ताव्यक्तसवित्री सा । जयति श्रुतदेवता ॥ ५ ॥ जीयाज्जगद्गुरुर्विश्व—जीवातुवचनामृतः ॥ श्रीहीरविजयः सूरि—मंदी-

यस्य गुरोर्गुरुः ॥ ६ ॥ श्रीकीर्त्तिविजयान्न सूते । श्रीकीर्त्तिविजयान्निध. ॥ शतकृत्वोऽनुज्ञ्नू-
तोऽयं । मंदः स्यादिष्टसिद्धिदः ॥ ७ ॥ अस्ति लोकस्वरूपं य-द्विप्रकीर्णं श्रुतांबुधौ ॥ परोप-
कारिभिः पूर्वं । पंडितैः पिंड्यते स्म तत् ॥ ८ ॥ ततः संक्षिप्य निक्षिप्त-माम्नायैः करणादि-
भिः ॥ संग्रहण्यादिसूत्रेषु । भूयिष्टार्थं मिताक्षर ॥ ९ ॥ सांप्रतं च क्रमात्प्रायः । प्राणिनो मं-
दमेधसः ॥ असुबोधमतस्तैस्तत् । कवित्वमिव बालकैः ॥ १० ॥ ततस्तदुपकृत्यैतन्न । मया
किंचिद्वितन्यते ॥ करणोक्त्यादिकाठिन्य-मपाकृत्य यथामति ॥ ११ ॥ अपि प्रसन्नास्ते संतु ।
संतः सर्वोपकारिणः ॥ मयि प्रवृत्ते पुण्यार्थ-मविमृश्य स्वशक्यतां ॥ १२ ॥ शिशुक्रिगृ-
हप्राया । ममेयं वचसां कला ॥ निवेशनीयास्तत्रामी । कथमर्था द्विपोपमाः ॥ १३ ॥ श्री-
गुरूणां प्रसन्नाना-मचिंत्यो महिमाथवा ॥ तेजःप्रज्ञावादादर्शे । किं न मांति धराधराः ॥
॥ १४ ॥ संक्षिप्ताः संग्रहाः प्राच्या-यथा ते सुपठा मुखे ॥ तथा सविस्तरत्वेन । सुबोधो भ-
वतादयं ॥ १५ ॥ लोकप्रकाशनामानं । ग्रंथमेनं विचक्षणाः ॥ आद्रियध्वं जिनप्रोक्त-विश्वरू-
पनिरूपकं ॥ १६ ॥ प्राप्यानुशासनमिदं समुपक्रमेऽह-मैदयुगीनविहरन्न गुरुगौतमस्य ॥ श्री-

मत्तपागणपतेर्विजयादिदेव–सूरीशितुर्विजयसिंहमुनीशितुश्च ॥ १७ ॥

मानैरंगुलयोजन–रज्जूनां सागरस्य पल्यस्य ॥ संख्याऽसंख्यानंतै–रुपयोगोऽस्तीह यद्भूयान्–आर्या ॥ १८ ॥ ततः प्रथमतस्तेषां । स्वरूपं किंचिदुच्यते ॥ तत्राप्यादावंगुलानां । मानं वक्ष्ये त्रिधा च तत् ॥ १९ ॥ उत्सेधाख्यं प्रमाणाख्य–मात्माख्यं चेति तत्र च ॥ उत्सेधात्क्रमतो वृद्धे–र्जातमुत्सेधमंगुलं ॥ २० ॥ तथाहि–द्विविधः परमाणुः स्यात् । सूक्ष्मश्च व्यावहारिकः ॥ अनंतैरणुभिः सूक्ष्मै–रेकोऽणुर्व्यावहारिकः ॥ २१ ॥ सोऽपि तीव्रेण शस्त्रेण । छिधा कर्त्तुं न शक्यते ॥ एवं सर्वप्रमाणाना–मादिमाहुर्मुनीश्वराः ॥ २२ ॥ व्यवहारनयेनैव । परमाणुरयं भवेत् ॥ स्कंधोऽनंताणुको जात–सूक्ष्मत्वो निश्चयात्पुनः ॥ २३ ॥ अनंतव्यवहाराणु–निष्पन्नोत्श्लक्ष्णश्लक्ष्णिका । निष्पद्यते पुनः श्लक्ष्ण–श्लक्ष्णिका ताभिरष्टभिः ॥२४॥

❀ ॥ अयं भगवत्याद्यभिप्रायो, जीवसमाससूत्रे च–परमाणूयअणंता–सहिया उसहसहिया एक्का ॥ साणंतगुणा संती । ससहिया सोणु ववहारी ॥–आगमे चेयं पूर्वस्याः सकाशादनेकस्थानेष्वष्टगुणैव निर्णीता, अनेन त्वनंतगुणा कुतोऽपि लिखितेति केवलीन एव वे-

तार इति तद्वृत्तौ ॥ ❀

ताभिरष्टाभिरेकः स्या–दूर्ध्वरेणुर्जिनोदितः ॥ अष्टोर्ध्वरेणुनिष्पन्न–स्त्रसरेणुरुदीरितः ॥२५॥
त्रसरेणुभिरष्टाभि–रेकः स्याद्रथरेणुकः ॥ अष्टभिस्तैर्भवेदेकं । केशाग्रं कुरुयुग्मिनां ॥ २६ ॥
ततोऽष्टघ्नं हरिवर्ष—रम्यकक्षेत्रभूस्पृशां ॥ ततोऽष्टघ्नं हैमवत—हैरण्यवतयुग्मिनां ॥ २७ ॥
तस्मादष्टगुणस्थूलं । वालस्याग्रमुदीरितं ॥ पूर्वापरविदेहेषु । नृणां क्षेत्रानुभावतः ॥ २८ ॥
स्थूलमष्टगुणं चास्मा–द्भरतैरवतांगिनां ॥ अष्टभिस्तैश्च वालाग्रै–र्लिक्षामानं भवेदिह ॥ २९ ॥

❀ ॥ अयं तावत्संग्रहणीबृहद्वृत्तिप्रवचनसारोद्धारवृत्त्याद्यभिप्रायः, जंबूद्वीपप्रज्ञप्तिसूत्रवृत्त्यादिषु तु–अष्टभिः पूर्वापरविदेहनरकेशाग्रैरेव लिक्षामानमुक्तमिति ज्ञेयं ॥ ❀

लिक्षाष्टकमितायूका । भवेद्यूकाभिरष्टभिः ॥ यवमध्यं ततोऽष्टाभि–स्तैः स्यादोत्सेधमं-
गुलं ॥ ३० ॥ चत्वार्युत्सेधांगुलानां । शतान्यायामतो मतं ॥ तत्सार्द्धद्व्यंगुलव्यासं । प्रमाणां-
गुलमिष्यते ॥ ३१ ॥ प्रमाणं भरतश्चक्री । युगादौ वादिमो जिनः ॥ तदंगुलमिदं यत्तत् । प्र-
माणांगुलमुच्यते ॥ ३२ ॥ यदुत्सेधांगुलैः पंच–धनुःशतसमुच्छ्रितः ॥ आत्मांगुलेन चाद्योऽर्ह-

न् । विंशांगुलशतोन्मितः ॥ ३३ ॥ ततः षण्णवतिघ्नेषु । धनुःशतेषु पंचसु ॥ (अंगु० ४८०००)
शतेन विंशत्याढ्येन । भक्तेष्वाप्ता चतुःशती ॥ ३४ ॥ यच्च काप्युक्तमौत्सेधा-त्सहस्रगुणमेव त-
त् ॥ तदेकांगुलविष्कम्भ-दीर्घश्रेणिविवक्षया ॥ ३५ ॥ यच्चतुःशतदीर्घायाः-सार्द्धद्व्यंगुलविस्तृ-
तेः ॥ स्यादेकांगुलविस्तारा । सहस्रांगुलदीर्घता ॥ ३६ ॥ दृष्टांतश्चात्र—चतुरंगुलदीर्घायाः-
सार्द्धद्व्यंगुलविस्तृतेः ॥ पट्ट्या यथांगुलव्यास-श्रीरो दैर्घ्ये दशांगुलः ॥ ३७ ॥ वस्तुतः पुनरौ-
त्सेधा-त्सार्द्धद्विगुणविस्तृतं । चतुःशतगुणं दैर्घ्ये । प्रमाणांगुलमाश्रितं ॥ ३८ ॥ एतच्च भर-
तादीना-मात्मांगुलतया मतं । अन्यकाले त्वनियत-मानमात्मांगुलं भवेत् ॥ ३९ ॥ यस्मिन्
काले पुमांसो ये । स्वकीयांगुलमानतः ॥ अष्टोत्तरशतोत्तुंगा । आत्मांगुलं तदंगुलं ॥ ४० ॥
एतत्प्रमाणतो न्यूना-ऽधिकानां तु यदंगुलं ॥ तत्स्यादात्मांगुलाभासं । न पुनः पारमार्थिकं ।४१।

❀ ॥ यदाहुः प्रवचनसारोद्धारे—जे जंमि जुगे पुरिसा । अट्ठसयंगुलसमूसिआ हुंति ॥
तेसिं जं निअमंगुल-मायंगुलमित्थ तं होइ ॥ १ ॥ जे पुण एअपमाणा-ऊणा अहिगा य ते-
सिमेअं तु ॥ आयंगुलं न भण्णइ । किंतु तदाभासमेवित्ति ॥ २ ॥ प्रज्ञापनावृत्तौ तु—जेणं ज-

या मणूसा । तेसिं जं होइ माणरूवं तु ॥ तं नणिअमिहायंगुल—मणिअयमाणं पुण इमं
तु ॥ १ ॥ इत्येवंरूपमात्मांगुलं ॥—परमाणूरहरेणू । तसरेणू अग्गयं च वालस्स ॥ लिक्खा
जूया य जवो । अठगुणा विवढिया कमसो ॥ २ ॥ इत्यादिरूपमुच्छ्रूयांगुलं ॥—नुस्सेहंगुल-
मेगं । हवइ पमाणंगुलं सहस्सगुणं ॥ तं चेव डुगुणियंखलु । वीरस्सायंगुलं नणियं ॥ ३ ॥
इत्येवंरूपं प्रमाणांगुलमिति ज्ञेयं ॥ ❀

नुत्सेधांगुलमानेन । ज्ञेयं सर्वांगिनां वपुः ॥ प्रमाणांगुलमानेन नगपृथ्व्यादिशाश्वतं
॥ ४२ ॥ तत्रापि—तस्यांगुलस्य दैर्घ्येण । मीयते वसुधादिकं ॥ इत्याहुः केचिदन्ये च । त-
त्क्षेत्रगुणितेन वै ॥ ४३ ॥ तद्विष्कंनेण केऽप्यन्ये । पक्षेष्वेतेषु च त्रिषु ॥ ईष्टे प्रामाणिकं पक्षं
। निश्चेतुं जगदीश्वरः ॥ ४४ ॥

❀ ॥ अत्र प्रथमपक्षे एकस्मिन् योजने नुत्सेधांगुलनिष्पन्नानि चत्वारि योजनशतानि
नवंति, द्वितीयपक्षे सहस्रं, तृतीये दश क्रोशा नवंति, परं श्रीअनुयोगद्वारचूर्णौ तृतीय एव
पक्ष आद्दतो दृश्यते । तथा च तद्ग्रंथः—जे य पमाणंगुलाउ । पुढवाइप्पमाणा आणिज्जंति ॥

ते अ पमाणंगुलविरकं–जेणं आणेयव्वा ण पुण सूइअंगुलेणंति ॥ १ ॥ श्रीमुनिचंद्रसूरिकृतां-गुलसप्ततिकायामप्युक्तं–एयं च खित्तगुणिएण। केइ एयस्स जं पुण मिणंति ॥ अन्ने उ सूइ-अंगुल–माणेण न सुतन्नणियं तं ॥ २ ॥ अत्र चर्चादिविस्तरः अंगुलसप्ततिकातोऽवसेयः ॥ ❀

वापीकूपतडागादि–पुरदुर्गगृहादिकं ॥ वस्त्रपात्रविभूषादि–शय्या शस्त्रादिकृत्रिमं ॥४५॥ इंद्रियाणां च विषयाः । सर्वं मेयमिदं किल ॥ आत्मांगुलैर्यथामान–मुचितैः स्वस्ववारके ॥ ४६ ॥ आत्मोत्सेधप्रमाणाख्यं । त्रेधमप्यंगुलं त्रिधा ॥ सूच्यंगुलं च प्रतरां–गुलं चापि घनांगुलं ॥ ४७ ॥ एकप्रदेशबाहल्य–व्यासैकांगुलदैर्घ्ययुक् ॥ नभःप्रदेशश्रेणिर्या । सा सूच्यंगुलमुच्यते ॥ ४८ ॥ वस्तुतस्तदसंख्येय–प्रदेशमपि कल्प्यते ॥ प्रदेशत्रयनिष्पन्नं । सुखावगतये नृणां ॥ ४९ ॥ सूची सूच्यैव गुणिता । भवति प्रतरांगुलं ॥ नवप्रादेशिकं कल्प्यं । तद्दैर्घ्यव्यासयोः समं ॥ ५० ॥ प्रतरे सूचीगुणिते । सप्तविंशतिखांशकं ॥ दैर्घ्यविष्कंभबाहल्यैः । समानं स्याद् घनांगुलं ॥ ५१ ॥

❀ ॥ भपर्युपरिप्रतरत्रये स्थापिते स्थापना ❀ ॥

तत्र गुणनविधिश्चैवं—अंकोऽतिमो गुणराशे—र्गुण्यो गुणकराशिना ॥ पुनरुत्सारितेनोपां—त्यादयोऽप्येवमेव च ॥ ५२ ॥ उपर्यधश्चादिमांत्यौ । राश्योर्गुणकगुण्ययोः ॥ कपाटसंधिवत्स्थाप्यौ । विधिरेवमनेकधा ॥ ५३ ॥ स्थानाधिक्येनसंस्थाप्यं । गुणितेऽके फलं च यत् ॥ यथास्थानकमंकानां । कार्या संकलना ततः ॥ ५४ ॥ अंकस्थानानि चैवं—एकं दशशतसहस्रा—युतलक्षप्रयुतकोटयः क्रमतः ॥ अर्बुदमब्जं खर्वं । निखर्वमहापद्मशंकवस्तस्मात् ॥५५॥ जलधिश्चांत्यं मध्यं । परार्ध्यमितिदशगुणोत्तरं संज्ञाः ॥ इति ॥ अत्रोदाहरणं—पंचत्र्येकमितो राशि—र्दिवाकरगुणीकृतः । स्याद्विंशा षोडशशती । क्रमोऽकानां च वामतः ॥ ५६ ॥—अथ प्रसंगादुपयोगित्वाच्च भागहारविधिरुच्यते—यद्गुणो भाजकः शुध्ये—दंत्यादेर्भाज्यराशितः ॥ तत्फलं भागहारे स्यात् । भागाप्राप्ता च खं फलं ॥ ५७ ॥ अग्रे यथाप्यते भागः । पूर्वमंकं तथा भजेत् ॥ षड्भिर्भागे यथा षष्टेः । प्राप्यंते केवलं दश ॥ ५८ ॥ —अथ प्रकृतं—

पादः स्यादंगुलैः षड्भि—र्वितस्तिः पादयोर्द्वयं ॥ वितस्तिद्वितयं हस्तो, द्वौ हस्तौ कुक्षिरुच्यते ॥ ५९ ॥ कुक्षिद्वयेन दंडः स्या—त्तावन्मानं धनुर्भवेत् ॥ युगं वा मुसलं वापि । ना-

लिका वा समाः समे ॥ ६० ॥ अंगुलैः षसत्रत्यैव । सर्वेऽपि प्रमिता अमी ॥ सहस्रद्वितये-
नाथ । क्रोशः स्याद्धनुषामिह ॥ ६१ ॥ चतुष्टयेन क्रोशानां । योजनं तत्पुनस्त्रिधा ॥ उत्सेधा-
त्मप्रमाणाख्यै-रंगुलैर्जायते पृथक् ॥ ६२ ॥ एवं पादादिमानानां । सर्वेषां त्रिप्रकारतां ॥ वि-
ज्ञाव्य विनियुंजीत । स्वस्वस्थाने यथायथं ॥ ६३ ॥ प्रमाणांगुलनिष्पन्न-योजनानां प्रमाण-
तः ॥ असंख्यकोटाकोटीभि-रेका रज्जुः प्रकीर्तिता ॥ ६४ ॥ स्वयंभूरमणाब्धेर्ये । पूर्वपश्चि-
मवेदिके ॥ तयोः परांतांतरालं । रज्जुमानमिदं भवेत् ॥ ६५ ॥ लोकैश्च—यवोदरैरंगुलमष्ट-
संख्यै-र्हस्तोऽगुलैः षड्गुणितैश्चतुर्भिः ॥ हस्तैश्चतुर्भिर्भवतीह दंडः । क्रोशः सहस्रद्वितयेन
तेषां ॥ ६६ ॥ स्याद्योजनं क्रोशचतुष्टयेन । तथा कराणां दशकेन वंशः ॥ निवर्तनं विंशति-
वंशसंख्यैः । क्षेत्रं चतुर्भिश्च भुजैर्निबद्धं ॥ ६७ ॥ इत्याद्यभिधीयते-मानं पल्योपमस्याथ ।
तत्सागरोपमस्य च ॥ वक्ष्ये विस्तरतः किंचित् । श्रुत्वा श्रीगुरुसन्निधौ ॥ ६८ ॥ आद्यमुद्धा-
रपल्यं स्या-दद्धापल्यं द्वितीयकं ॥ तृतीयं क्षेत्रपल्यं स्या-दिति पल्योपमं त्रिधा ॥६९॥ ए-
कैकं द्विप्रकारं स्यात् । सूक्ष्मबादरभेदतः ॥ त्रैधस्यैवं सागरस्या-प्येवं ज्ञेया द्विभेदता ।७०।

उत्सेधांगुलसिद्धैक–योजनप्रमितोऽवटः ॥ ऊंडत्वायामविष्कंभै–रेष पल्य इति स्मृतः ॥ ७१ ॥
परिधिस्तस्य वृत्तस्य । योजनत्रितयं भवेत् ॥ एकस्य योजनस्योन–षष्ठभागेन संयुतं ॥७२॥
संपूर्य उत्तरकुरु–नृणां शिरसि मुंमिते ॥ दिनैरेकादिसप्तांतै–रूढकेशाग्रराशिभिः ॥ ७३ ॥

❀ ॥ क्षेत्रसमासबृहद्वृत्तिजंबूद्वीपप्रज्ञप्तिवृत्त्यभिप्रायोऽयं । प्रवचनसारोद्धारवृत्तिसंग्रहणीबृहद्वृत्त्योस्तु मुंमिते शिरसि एकेनाह्ना द्वाभ्यामहोभ्यां यावदुत्कर्षतः सप्तभिरहोभिः प्ररूढानि वालाग्राणीत्यादिसामान्यतः कथनादुत्तरकुरुनरवालाग्राणि नोक्तानीति ज्ञेयं ॥ वीरंजयसेहरक्षेत्रविचारसत्कस्वोपज्ञवृत्तौ तु देवकुरूत्तरकुरूद्भवसप्तदिनजातोरणस्योत्सेधांगुलप्रमाणं रोमसप्त कृत्वोष्टखंडीकरणेन विंशतिलक्षसप्तनवतिसहस्रैकशतद्वापंचाशत्प्रमितखंडभावं प्राप्यते, तादृशैरोमखंडैरेष पल्यो भ्रीयत इत्यादिरर्थतः संप्रदायो दृश्यत इति ज्ञेयं ॥ एतानि चांगुलमत्कानि रोमखंडानि चतुर्विंशतिगुणानि हस्ते, तानि चतुर्गुणानि धनुषि, तानि द्विसहस्रगुणानि क्रोशे, एवं क्रमेण समवृत्तघनयोजनपल्यगतो रोमखडराशिर्भवति. स चांकतो यथा ॥ ❀

त्रयस्त्रिंशत्कोटयः स्युः । सप्त लक्षाणि चोपरि ॥ द्वाषष्टिश्च सहस्राणि । शतं च चतुरुत्तरं ॥ ७४ ॥ एतावत्यः कोटिकोटि—कोटाकोट्यः स्मृता अथ ॥ चतुर्विंशतिर्लक्षाणि । पंचषष्टिः सहस्रकाः ॥ ७५ ॥ पंचविंशाः शताः षट् च । स्युः कोटाकोटिकोटयः ॥ कोटाकोटीनां च लक्षा । द्विचत्वारिंशदित्यथ ॥ ७६ ॥ एकोनविंशतिरपि । सहस्राणि शता नव ॥ षष्टिश्चोपरिकोटीनां । मानमेवं निरूपितं ॥ ७७ ॥ लक्षाणि सप्तनवति—स्त्रिपंचाशत्सहस्रकाः ॥ षट् शतानि च पल्येऽस्मिन् । स्युः सर्वे रोमखंडकाः ॥ ७८ ॥ त्रित्रिखाश्वरसाङ्क्याशावार्द्ध्यंद्वयब्धिरसेंद्रियाः ॥ षट्द्विपंचचतुर्द्व्येकां—कांकषट्खांकवाजिनः ॥ ७९ ॥ पंच त्रीणि च षट् किंच । नव खानि ततः परं ॥ आदितः पल्यरोमांश—राशिसंख्यांकसंग्रहः ॥ ८० ॥

॥ अत्रोक्तशेषो विस्तरस्तु उपाध्यायश्रीशांतिचंद्रगणिकृतश्रीजंबूद्वीपप्रज्ञप्तिवृत्तेरवसेयः ॥

तथा निबिडमाकंठं । भ्रियते स यथा हि तत् ॥ नाग्निर्दहति वालाग्रं । सलिलं च न कोथयेत् ॥ ८१ ॥ यथा च चक्रिसैन्येन । तमाक्रम्य प्रसर्प्पता ॥ न मनाक् क्रियते नीचै—रेवं निबिडतां गतात् ॥ ८२ ॥ समये समये तस्मा—द्वालखंडे समुद्धृते ॥ कालेन यावता पल्यः ।

स भवेन्निष्ठितोऽखिलः ॥ ७३ ॥ कालस्य तावतः संज्ञा । पल्योपममिति स्मृता ॥ तत्राप्युद्धा-
रमुख्यत्वा-दिदमुद्धारसंज्ञितं ॥ ७४ ॥ ( त्रिभिर्विशेषकम् ) इदं बादरमुद्धार-पल्योपममुदी-
रितं ॥ प्रमाणमस्य संख्यानाः । समयाः कथिता जिनैः ॥ ७५ ॥ अस्मिन्निरूपिते सूक्ष्मं ।
सुबोधमबुधैरपि ॥ अतो निरूपितं नान्य-त्किंचिदस्य प्रयोजनं ॥ ७६ ॥ एतेषामथ पल्यानां
। दशभिः कोटिकोटिभिः ॥ भवेद्बादरमुद्धार-संज्ञकं सागरोपमं ॥ ७७ ॥ अथैकैकस्य पूर्वो-
क्त-वालाग्रस्य मनीषया ॥ असंख्येयानि खंडानि । कल्पनीयानि धीधनैः ॥ ७८ ॥ यत्सू-
क्ष्मं पुद्गलद्रव्यं । छद्मस्थश्चक्षुषेक्षते ॥ तदसंख्यांशमानानि । तानि स्युर्द्रव्यमानतः ॥ ७९ ॥
सूक्ष्मपनकजीवांगा-ऽवगाढक्षेत्रतोऽधिके ॥ असंख्येयगुणे क्षेत्रे-ऽवगाहंत इमानि च ॥८०॥
व्याचक्षतेऽत्र वृद्धास्तु । मानमेषां बहुश्रुताः ॥ पर्याप्तबादरक्षोणी-कायिकांगेन संमितं ॥८१॥
समानान्येव सर्वाणि । तानि च स्युः परस्परं ॥ अनंतप्रादेशिकानि । प्रत्येकमखिलान्यपि
॥ ८२ ॥ ततस्तैः पूर्यते प्राग्वत् । पल्यः पूर्वोक्तमानकः ॥ समये समये चैकं । खण्डमुद्ध्रिय-
ते ततः ॥ ८३ ॥ निःशेषं निष्ठिते चास्मिन् । सूक्ष्ममुद्धारपल्यकं ॥ संख्येयवर्षकोटीभिर्मि-

तमेतदुदाहृतं ॥ ९४ ॥

सुसूक्ष्मोद्धारपल्यानां । दशभिः कोटिकोटिभिः ॥ सूक्ष्मं भवति चोद्धारा–भिधानं सागरोपमं ॥ ९५ ॥ आभ्यां सागरपल्याभ्यां । मीयंते द्वीपसागराः ॥ अस्याः सार्द्धद्विसागर्याः । समयैः प्रमिता हि ते ॥ ९६ ॥ यद्वैतासु पल्यकोटा–कोटीषु पंचविंशतौ ॥ यावंति वालखंडानि । तावंतो द्वीपसागराः ॥ ९७ ॥ एकादिसप्तांतदिनो–त्थैः केशाग्रराशिभिः ॥ भृतादुक्तप्रकारेण । पल्यात्पूर्वोक्तमानतः ॥ ९८ ॥ प्रतिवर्षशतं खंड–मेकमेकं समुद्धरेत् ॥ निःशेषं निष्ठिते चास्मि–न्नद्धापल्यं हि बादरं ॥ ९९ ॥ एतेषामथ पल्यानां । दशभिः कोटिकोटिभिः ॥ भवेद्बादरमद्धाख्यं । जिनोक्तं सागरोपमं ॥ १०० ॥ पूर्वरीत्याथ वालाग्रैः । खंडीभूतैरसंख्यशः ॥ पूर्णात्पल्यात्तथा खंडं । प्रतिवर्षशतं हरेत् ॥ १ ॥ कालेन यावता पल्यः । स्यान्निर्लेपोऽखिलोऽपि सः ॥ तावान्कालो भवेत्सूक्ष्म–मद्धापल्योपमं किल ॥ २ ॥ एतेषामथ पल्यानां । दशभिः कोटिकोटिभिः ॥ सूक्ष्ममद्धाभिधं ज्ञान–सागराः सागरं जगुः ॥३॥ सूक्ष्माद्धापल्यवार्द्धिभ्या–माभ्यां मीयंत आर्हतैः ॥ आयूंषि नारकादीनां । कर्मकायस्थिती

तथा ॥ ४ ॥ एतेषामेव वार्धीनां दशभिः कोटिकोटिभिः ॥ भुत्सर्पिणी भवेदेका। तावत्येवावसर्पिणी ॥ ५ ॥ एकादिसप्तांतघस्र—रूढकेशाग्रराशिभिः ॥ भृताऽुक्तप्रकारेण । पल्यात्पूर्वोक्रमानतः ॥ ६ ॥ तत्तद्वालाग्रसंस्पृष्ट—खप्रदेशापकर्षणे ॥ समये समये तस्मिन् । प्राप्ते निःशेषतां तथा ॥ ७ ॥ कालचक्रैरसंख्यातै—र्मितं तत्क्षेत्रनामकं ॥ बादरं जायते पल्यो—पममेवं जिनैर्मतं ॥ ८ ॥ कोट्याकोट्यो दशैषां च । बादरक्षेत्रसागरं ॥ सुबोधतायै सूक्ष्मस्य । कृतमेतन्निरूपणं ॥ ९ ॥ छिन्नैरसंख्यशः प्राग्वत् । केशाग्रैः पल्यतो भृतात् ॥ समये समये चैकः—खप्रदेशोऽपकर्ष्यते ॥ १० ॥ एवं केशांससंस्पृष्टा—ऽसंस्पृष्टाभ्रांशकर्षणात् ॥ तस्मिन्निःशेषिते सूक्ष्मं । क्षेत्रपल्योपमं भवेत् ॥ ११ ॥

❀ ॥ यद्यप्यत्र वालाग्रखंडस्पृष्टास्पृष्टनभःप्रदेशाकर्षणेऽधिकृते एकैकस्य वालाग्रस्याऽसंख्यभागकरणं नोपयुक्तमुभयथाप्यविशेषात्, तथापि प्रवचनसारोद्धारवृत्त्यादिषु पूर्वग्रंथेषु तथा दर्शनादत्रापि तथोक्तमिति ज्ञेयं. ॥ ❀

नन्वेवं निचिते पल्ये । वालाग्रैः संभवंति किं ॥ नभः प्रदेशा अस्पृष्टा—स्तद्भुद्धारो यदी-

रितः ॥ १२ ॥ जुच्यते संज्ञवत्येवा–ऽस्पृष्टास्ते सूक्ष्मत्नावतः ॥ नत्नोंऽशकानां वालाग्र–खं-मौघात्ताहशादपि ॥ १३ ॥ यथा कुष्मांमन्नरिते । मातुलिंगानि मंचके ॥ मांति तैश्च न्नृते धात्री–फलानि बदराण्यपि ॥ १४ ॥ तत्रापि मांति चणका–द्यः सूक्ष्मा यथाक्रमं ॥ एवं वालाग्रपूर्णेऽपि । तत्राऽस्पृष्टा नत्नोंऽशकाः ॥ १५ ॥ यद्वा–यतो घनेऽपि स्तंज्ञादौ । शतशो मांति कीलकाः ॥ ज्ञायंतेऽस्पृष्टखांशानां । ततस्तत्रापि संज्ञवः ॥ १६ ॥ एवं वालाग्र खंमौघै–रत्यंतनिचितेऽपि हि ॥ युक्तैव पल्ये खांशाना–मस्पृष्टानां निरूपणा ॥ १७ ॥ एतेषामथ पल्यानां । दशन्निः कोटिकोटिन्निः ॥ सूक्ष्मं सूक्ष्मैकैन्निः क्षेत्र–सागरोपममीरितं ॥ १८ ॥ वादरक्षेत्रपल्यांनो–निधिन्यां सूक्ष्मके इमे ॥ असंख्यगुणमाने स्तः । कालतः पल्यसागरे ॥ ॥ १९ ॥ क्षेत्रसागरपल्याञ्या–माञ्यां प्रायः प्रयोजनं ॥ इव्यप्रमाणचिंतायां । दृष्टिवादे कचिन्नवेत् ॥ २० ॥ पल्यं पल्योपमं चापि । रूपिन्निः परिन्नापितं ॥ सारं वारिधिपर्यायं । सागरं सागरोपमं ॥ २१ ॥

अथ संख्यातादिकानां । स्वरूपं किंचिदुच्यते ॥ श्रोतव्यं तत्सावधानै–र्जनैस्तत्वबुभुत्सु-

भिः ॥ २२ ॥ त्रिधा संख्यातं जघन्य–मध्यमोत्कृष्टभेदतः ॥ असंख्याताऽनंतयोस्तु । भेदा नवनवोदिताः ॥ २३ ॥ परित्तासंख्यातमाद्यं । युक्तासंख्यातकं परं ॥ तार्त्तीयीकमसंख्याता–संख्यातं परिकीर्त्तितं ॥ २४ ॥ परीत्तानंतमाद्यं स्या–द्युक्तानंतं द्वितीयकं ॥ अनंतानंतकं तार्त्ती–यीकं च गदितं जिनैः ॥ २५ ॥ त्रयोप्येते स्युर्जघन्य–मध्यमोत्कृष्टभेदतः ॥ अष्टादशाथ संख्यातै–स्त्रिभिः सहैकविंशतिः ॥ २६ ॥ द्वावेव लघुसंख्यातं । त्र्यादिकं मध्यमं ततः ॥ अर्वागुत्कृष्टसंख्यातात् । नैकस्तु गणनां भजेत् ॥ २७ ॥ यत्तु संख्यातमुत्कृष्टं । तत्तु ज्ञेय विवेकिभिः ॥ चतुष्पल्याद्युपायेन । सर्षपोत्करमानतः ॥ २८ ॥

जंबूद्वीपसमायाम–विष्कंभपरिवेषकाः ॥ सहस्रयोजनोद्वेधाः । पल्याश्चत्वार ईरिताः ॥ ॥ २९ ॥ उच्चया योजनान्यष्टौ । जगत्या ते विराजिताः ॥ जगत्युपरि च क्रोश–द्वयोच्चवेदिकांचिताः ॥ ३० ॥ दिदृक्षवो द्वीपवार्धीन् । स्वीकृतोदूग्रीविका इव ॥ ध्यायंतो ज्येष्ठसंख्यातं । योगपट्टभृतोऽथवा ॥ ३१ ॥ त्रिभिर्विशेषकं ॥ आद्योऽनवस्थिताख्यः स्या–च्छलाकाख्यो द्वितीयकः ॥ तृतीयः प्रतिशलाक–स्तुर्यो महाशलाककः ॥ ३२ ॥ आवेदिकांतं सशिख–स्तत्र प-

ल्योऽनवस्थितः ॥ मायादेकोऽपि न यथा । सर्षपैर्भ्रियते तथा ॥ ३३ ॥ असत्कल्पनया कश्चि–द्देवस्तमनवस्थितं ॥ कृत्वा वामकरे तस्मा–त्सर्षपं परपाणिना ॥ ३४ ॥ जंबूद्वीपे क्षिपेदेकं । द्वितीयं लवणोदधौ ॥ तृतीयं धातकीखंडे । तुर्यं कालोदवारिधौ ॥ ३५ ॥ एवं द्वीपे समुद्रे वा । स पल्यो यत्र निष्ठितः ॥ तत्समायामविष्कंभ–परिधिः कल्प्यते पुनः ॥ ३६ ॥ उद्वेधोत्सेधतः प्राग्व–द्भ्रियते सर्षपैश्च सः ॥ क्रमाद्द्वीपे समुद्रे च । पूर्ववन्न्यस्यते कणः ॥ ३७ ॥ एवं द्वितीयवारं च । रिक्तीभूतेऽनवस्थिते ॥ मुच्यते सर्षपः साक्षी–शलाकाभिधपल्यके ॥ ॥ ३८ ॥ पूर्यमाणैरिच्यमानै–रेवं भूयोऽनवस्थितैः ॥ शलाकाख्योऽपि सशिखं । पूर्यते शाक्षिसर्षपैः ॥ १३९ ॥ अत्रेदं ज्ञेयं—

आद्येऽनवस्थिते रिक्ती–भूते साक्षी न मुच्यते ॥ सर्वैः पल्यैः समानत्वा–दानवस्थिततास्य यत् ॥ ४० ॥ यस्याऽनवस्थितेत्याह्वा । ज्ञेया योग्यतया तु सा ॥ घृतयोग्यो घटो यद्वद् । घृतकुंभोऽभिधीयते ॥ ४१ ॥ साक्षी च सर्षपकणो । मुच्यते यः शलाकके ॥ अनवस्थितसत्कं तं । जगुरेके परे परं ॥ ४२ ॥ पूर्णीभूते शलाकेऽथ । स्थाप्यस्तत्राऽनवस्थितः ॥

क्रमागतद्वीपवार्द्धि—समानः सर्षपैर्भृतः ॥ ४३ ॥ अथोत्पाद्य शलाकाख्यं । प्राग्वत्तस्य कणा-
न् क्षिपेत् ॥ अनवस्थांतिमकणा—क्रांतद्वीपांबुधेः पुरः ॥ ४४ ॥ रिक्तीभूते शलाकेऽथ । पल्ये
प्रतिशलाकके ॥ क्षिप्यते सर्षपस्तस्य । साक्षीभूतस्तृतीयके ॥ ४५ ॥ अथ तत्र स्थितं पूर्णं ।
तं गृहीत्वाऽनवस्थित ॥ शलाकांत्यकणाक्रांता—दग्रे प्राग्वत्कणान् क्षिपेत् ॥ ४६ ॥ पूर्यमाणै-
रिच्यमानै—र्भूयोभूयोऽनवस्थितैः ॥ पुनः शलाको भ्रियते । प्राग्वत्तथानवस्थितः ॥ ४७ ॥ प्रा-
ग्वच्छलाकमुत्पाद्य । परतो द्वीपवार्धिषु ॥ रिक्तीकृत्य च तत्साक्षी । स्थाप्यः प्रतिशलाकके
॥ ४८ ॥ एवं प्रतिशलाकेऽपि । सशिखं सम्भृते सति ॥ अनवस्थशलाकाख्यौ । स्वयमेव भृ-
तौ स्थितौ ॥ ४९ ॥ शलाकसाक्षिणः स्थाना—ऽन्नावात्स रिच्यते कथं ॥ आद्यस्यापि तदन्ना-
वात् । कथं सोऽपि हि रिच्यते ॥ ५० ॥ ततः प्रतिशलाकाख्य—मुत्पाद्य तस्य सर्षपान् ॥
क्षिपेत्पूर्वोक्तया रीत्या । परतो द्वीपवार्धिषु ॥ ५१ ॥ एवं प्रतिशलाकेऽपि । निखिलं निष्ठिते
सति ॥ साक्षीभूतं कणमेकं । क्षिपेन्महाशलाकके ॥ ५२ ॥ ततः शलाकमुत्पाद्य । द्वीपा-
ब्धिषु तदग्रतः ॥ सर्षपान्न्यस्य तत्साक्षी । स्थाप्यः प्रतिशलाकके ॥ ५३ ॥ ततः क्रमाद्वर्द्ध-

मान–विस्तारमनवस्थितं ॥ उत्पाट्य परतो द्वीप–पाथोधिषु कणान् क्षिपेत् ॥ ५४ ॥ प्राग्व-
देतत्साक्षिकणैः । शलाकाख्यः प्रपूर्यते ॥ तमप्यनेकशः प्राग्वत् । संरिच्यैतस्य साक्षिभिः ॥
॥ ५५ ॥ तृतीयः परिपूर्येता–ऽमकृदेतस्य साक्षिभिः ॥ पल्यो महाशलाकोऽपि । सशिखं पू-
र्यते ततः ॥ ५६ ॥ यथोत्तरमथो साक्षि–स्थानाऽत्रावादिमे समे ॥ भृताः स्थिता दिक्कनीनां ।
क्रीडासमुद्गका इव ॥ ५७ ॥ यत्रांतिमायां वेलायां । रिक्तीभूतोऽनवस्थितः ॥ तावन्मानस्तदा-
स्त्येष । त्रयस्त्वन्ये यथोदिताः ॥ ५८ ॥

अथैतांश्चतुरः पल्यान् । सावकाशे स्थले क्वचित् ॥ उद्धृत्य तत्सर्षपाणां । निचयं रच-
येद्धिया ॥ ५९ ॥ ततश्च जंबूद्वीपादि–द्वीपवार्धिषु सर्षपान् ॥ उच्चित्य पूर्वनिक्षिप्तां–स्तत्रैव
निचये क्षिपेत् ॥ ६० ॥ एकसर्षपरूपेण । न्यूनोऽयं निचयोऽखिलः ॥ भवेदुत्कृष्टसंख्यात–
मानमित्युदितं जिनैः ॥ ६१ ॥ एतदुत्कृष्टसंख्यात–मेकरूपेण संयुतं ॥ भवेत्परीत्ताऽसंख्यातं ।
जघन्यमितितद्विदः ॥ ६२ ॥ ज्येष्ठात्परीत्ताऽसंख्याता–दर्वाग्जघन्यतः परं ॥ मध्यं परीत्ताऽ
संख्यातं । भवेदिति जिनैः स्मृतं ॥ ६३ ॥ जघन्ययुक्ताऽसंख्यात–मेकरूपविवर्जितं ॥ भवे-

त्परीत्ताऽसंख्यात–मुत्कृष्टमितितद्विदः ॥ ६४ ॥ जघन्ययुक्ताऽसंख्यप्रकारश्चायं—

यावत्प्रमाणो यो राशि–र्भवेत्स्वरूपसंख्यया ॥ स न्यस्य तावतोवारान् । गुणितोऽ-भ्यास उच्यते ॥ ६५ ॥ यथा पंचात्मको राशिः । पंचवारान् प्रतिष्ठितः ॥ मिथः संगुणितो जातः । प्रथमं पंचविंशतिः ॥ ६६ ॥ शतं सपादं संजातो । गुणितः सोऽपि पंचभिः ॥ पुनः संगुणितः पंच–विंशानि स्युः शतानि षट् ॥ ६७ ॥ जातश्चतुर्थवेलाया–मेकत्रिंशच्छतानि सः ॥ पंचविंशत्युपचिता–न्यभ्यासगुणितं ह्यदः ॥ ६८ ॥ ततश्च—प्रागुक्ते सार्षपे पुंजे । यावंतः किल सर्षपाः ॥ तत्संख्यान् मुख्यनिचय–तुल्यान् राशीन् पृथक्पृथक् ॥ ६९ ॥ कृत्वा मिथस्तद् गुणने । यो राशिर्जायतेऽतिमः ॥ जघन्ययुक्ताऽसंख्यं त–दावलीसमयैः समं ॥ ७० ॥ इयमत्र भावना—

स सर्षपाणां निकरः । कल्प्यते चेद्दशात्मकः ॥ प्राग्वदभ्यासगुणितः । सहस्रकोटिको भवेत् ॥ ७१ ॥ गरिष्टयुक्ताऽसंख्याता–दर्वाग् जघन्यतः परं ॥ मध्यमं जायते युक्ता–ऽसंख्यातमिति तद्विदः ॥ ७२ ॥ जघन्ययुक्ताऽसंख्यातं । प्राग्वदभ्यासताडितं ॥ हीनमेकेन रूपेण ।

युक्ताऽसंख्यातकं गुरु ॥ ७३ ॥ एतदेव रूपयुक्त–मसंख्याऽसंख्यकं लघु ॥ मध्याऽसंख्यातासं-
ख्यात–मस्माडुत्कृष्टकावधि ॥७४॥ जघन्याऽसंख्याऽसंख्यातं । भवेदभ्यासताडितं ॥ एकरूपो
नितं ज्येष्टा–ऽसंख्याऽसंख्यातकं स्फुटं ॥७५॥ अत्रैकरूपक्षेपे च । परीत्ताऽनंतकं लघु ॥ मध्यं
चास्मात्समुत्कृष्ट–परीत्ताऽनंतकावधि ॥ ७६ ॥ ह्रस्वं परीत्ताऽनंतं च । प्राग्वदभ्याससंगुणं ॥
परीत्तानंतकं ज्येष्ट–मेकरूपोनितं भवेत् ॥ ७७ ॥ सैकरूपं तज्जघन्य–युक्तानंतकमीरितं । प-
रमस्मात्पराच्चार्वाग् । युक्तानंतं हि मध्यमं ॥ ७८ ॥ युक्तानंतं तज्जघन्य–मभ्यासपरिताडितं
॥ निरेकरूपमुत्कृष्ट–युक्तानंतकमाहितं ॥ ७९ ॥ अत्रैकरूपक्षेपे स्या–दनंताऽनंतकं लघु ॥
अस्माद्यदधिकं मध्या–ऽनंतानंतं च तत्समं ॥ ८० ॥ उत्कृष्टाऽनंताऽनंतं तु । नास्ति सिद्धांति-
नां मते ॥ अनुयोगद्वारसूत्रे । यदुक्तं गणधारिभिः ॥ ८१ ॥

❀ ॥ एवमुक्कोसयं अणंताणंतयं नत्थित्ति ॥ ❀

अभिप्रायः समग्रोऽयं । प्रोक्तः सूत्रानुसारतः ॥ अथ कार्मग्रंथिकानां । मतमत्र प्रपंच्य-
ते ॥ ८२ ॥ समद्विघातो वर्गः स्या–दिति वर्गस्य लक्षणं ॥ पंचानां वर्गकरणे । यथा स्युः पं-

चविंशतिः ॥ ८३ ॥ जघन्ययुक्ताऽसंख्यता—वधि तुर्यं मतद्वये ॥ अतः परं विशेषोऽस्ति । स चायं परिज्ञाप्यते ॥ ८४ ॥—

जघन्ययुक्ताऽसंख्याता—दारभ्योत्कृष्टकावधि ॥ मध्यमं युक्ताऽसंख्यातं । स्यादुत्कृष्टमथोच्यते ॥ ८५ ॥ जघन्ययुक्ताऽसंख्यातं । वर्गितं रूपवर्जितं ॥ उत्कृष्टयुक्ताऽसंख्यातं । प्राप्तरूपैः प्ररूपितं ॥ ८६ ॥ एकरूपेण युक्तं त—दसंख्याऽसंख्यकं लघु ॥ अर्वागुत्कृष्टतो मध्य—मथोत्कृष्टं निरूप्यते ॥ ८७ ॥ जघन्याऽसंख्याऽसंख्यातं । यत्ततो वर्गितं त्रिशः ॥ अमीभिर्दशभिःक्षेपै—र्वक्ष्यमाणैर्विमिश्रितं ॥ १८८ ॥ तच्चैवं—

त्रिंशत्कोटाकोटिसारा । ज्ञानावरणकर्मणः ॥ स्थितिरुत्कर्षतो ज्ञेया । जघन्यांतमुहुर्त्तकी ॥ ८९ ॥ अनयोरंतराले च । मध्यमाः स्युरसंख्यशः ॥ आसां बंधहेतुभूता—ऽध्यवसाया असंख्यशः ॥ ९० ॥ एवमेवाध्यवसाया । अपरेष्वपि कर्मसु ॥ स्युरसंख्येयलोकाभ्र—प्रदेशप्रमिता इमे ॥ ९१ ॥ जघन्यादिभेदवंतो—ऽनुभागाः कर्मणां रसाः ॥ तेऽप्यसंख्येयलोकाभ्र—प्रदेशप्रमिताः किल ॥ ९२ ॥ ततश्च—लोकाभ्रधर्माधर्मैक—जीवानां ये प्रदेशकाः ॥ अध्यवसा-

यस्थानानि । स्थितिबंधानुभागयोः ॥ ९३ ॥ मनोवचःकाययोग–विभागानिर्विभागकाः ॥ का-
लचक्रस्य समया–स्तथा प्रत्येकजंतवः ॥ ९४ ॥ अनंतांगिदेहरूपा । निगोदाश्च दशाप्यमून् ॥
त्रिवर्गिते लब्धसंख्या–ऽसंख्येऽसंख्यान्नियोजयेत् ॥ ९५ ॥ त्रिशः पुनर्वर्गयेच्च । भवेदेवंकृते
सति ॥ असंख्याऽसंख्यमुत्कृष्ट–मेकरूपविनाकृतं ॥ ९६ ॥ तत्रैकरूपप्रक्षेपे । परीतानंतकं ल-
घु ॥ परीतानंतकाज्ज्येष्ठा–द्यदर्वाक् तच्च मध्यमं ॥ ९७ ॥ अभ्यासगुणिते प्राग्व–त्परीतानं-
तके लघौ ॥ परीतानंतमुत्कृष्ट–मेकरूपोज्झितं भवेत् ॥ ९८ ॥ सैकरूपे पुनस्तस्मिन् । युक्ता-
नंतं जघन्यकं ॥ अभव्यजीवैस्तुलितं । मध्यं तूत्कृष्टकावधि ॥ ९९ ॥ जघन्ययुक्तानंते च । व-
र्गिते रूपवर्जिते ॥ स्याद्युक्तानंतमुत्कृष्ट–मित्युक्तं पूर्वसूरिभिः ॥ १०० ॥ अत्रैकरूपप्रक्षेपा–द-
नंतानंतकं लघु ॥ प्राग्वदेतदपि ज्ञेयं । मध्यमुत्कृष्टकावधि ॥ १ ॥ जघन्यानंतानंतं तत् । व-
र्गयित्वा त्रिशस्ततः ॥ क्षेपानमूननंतान् षट् । वक्ष्यमाणान्नियोजयेत् ॥ २ ॥ ते चामी–वन-
स्पतीन्निगोदानां । जीवान् सिद्धांश्च पुद्गलान् ॥ सर्वकालस्य समयान् । सर्वाऽलोकनभोंऽशा-
कान् ॥ ३ ॥ पुनस्त्रिर्वर्गिते जात–राशौ तस्मिन् विनिक्षिपेत् ॥ पर्यायान् केवलज्ञान–दर्शना-

नामनंतकान् ॥ ४ ॥ अनंताऽनंतमुत्कृष्टं । भवेदेवंकृते सति ॥ मयाऽज्ञावादस्य मध्ये । नैव व्यवहृतिः पुनः ॥ ५ ॥

एवं च नवधाऽनंतं । कर्मग्रंथमते भवेत् ॥ भवत्यष्टविधं किंच । सिद्धांताश्रयिणां मते ॥ २०६ ॥ सर्वेषां रूपमेकैकमेषां ज्येष्टकनीयसां ॥ मध्यमानां तु रूपाणि । भवंति बहुधा किल ॥ २०७ ॥ संख्यातभेदं संख्यात–मसंख्याताविधं पुनः ॥ असंख्यातमनंतं चाऽनंतभेद प्रकीर्त्तितं ॥ २०८ ॥ प्रयोजनं त्वेतेषां–अभविअ चउच्चणंते । पंचमि सम्माइपरिवम्मिअसिद्धा ॥ सेसा अठमणंते । पज्जथूलवणाइ वावीसं ॥ २०९ ॥ तचामी–वायरपज्जत्तवणा । वायरपज्ज अपज्जवायरवणाय ॥ वायरअपज्ज वायर । सुहुमापज्जवण सुहुमअपज्जा ॥ १० ॥ सुहुमवणा-पज्जत्ता । पज्जसुहुमा सुहुम भवय निगोया ॥ वण एगिंदिय तिरिया । मिच्छद्दिठी अविराय ॥ ११ ॥ सकसाइणो य छउमा । सजोगि संसारि सव्वजीवाय ॥ जहसंभवमभ्रहिया । वावीसं अठमेऽणंते ॥ १२ ॥ इत्यादि यथास्थानं ज्ञेयं ॥ इत्यंगुलादिप्रकृतोपयोगि–मानं मयाप्तोक्तिमपेक्ष्य दब्धं ॥ अथो यथास्थानमिदं नियोज्यं । कोशस्थितं द्रव्यमिवागमज्ञैः ॥

॥ १३ ॥ विश्वाश्चर्यदकीर्त्तिकीर्त्तिविजयश्रीवाचकेंद्रांतिष—द्राजश्रीतनयोऽननिष्ट विनयः श्रीतेज-
पालात्मजः ॥ काव्यं यत्किल तत्र निश्चितजगत्तत्त्वप्रदीपोपमे । सर्गो निर्गलितार्थसार्थसुभगः
पूर्णः सुखेनादिमः ॥ ३४ ॥

॥ इति लोकप्रकाशे प्रथमः सर्गः समाप्तः ॥

---

॥ द्वितीयः सर्गः प्रारभ्यते ॥

स्तुमः शंखेश्वरं पार्श्वं । मध्यलोके प्रतिष्ठितं ॥ देहलीदीपकन्यायाद् । भुवनत्रयदीपकं
॥ १ ॥ प्रस्तूयतेऽथ प्रकृतं । स्वरूपं लोकगोचरं ॥ द्रव्यतः क्षेत्रतः काल—भावतस्तच्चतुर्विधं ॥
॥ २ ॥ एकः पंचास्तिकायात्मा । द्रव्यतो लोक इष्यते ॥ योजनानामसंख्येयाः । कोटयः
क्षेत्रतोऽन्वितः ॥ ३ ॥ कालतोऽभूच्च भात्यस्ति । भावतोऽनंतपर्यवः ॥ लोकशब्दप्ररूप्यास्ति—
कायस्थगुणपर्यवैः ॥ ४ ॥ अथवा—जीवाऽजीवस्वरूपाणि । नित्याऽनित्यत्ववंति च ॥ द्र-
व्याणि षट् प्रतीतानि । द्रव्यलोकः स उच्यते ॥ ५ ॥ तथोक्तं स्थानांगवृत्तौ—जीवमजीवे

रुवम–रुवि सपएसमप्पएसे अ ॥ जाणाहि दव्वलोगं । निच्चमनिच्चं च जं दव्वं ॥ ६ ॥ ये संस्थानविशेषेण । तिर्यगूर्ध्वमधःस्थिताः ॥ आकाशस्य प्रदेशास्तं । क्षेत्रलोकं जिना जगुः ॥ ॥ ७ ॥ समयावलिकादिश्च । काललोको जिनैःस्मृतः ॥ भावलोकस्तु विज्ञेयो । भावा औदयिकादयः ॥ ८ ॥ यदाहुः–उदइए उवसमिए । खइए अ तहा खउवसमिए अ ॥ परिणामसन्निवाए । छव्विहो भावलोउत्ति ॥ ९ ॥ इति स्थानांगवृत्तौ—तत्र प्रथमतो द्रव्य–लोकः किंचिद्वितन्यते ॥ मया श्रीकीर्त्तिविजय–प्रसादप्राप्तबुद्धिना ॥ १० ॥

धर्मास्तिकायाऽधर्मास्ति–कायावाकाश एव च ॥ जीवपुद्गलकालाश्च । षट्द्रव्याणि जिनागमे ॥ ११ ॥ धर्माऽधर्माभ्रजीवाख्याः । पुद्गलेन समन्विताः ॥ पंचामी अस्तिकायाः स्युः । प्रदेशप्रकरात्मकाः ॥ १२ ॥ अनागतस्याऽनुत्पत्ते–रुत्पन्नस्य च नाशतः ॥ प्रदेशप्रचयाऽभावात् । काले नैवास्तिकायता ॥ १३ ॥ विना जीवेन पंचामी । अजीवाः कथिताः श्रुते ॥ पुद्गलेन विना चामी । जिनैरुक्ता अरूपिणः ॥ १४ ॥ धर्मास्तिकायं तत्राह । पंचधा परमेश्वरः ॥ द्रव्यतः क्षेत्रतः काल–भावाभ्यां गुणतस्तथा ॥ १५ ॥ द्रव्यतो द्रव्यमेकं स्यात् । क्षे-

त्रतो लोकसम्मितः ॥ कालतः शाश्वतो यस्मा–दनूनाऽभ्यस्ति चानिशं ॥ १६ ॥ वर्णरूप-
रसैर्गंध–स्पर्शैः शून्यश्च भावतः ॥ गत्युपष्टंभधर्मश्च । गुणतः स प्रकीर्त्तितः ॥ १७ ॥ स्वभा-
वतः संचरतां । लोकेऽस्मिन् पुद्गलात्मनां ॥ पानीयमिव मीनानां । साहाय्यं कुरुते ह्यसौ
॥ १८ ॥ जीवानामेव चेष्टासु । गमनागमनादिषु ॥ भाषामनोवचःकाय–योगादिष्वेतिहेतु-
तां ॥ १९ ॥ अस्याऽसत्वादलोके हि । नात्मपुद्गलयोर्गतिः ॥ लोकाऽलोकव्यवस्थापि । नाऽ-
भावेऽस्योपपद्यते ॥ २० ॥ द्रव्यक्षेत्रकालभावै–र्धर्मभ्रातेव युग्मजः ॥ स्यादधर्मास्तिकायोऽपि
। गुणतः किंतु भिद्यते ॥ २१ ॥ स्थित्युपष्टंभकर्त्ता हि । जीवपुद्गलयोरयं ॥ मीनानां स्थल-
वद्येना–लोके नानौ न तत्स्थितिः ॥ २२ ॥ अयं निषदनस्थान–शयनालंबनादिषु ॥ प्रयाति
हेतुतां चित्त–स्थैर्यादिस्थिरतासु च ॥ २३ ॥ इदमर्थतो भग० श० १३ ॥ गतिस्थितिपरिणा-
मे । सत्येवैतौ सहायकौ ॥ जीवादीनां न चेत्तेषां । प्रसज्येते सदापि ते ॥ २४ ॥ भवेदभ्रास्ति-
कायस्तु । लोकाऽलोकभिदा द्विधा ॥ लोकाकाशास्तिकायः स्या–त्तत्राऽसंख्यप्रदेशकः ॥ २५ ॥
स भात्यलोकाकाशेन । परीतोऽतिगरीयसा ॥ गोलकं मध्यसुषिरं । महांतमनुकुर्वता ॥ २६ ॥

तथोक्तं भगवतीशतक० ११ उ० ११—

॥ अलोएणं भंते किं संठिए? गो० झुसिरगोलगसंठिएए इत्यादि ॥

अमौ च धर्माऽधर्माभ्यां। स्वतुल्याभ्यां सदान्वितः॥ भूपाल इव मंत्रिभ्यां। बिभर्ति सकलं जगत्॥ २७॥ अलोकाभ्रं तु धर्माद्यै—र्भावैः पंचभिरुझितं॥ अनेनैव विशेषेण। लोकाभ्रात्पृथगीरितं॥ २८॥ अनंतस्याप्यस्य पूज्यै—र्महत्तायां निदर्शनं॥ असद्भावस्थापनया। पंचमांगे प्रकीर्त्तितं॥ २९॥ तथाहि—सुदर्शनं सुरगिरिं। परितो निर्जरा दश॥ केऽपि कौतुकिनः संति। स्थिता दिक्षु दशस्वपि॥ ३०॥ मानुषोत्तरपर्यंते—ऽष्टासु दिक्षु बहिर्मुखाः॥ बलिपिंडान् दिक्कुमार्यः। किरंत्यष्टौ स्वदिक्स्वथ॥ ३१॥ विकीर्णान् युगपत्ताभि—स्तान् पिंडानगतान् क्षितिं॥ यया गत्या सुरस्तेषा—मेकः कोऽप्याहरेद्यात्॥ ३२॥ तया गत्याथ ते देवा। अलोकांतदिदृक्षया॥ गंतुं प्रवृत्ता युगप—द्यदा दिक्षु दशस्वपि॥ ३३॥ तदा च वर्षलक्षायुः—पुत्रोऽभूत्कोऽपि कस्यचित्॥ तस्यापि तादृशः पुत्रः। पुनस्तस्यापि तादृशः॥३४॥ कालेन तादृशाः सप्त। पुरुषाः प्रलयंगताः॥ ततस्तदस्थिमज्जादि। तन्नामापि गतं क्रमात्॥

॥ ३५ ॥ अस्मिंश्च समये कश्चि–त्सर्वज्ञं यदि पृछति ॥ स्वामिंस्तेषां किमगतं । क्षेत्रं किंवा गतं बहु ॥ ३६ ॥ तदा वदति सर्वज्ञो । गतमल्पं परं बहु ॥ अगतस्याऽनंततमो । भागो गतमिहोद्यतां ॥ ३७ ॥ स्थित्वा सुरोऽपि लोकांते । नालोके स्वकराधिकं ॥ ईष्टे लंबयितुं गत्यभावात्पुफलजीवयोः ॥ ३८ ॥ तदुक्तं—

❀ ॥ देवेणं भंते महड्ढिए जाव महेसरके लोगंसि हच्चं वा पायं वा जाव ऊरुं वा आकुंटावित्तए पसारित्तए वा णो इणट्ठे समट्ठे ॥ इति भग० शतक १६ ॥ उद्दे० ८ ॥ ❀

वस्तुतस्तु नभोऽद्रव्य–मेकमेवास्ति सर्वगं ॥ धर्मादिसाहचर्येण । द्विधा जातमुपाधिना ॥ ३९ ॥ लोकाऽलोकप्रमाणत्वात् । क्षेत्रतोऽनंतमेव तत् ॥ असंख्येयप्रमाणं च । परं लोकविवक्षया ॥ ४० ॥ कालतः शाश्वतं वर्णा–दिभिर्मुक्तं च भावतः ॥ अवगाहगुणं तच्च । गुणतो गदितं जिनैः ॥ ४१ ॥ अवकाशे पदार्थानां । सर्वेषां हेतुतां दधत् ॥ शर्कराणां दुग्धमिव । वह्निर्लोहादिगोलवत् ॥ ४२ ॥ युग्मं ॥ यतः—परमाण्वादिना द्रव्ये–णैकेनापि प्रपूर्यते ॥ खप्रदेशस्तथा द्वाभ्या–मपि ताभ्यां तथा त्रिभिः ॥ ४३ ॥ अपि द्रव्यशतं माया–त्तत्रैवैक-

प्रदेशके ॥ मायात्कोटिशतं माया—दपि कोटिसहस्रकं ॥ ४४ ॥ अवगाहस्वभावत्वा—दंतरिक्षस्य तत्समं ॥ चित्रत्वाच्च पुद्गलानां। परिणामस्य युक्तिमत् ॥ ४५ ॥ द्वयोरपि क्रमादृष्टांवतौ—दीप्रदीपप्रकाशेन । यथाऽपवरकोदरं ॥ एकेनापि पूर्यते त—च्छतमप्यत्र माति च ॥ ४६ ॥ तथा—विशत्यौषधसामर्थ्या—त्पारदस्यैककर्षके ॥ सुवर्णस्य कर्षशतं । तौल्ये कर्षाधिकं न तत् ॥ ४७ ॥ पुनरौषधसामर्थ्या—त्तद्द्वयं जायते पृथक् ॥ सुवर्णस्य कर्षशतं । पारदस्यैककर्षकः ॥ ४८ ॥ इत्यर्थतो भगवतीशतक १३ उ० ४ वृत्तौ ॥ किंच—धर्मास्तिकायस्तद्देश—स्तत्प्रदेश इति त्रयं ॥ एवं त्रयं त्रयं ज्ञेय—मधर्माभ्रास्तिकाययोः ॥ ४९ ॥ तत्रास्तिकायः सकल—खप्रदेशात्मको भवेत् ॥ कियन्मात्रांशरूपाश्च । तस्य देशाः प्रकीर्त्तिताः ॥ ५० ॥

❀ स्कदंति शुष्यंति पुद्गलविचटनेन, धीयंते च पुष्यते पुद्गलचटनेनेति स्कंधाः । ' पृषोदरादयः ' इतिरूपनिष्पत्तिः, इति प्रज्ञापनावृत्तौ व्युत्पादितत्वादेते स्कंधव्यपदेशं नार्हंति, अत एव सूत्रे प्रायः ' धम्मत्थिकाए धम्मत्थिकायस्स देसे ' इत्याद्येव श्रूयते ॥ नवतत्वावचूरौ तु चतुर्दशरज्ज्वात्मके लोके सकलोऽपि यो धर्मास्तिकायः, स सर्वः स्कंधः कथ्यते इत्युक्त-

मिलिङ्गेयं. ❋

निर्विभागा विभागाश्च । प्रदेशा इत्युदाहृताः ॥ ते चाऽनंतास्तृतीयस्या–ऽसंख्येया आद्ययोर्द्वयोः ॥ ५१ ॥ अनंतैश्चागुरुलघु–पर्यायैः संश्रिता इमे ॥ त्रयोऽपि यदमूर्त्तेषु । संभवंत्येत एव हि ॥ ५२ ॥ अथ जीवास्तिकायस्य । स्वरूपं वच्मि तस्य च ॥ चेतनालक्षणो जीव। इतिसामान्यलक्षणं ॥ ५३ ॥ मतिश्रुतावधिमनः–पर्यायकेवलान्यपि ॥ मत्यज्ञानं श्रुताऽज्ञानं । विभंगज्ञानमित्यपि ॥ ५४ ॥ अचक्षुश्चक्षुरवधि–केवलदर्शनानि च ॥ द्वादशामी उपयोगा । विशेषाज्जीवलक्षणं ॥ ५५ ॥ उपयोगंविना कोऽपि । जीवो नास्ति जगत्त्रये ॥ अक्षरानंतभागो य–श्चयको निगोदिनामपि ॥ ५६ ॥ तं चाक्षरानंतभाग–मपि त्रैलोक्यवर्त्तिनः ॥ न शक्नुवंत्यावरितुं । पुद्गलाः कर्मतांगताः ॥ ५७ ॥ एषोऽप्याव्रियते चेत्तत्–स्याज्जीवाऽजीवयोर्न भित् ॥ अक्षरं त्विह साकारे–तरोपयोगलक्षणं ॥ ५८ ॥ रवेर्यथातिसांद्राभ्र–छन्नस्यापि भवेत्प्रभा ॥ कियत्यनावृता रात्रि–दिनाऽभेदोऽन्यथा भवेत् ॥ ५९ ॥ इयं चाल्पीयसी ज्ञान–मात्राद्यसमये भवेत् ॥ अपर्याप्तनिगोदानां । सूक्ष्माणां क्रमतस्ततः ॥ ६० ॥

भा ॥ १

शेषैकाक्षद्वित्रिचतु–ष्पंचाक्षादिषु मात्रया ॥ वर्धमानेंद्रिययोग–लब्धिवृद्ध्यपेक्षया ॥६१॥
क्षयोपशमवैचित्र्या–न्नानारूपाणि बिभ्रती ॥ सर्वज्ञेयग्राहिणी स्याद् । घातिकर्मक्षयेण सा ॥६२॥
नन्वेवमात्मनो ज्ञानं । यदि लक्षणमुच्यते ॥ अभेदः स्यात्तदनयोः । सास्नावृषभयोरिव ॥६३॥
एवं चास्य सदा ज्ञान–मिष्यतेऽखिलवस्तुगं ॥ ज्ञानरूपो न जानाती–त्येतद्युक्तिसहं न यत्
॥ ६४ ॥ कथं च ज्ञानरूपस्या–त्मनः स्युः संशयस्तथा ॥ अव्यक्तबोधाऽबोधौ च । किंचि-
द्बोधविपर्ययाः ॥ ६५ ॥ अत्रोच्यते–सत्यप्यस्य चिदात्मत्वे । नोपयोगो निरंतरं ॥ ज्ञानावर-
णीयानां । कर्मणां वशतः खलु ॥ ६६ ॥ तथाहि–आत्मा सर्वप्रदेशेषु । त्यक्त्वांशानष्ट मध्य-
गान् ॥ प्रक्वथ्यमानोदकव–त्सदा विपरिवर्त्तते ॥ ६७ ॥ ततः स चिरमेकस्मि–न्न वस्तुन्युप-
युज्यते ॥ अर्थांतरोपयुक्तः स्या–च्चपलः कृकलासवत् ॥ ६८ ॥ उत्कर्षेणोपयोगस्य । कालोऽ
प्यांतर्मुहूर्त्तिकः ॥ उपयोगांतरं याति । स्वभावात्तदनंतरं ॥ ६९ ॥ न सर्वमपि वेत्त्येष । प्रा-
णी कर्मावृतो यथा ॥ नार्कस्याभ्राभिभूतस्य । प्रसरंत्यभितः प्रभाः ॥ ७० ॥ संशयाव्यक्त-
बोधाद्या । अप्यस्य कर्मणां वशात् ॥ कुर्वतां ज्ञानवैचित्र्यं । क्षयोपशमभेदतः ॥ ७१ ॥ किं-

च—आभोगानाभोगो—भववीर्यवतो यदा क्षयोपशमः ॥ लब्धिकरणानुरूपं । तदात्मनो ज्ञानमुद्भवति ॥ ७२ ॥ वीर्यापगमे च पुन—स्तदेव कर्मावृणोत्यपाकीर्णं ॥ शैवलजालमिवांभो—दर्पणमिव विमलितं पंकः ॥ ७३ ॥ अथ प्रकृतं—द्विधा भवंति ते जीवाः । सिद्धसंसारिभेदतः ॥ सिद्धाः पंचदशविधा—स्तीर्थाऽतीर्थादिभेदतः ॥ ७४ ॥ यदाहुः—

॥ जिण अजिण तित्थतित्था । गिहि अन्न सलिंग थी नर नपुंसा ॥ पत्तेय सयंबुद्धा । बुद्धबोहिक्कणिकाय ॥ १ ॥

जीवंतीतिस्मृता जीवा । जीवनं प्राणधारणं ॥ ते च प्राणा द्विधा प्रोक्ता । द्रव्यभावविभेदतः ॥ ७५ ॥ सिद्धानामिंद्रियोच्छ्वासा—दयः प्राणा न यद्यपि ॥ ज्ञानादिभावप्राणानां । योगाज्जीवास्तथाप्यमी ॥ ७६ ॥ अलोकस्खलिताः सिद्धा । लोकाग्रे च प्रतिष्ठिताः ॥ इह संत्यज्य देहादि । स्थितास्तत्रैव शाश्वताः ॥ ७७ ॥ ते ज्ञानावरणीयाद्यै—र्मुक्ताः कर्मभिरष्टभिः ॥ ज्ञानदर्शनचारित्रा—द्यनंताष्टकसंयुताः ॥ ७८ ॥ तथोक्तं गुणस्थानक्रमारोहे—अनंतं केवलज्ञानं । ज्ञानावरणसंक्षयात् ॥ अनंतं दर्शनं चापि । दर्शनावरणक्षयात् ॥ ७९ ॥ क्षायिके शुद्ध-

सम्यक्त्व—चारित्रे मोहनिग्रहात् ॥ अनंते सुखवीर्ये च । वेद्यविघ्नक्षयात्क्रमात् ॥ ८० ॥ आयुषः क्षीणभावत्वात् । सिद्धानामक्षया स्थितिः ॥ नामगोत्रक्षयादेवा—मूर्त्तानंताऽवगाहना ॥ ॥ ८१ ॥ रोगमृत्युजराद्यार्त्ति—हीना अपुनरुद्भवाः ॥ अभावात्कर्महेतूनां । दग्धे बीजे हि नांकुरः ॥ ८२ ॥ यावन्मात्रं नरक्षेत्रं । तावन्मात्रं शिवास्पदं ॥ यो यत्र म्रियते तत्रै—वोर्ध्वं गत्वा स सिद्ध्यति ॥ ८३ ॥ उत्पत्त्योर्ध्वं समश्रेण्या । लोकांतस्तैरलंकृतः ॥ यत्रैकस्तत्र तेऽनंता—निर्बाधाः सुखमासते ॥ ८४ ॥ तथोक्तं तत्वार्थभाष्ये—कृत्स्नकर्मक्षयादूर्ध्वं । निर्वाणमधिगच्छति ॥ यथा दग्धेंधनो वह्नि—र्निरुपादानसंततिः ॥ ८५ ॥ तदनंतरमेवोर्ध्व—मालोकांतात्स गच्छति ॥ पूर्वप्रयोगाऽसंगत्व—बंधच्छेदोर्ध्वगौरवैः ॥ ८६ ॥ कुलालचक्रे दोलाया—मिषौ चापि यथेष्यते ॥ पूर्वप्रयोगात्कर्मेह । तथा सिद्धगतिः स्मृता ॥ ८७ ॥

मृल्लेपसंगनिर्मोक्षा—द्यथा दृष्टाप्स्वलांबुनः ॥ कर्मसंगविनिर्मोक्षा—त्तथा सिद्धगतिःस्मृता ॥ ८८ ॥ एरंडयंत्रपेडासु । बंधच्छेदाद्यथा गतिः ॥ कर्मबंधनविच्छेदात् । सिद्धस्यापि तथेष्यते ॥ ८९ ॥ ❀ व्याघ्रपादवीजबंधनच्छेदाद्यंत्रबंधनच्छेदात्पेडाबंधनच्छेदाच्च गतिर्दृष्टा मिंजाका-

ष्टपेम्रापुटानामेवं कर्मबंधविच्छेदात्सिद्धस्य गतिरिति भावः ॥ ❀—ऊर्ध्वगौरवधर्माणो । जीवा इति जिनोत्तमैः ॥ अधोगौरवधर्माणः । पुद्गला इति चोदितं ॥ ९० ॥—❀ ऊर्ध्वगमन एव गौरवं धर्मः स्वभावो जीवानां, पुद्गलास्त्वधोगमनधर्माण इति सर्वज्ञवचनमिति भावः ॥ यथाधस्तीर्यगूर्ध्वं च । लोष्टवाय्वाग्निवीतयः ॥ स्वभावतः प्रवर्त्तंते । तथोर्ध्वगतिरात्मनः ॥९१॥ अतस्तु गतिवैकृत्य—मेषां यदुपलभ्यते ॥ कर्मणः प्रतिघाताच्च । प्रयोगाच्च तदिष्यते ॥ ९२ ॥ अधस्तिर्यगथोर्ध्वं च । जीवानां कर्मजा गतिः ॥ ऊर्ध्वमेव तु तद्धर्मा । भवति क्षीणकर्मणां ॥ ९३ ॥ तत्रापि गच्छतः सिद्धिं । संयतस्य महात्मनः सर्वैरंगैर्विनिर्याति । चेतनस्तनुपंजरात् ॥ ९४ ॥ तदुक्तं स्थानांगपंचमस्थानके—

❀ पंचविहे जीवस्स णिज्जाणमग्गे पं तं पाएहिं, उरूहिं, उरेणं, सिरेणं, सव्वंगेहिं ॥ पाएहिं निज्जायमाणे निरतगामी भवति, उरूहिं निज्जायमाणे तिरियगामी भवति, उरेणं निज्जायमाणे मणुयगामी भवति, सिरेणं निज्जायमाणे देवगामी भवति, सव्वंगेहिं णिज्जायमाणे सिद्धिगतिपज्जवसाणे पणत्ते ❀

❀ भवोपग्राहिकर्मांत-क्षण एव स सिद्ध्यति ॥ उज्जुन्नस्पृशद्गत्या । ह्यचिंत्या शक्तिरात्मनः
॥ १ ॥ अत्र च अस्पृशंती सिद्ध्यंतरालप्रदेशान् गतिर्यस्य सोऽस्पृशद्गतिः, अंतरालप्रदेशस्प-
र्शने हि नैकेन समयेन सिद्धिरिष्यते, च तत्रैक एव समयः, अतोऽन्तराले समयांतरस्याऽभा-
वादंतरालप्रदेशानामसंस्पर्शनमित्यौपपातिकवृत्तौ । अवगाढप्रदेशेभ्योऽपराकाशप्रदेशांस्त्वस्पृ-
शन् गच्छतीति महाभाष्यवृत्तौ । यावत्स्वाकाशप्रदेशेष्विहावगाढस्तावत एव प्रदेशानूर्ध्वम-
प्यवगाहमानो गच्छतीति पंचसंग्रहवृत्तौ । तदत्र तत्त्वं केवलिगम्यं । ❀

एकस्मिन्समये चोर्ध्व-लोके चत्वार एव ते ॥ सिद्ध्यंत्युत्कर्षतो दृष्ट-मधोलोके मत-
त्रयं ॥ ९५ ॥ विंशतिर्द्वाविंशतिश्च । चत्वारिंशदिति स्फुटं ॥ उत्तराध्ययने संग्र-हण्यां च
सिद्धप्राभृते ॥ ९६ ॥

❀ 'वीस अहे तहेवेति' उत्तराध्ययने, जीवाजीवविभक्त्यध्ययने । 'उड्ढहोतिरियलोए
चउबावीसअट्ठसयं' इतिसंग्रहण्यां । 'वीसं पुहुत्तं । अहोलोए' इति सिद्धप्राभृते, तट्टीकायां
विंशतिपृथक्त्वं द्वे विंशती ॥ इति ॥ ❀

अष्टोत्तरशतं तिर्यग्—लोके च द्वौ पयोनिधौ ॥ नदीनदादिके शेष—जले चोत्कर्षतस्त्रयः ॥ ९७ ॥ विंशतिश्चैकविजये । चत्वारो नंदने वने ॥ पंडके द्वावष्टशतं । प्रत्येकं कर्मभूमिषु ॥ ९८ ॥ प्रत्येकं संहरणता । दशाऽकर्ममहीस्वपि ॥ पंचचापशतोच्चा द्वौ । चत्वारो द्विकरांगकाः ॥ ९९ ॥ जघन्योत्कृष्टदेहानां । मानमेतन्निरूपितं ॥ मध्यांगास्त्वेकसमये । सिद्ध्यंत्यष्टोत्तरं शतं ॥ १०० ॥ उत्सर्पिण्यवसर्पिण्यो—स्तार्त्तीयीकतुर्ययोः ॥ अरयोरष्टसहितं । सिध्यंत्युत्कर्षतः शतं ॥ १ ॥—❁ यत्त्वस्या अवसर्पिण्यास्तृतीयारकप्रांते श्रीऋषभदेवेन सहाष्टोत्तरं शतं सिद्धास्तदाश्चर्यमध्येंऽतर्भवतीति समाधेयं । ❁—विंशतिश्चावसर्पिण्याः । सिद्ध्यंति पंचमेऽरके ॥ उत्सर्पिण्यवसर्पिण्योः । शेषेषु दश संहृताः ॥ २ ॥ पुंवेदेभ्यः सुरादिभ्यश्च्युत्वा जन्मन्यनंतरे ॥ भवंति पुरुषाः केचित् । स्त्रियः केचिन्नपुंसकाः ॥ ३ ॥ स्त्रीभ्योऽपि देव्यादिभ्यः स्यु—रेवं त्रेधा महीस्पृशः ॥ क्लीबेभ्यो नारकादिभ्यो—ऽप्येवं स्युर्मनुजास्त्रिधा ॥ ४ ॥ नवस्वेतेषु भंगेषु । पुंभ्यः स्युः पुरुषा हि ये ॥ सिद्ध्यंत्यष्टोत्तरशतं । तेऽन्ये दशदशाखिलाः ॥ ५ ॥

दशाऽन्यन्निक्षुनेपथ्या–श्चत्वारो गृहिवेषकाः ॥ सिद्ध्यंत्यष्टोत्तरशतं । मुनिनेपथ्यधारिणः ॥ ६ ॥ विंशतिर्योषितः किंच । पुमांसोऽष्टोत्तरं शतं ॥ एकस्मिन्समये क्लीबाः । सिद्ध्यंति दश नाधिकाः ॥ ७ ॥ एकसमये अष्टोत्तरशतसिद्धियोग्यतासंग्रहश्चैवं—तिर्यग्लोके क्षपितकलुषाः कर्मभूमिस्थलेषु । जाता वैमानिकपुरुषतो मध्यमांगप्रमाणाः ॥ सिद्ध्यंत्यष्टाधिकमपि शतं साधुवेषाः पुमांस–स्तार्त्तीयीके नियतमरके चिंत्यतां वा तुरीये ॥ ८ ॥ यत्रैको निर्वृतः सिद्ध–स्तत्रान्ये परिनिर्वृताः ॥ अनंता नियमाल्लोक–पर्यंतस्पर्शिनः समे ॥ ९ ॥ अयमर्थः—संपूर्णमेकसिद्धस्या–ऽवगाढक्षेत्रमाश्रिताः ॥ अनंताः पुनरन्ये च । तस्यैकैकं प्रदेशकं ॥ १० ॥ समाक्रम्यावगाढाः स्युः । प्रत्येकं तेऽप्यनंतकाः ॥ एवं परे द्वित्रिचतुः–पंचाद्यंशान्निवृद्धितः ॥ ११ ॥ तथा—सिद्धावगाढक्षेत्रस्य । तस्यैकैकं प्रदेशकं ॥ त्यक्त्वा स्थितास्तेऽप्यनंता । एवं द्व्यादिप्रदेशकान् ॥ १२ ॥ एवं च—प्रदेशवृद्धिहानिभ्यां । येऽवगाढा अनंतकाः ॥ पूर्णक्षेत्रावगाढेभ्यः । स्युस्तेऽसंख्यगुणाधिकाः ॥ १३ ॥ ततश्च—एकः सिद्धः प्रदेशैः स्वैः । समग्रैरतिनिर्मलैः ॥ सिद्धाननंतान् स्पृशति । व्यवगाढैः परस्परं ॥ १४ ॥ तेभ्योऽसंख्यगुणा-

न देश–प्रदेशैः स्पृशति ध्रुवं ॥ क्षेत्रावगाहनाभेदै–रन्यान्यैः पूर्वदर्शितैः ॥ ११५ ॥

❀ तथोक्तं प्रज्ञापनायामौपपातिके आवश्यके च—फुसइ अणंते सिद्धे । सव्वपएसेहिं नियमसो सिद्धो ॥ तेवि असंखिज्जगुणा । देशपएसेहिं जे पुठ्ठा ॥ १ ॥ ❀

अशरीरा जीवघना । ज्ञानदर्शनशालिनः ॥ साकारेण निराकार–णोपयोगेन लक्षिताः ॥ ॥ १६ ॥ ज्ञानेन केवलेनैते । कलयंति जगत्त्रयीं ॥ दर्शनेन च पश्यंति । केवलेनैव केवलाः ॥ १७ ॥ पूर्वभवाकारस्या–न्यथाव्यवस्थापनाच्छुषिरपूर्त्या ॥ संस्थानमनित्थंस्थं । स्यादेषाम-नियताकारं ॥ १८ ॥ केनचिदलौकिकेन । स्थितं प्रकारेण निगदितुमशक्यं ॥ अतएवव्यपदे-शा । नैषां दीर्घादिगुणवचनैः ॥ १९ ॥

❀ तथाहुः–से न दीहे, से न हस्से, से न वट्टे इत्यादि ❀

संस्थानं ह्याकारः । स कथममूर्त्तस्य भवति सिद्धस्य ॥ ( अत्रोच्यते ) परिणामवत्य-मूर्त्ते–ऽप्यसौ भवेत्कुंभनभसीव ॥ २० ॥ पूर्वभवभाविदेहा–कारमपेक्ष्यैव सिद्धजीवस्य ॥ सं-स्थानं स्यादौपा–धिकमेव न वास्तवं किंचित् ॥ २१ ॥ तथाहुरावश्यकनिर्युक्तिकृतः–

❀ उग्गाहणाइ सिद्धा । भवत्तिभागेण हुंति परिहीणा ॥ संठाणमणित्थंथं । जरामरण-
विप्पमुक्काणं ॥ १ ॥ उत्ताणउ वपासिल्लउ व अहवा निसन्नउ चेव ॥ जो जह करेइ कालं ।
सो तह उववज्जए सिद्धो ॥ २ ॥ इहभवभिन्नागारो । कम्मवसाउ भवंतरे होइ ॥ न य तं सि
द्धस्स तउ । तंमीतो से तयागारो ॥ ३ ॥ जं संठाणं तु इहं भव । चयंतस्स चरमसमयंमि
॥ आसीअ पएसघणं । तं संठाणं तहिं तस्स ॥ ४ ॥ ❀

शतानि त्रीणि धनुषां । त्रयस्त्रिंशद्धनूंषि च ॥ धनुस्त्रिभागश्च परा । सिद्धानामवगाहना
॥ २२ ॥ जघन्याष्टांगुलोपेत—हस्तमाना प्ररूपिता ॥ जघन्योत्कृष्टयोरंत—राले मध्या त्वनेकधा
॥ २३ ॥ षोडशांगुलयुक्ता या । मध्या करचतुष्टयी ॥ आगमे गीयते सर्व—मध्यानां सोपल-
क्षणं ॥ २४ ॥ प्राच्ये जन्मनि जीवानां । या भवेदवगाहना ॥ तृतीयभागन्यूना सा । सि-
द्धानामवगाहना ॥ २५ ॥ उत्कृष्टा च भवे प्राच्ये । धनुःपंचशती मिता ॥ मध्यमा च बहु-
विधा । जघन्या हस्तयोर्द्वयं ॥ २६ ॥ जघन्या सप्तहस्तैव । जिनेंद्राणामपेक्षया ॥ त्र्यशोन-
त्वे किलैतासां । ताः स्युः सिद्धावगाहनाः ॥ २७ ॥ एतदभिप्रेत्यैवौपपातिकोपांगे उक्तं—

❀ जीवाणं भंते सिझमाणा कयरंमि उच्चत्ते सिझंति, गो० जहन्नेणं सत्तरयणीए। उक्कोसेणं पंचधणुसइए सिझंति. ❀

मरुदेवा कथं सिद्धा । नन्वेवं जननी विष्णोः ॥ साग्रपंचचापशतो–त्तुंगा नाभिसमोच्छ्रया ॥ २८ ॥ –' संघयणं संठाणं, उच्चत्तं चेव कुलगरेहिं समं ' इतिवचनात्–अत्रोच्यते–स्त्रियो ह्युत्तमसंस्थानाः । पुंसः कालादिसंस्थितेः ॥ किंचिदूनप्रमाणाः स्यु–र्नाभेरूनोच्छ्रयेति सा ॥ २९ ॥ गजस्कंधाधिरूढत्वा न्मनाक्संकुचितेति वा ॥ पंचचापशतोच्चैव । सेति किंचिन्न दूषणं ॥ ३० ॥–अयं च भाष्यकृदभिप्रायः । संग्रहणीवृत्त्यभिप्रायस्त्वयं—

❀ यदिदमागमे पंचधनुःशतान्युत्कृष्टं मानमुक्तं तद्बाहुल्यात्, अन्यथैतद्धनुःपृथक्त्वैरधिकमपि स्यात्, तच्च पंचविंशत्यधिकपंचधनुःशतरूपं बोधव्यं. सिद्धप्राभृतेऽप्युक्तं–उग्गाहणा जहन्ना । रयणिदुगं अह पुणाइ उक्कोसा ॥ पंचेव धणुसयाइं । धणुअपुहुत्तेण अहियाइंति ॥ एतद्वृत्तिश्च—पृथक्त्वशब्दोऽत्र बहुत्ववाची, बहुत्वं चेह पंचविंशतिरूपं द्रष्टव्यमिति ❀

आद्यसंहनना एवं । सिद्ध्यंति न पुनः परे ॥ संस्थानानां त्वनियम–स्तेषु षट्स्वपि नि-

र्वृतिः ॥ ३१ ॥ पूर्वकोट्यायुरुत्कर्षात् । सिद्ध्येन्नाधिकजीविनः ॥ जघन्यान्नववर्षायुः । सिद्ध्ये-
न्नन्यूनजीविनः ॥ ३२ ॥ द्वात्रिंशदंता एकाद्या–श्चेत्सिद्ध्यंति निरंतरं ॥ तदाष्टसमयान् याव-
न्नवमे त्वंतरं ध्रुवं ॥ ३३ ॥ अष्टचत्वारिंशदंता–स्त्रयस्त्रिंशन्मुखा यदि ॥ सिद्ध्यंति समयान् स-
प्त । ध्रुवमंतरमष्टमे ॥ ३४ ॥ एकोनपंचाशदाद्याः । षष्ट्यंता यदि देहिनः ॥ सिद्ध्यंति सम-
यान् षट् वै । सप्तमे त्वंतरं भवेत् ॥ ३५ ॥ एकषष्टिप्रभृतयो । यावद्द्वासप्ततिप्रमाः ॥ सिद्ध्यं-
ति समयान् पंच । षष्टे त्ववश्यमंतरं ॥ ३६ ॥ त्रिसप्ततिप्रभृतय–श्चतुरशीतिसीमकाः ॥ च-
तुरः समयान् यावत् । सिद्ध्यंत्यग्रेतनेंतरे ॥ ३७ ॥ पंचाशीत्याद्याः क्षणांस्त्रीन् । यांत्यावस-
वर्तिं शिवं ॥ क्षणौ सप्तनवत्याद्या । द्वौ च द्व्यग्रशतावधि ॥ ३८ ॥ त्र्यधिकशताद्याश्चे-
द्यावदष्टोत्तरं शतं ॥ सिद्ध्यंति चैकसमयं । द्वितीयेऽवश्यमंतरं ॥ ३९ ॥ जघन्यमंतरं त्वेक–स-
मयं परमं पुनः ॥ षण्मासान्नास्ति सिद्धानां । च्यवनं शाश्वता हि ते ॥ ४० ॥ सर्वस्तोकाः
क्लीबसिद्धा–स्तेभ्यः संख्यगुणाधिकाः ॥ स्त्रीसिद्धाः पुनरेभ्यः पुं–सिद्धाः संख्यगुणाधिकाः ॥
॥ ४१ ॥ सर्वस्तोका दक्षिणस्या–मुदीच्यां च मिथः समाः ॥ प्राच्यां संख्यगुणाः पश्चि–मा-

यां विशेषतोऽधिकाः ॥ ४२ ॥

न तत्सुखं मनुष्याणां । देवानामपि नैव तत् ॥ यत्सुखं सिद्धजीनां । प्राप्तानां पदमव्य-
यं ॥ ४३ ॥ त्रैकालिकानुत्तरांत–निर्जराणां त्रिकालजं ॥ भुक्तं भोग्यं भुज्यमान–मनंतं नाम
यत्सुखं ॥ ४४ ॥ पिंडीकृतं तदेकत्रा–ऽनंतैर्वर्गैश्च वर्गितं ॥ शिवसौख्यस्य समतां । लभते न
कदाचन ॥ ४५ ॥ सर्वाद्धापिंडितः सिद्ध–सुखराशिर्विकल्पतः ॥ अनंतवर्गभक्तोऽपि । न मा-
याद्भुवनत्रये ॥ ४६ ॥ वर्गविभागश्चैवं––स्युः षोडश चतुर्भक्ता–श्चत्वारो वर्गभागतः ॥ द्वा-
वेव परिशिष्येते । चत्वारोऽपि द्विभाजिताः ॥ ४७ ॥ सुखस्य तस्य माधुर्यं । कलयन्नपि के-
वली ॥ वक्तुं शक्नोति नो जग्ध–गुडादेर्मूकदेहिवत् ॥ ४८ ॥ यथेप्सितान्नपानादि–भोजना-
नंतरं पुमान् ॥ तृप्तः सन्मन्यते सौख्यं । तृप्तास्ते सर्वदा तथा ॥ ४९ ॥ एवमापातमात्रेण ।
दर्श्यते तन्निदर्शनं ॥ वस्तुतस्तु तदाह्लादो–पमानं नास्ति विष्टपे ॥ ५० ॥ औपम्यस्याप्यविष-
य–स्ततः सिद्धसुखं खलु ॥ यथा पुरसुखं जज्ञे । म्लेच्छवाचामगोचरः ॥ ५१ ॥ तथा चाहुः–
म्लेच्छः कोऽपि महारण्ये । वसतिस्म निराकुलः ॥ अन्यदा तत्र भूपालो । दुष्टाश्वेन प्र-

वेशितः ॥ ५२ ॥ म्लेच्छेनामौ नृपो दृष्टः । सत्कृतश्च यथोचितं ॥ प्रापितश्च निजं देशं । सो-
ऽपि राज्ञा निजं पुरं ॥ ५३ ॥ ममायमुपकारीति । कृतो राज्ञाऽतिगौरवात् ॥ विशिष्टभोग-
भूतीनां । भाजनं जनपूजितः ॥ ५४ ॥ तुंगप्रासादशृंगेषु । रम्येषु काननेषु च ॥ वृतो वि-
लासिनीवृंदै—र्भुंक्ते भोगसुखान्यसौ ॥ ५५ ॥ अन्यदा प्रावृषः प्राप्तौ । मेघाडंबरमंबरे ॥ दृष्ट्वा
मृदंगमधुरै—र्गर्जितैः केकिनर्त्तनं ॥ ५६ ॥ जातोत्कंठो दृढं जातो—ऽरण्यवासगमंप्रति ॥ विस
र्जितश्च राज्ञापि । प्राप्तोऽरण्यमसौ ततः ॥ ५७ ॥ पृच्छंत्यरण्यवासास्तं । नगरं तात कीदृशं
॥ परं नगरवस्तूना—मुपमाया अभावतः ॥ ५८ ॥ न शशाकतमां तेषां । गदितुं स कृतोद्य-
मः ॥ एवमत्रोपमाऽभावात् । वक्तुं शक्य न तत्सुखं ॥ ५९ ॥ सिद्धा बुद्धा गताः पारं । परं
पारंगता अपि ॥ सर्वामनागतामद्धां । तिष्टंति सुखलीलया ॥ ६० ॥ अरूपा अपि प्राप्तरूपप्र-
कृष्टा । अनंगाः स्वयं ये त्वनंगद्रुहोऽपि ॥ अनंताक्षराश्चोज्झिताशेषवर्णाः । स्तुमस्तान् वचो-
गोचरान् सिद्धजीवान् ॥ ६१ ॥ इति सिद्धाः ॥ विश्वाश्चर्यदकीर्त्तिकीर्त्तिविजयश्रीवाचकेंद्रांति-
ष—द्राजश्रीतनयोऽतनिष्ट विनयः श्रीतेजपालात्मजः ॥ काव्यं यत्किल तत्र निश्चितजगत्तत्व-

प्रदीपोपमे । सर्गो निर्गलितार्थसार्थसुभगः पूर्णो द्वितीयः सुखं ॥ ६२ ॥

॥ इति लोकप्रकाशे द्वितीयः सर्गः समाप्तः ॥

---

## ॥ तृतीयः सर्गः प्रारभ्यते ॥

अथ संसारिजीवानां । स्वरूपं वर्णयाम्यहं ॥ द्वारैः सप्तत्रिंशताता—न्यमूनि स्युर्यथाक्रमं ॥ १ ॥ भेदाः स्थानानि पर्याप्तिः । संख्ये योनिकुलाश्रिते ॥ योनीनां संवृतत्वादि । स्थिती च भवकाययोः ॥ २ ॥ देहसंस्थानांगमान—समुद्घाता गतागती ॥ अनंतराप्तिः समये—सिद्धिर्लेश्या दिगाहृतौ ॥ ३ ॥ संहननानि कषायाः । संज्ञेंद्रियसंज्ञितास्तथा वेदाः ॥ दृष्टिर्ज्ञानं दर्शन—मुपयोगाहारगुणयोगाः ॥ ४ ॥ मानं लघ्वल्पबहुता । सैवान्या दिगपेक्षया ॥ अंतरं भवसंवेधो । महाल्पबहुतापि च ॥ ५ ॥ भेदा इह प्रकाराः स्यु—र्जीवानां स्वस्वजातिषु ॥ समुद्घातनिजस्थानो—पपातैः स्थानकं त्रिधा ॥ ६ ॥ पर्याप्ता व्यपदिश्यंते । याभिः पर्याप्तयस्तु ताः ॥ पर्याप्ताऽपर्याप्तभेदा—दत एव द्विधांगिनः ॥ ७ ॥ पर्याप्तयः स्वयोग्या यैः । मक-


॥

लाः साधिताः सुखं ॥ पर्याप्तनामकर्मानु–ज्ञावात्पर्याप्तकास्तु ते ॥ ८ ॥ द्विधामी लब्धिक-
रण–ज्ञेदात्तत्रादिमास्तु ये ॥ समाप्य स्वार्हपर्याप्ती–र्म्रियंते नान्यथा ध्रुवं ॥ ए ॥ करणानि
शरीराक्षा–दीनि निर्वर्त्तितानि यैः ॥ ते स्युः करणपर्याप्ताः । करणानां समर्थनात् ॥ १० ॥
अपर्याप्ता द्विधा प्रोक्ता । लब्ध्या च करणेन च ॥ द्वयोर्विशेषं शृणुत । ज्ञाषितं गणधारि-
ज्ञिः ॥ ११ ॥ असमाप्य स्वपर्याप्ती–र्म्रियंते येऽल्पजीविताः ॥ लब्ध्या ते स्युरपर्याप्ता । य-
था निःस्वमनोरथाः ॥ १२ ॥ निर्वर्त्तितानि नाद्यापि । प्राणिज्ञिः करणानि यैः ॥ देहाक्षादी-
नि करणा–ऽपर्याप्तास्ते प्रकीर्त्तिताः ॥ १३ ॥ म्रियंतेऽल्पायुषो लब्ध्य–पर्याप्ता इह येऽगिनः
॥ तेऽपि जूत्वैव करण–पर्याप्ता नान्यथा पुनः ॥ १४ ॥ याहारादिपुजलाना–मादानपरिणाम-
योः ॥ जंतोः पर्याप्तिनामोत्था । शक्तिः पर्याप्तिरत्र सा ॥ १५ ॥ पुजलोपचयादेव । ज्ञवेत्सा
सा च षड्विधा ॥ आहारांगेंड्रियश्वासो–च्छ्वासज्ञाषामनोऽज्ञिधाः ॥ १६ ॥ तत्रैषाहारपर्या-
प्ति–र्ययादाय निजोचितं ॥ पृथक्खलरसत्वेनाहारं परिणातिं नयेत् ॥ १७ ॥ वैक्रियाहारकौ-
दारि–कांगयोग्यं यथोचितं ॥ रसीज्ञूतमाहारं । यया शक्त्या पुनर्ज्ञवी ॥ १८ ॥ रसासृग्मांस

मेदोऽस्थि–मज्जशुक्रादिधातुतां ॥ नयेद्यथासंभवं सा । देहपर्याप्तिरुच्यते ॥ १९ ॥ युग्मं ॥ धातुत्वेन परिणतादाहारादिंद्रियोचितात् ॥ आदाय पुद्गलांस्तानि । यथास्थं प्रविधाय च ॥२०॥ इष्टे तद्विषयज्ञप्तौ । यया शक्त्या शरीरवान् ॥ पर्याप्तिःसेंद्रियाह्वाना । दर्शिता सर्वदर्शिभिः ॥ २१ ॥ इति संग्रहणीवृत्त्यभिप्रायः । प्रज्ञापनाजीवाभिगमप्रवचनसारोद्धारवृत्त्यादिषु तु—

❀ यया धातुतया परिणमितमाहारमिंद्रियतया परिणमयति, सेंद्रियपर्याप्तिरित्येतावदेव दृश्यते, इतिज्ञेयं ❀

यथोच्छ्वासार्हमादाय । दलं परिणमय्य च ॥ तत्तयालंब्य मुंचेत्सो–च्छ्वासपर्याप्तिरुच्यते ॥ २२ ॥ ननु देहोच्छ्वासनाम–कर्मभ्यामेव सिध्यतः ॥ देहोच्छ्वासौ किमेताभ्यां । पर्याप्तिभ्यां प्रयोजनं ॥ २३ ॥ अत्रोच्यते पुद्गलानां । गृहीतानामिहात्मना ॥ साध्या परिणतिर्देह–तया तन्नामकर्मणा ॥ २४ ॥ आरब्धांगसमाप्तिस्तु । तत्पर्याप्त्या प्रसाध्यते ॥ एवं भेदः साध्यभेदा–देहपर्याप्तिकर्मणोः ॥ २५ ॥ एवमुच्छ्वासलब्धिः स्या–त्साध्या तन्नामकर्मणः ॥ साध्यमुच्छ्वासपर्याप्ते–स्तस्या व्यापारणं पुनः ॥ २६ ॥ सतीमप्युच्छ्वासलब्धिमुच्छ्वासना·

प्र

॥

मकर्मजां ॥ पारयितुमीशः स्या–त्तत्पर्याप्त्यैव नान्यथा ॥ २७ ॥ सतीमपि शरक्षेप–श-
क्तिं नैव भटोऽपि हि ॥ विना चापादानशक्तिं । सफलीकर्त्तुमीश्वरः ॥ २८ ॥ भाषार्हं दल-
मादाय । गीस्त्वं नीत्वावलंब्य च ॥ यया शक्त्या त्यजेत्प्राणी । भाषापर्याप्तिरित्यसौ ॥२९॥
दलं लात्वा मनोयोग्यं । तत्तां नीत्वावलंब्य च ॥ यया मननशक्तः स्या–न्मनःपर्याप्तिरत्र सा
॥ ३० ॥ म्रियते येऽप्यपर्याप्ताः । पर्याप्तित्रयमादिमं ॥ पूर्णीकृत्यैव न पुन–रन्यथा संज्ञिने-
न्मृतिः ॥ ३१ ॥ तथाहि–पर्याप्तित्रययुक्तोऽत–र्मुहूर्त्तेनायुरग्रिमं ॥ बध्ध्वा ततोऽन्तर्मुहूर्त्त–म-
बाधांतस्य जीवति ॥ ३२ ॥ ततो निबद्धायुर्योग्यां । याति तां गतिमन्यथा ॥ अबद्धायुरनापू-
र्ण–तदाबाधो व्रजेत्क्व सः ॥ ३३ ॥ तथोक्तं प्रज्ञापनावृत्तौ–

❀ यस्मादागामिभवायुर्बध्ध्वा म्रियते सर्वदेहिनो नाऽबध्ध्वा, तच्च शरीरेंद्रियपर्याप्तिभ्यां प-
र्याप्तानां बंधमायाति, नाऽपर्याप्तानां. ❀

समयेभ्यो नवभ्यः स्या–त्प्रभृत्यंतर्मुहूर्त्तकं ॥ समयोनमुहूर्तांत–मसंख्यातविधं यतः
॥ ३४ ॥ ततः सूक्ष्मक्ष्मादीना–मंतर्मुहूर्त्तजीविनां ॥ अंतर्मुहूर्त्तानेकत्व–मिदं संगतिमंगति

॥ ३५ ॥ युग्मं ॥ उत्पत्तिक्षण एवैताः । स्वा स्वा युगपदात्मना ॥ आरभ्यंते संविधातुं । समाप्यंते त्वनुक्रमात् ॥ ३६ ॥ तद्यथा—आदावाहारपर्याप्ति—स्ततः शरीरसंज्ञिता ॥ तत इंद्रियपर्याप्ति—रेवं सर्वा अपि क्रमात् ॥ ३७ ॥ तत्रैकाहारपर्याप्तिः । समाप्येतादिमे क्षणे ॥ शेषा असंख्यसमय—प्रमाणांतर्मुहूर्त्ततः ॥ ३८ ॥ अनुक्रमोऽयं विज्ञेय । औदारिकशरीरिणां ॥ वैक्रियाहारकवतां । ज्ञातव्योऽयं पुनः क्रमः ॥ ३९ ॥ एका शरीरपर्याप्ति—र्जायतेंऽतर्मुहूर्त्ततः ॥ एकैकक्षणवृद्ध्यातः । समाप्यंते पराः पुनः ॥ ४० ॥ निष्पत्तिकालः सर्वासां । पुनरांतर्मुहूर्त्तिकः ॥ आरंभसमयाद्यांति । निष्ठां ह्यंतर्मुहूर्त्ततः ॥ ४१ ॥ आहारपर्याप्तिस्त्वत्रापि प्राग्वत् —मनोवचःकायबला—न्यक्षाणि पंच जीवितं ॥ श्वासश्चेति दश प्राणा । द्वारेऽस्मिन्नेव वक्ष्यते ॥ ४२ ॥ इतिपर्याप्तिस्वरूपं—

तैजसकार्मणवंतो । युज्यंते यत्र जंतवः स्कंधैः ॥ औदारिकादियोग्यैः । स्थानं तद्योनिरित्याहुः ॥ ४३ ॥ तथा च—व्यक्तितोऽसंख्यभेदास्ताः । संख्यार्हा नैव यद्यपि ॥ तथापि समवर्णादि—जातिभिर्गणनां गताः ॥ ४४ ॥ तथोक्तं प्रज्ञापनावृत्तौ—

❋ केवलमेव विशिष्टवर्णादियुक्ताः संख्यातीताः स्वस्थाने व्यक्तिभेदेन योनयो, जातिं अधिकृत्य एकैव योनिर्गण्यते. ❋

लक्षाश्चतुरशीतिश्च । सामान्येन भवंति ताः ॥ विशेषात्तु यथास्थानं । वक्ष्यंते स्वामिभावतः ॥ ४५ ॥ किंच— संवृता विवृता चैव । योनिर्विवृतसंवृता ॥ दिव्यशय्यादिवद्वस्त्राद्यावृता तत्र संवृता ॥ ४६ ॥ तथा विस्पृष्टमनुप—लक्ष्यमाणापि संवृता ॥ विवृता तु स्पष्टमुप—लक्ष्या जलाशयादिवत् ॥ ४७ ॥ उक्तोभयस्वभावा तु । योनिर्विवृतसंवृता ॥ बहिर्दृश्याऽदृश्यमध्या । नारीगर्भाशयादिवत् ॥ ४८ ॥ तृतीययोनिजाः स्तोका—स्ततो द्वितीययोनयः ॥ असंख्यघ्नास्ततोऽनंत—गुणिताः स्युरयोनयः ॥ ४९ ॥ तेभ्योऽप्यनंतगुणिताः । ख्याताः प्रथमयोनयः ॥ एवं शीतसचित्तादि—ष्वप्यल्पबहुतोह्यतां ॥५०॥ शीता चोष्णा च शीतोष्णा । तत्स्पर्शान्वयात्त्रिधा ॥ सचित्ताऽचित्तमिश्रेति । भेदतोऽपि त्रिधा भवेत् ॥ ५१ ॥ जीवप्रदेशैरन्योऽन्या—नुगमेनोररीकृता ॥ जीवद्देहादिः सचित्ता । शुष्ककाष्टादिवत्परा ॥५२॥ अत एवांगिभिः सूक्ष्मै—स्त्रैलोक्ये निचितेऽपि हि ॥ न तत्प्रदेशैर्योनीना—मचित्तानां सचित्त-

ता ॥ ५३ ॥ सचित्ताऽचित्तरूपा तु । मिश्रा योनिः प्रकीर्त्तिता ॥ नृतिरश्चां यथा योनौ । शुक्रशोणितपुद्गलाः ॥ ५४ ॥ आत्मसाद्विहिता ये स्यु–स्ते सचित्ताः परेऽन्यथा ॥ सचित्ताऽचित्तयोगे त–द्योनेर्मिश्रत्वमाहितं ॥ ५५ ॥

❀ योषितां किल नाभेरधस्ताच्छिराद्वयं पुष्पमालावैकक्ष्यकाकारमस्ति, तस्याधस्तादधोमुखसंस्थितकोशाकारा योनिः, तस्याश्च बहिश्चूतकलिकाकृतयो मांसमंजर्यो जायंते, ताः किलासृक्स्पंदित्वात् ऋतौ स्रवंति, तत्र केचिदसृजो लवाः कोशाकारकां योनिमनुप्रविश्य संतिष्ठंते, पश्चाच्छुक्रसंमिश्रांस्तानाहारयन् जीवस्तत्रोत्पद्यते, तत्र ये योन्यात्मसात्कृतास्ते सचित्ताः, कदाचिन्मिश्रा इति । ये तु न स्वरूपतामापादितास्तेऽचित्ताः । अपरे वर्णयंति–असृक् सचेतनं शुक्रमचेतनमिति । अन्ये ब्रुवते–शुक्रशोणितमचित्तं योनिप्रदेशाः सचित्ता इत्यतो मिश्रेति तु तत्वार्थवृत्तौ द्वितीयेऽध्याये ❀

योनिस्त्रिधा मनुष्याणां । शंखावर्त्तादिभेदतः ॥ यस्यां शंखइवावर्त्तः । शंखावर्त्ता तु तत्र सा ॥ ५६ ॥ कूर्मोन्नता भवेद्योनिः । कूर्मपृष्टमिवोन्नता ॥ वंशीपत्रा तु संयुक्त–वंशीपत्रद्व-

याकृतिः ॥ ५७ ॥ स्त्रीरत्नस्य भवेच्छंखा–वर्त्ता सा गर्भवर्जिता ॥ च्युत्क्रामंति तत्र गर्भा । निष्पद्यंते न ते यतः ॥ ५८ ॥ अतिप्रबलकामाग्ने–र्विलीयंते हि ते यथा ॥ कुरुमत्या करस्पृष्टो –ऽप्यद्रवल्लोहपुत्रकः ॥५९॥ तथाच प्रज्ञापनायां—

❀ संखावत्ताणं जोणी इत्थिरयणस्स ❀

अर्हच्चक्रिविष्णुबल–देवांबानां द्वितीयका ॥ तृतीया पुनरन्यासां । स्त्रीणां योनिः प्रकीर्त्तिता ॥ ६० ॥ इदं च योनीनां त्रिधा त्रैविध्यं स्थानांगतृतीयस्थाने.–आचारांगवृत्तौ तु शुभाऽशुभभेदेन योनीनामनेकत्वमेवं गाथाभिः प्रदर्शितं—

❀ सीआदीजोणीउ । चउरासीती अ सयसहस्सेहिं ॥ असुहाउ य सुहाउ । तत्थ सुहाउ इमा जाण ॥ ६१ ॥ अस्संखाउमणुस्सा । राइसरसंखमादिआऊणं ॥ तित्थयरनामगोअं । सव्वसुहं होइ नायव्वं ॥ ६२ ॥ तत्थवि य जाइसंपन्नयाइ । सेसाउ होंति असुहाउ ॥ देवेसु किब्बिसाइ । सेसाउ होंति उ सुहाउ ॥ ६३ ॥ पंचेंदियतिरिएसु । हयगयरयणा हवंति उ सुहाउ ॥ सेसाउ असुहाउ । सुहवन्नेगिंदियादीया ॥ ६४ ॥ देविंदचक्कवट्टि–त्तणाइं मोत्तुं च

तिब्बयरन्नावं ॥ अणगारन्नावियाविय ; सेसाउ अणंतसो पत्ता ॥६५॥ ❁ इतियोनिस्वरूपं—

कुलानि योनिप्रन्नवा—न्यास्ता नि बहून्यपि ॥ न्नवंति योनावेकस्यां । नानाजातीयदेहि-नां ॥ ६६ ॥ कृमिवृश्चिककीटादि—नानाक्षुद्रांगिनां यथा ॥ एकगोमयपिंमांतः । कुलानि स्यु-रनेकशः ॥ ६७ ॥ कोट्येका सप्तनवति—र्लक्षाः सार्धा न्नवंति हि ॥ सामान्यात्कुलकोटीनां । विशेषो वक्ष्यतेऽग्रतः ॥ ६८ ॥ इतियोनिकुलस्वरूपं, तत्संवृतत्वादि च ॥

न्नवस्थितिस्तन्नवायु—र्द्विविधं तच्च कीर्त्तितं ॥ सोपक्रमं स्यात्तत्राद्यं । द्वितीयं निरुपक्रमं ॥ ६ए ॥ कालेन बहुना वेद्य—मप्यायुर्यत्तु भुज्यते ॥ अल्पेनाध्यवसानाद्यै—रागमोक्तैरुपक्रमैः ॥ ७० ॥ आयुः सोपक्रमं तत्स्या—दन्यद्वा कर्म तादृशं ॥ यद्बंधसमये बद्धं । श्लथं शक्यापव-र्त्तनं ॥ ७१ ॥ युग्मं ॥ दत्ताग्निरकतो रज्जु—र्यथा दीर्घीकृता क्रमात् ॥ दह्यते संपिंमिता तु । सा ऊटित्येकहेलया ॥ ७२ ॥ यत्पुनर्बंधसमये । बद्धं गाढनिकाचनात् ॥ क्रमवेद्यफलं तद्धि । न शक्यमपवर्त्तितु ॥ ७३ ॥ क्षीयतेऽध्यवसानाद्यै—र्यैः स्वोत्थैः स्वस्य जीवितं ॥ परैश्च विषश-स्त्राद्यै—स्ते स्युः सर्वेऽप्युपक्रमाः ॥ ७४ ॥ यदाहुः—

❀ अज्झवसाण निमित्ते । आहारे वेयणा पराघाए ॥ फासे आणपाणू । सत्तविहं जिज्झए आउं ॥ ७५ ॥ ❀ त्रिधा तत्राध्यवसानं । रागस्नेहभयोद्भवं ॥ व्यापादयंति रागाद्या । अप्यत्यंतविकल्पिताः ॥ ७६ ॥ यथा प्रपापालिकाया । युवानमनुरागतः ॥ पश्यंत्याः क्षीणमायुर्य–त्कामस्यांत्या दशा मृतिः ॥ ७७ ॥ यतः—चिंतेइ दहुमिच्छइ । दीहं नीससइ तह जरे दाहे ॥ भत्तअरोहण मुच्छा । उम्माय नयाणई मरणं ॥ ७८ ॥ कस्याश्चित्सार्थवाह्याश्च । विदेशादागते प्रिये ॥ मित्रैः स्नेहपरीक्षार्थं । विपन्ने कथितेऽथ सा ॥ ७९ ॥ सार्थवाही विपन्नैव । सार्थवाहोऽपि तां मृतां ॥ श्रुत्वा तत्संगमायेव । तूर्णं स्नेहाद्व्यपद्यत ॥ ८० ॥ भयाद्यथा वासुदेव–दर्शनात्सोमिलो द्विजः ॥ हत्वा गजसुकुमारं । नगरीमाविशन्मृतः ॥ ८१ ॥ निमित्ताद्द्विपशस्त्रादे–राहराद्बहुतोऽल्पतः ॥ स्निग्धतश्चाऽस्निग्धतश्च । विकृतादहितावहात् ॥८२॥ शूलादेर्वेदनायाश्च । गर्त्ताप्रपतनादिकात् ॥ पराघातात्स्पर्शतश्च । त्वग्विषादिसमुद्भवात् ॥८३॥ श्वासोच्छ्वासाच्च विकृत–त्वेनात्यंतं प्रसर्पतः ॥ निरुद्धाद्वा म्रियेतांगी । तस्मादेते उपक्रमाः ॥ ८४ ॥ स्युः केषांचिद्यदप्येते–ऽनुपक्रमायुषामपि ॥ स्कंदकाचार्यशिष्याणा–मिव यंत्रनिपी-

त्तना ॥ ८५ ॥ तथापि कष्टदास्तेषां । न त्वायुःक्षयहेतवः ॥ सोपक्रमायुष इव । ज्ञासंते तेऽपि तैर्मृताः ॥ ८६ ॥ अथ प्रकृतं—

सोपक्रमायुषः केऽप्य—नुपक्रमायुषः परे ॥ इति स्युर्द्विविधा जीवा—स्तत्र सोपक्रमायुषः ॥ ८७ ॥ तृतीये नवमे सप्त—विंशे ज्ञागे निजायुषः ॥ बध्नंति परजन्मायु—रंत्ये वांतर्मुहूर्त्तके ॥ ८८ ॥ यदाहुः श्यामाचार्याः—' सियतिन्नागे, सियतिन्नागतिन्नागे, सियतिन्नागतिन्नागतिन्नागे इति '—केचित्तु सप्तविंशाद—प्यूर्ध्वं विकल्पयंति वै ॥ त्रिन्नागकल्पनां याव—दंत्यमंतर्मुहुर्त्तकं ॥ ८९ ॥ असंख्यायुर्नृतिर्यंच—श्वरमांगाश्च नारकाः ॥ सुराः शलाकापुमांसो—ऽनुपक्रमायुषः स्मृताः ॥ ९० ॥

❀ अपरे वर्णयंति, तीर्थंकरौपपातिकानां नोपक्रमतो मृत्युः, शेषाणामुन्नयथा इतितत्त्वार्थवृत्तौ कर्मप्रकृतिवृत्तावपि ' अद्धाजोगुक्कोसं ' इति गाथाव्याख्याने । ज्ञोगन्नूमिजेषु तिर्यक्षु मनुष्येषु च त्रिपल्योपमस्थितिषूत्पन्नः पश्चादाशु सर्वाल्पजीवितमंतर्मुहुर्त्तं विहाय शेषमायुस्त्रिपल्योपमस्थितिकमपवर्त्तयत्यंतर्मुहुर्त्तोनमिति. ❀

सुरनैरयिकाऽसंख्य–जीवितिर्यङ्मनुष्यकाः ॥ बध्नंति षण्मासशेषा–युषोऽग्यन्नवजीवितं ।९१।

❀ मतांतरेणोत्कर्षतः षण्मासावशेषे जघन्यतश्चांतर्मुहूर्त्तशेषे नारकाः परन्नवायुर्बध्नंतीति न्नग० शत० १४ न्न० १ ❀

निजायुषस्तृतीयेंऽशे । शेषेऽनुपक्रमायुषः ॥ नियमादन्यजन्मायु–र्निबध्नंति परे पुनः ॥ ॥ ९२ ॥ यावत्यायुष्यवशिष्टे । परजन्मायुरर्ज्यते ॥ कालास्तावानबाधाख्य–स्ततः परमुदेति तत् ॥ ९३ ॥ इति न्नवस्थितिः ।

कायस्थितिस्तु पृथिवी–कायिकादिशरीरिणां ॥ तत्रैव कायेऽवस्थानं । विपद्योत्पद्य चासकृत् ॥ ९४ ॥ इतिकायस्थितिस्वरूपं.

औदारिकं वैक्रियं च । देहमाहारकं तथा ॥ तैजसं कार्मणं चेति । देहाः पंचोदिता जिनैः ॥ ९५ ॥ न्नदारैः पुजलैर्जातं । जिनदेहाद्यपेक्षया ॥ न्नदारं सर्वतस्तुंग–मिति चौदारिकं न्नवेत् ॥ ९६ ॥ क्रिया विशिष्टा नाना वा । विक्रिया तत्रसंन्नवं ॥ स्वान्नाविकं लब्धिजं च । द्विविधं वैक्रियं न्नवेत् ॥ ९७ ॥ यत्तदेकमनेकं वा । दीर्घं हूस्वं महल्लघु ॥ न्नवेद् दृश्यमदृश्यं

वा । भूचरं वापि खेचरं ॥ ९८ ॥ आकाशस्फटिकस्वछं । श्रुतकेवलिना कृतं ॥ अनुत्तरामरेभ्योऽपि । कांतमाहारकं भवेत् ॥ ९९ ॥ श्रुतावगाहातामर्पौ–षध्याद्यृद्धिः करोत्यदः ॥ मनोज्ञानी चारणो वो–त्पन्नाहारकलब्धिकः ॥ १०० ॥ तैजसं चोष्णतालिंगं । तेजोलेश्यादिसाधनं ॥ कार्मणानुगमाहार–परिपाकसमर्थकं ॥ १ ॥ अस्मात्तपोविशेषोत्थ–लब्धियुक्तस्य भूस्पृशः ॥ तेजोलेश्यानिर्गमः स्या–दुत्पन्ने हि प्रयोजने ॥ २ ॥ तथोक्तं जीवाभिगमवृत्तौ—

❀ सवस्स उन्हसिद्धं । रसाइआहारपागजणगं च ॥ तेअगलद्धिनिमित्तं च । तेअगं होइ नायव्वं ॥ ३ ॥ ❀—अस्मादेव भवत्येवं । शीतलेश्याविनिर्गमः ॥ स्यातां च रोषतोषाभ्यां । निग्रहानुग्रहावितः ॥ ४ ॥ तथोक्तं तत्वार्थवृत्तौ–❀ यदोत्तरगुणप्रत्यया लब्धिरुत्पन्ना भवति, तदा परंप्रति दाहाय विसृजति रोषविषाध्मातो गोशालादिवत् । प्रसन्नस्तु शीततेजसानुगृह्णातीति ॥ ५ ॥ ❀—क्षीरनीरवदन्योऽन्यं । श्लिष्टा जीवप्रदेशकैः ॥ कर्मप्रदेशा येऽनंताः । कार्मणं स्यात्तदात्मकं ॥ ६ ॥ सर्वेषामपि देहानां । हेतुभूतमिदं भवेत् ॥ भवांतरगतौ जीव–सहायं च सतैजसं ॥ ७ ॥ नन्वेताभ्यां शरीराभ्यां । सहात्मायाति याति चेत् ॥ प्र-

विशन्निरयन्वापि । कुतोऽसौ तर्हि नेक्ष्यते ॥ ८॥ अत्रोच्यते—न चक्षुर्गोचरः सूक्ष्म—तया तै-
जसकार्मणे ॥ ततो नोत्पद्यमानोऽपि । म्रियमाणोऽप्यसौ स्फुटः ॥ ९ ॥ परैरप्युक्तं—अंतरा-
भवदेहोऽपि । सूक्ष्मत्वान्नोपलभ्यते ॥ निष्क्रामन्प्रविशन्वापि । नाऽभावोऽनीक्षणादपि ॥१०॥
स्वरूपमेवं पंचानां । देहानां प्रतिपादितं ॥ कारणादिकृतांस्तेषां । विशेषान् दर्शयाम्यथ ॥११॥
संजातं पुद्गलैः स्थूलै—र्देहमौदारिकं भवेत् ॥ सूक्ष्मपुद्गलजातानि । ततोऽन्यानि यथोत्त-
रं ॥ १२ ॥ इतिकारणकृतो विशेषः—यथोत्तरं प्रदेशैः स्यु—रसंख्येयगुणानि च ॥ आतृतीयं
ततोऽनंत—गुणे तैजसकार्मणे ॥ १३ ॥ इतिप्रदेशसंख्याकृतो विशेषः—आद्यं तिर्यग्मनुष्याणां
। देवनारकयोः परं ॥ केषांचिल्लब्धिमद्वायु—संज्ञितिर्यग्नृणामपि ॥ १४ ॥ आहारकं सलब्धी-
नां । स्याच्चतुर्दशपूर्विणां ॥ सर्वसंसारिजीवानां । ध्रुवे तैजसकार्मणे ।१५। तत्त्वार्थभाष्येतूक्तं—

❀ एकेत्वाचार्या नयवादापेक्षं व्याचक्षते कार्मणमेवैकमनादिसंबंधं, तेनैवैकेन जीवस्या-
ऽनादिः संबंधो भवतीति, तैजसं तु लब्ध्यपेक्षं भवति, सा च तैजसलब्धिर्न सर्वस्य कस्य-
चिदेव भवति. एतट्टीकालेशोऽपि—एवमेकीयमतेन प्रत्याख्यातमेव तैजसमनादिसंबंधतया

सर्वस्य चेति, या पुनरभ्यवहृताहारंप्रति पाचनशक्तिर्विनापि लब्ध्या, सातु कार्मणस्यैव भविष्यति कर्मोष्णत्वात्, कार्मणं हीदं शरीरमनेकशक्तिगर्भत्वादनुकरोति विश्वकर्मणः, तदेव हि तद्ग्रासमासादितपरिणति व्यपदिश्यते यदि तैजसशरीरतया, ततो न कश्चिद्दोष इति । अत्र भूयान् विस्तरोऽस्ति, स तु तत्वार्थवृत्तेरवसेय इति ॥ ❀

युगपच्चैकजीवस्य । द्वयं त्रयं चतुष्टयं ॥ स्याद्देहानां न तु पंच । नाप्येकं भववर्त्तिनः ॥ १६ ॥ वैक्रियस्याहारकस्या–ऽसत्त्वादेकस्य चैकदा ॥ न पंच स्युः सदा सत्त्वा–दनयोर्नैकमप्यदः ॥ १७ ॥ स्यादेकमपि पूर्वोक्त–मतांतरव्यपेक्षया ॥ भवांतरं गच्छतस्त–न्मते स्यात्कार्मणं परं ॥ १८ ॥ इतिस्वामिकृतो विशेषः–आद्यस्य तिर्यगुत्कृष्टा । गतिरारुचकाचलं ॥ जंघाचारणनिर्ग्रंथा–नाश्रित्य कलयंतु तां ॥ १९ ॥ आनंदीश्वरमाश्रित्य । विद्याचारणखेचरान् ॥ ऊर्ध्वं चापंडकवनं । तत्त्रयापेक्षया भवेत् ॥ २० ॥ विषयो वैक्रियांगस्या–ऽसंख्येया द्वीपवार्धयः ॥ महाविदेहा विषयो । ज्ञेय आहारकस्य च ॥ २१ ॥ लोकः सर्वोऽपि विषय–स्तुर्यपंचमयोर्भवेत् ॥ भवाद्भवांतरं येन । गच्छतामनुगे इमे ॥ २२ ॥ इतिविषयकृतो भेदः–

धर्माऽधर्मार्जनं सौख्य–दुःखानुभव एव च ॥ केवलज्ञानमुक्त्यादि–प्राप्तिराद्यप्रयोजनं ॥२३॥ एकानेकत्वसूक्ष्मत्व–स्थूलत्वादि नभोगतिः ॥ संघसाहाय्यमित्यादि । वैक्रियस्य प्रयोजनं ॥ ॥ २४ ॥ सूक्ष्मार्थसंशयच्छेदो । जिनेन्द्रर्द्धिविलोकनं ॥ ज्ञेयमाहारकस्यापि । प्रयोजनमनेकधा ॥ २५ ॥ यदाहुः–

❀ तित्थयररिद्धिदंसण–सुहुमपयत्थावगाहहेउं वा ॥ संसयवोच्छेअहं । गमणं जिणपायमूलंमि ॥ २६ ॥ ❀—

शापानुग्रहयोः शक्ति–र्भुक्तिपाकः प्रयोजनं ॥ तैजसस्य कार्मणस्य । पुनरन्यभवे गतिः ॥ २७ ॥ इतिप्रयोजनकृतो विशेषः–उत्कर्षतः सातिरेक–सहस्रयोजनप्रमं ॥ औदारिकं वैक्रियं सा–धिकैकलक्षयोजनं ॥ २८ ॥ आहारकं हस्तमानं । लोकाकाशमिते उभे ॥ समुद्घाते केवलिनः । स्यातां तैजसकार्मणे ॥ २९ ॥ अवगाढं प्रदेशेषु स्वल्पेष्वाहारकं किल ॥ ततः संख्यगुणांशस्थ–मुत्कृष्टौदारिकं स्मृतं ॥ ३० ॥ ततोऽपि संख्यगुणित–देशस्थं गुरुवैक्रियं ॥ समुद्घातेऽर्हतोंत्ये द्वे । सर्वलोकावगाहके ॥ ३१ ॥ दीर्घे मृत्युसमुद्घाते । तूत्पत्तिस्थानकाव-

धि ॥ अन्यदा तु यथास्थानं । स्वस्वदेहावगाहिनी ॥ ३२ ॥ मरणांतसमुद्घातं । गतानां देहिनां भवेत् ॥ यावत्येकेंद्रियादीनां । तैजसस्यावगाहना ॥ ३३ ॥ ब्रवीमि तां जिनप्रोक्त-स्वरूपां सोपपत्तिकं ॥ भाव्यैवं कार्मणस्यापि । सोऽन्यैः साहचर्यतः ॥ ३४ ॥ युग्मं ॥ स्वस्वदेहमिता व्यास-स्थौल्याभ्यां सर्वदेहिनां ॥ मरणांतसमुद्घाते। स्यात्तैजसावगाहना ॥ ३५ ॥ आयामतो विशिष्येत । तत्रैकेंद्रियदेहिनां ॥ अंगुलाऽसंख्येयभाग-प्रमाणा सा जघन्यतः ॥ ॥ ३६ ॥ उत्कर्षतश्च लोकांता-ल्लोकांतं यावदाहिता ॥ एकेंद्रियाणां जीवाना-मेवमुत्पत्तिसंभवात् ॥ ३७ ॥ सामान्यतोऽपि जीवानां । विभाव्यैतदपेक्षया ॥ लोकांतावधिलोकांता-त्तैजसस्यावगाहना ॥ ३८ ॥ अंगुलासंख्यभागेन । प्रमिताथ जघन्यतः ॥ निर्दिष्टा विकलाक्षाणां । तैजसस्यावगाहना ॥ ३९ ॥ तिर्यग्लोकाच्च लोकांता-वधि तेषां गरीयसी ॥ संभवो विकलाक्षाणां । यत्तिर्यग्लोक एव हि ॥ ४० ॥ अधोलोकेऽप्यधोलोक-ग्रामेषु दीर्घिकादिषु ॥ ऊर्ध्वं च पांडकवन-वर्त्तिवापीह्रदादिषु ॥ ४१ ॥ संभवो विकलाक्षाणां । यद्यप्यस्ति तथापि हि ॥ सूत्रे स्वस्थानमाश्रित्य । तिर्यग्लोको निरूपितः ॥ ४२ ॥ तत उक्तातिरिक्तापि । विकला-

नां भवत्यसौ ॥ अधोग्रामात्पांडकाच्च । लोकाग्रांता गरीयसी ॥ ४३ ॥ सातिरेकं योजनानां । सहस्रं स्याज्जघन्यतः ॥ नारकाणां तैजसाव–गाहना साथ भाव्यते ॥ ४४ ॥

संति पातालकलशा–श्चत्वारोऽब्धौ चतुर्दिशं ॥ अधोलक्षं योजनाना–मवगाढा इह क्षितौ ॥ ४५ ॥ सहस्रयोजनस्थूल–कुड्यास्तेषां च निश्चिते ॥ अधस्तने तृतीयांशे । वायुर्वर्वर्त्ति केवलं ॥ ४६ ॥ मध्यमे च तृतीयांशे । मिश्रितौ सलिलानिलौ ॥ तथोपरितने भागे । तृतीये केवलं जलं ॥ ४७ ॥ ततश्च–सीमंतकादिनरक–वर्त्ती कश्चन नारकः ॥ पातालकलशासन्नो । मरणांतसमुद्धतः ॥ ४८ ॥ कुड्यं पातालकुंभानां । विभिद्योत्पद्यते यतः ॥ मत्स्यत्वेन तृतीयांशे । मध्यमे चरमेऽपि वा ॥ ४९ ॥ तस्मादर्वाक् तु नैवास्ति । तिर्यग्मनुजसंभवः ॥ उत्पत्तिर्नारकाणां च । न तिर्यग्मनुजौविना ॥ ५० ॥ उत्कर्षतस्त्वधो याव–त्सप्तमीं नरकावनीं ॥ नारकाणामेतदंतं । स्वस्थानस्थितिसंभवात् ॥ ५१ ॥ तिर्यक्स्वयंभूरमण–समुद्रावधि सा भवेत् ॥ नारकाणां तत्र मत्स्या–दित्वेनोत्पत्तिसंभवात् ॥ ५२ ॥ ऊर्ध्वं च पंडकवन–स्थायितोयाश्रयावधि ॥ अत ऊर्ध्वं तु कुत्रापि । नृतिर्यक्संभवोऽस्ति न ॥ ५३ ॥ पंचेंद्रिय-

तिरश्चां च । जघन्या परमापि च ॥ विकलेंद्रियवज्ज्ञेया । तैजसस्यावगाहना ॥ ५४ ॥ अंगु-
लाऽसंख्येयभाग-मात्रा नृणां जघन्यतः ॥ उत्कर्षतश्च नृक्षेत्रा-ल्लोकांतावधि कीर्त्तिता ॥५५॥

भवनव्यंतरज्योति-ष्काद्यद्विस्वर्गनाकिनां ॥ अंगुलाऽसंख्येयभाग-माना ज्ञेया जघन्य-
तः ॥ ५६ ॥ ममत्वाभिनिविष्टानां । स्वरत्नाभरणादिषु ॥ पृथिव्यादितया तेषां । तत्रैवोत्पत्ति-
संभवात् ॥ ५७ ॥ उत्कर्षतस्त्वधः शैला-न्नरकक्ष्मातलावधि ॥ गतानां तत्र केषांचि-त्तेषां म-
रणसंभवात् ॥ ५८ ॥ तिर्यक् स्वयंभूरमणा-परांतवेदिकावधि ॥ ऊर्ध्वं तथेषत्प्राग्भारा-त्पृ-
थिव्यूर्ध्वतलावधि ॥ ५९ ॥ एतावदंतं पृथिवी-कायत्वेन समुद्भवात् ॥ ततः परं च पृथिवी-
कायादीनामसंभवात् ॥ ६० ॥ सनत्कुमारकल्पादि-देवानां स्याज्जघन्यतः ॥ अंगुलाऽसंख्येय-
भाग-माना सैवं विभाव्यते ॥ ६१ ॥ देवाः सनत्कुमाराद्या । उत्पद्यंते स्वभावतः ॥ गर्भ-
जेषु नृतिर्यक्षु । ध्रुवं नैकेंद्रियादिषु ॥ ६२ ॥ यदा सनत्कुमारादि-सुधाभुग्मंदरादिषु ॥ दीर्घि-
कादौ जलक्रीडां । कुर्वाणः स्वायुषः क्षयात् ॥६३॥ उत्पद्यते मत्स्यतया । स्वात्यासन्नप्रदेशके ॥ त-
दा जघन्या स्यादस्य । यद्वैवं संभवत्यसौ ॥ ६४ ॥ पूर्वसंबंधिनीं नारी-मुपभुक्तां महीस्पृशा

॥ कश्चित्सनत्कुमारादि–र्देवः प्रेमवशीकृतः ॥ ६५ ॥ तदवाच्यप्रदेशे स्व–मवाच्यांशं विनि-
क्षिपन् ॥ परिष्वज्य मृतस्तस्या–एव गर्न्ने समुद्भवेत् ॥ ६६ ॥ उत्कर्षतस्त्वधो याव–त्पाताल-
कलशाश्रितं ॥ मध्यमीयं तृतीयांशं । तत्र मत्स्यादिसंभवात् ॥ ६७ ॥ तिर्यक् स्वयंभूरमण–
पर्यंतावधि सा भवेत् ॥ अच्युतस्वर्गपर्यंत–मूर्ध्वं सा चेति भाव्यते ॥ ६८ ॥ कश्चिदच्युतना-
कस्थ–सुहृद्देवस्य निश्रया ॥ देवः सनत्कुमारादि–गतस्तत्र म्रियेत यत् ॥ ६९ ॥ सहस्रारांत-
देवानां । भावनीयाऽनया दिशा ॥ कनिष्ठा च गरिष्ठा च । तैजसस्यावगाहना ॥ ७० ॥ आ-
नताद्यच्युतांतानां । देवानां स्याज्जघन्यतः ॥ अंगुलाऽसंख्येयभाग–परिणामावगाहना ॥ ७१ ॥
उत्पद्यंते नरेष्वेव । देवा नन्वानतादयः ॥ नराश्च नृक्षेत्र एव । तदिदं घटते कथं ॥ ७२ ॥ अ-
त्रोच्यते—उपभुक्तां मनुष्येण । मानुषीं पूर्ववल्लभां ॥ उपलभ्यावधिज्ञाना–त्प्रेमपाशनियंत्रि-
तः ॥ ७३ ॥ इहागत्यासन्नमृत्यु–तया बुद्धिविपर्ययात् ॥ मलिनत्वाच्च कामानां । वैचित्र्यात्क-
र्ममर्मणां ॥ ७४ ॥ गाढानुरागादालिंग्य । तदवाच्यप्रदेशके ॥ परिक्षिप्य निजाऽवाच्यं । म्रि-
यते स्वायुषःक्षयात् ॥ ७५ ॥ गर्भेऽस्या एव मृत्वायं । यद्युत्पद्येत निर्जरः ॥ आनतादिकृतुभु-

ज–स्तदेयमुपपद्यते ॥ ७६ ॥ आनतादिकृतुभुजां । मनोविषयसेविनां ॥ कायेनाऽस्पृशतां दे-
वी–मपि क्षीणमनोभुवां ॥ ७७ ॥ मनुष्यस्त्रियमाश्रित्य । यद्येवं स्याद्विडंबना ॥ तर्हि को
नाम दुर्वारं । कंदर्पं जेतुमीश्वरः ॥ ७८ ॥ अधो यावदधोग्रामा–स्तिर्यगू नृक्षेत्रमेव च ॥ त-
तः परं मनुष्याणा–मुत्पत्तिस्थित्यसंभवात् ॥ ७९ ॥ ऊर्ध्वमच्युतनाकांतं । गतानां मित्रनि-
श्रया ॥ आनतादिकृतुभुजा–मच्युते मृत्युसंभवात् ॥ ८० ॥

ऊर्ध्वमच्युतजानां तु । स्वविमानशिरोऽवधि ॥ स्वैरं तत्र गतानां यत् । केषांचित्संभ-
वेन्मृतिः ॥ ८१ ॥ ग्रैवेयकानुत्तरस्थ–सुराणां सावगाहना ॥ यावद्विद्याधरश्रेणी–मास्वस्थाना-
ज्जघन्यतः ॥ ८२ ॥ खेचरश्रेणिपरतो । मनुष्याणामसंभवात् ॥ ग्रैवेयकादिदेवाना–मप्यत्रा-
गत्यसंभवात् ॥ ८३ ॥ अधो यावदधोग्रामा–नूर्ध्वं च स्वाश्रयावधि ॥ तिर्यक् पुनर्नरक्षेत्र–प-
र्यंतं सा प्रकीर्त्तिता ॥ ८४ ॥ यावन्नंदीश्वरं खेटाः । सस्त्रीका यांति यद्यपि ॥ संभोगमपि कु-
र्वंति । तत्र कामेषुनिर्जिताः ॥ ८५ ॥ परं नोत्पद्यते गर्भे । नरो नृक्षेत्रतो बहिः ॥ तत उत्क-
र्षतस्तिर्यगू । नृक्षेत्रावधि सोदिता ॥ ८६ ॥ इत्यर्थतः प्रज्ञापनैकविंशतितमपदे ॥ इति प्रमा-

णावगाहकृतो विशेषः—

स्थितिरौदारिकस्यांत—र्मुहूर्त्तं स्याज्जघन्यतः ॥ उत्कृष्टा त्रीणि पल्यानि । सा तु युग्मिव्यपेक्षया ॥ ७७ ॥ दशवर्षसहस्राणि । जघन्याजन्मवैक्रिये ॥ त्रयस्त्रिंशत्सागराणि । स्थितिरुत्कर्षतः पुनः ॥ ७७ ॥ वैक्रियस्य कृतस्यापि । जघन्यांतर्मुहूर्त्तिकी ॥ ज्येष्टा तु जीवाभिगमे । गदिता गाथयानया ॥ ७ए ॥

❀ अंतमुहुत्तं नरएसु । होइ चत्तारि तिरियमणुएसु ॥ देवेसु अद्धमासो । उक्कोस विउवणाकालो ॥ ए० ॥ ❀

पंचमांगे तु वायूनां । संज्ञितिर्यग्नृणामपि ॥ ज्येष्टाप्येकांतर्मुहूर्त्ता । प्रोक्ता वैकुर्विकस्थितिः ॥ ए१ ॥ श्रीसूत्रकृतांगे तु—

❀ वेयालिए नाम महाभियावे । एगायए पव्वतमंतलिस्के ॥ हम्मंति तत्था बहुकूरकम्मा । परं सहस्सा उ मुहुत्तयाणं । ए२ ॥ ❀ नामेति संज्ञावने, एतन्नरकेषु यथांतरिक्षे महाग्नितापे महादुःखे, एकशिलाघटितो दीर्घः, वेयालिएत्ति वैक्रियः परमाधार्मिकनिष्पादितः पर्वतः,

तत्र हस्तस्पर्शिकया समारुह्यंतो नारका बहुक्रूरकर्माणो हन्यंते पीड्यंते, सहस्रसंख्यानां परं प्रकृष्टं प्रभूतं कालं हन्यंते, इत्यर्थः । अत्र परमाधार्मिकदेवविकुर्वितस्य पर्वतस्य अर्धमासाधिकापि स्थितिरुक्तेति ज्ञेयं, तत्वं तु जिनो जानीते. ❀

अंतर्मुहूर्तं वेधापि । स्थितिराहारकस्य च ॥ अनादिके प्रवाहेण । सर्वतैजसकार्मणे ॥८२॥ सावसाने तु भव्यानां । सिद्धत्वे तदभावतः ॥ अभव्यानां निरंते च । पंगूनां मुक्तिवर्त्मनि ॥ ॥ ८३ ॥ इतिस्थितिकृतो विशेषः—आहारकं सर्वतोऽल्पं । यत्कदाचिद्भवेदिदं ॥ भवेद्यदि तदाप्येत—देकं द्वे वा जघन्यतः ॥ ८४ ॥ सहस्राणि नवोत्कर्षा—दसत्तास्य जघन्यतः ॥ एकं समयमुत्कृष्टा । षण्मासावधि विष्टपे ॥ ८५ ॥ उक्तं च—❀ आहारगाइं लोगे । छम्मासा जा न होंति विकयाइ ॥ उक्कोसेणं नियमा । एक्कं समयं जहन्नेणं ॥ ८६ ॥ ❀— आहारकादसंख्येय—गुणानि वैक्रियाणि च ॥ तत्स्वामिनामसंख्यत्वा—न्नारकांगिसुपर्वणां ॥ ८७ ॥ अप्यौदारिकदेहाः स्यु—स्तदसंख्यगुणाधिकाः ॥ आनंत्येऽपि तदीशाना—मसंख्या एव ते यतः ॥ ८८ ॥ प्रत्यंगं प्राणिनो यत्स्युः । साधारणवनस्पतौ ॥ अनंतास्तानि चाऽसंख्या—न्येवांगानि

भवंति हि ॥ ९९ ॥ तेभ्योऽनंतगुणास्तुल्या । मिथस्तैजसकार्मणाः ॥ यत्प्रत्येकमिमे स्या-
तां । द्वे देहे सर्वदेहिनां ॥ १०० ॥ इत्यल्पबहुत्वकृतो विशेषः—एकजीवापेक्षया स्या—ज्ज्येष्ठ-
मौदारिकांतरं ॥ अंतर्मुहूर्त्ताभ्यधिका—स्त्रयस्त्रिंशत्पयोधयः ॥ १ ॥ तथोक्तं जीवाभिगमवृत्तौ—

❀ उत्कर्षतस्त्रयस्त्रिंशत्सागरोपमाणि अंतर्मुहूर्त्ताभ्यधिकानि, तानि चैवं—कश्चिच्चारित्री
वैक्रियशरीरं कृत्वांतर्मुहूर्त्तं जीवित्वा स्थितिक्षयादविग्रहेणानुत्तरसुरेषु जायत इति. ❀

वैक्रियस्यांतरं काय—स्थितिकालो वनस्पतेः ॥ अर्धश्च पुद्गलपरा—वर्त्त आहारकांतरं ॥२॥
लघु चाद्यस्य समयो—न्तर्मुहूर्त्तं तदन्ययोः ॥ न संभवत्यंतरं च । देहयोरुक्तशेषयोः ॥ ३ ॥ इ-
त्यंतरकृतो विशेषः ॥ इति देहस्वरूपं—

सदसल्लक्षणोपेत—प्रतीकसन्निवेशजं ॥ शुभाऽशुभाकाररूपं । षोढा संस्थानमंगिनां ॥
॥ ४ ॥ समचतुरस्रं न्यग्रोध—सादिवामनकुब्जहुंडानि ॥ संस्थानान्यंगे स्युः । प्राक्कर्मविपाक-
तोऽसुमतां ॥ ५ ॥ आर्या ॥ तत्र चाद्यं चतुरस्रं । संस्थानं सर्वतः शुभं ॥ न्यग्रोधमूर्ध्वं ना-
भेः सत् । सादि नाभेरधः शुभं ॥ ६ ॥ इदं साचीति केऽप्याहुः । साचीति शाल्मलीतरुः ॥

मूले स्याद्वृत्तपुष्टोऽसौ । न च शाखासु तादृशः ॥ ७ ॥ तथोक्तं पंचसंग्रहवृत्तौ—

❀ अपरे तु साचीति पठंति, तत्र साचीति प्रवचनवेदिनः शाल्मलीतरुमाचक्षते, ततः साचीव यत्संस्थानं तत्साचीति, एवं च न्यग्रोधसाचिनोरन्वितार्थता भवतीतिज्ञेयं. ❀

मौलिग्रीवापाणिपादे । कमनीयं च वामनं ॥ लक्षितं लक्षणैर्दुष्टैः । शेषेष्ववयवेषु च ॥ ॥ ८ ॥ रम्यं शेषप्रतीकेषु । कुब्जं संस्थानमिष्यते ॥ दुष्टं किंतु शिरोग्रीवा—पाणिपादे भवेदिदं ॥ ए ॥ हुंडं तु सर्वतो दुष्टं । केचिद्वामनकुब्जयोः ॥ विपर्यासमामनंति । लक्षणे कृतलक्षणाः ॥ १० ॥ इतिसंस्थानस्वरूपं—अंगमानं तु तुंगत्व—मानमंगस्य देहिनां ॥ स्थूलतापृथुताद्यं तु । ज्ञेयमौचित्यतः स्वयं ॥ ११ ॥ इत्यंगमानस्वरूपं—समित्येकीभावयोगा—च्छेदनादिभिरात्मनः ॥ उत्प्राबल्येन कर्मांश—घातो यः स तथोच्यते ॥ १२ ॥ यतः—

समुद्घातगतो जीवः । प्रसह्य कर्मपुद्गलान् ॥ कालांतरानुभवार्हा—नपि क्षपयति द्रुतं ॥ १३ ॥ तच्चैवं—कालांतरवेद्यानय—माकृष्योदीरणेन कर्मांशान् ॥ उदयावलिकायां च । प्रवेश्य परिभुज्य शातयति ॥ १४ ॥ ते चैवं—वेदनोत्थः कषायोत्थो । मरणांतिकवैक्रियौ ॥ आ-

हारकस्तैजसश्च । छद्मस्थानां चमप्यमी ॥ १५ ॥ स्यात्केवलिसमुद्घातः । सप्तमः सर्ववेदिनां ॥ अष्टसामायिकश्चाय–मांतर्मुहूर्त्तिकाः परे ॥ १६ ॥ तथाहि—करालितो वेदनाग्नि–रात्मा स्वीयप्रदेशकान् ॥ विक्षिप्यानंतकर्माणु–वेष्टितान् देहतो बहिः ॥ १७ ॥ आपूर्यासाद्यंतराणि । मुखादिशुषिराणि च ॥ विस्तारायामतः क्षेत्रं । व्याप्य देहप्रमाणकं ॥ १८ ॥ तिष्ठेदंतर्मुहूर्त्तं च । तत्र चांतर्मुहूर्त्तके ॥ असातवेदनीयांशान् । शातयत्येष भूरिशः ॥ १९ ॥ इति वेदनासमुद्घातः–समाकुलः कषायेन । जीवः स्वीयप्रदेशकैः ॥ मुखादिरंध्राण्यापूर्य । तान् विक्षिप्य च पूर्ववत् ॥ २० ॥ विस्तारायामतः क्षेत्रं । व्याप्य देहप्रमाणक ॥ कषायमोहनीयाख्य–कर्मांशान् शातयेद्बहून् ॥ २१ ॥ शातयंश्चापरान् भूरीन् । समादत्ते स्वहेतुभिः ॥ इयं सर्वत्र नैवं चे–दस्मान्मुक्तिः प्रसज्यते ॥ २२ ॥ कषायस्य समुद्घात–श्चतुर्धायं प्रकीर्त्तितः ॥ क्रोधमानमायालोभै–र्हेतुभिः परमार्थतः ।२३। इतिकषायसमुद्घातः–अंतर्मुहूर्त्तशेषायु–र्मरणांतकरालितः ॥ मुखादिरंध्राण्यापूर्य । शरीरी स्वप्रदेशकैः ॥ २४ ॥ स्वांगविष्कंभबाहल्यं । स्वशरीरातिरेकतः ॥ जघन्यतोऽङ्गुलासंख्ये–यांशमुत्कर्षतः पुनः ॥ २५ ॥ असंख्ययोजनान्येक

–दिश्युत्पत्तिस्थलावधि ॥ आयामतोऽन्निव्याप्यांत–मुंहूर्तान्म्रियते ततः ॥ २६ ॥ मरणांतसमुद्घातं । गतो जीवश्च शातयेत् ॥ आयुषः पुद्गलान् भूरी–नादत्ते च नवान्न तान् ॥ २७ ॥

❀ अत्रायं विशेषः–कश्चिज्जीव एकेनैव मरणांतिकसमुद्घातेन नरकादिषूत्पद्यते, तत्राहारं करोति, शरीरं च बध्नाति. कश्चित्तु समुद्घातान्निवृत्य, स्वशरीरमागत्य, पुनः समुद्घातं कृत्वा तत्रोत्पद्यते, अयमर्थो भगवतीषष्ठशतकषष्ठोद्देशके नरकादिष्वनुत्तरांतेषु सर्वस्थानेषु भावितोऽस्तीति ज्ञेयं ❀

इतिमरणांतिकसमुद्घातः—वैकुर्विकसमुद्घातं । प्राप्तो वैक्रियशक्तिमान् ॥ कर्मावृतानामात्मीय–प्रदेशानां तनोर्बहिः ॥ २८ ॥ निसृज्य दंडं विष्कंभ–बाहल्याभ्यां तनुप्रमं ॥ आयामतस्तु संख्यात–योजनप्रमितं ततः ॥ २९ ॥ वैक्रियांगाभिधनाम–कर्मांशान् पूर्वमार्जितान् ॥ शातयन् वैक्रियांगार्हान् । स्कंधाँल्लात्वा करोति तत् ॥ ३० ॥ इति वैक्रियसमुद्घातः—समुद्घातस्तैजसेन । तेजोलेश्याख्यशक्तिमान् ॥ कर्मावृतात्मप्रदेश–राशेर्वैक्रियवद्बहिः ॥ ३१ ॥ देहविस्तारबाहल्यं । संख्येययोजनायतं ॥ निसृज्य दंडं प्राग्बद्धान् । शातयेत्तैजसा-

णुकान् ॥ ३२ ॥ अन्यानादाय तद्योग्यान् । तेजोलेश्या विमुंचति ॥ तैजसोऽयं समुद्घातः ।
प्रज्ञप्तस्तत्वपारगैः ॥ ३३ ॥ इति तैजससमुद्घातः ॥
चतुर्दशानां पूर्वाणां । धर्त्ताहारकलब्धिमान् ॥ जिनर्द्धिदर्शनादीनां । मध्ये केनापि हेतु
ना ॥ ३४ ॥ आहारकसमुद्घातं । कुर्वन्नात्मप्रदेशकैः ॥ दंडं स्वांगपृथुस्थूलं । संख्येययोज-
नायतं ॥ ३५ ॥ निसृज्य पुद्गलानाहा–रकनाम्नः पुरातनान् ॥ विकीर्यादाय तद्योग्यान् । दे-
हमाहारकं सृजेत् ॥ ३६ ॥ इत्याहारकसमुद्घातः ॥ यस्यायुषोऽतिरिक्तानि । कर्माणि सर्व-
वेदिनः ॥ वेद्याख्यनामगोत्राणि । समुद्घातं करोति सः ॥ ३७ ॥ आंतर्मुहूर्त्तिकं पूर्व–माव-
र्जिकरणं सृजेत् ॥ अंतर्मुहूर्त्तशेषायुः–समुद्घातं ततो व्रजेत् ॥ ३८ ॥ आवर्जीकरणं शस्त–
योगव्यापारणं मतं ॥ इदं त्ववश्यं कर्त्तव्यं । सर्वेषां मुक्तिगामिनां ॥ ३९ ॥ आत्मप्रदेशैर्लो-
कांत–स्पृशमूर्ध्वमधोऽपि च ॥ कुर्यादाद्यक्षणे दंडं । स्वदेहस्थूलविस्तृतं ॥ ४० ॥ द्वितीये स-
मये तस्य । कुर्यात्पूर्वापरायतं ॥ कपाटं पाटवोपेतः । समयेऽथ तृतीयके ॥ ४१ ॥ ततो
विस्तार्य प्रदेशा–नुदोचीदक्षिणायतं ॥ मंथानं कुरुते तुर्ये । ततोंऽतराणि पूरयेत् ॥ ४२ ॥ स्व-

प्रदेशैस्तदा सर्वान् । लोकाकाशप्रदेशकान् ॥ स व्याप्नोति समा ह्येते । लोकाकाशैकजीवयोः ॥ ४३ ॥ संहरेत्पंचमे चासौ । समयेंऽतरपूरणं ॥ षष्ठे संहृत्य मंथानं । संहरेत्सप्तमेऽररिं ॥ ४४ ॥ संहरेदष्टमे दंडं । शरीरस्थस्ततो भवेत् ॥ अंतर्मुहूर्त्तं जीवित्वा । योगरोधाच्छिवं व्रजेत् ॥ ४५ ॥ यदाहुः—

❀ यस्य पुनः केवलिनः । कर्म भवत्यायुषोऽतिरिक्ततरं ॥ स समुद्घातं भगवा–नुपगच्छति तत्समीकर्त्तुं ॥ ४६ ॥ दंडं प्रथमे समये । कपाटमथ चोत्तरे तथा समये ॥ मंथानमथ तृतीये । विश्वव्यापी चतुर्थे तु ॥ ४७ ॥ संहरति पंचमे त्वं–तराणि मंथानमथ पुनः षष्ठे ॥ सप्तमके तु कपाटं । संहरति ततोऽष्टमे दंडं ॥ ४८ ॥ औदारिकप्रयोक्ता । प्रथमाष्टसमययोरसाविष्टः ॥ मिश्रौदारिकयोक्ता । सप्तमषष्ठद्वितीयेषु ॥ ४९ ॥ कार्मणशरीरयोक्ता । चतुर्थके पंचमे तृतीये च ॥ समयत्रयेऽपि तस्मिन् । भवत्यनाहारको नियमात् ॥ ५० ॥ ❀

किंच—समुद्घातान्निवृत्त्यासौ । त्रिधा योगान् युनक्त्यपि ॥ सत्यासत्यामृषाभिख्यौ । योगौ मानसवाचिकौ ॥ ५१ ॥ पृष्टेषु मनसार्थेषु । तत्रानुत्तरनाकिभिः ॥ दातुं तदुत्तरं चेतो–

योगयुग्मं युनक्ति सः ॥ ५२ ॥ तथा मनुष्यादिना च । पृष्टोऽपृष्टोऽपि स प्रभुः ॥ प्रयोजनविशेषेण । युनक्त्येतौ च वाचिकौ ॥ ५३ ॥ काययोगं प्रयुंजानो । गमनागमनादिषु ॥ चेष्टते पीठपट्टाद्य–मर्पयेत्प्रातिहारिकं ॥ ५४ ॥ एवंच–कैश्चिदित्युच्यते यत्तु । शेषषण्मासजीवितः ॥ जिनः कुर्यात्समुद्घातं । तदसद्यत्तथासति ॥ ५५ ॥ प्रातिहारिकपीठादे–रादानमपि संभवेत् ॥ श्रुते तु केवलं प्रोक्तं । तत्प्रत्यर्पणमेव हि ॥ ५६ ॥ इत्याद्यधिकं प्रज्ञापनांतिमपदवृत्तितोऽवसेयं ॥ ततश्च–पर्याप्तसंज्ञिपंचाक्ष–मनोयोगाज्जघन्यतः ॥ असंख्यगुणहीनं तं । निरुंधानः क्षणे क्षणे ॥ ५७ ॥

असंख्येयैः क्षणैरेवं । साकल्येन रुणद्धि तं ॥ ततः पर्याप्तकद्व्यक्ष–वचोयोगाज्जघन्यतः ॥ ५८ ॥ असंख्यगुणहीनं तं । निरुंधानः क्षणे क्षणे ॥ एवं क्षणैरसंख्येयैः । साकल्येन रुणद्धि सः ॥ ५९ ॥ ततः पर्याप्तसूक्ष्मस्य । काययोगाज्जघन्यतः ॥ असंख्यगुणहीनं तं । निरुंधानः क्षणे क्षणे ॥ ६० ॥ असंख्यैः समयैरेवं । साकल्येन रुणद्धि सः ॥ योगान् रुंधंश्च स ध्यायेत् । शुक्लध्यानं तृतीयकं ॥ ६१ ॥ एतेन स उपायेन । सर्वयोगनिरोधतः ॥ अयोगतां स-

मासाद्य । शैलेशीं प्रतिपद्यते ॥ ६२ ॥ पंचानां ह्रस्ववर्णाना–मुच्चारप्रमितां च तां ॥ प्राप्तः शैलेशनिष्कंपः । स्वीकृतोत्कृष्टसंवरः ॥ ६३ ॥ शुक्लध्यानं चतुर्थं च । ध्यायन् युगपदंजसा ॥ वेद्यायुर्नामगोत्राणि । क्षपयित्वा स सिद्ध्यति ॥ ६४ ॥ अगत्वापि समुद्घात–मनंता निर्वृता जिनाः ॥ अवाप्यापि समुद्घात–मनंता निर्वृता जिनाः ॥ ६५ ॥

❀ अत्रायं विशेषः–यः षण्मासाधिकायुष्को । लभते केवलोद्गमं ॥ करोत्यसौ समुद्घात–मन्ये कुर्वंति वा न वा ॥ १ ॥ इति गुणस्थानक्रमारोहे–छम्मासाऊसेसे । उप्पणं जसिकेवलं नाणं ॥ ते नियमा समुघाइय । सेसा समुघाय भइयव्वा ॥ २ ॥ इत्यस्य वृत्तौ–इतिकेवलिसमुद्घातः ॥

आद्याः पंच समुद्घाताः । सर्वेषामपि देहिनां ॥ अनुभूता अनंताः स्यु–र्यथा स्वं सर्वजातिषु ॥ ६६ ॥ भाविनस्तु न संत्येव । केषांचिल्लघुकर्मणां ॥ केषांचित्त्वंगिनामेक–द्व्यादयः स्युरनेकशः ॥ ६७ ॥ यावद्गण्या अगण्या वा । स्युः केषांचिदनंतकाः॥ यथा स्वं सर्वजातित्वे । विज्ञेया बहुकर्मणां ॥ ६८ ॥ नवरं–सूक्ष्मादिनिगोदेस्तु । निगोदे त्रय एव ते ॥ अ-

नुभ्रूता अनंताः स्यु–र्न्नाविनस्ते तु सर्ववत् ॥ ६९ ॥ आहारका नरान्येषां । केषांचिन्नृभ्रवे त्रयः ॥ अतीताः स्युर्न्नाविनस्तु । ते चत्वारो नचाधिकाः ॥ ७० ॥ संभ्रवेयुश्चत्वारो–ऽनुभ्रूता नृभ्रवे नृणां ॥ न्नविष्यंतोऽपि विज्ञेया–स्तावंतो नृभ्रवे नृणां ॥ ७१ ॥ चत्वारोऽपि व्यतीतास्तु । नान्येषां नृन्नविनायतः ॥ आहारकं तुर्यवारं । कृत्वा सिध्यति तद्भवे ॥ ७२ ॥ तथोक्तं प्रज्ञापनावृत्तौ—

❁ इह यश्चतुर्थवेलमाहारकं करोति स नियमात्तद्भव एव मुक्तिमासादयति, न गत्यंतरमिति ❁ ॥ सप्तमस्तु न कस्यापि । स्यादतीतो नरंविना ॥ न्नाव्यप्येकोऽन्यजंतूनां । केषांचिन्नृत्वएव सः ॥ ७३ ॥ समुद्घातोत्तीर्णजिनं । प्रतीत्यैकोनिषेवितः ॥ मनुष्यस्य मनुष्यत्वेऽ–नागतोऽप्येक एव सः ॥ ७४ ॥ असद्वेद्याश्रितश्चाद्यो । मोहनीयाश्रितः परः ॥ अंतर्मुहूर्त्तशेषायुः–संश्रितः स्यात्तृतीयकः ॥ ७५ ॥ तुर्यपंचमषष्ठाश्च । नामकर्मसमाश्रिताः ॥ नामगोत्रवेद्यकर्म–संश्रितः सप्तमो न्नवेत् ॥ ७६ ॥ इति जीवसमुद्घाताः ॥–योऽप्यचित्तमहास्कंधः । समुद्घातोऽस्त्यजीवजः ॥ अष्टसामयिकः सोऽपि । ज्ञेयः सप्तमवत्सदा ॥ २७७ ॥ पुद्ग-

लानां परीणामा—च्छ्रिसोन्नात्स जायते ॥ अष्टन्निः समयैर्जात—समाप्तो जिनसत्कवत् ॥७८॥ इतिसमुद्घाताः ॥—विवक्षितन्नवादन्य—न्नवे गमनयोग्यता ॥ या न्नवेदेहिनां सात्र । गतिर्गतं च कथ्यते ॥ ७९ ॥ इतिगतिस्वरूपं ॥—विवक्षिते न्नवेऽन्येन्यो । न्नवेन्यो या च देहिनां ॥ नत्पत्तौ योग्यता सात्रा—गतिरित्युपदर्शिता ॥ ८० ॥

एक सामयिकासंख्या । मृत्यूत्पत्योस्तथांतरं ॥ द्वारेऽस्मिन्नेव वक्ष्यंते । तद् द्वाराणि पृथग् न तत् ॥ ८१ ॥ इत्यागतिस्वरूपं ॥—विवक्षितन्नवान्मृत्वो—त्पद्य चानंतरे न्नवे ॥ यत्सम्यक्त्वाद्यश्नुतेंऽगी । सानंतराप्तिरुच्यते ॥ ८२ ॥ इत्यनंतराप्तिस्वरूपं ॥—लब्ध्वा नृत्वादिसामग्रीं । यावंतोऽधिकृतांगिनः ॥ सिद्ध्यंत्येकक्षणे सैक—समये सिद्धिरुच्यते ॥ ८३ ॥ इत्येकसमयसिद्धिस्वरूपं ॥—कृष्णादिद्रव्यसाचिव्या—त्परिणामो य आत्मनः ॥ स्फटिकस्येव तत्रायं । लेश्याशब्दः प्रवर्त्तते ॥ ८४ ॥ द्रव्याण्येतानि योगांत—र्गतानीति विचिंत्यतां ॥ स योगत्वेन लेश्याना—मन्वयव्यतिरेकतः ॥ ८५ ॥ यावत्कषायसद्भाव—स्तावत्तेषामपि स्फुटं ॥ अमून्युपबृंहकाणि । स्युः साहायककृत्तया ।. ८६ ॥ दृष्टं योगांतर्गतेषु । द्रव्येषु च परेष्वपि ॥ नप-

बृंहणसामर्थ्यं । कषायोदयगोचरं ॥ ८७ ॥ यथा योगांतर्गतस्य । पित्तद्रव्यस्य लक्ष्यते ॥ क्रो-
धोदयोद्दीपकत्वं । स्याच्चंडोऽपिपित्तकः ॥ ८८ ॥ द्रव्येषु बाह्येष्वप्येवं । कर्मणामुदयादिषु ॥
सामर्थ्यं दृश्यते तत्किं । न योगांतर्गतेषु तत् ॥ ८९ ॥ सुरादध्यादिकं ज्ञान—दर्शनावरणोदये
॥ तत्क्षयोपशमे हेतु—र्भवेद्ब्राह्मीवचादिकं ॥ ९० ॥ एवंच——कषायोद्दीपकत्वेऽपि । लेश्यानां
न तदात्मता ॥ तथान्वे ह्यकषायाणां । लेश्याभाव. प्रसज्यते ॥ ९१ ॥ लेश्याः स्युः कर्मनि-
ष्पंद—इति यत्कैश्चिदुच्यते ॥ तदप्यसारं निष्पंदो । यदि तत्कस्य कर्मणः ॥ ९२ ॥ चेद्यथा
योगमष्टाना—मप्यसौ कर्मणामिति ॥ तच्चतुःकर्मणामेताः । प्रसज्यंतेऽप्ययोगिनां ॥ ९३ ॥ न
यद्ययोगिनामेता । घातिकर्मक्षयान्मताः ॥ तत एव तदा न स्यु—र्योगिकेवलिनामपि ॥ ९४ ॥
ननुच——योगस्य परिणामत्वे । लेश्यानां हेतुता भवेत् ॥ प्रदेशबंधप्रत्येव । न पुनः कर्मणां
स्थितौ ॥ ९५ ॥ ॐ जोगा पयडिपएसं । ठिइ आणुभागं कसायओ कुणइ—इति वचनात् ॐ
अत्रोच्यते—न कर्मस्थितिहेतुत्वं । लेश्यानां कोऽपि मन्यते ॥ कषाया एव निर्दिष्टा । यत्कर्म-
स्थितिहेतवः ॥ ९६ ॥ लेश्याः पुनः कषायांत—र्गतास्तत्पुष्टिकृत्तया ॥ तत्स्वरूपा एव सत्यो—

ऽनुभागंप्रतिहेतवः ॥ ९७ ॥ ❀

एतेन यत्क्वचिल्लेश्यानामनुभागहेतुत्वमुच्यते, शिवशर्माचार्यकृतशतकग्रंथे च कषायाणामनुभागहेतुत्वमुक्तं तदुभयमप्युपपन्नं, कषायोदयोपबृंहिकाणां लेश्यानामपि नपचारनयेन कषायस्वरूपत्वादित्याद्यधिकं प्रज्ञापनालेश्यापदवृत्तितोऽवसेयं ❀ साच षोढा कृष्ण-नील–कापोतसंज्ञितास्तथा ॥ तेजोलेश्यापद्मलेश्या–शुक्ललेश्येति नामतः ॥ ९८ ॥ खंजनांजनजीमूत–भ्रमद्भ्रमरसन्निभा ॥ कोकिलाकलभीकल्पा । कृष्णलेश्या स्ववर्णतः ॥ ९९ ॥ पिच्छतः शुकचाषानां । केकिकापोतकंठतः ॥ नीलाब्जवनतो नीला । नीललेश्या स्ववर्णतः ॥ ३०० ॥ जैत्रा खदिरसाराणा–मतसीपुष्पसोदरा ॥ कापोतलेश्या वर्णेन । वृंताककुसुमौघजित् ॥ १ ॥ पद्मरागनवादित्य–संध्यागुंजार्धतोऽधिका ॥ तेजोलेश्या स्ववर्णेन । विद्रुमांकुरजित्वरी ॥ २ ॥ सुवर्णयूथिकास्वर्ण–कर्णिकारौघचंपकान् ॥ पराभवंती वर्णेन । पद्मलेश्याप्रकीर्त्तिता ॥ ३ ॥ गोक्षीरदधिडिंडीर–पिंडादधिकपांडुरा ॥ वर्णतः शरदभ्राणां । शुक्ललेश्याभिभाविनी ॥ ४ ॥ किराततिक्तत्रपुषी । कटुतुंबीफलानि च ॥ त्वचःफलानि निंबानां । कु-

ष्णलेश्या रसैर्जयेत् ॥ ५ ॥ पिप्पलीशृंगबेराणि । मरीचानि च राजिकां ॥ हस्तिपिप्पलिकां
जेतु । नीललेश्या रसैः प्रभुः ॥ ६ ॥ आमानि मातुलिंगानि । कपित्थबदराणि च ॥ फणसा-
मलकानीष्टे । रसैर्जेतुं तृतीयिका ॥ ७ ॥ वर्णगंधरसापन्न—पक्काम्रादिसमुद्भवान् ॥ रसानधि-
कमाधुर्या । तुर्याधिकुरुते रसैः ॥ ८ ॥ द्राक्षाखर्जूरमाध्वीक—वारुणीनामनेकधा ॥ चंद्रप्रभा-
दिसीधूनां । जयिनी पंचमी रसैः ॥ ९ ॥ शर्करागुडमत्स्यंडी—खण्डखंडादिकानि च ॥ माधु-
र्यधुर्यवस्तूनि । शुक्ला विजयते रसैः ॥ १० ॥

आद्यास्तिस्रोऽतिदुर्गंधा । अप्रशस्ता मलीमसाः ॥ स्पर्शतः शीतरुक्षाश्च । संक्लिष्टा दुर्ग-
तिप्रदाः ॥ ११ ॥ अंत्यास्तिस्रोऽतिसौगंध्याः । प्रशस्ता अतिनिर्मलाः ॥ स्निग्धोष्णाः स्पर्शगु-
णतो—ऽसंक्लिष्टाः सुगतिप्रदाः ॥ १२ ॥ परस्परमिमाः प्राप्य । यांति तद्रूपतामपि ॥ वैडुर्यर-
क्तपट्यो—र्ज्ञेये तत्र निदर्शने ॥ १३ ॥ तत्रापि—देवनारकलेश्यासु । वैडुर्यस्य निदर्शनं ॥ तिर्य-
ग्मनुजलेश्यासु । रक्तवस्त्रनिदर्शनं ॥ १४ ॥ तथाहि—देवनारकयोर्लेश्या । आजन्मांतमवस्थि-
ताः ॥ नानाकृतिं यांति किंतु । द्रव्यांतरोपधानतः ॥ १५ ॥ न तु सर्वात्मना स्वीयं । स्वरूपं

संत्यजंति ताः ॥ सद्वैडूर्यमणिर्यद्व–द्भानासूत्रप्रयोगतः ॥ १६ ॥ जपापुष्पादिसान्निध्या–द्यथा वादर्शमंमलं ॥ नानावर्णान् दधदपि । स्वरूपं नोज्झति स्वकं ॥ १७ ॥ अत एव भावपरा–वृत्त्या नारकनाकिनोः ॥ भवंति लेश्याः षडपि । तदुक्तं पूर्वसूरिभिः ॥ १८ ॥

❀ सुरनारयाणताउ । दव्वलेसा अवट्ठिया भणिया ॥ भावपरावत्तीए पुण । एसु हुंति छल्लेसा ॥ १९ ॥ ❀

दुष्टलेश्यावतां नार–काणामप्यत एव च ॥ सम्यक्त्वलाभो घटते । तेजोलेश्यादिसंभवी ॥ २० ॥ यदाहुः——❀ सम्मत्तस्स य तिसुउवरिमासु । पडिवज्जमाणउ होइ ॥ पुव्वपडिवन्नउ पुण । अन्नयरीए उ लेसाए ॥ १ ॥ ❀ तथैव तेजोलेश्याद्ये । घटते संगमामरे ॥ वीरोपसर्गकर्तृत्वं । कृष्णलेश्यादिसंभवि ॥ २१ ॥ स्वरूपत्यागतः सर्वा–त्मना तिर्यग्मनुष्ययोः ॥ लेश्यास्तद्रूपतां यांति । रागक्षिप्तपटादिवत् ॥ २२ ॥ अत एवोत्कर्षतोऽप्यं–तर्मुहूर्त्तमवस्थितः ॥ तिर्यग्नृणां परावर्त्ते । यांति लेश्यास्ततः परं ॥ २३ ॥ बहुधासां परीणाम–स्त्रिधा वा नवधा भवेत् ॥ सप्तविंशतिधा चैका–शीतिधात्रिगुणस्तथा ॥ २४ ॥ जघन्यमध्यमोत्कृष्ट——भेदत-

त्रिविधो भवेत् ॥ प्रत्येकमेषां स्वस्थान-तारतम्यविचिंतया ॥ २५ ॥ भवेन्नवविधस्तेषा-म-
पि भेदविवक्षया ॥ सप्तविंशतिधा मुख्यो-ऽप्येवं भेदैस्त्रिभिस्त्रिभिः ॥२६॥ तथाहुःप्रज्ञापनायां-

❀ कण्हलेसाणंभंते कतिविहं परिणामं परिणमति, गो० तिविहं वा, णवविहं वा,
सत्तावीसतिविहं वा, एक्कासीतिविहं वा, तेआलडुसयविहं वा, बहुं वा बहुविहं वा, परिणामं-
परिणमति ❀ लेश्यापरिणामस्या-दिमांत्ययोर्नांगिनां मृतिः क्षणयोः ॥ अंतर्मुहूर्तकेंत्ये । शे-
षे-चाद्ये गते सा स्यात् ॥'॥ आर्या-तत्राप्यंतर्मुहूर्त्तेंत्ये । शेषे नारकनाकिनः ॥ म्रियंते नर-
तिर्यंच-श्चाद्येऽतीत इति स्थितिः ॥ २ ॥

कृष्णायाःस्थितिरुत्कृष्टा । त्रयस्त्रिंशत्पयोधयः ॥ प्राच्याग्र्यभवसंबंध्यं-तर्मुहूर्तद्वयाधि-
का ॥ २७ ॥ पल्यासंख्येयभागाढ्या नीलायाः सा दशाब्धयः ॥ पल्यासंख्यांशसंयुक्ताः ।
कापोत्यास्तु त्रयोऽब्धयः ॥ २८ ॥ प्राच्याग्र्यभवसत्कांत-र्मुहूर्त्तद्वयमेतयोः ॥ पल्यासंख्यांश-
एवांत-र्मूर्तं नेत्युच्यते पृथक् ॥ २९ ॥ एवं तैजस्यामपि भाव्यं-तैजस्या द्वौ पयोराशी ।
पल्यासंख्यलवाधिकौ ॥ द्व्यंतर्मुहुर्त्ताभ्यधिकाः । पद्मायाः दश वार्धयः ॥ ३० ॥ द्व्यंतर्मुहुर्त्ताः

शुक्लाया—स्त्रयस्त्रिंशत्पयोधयः ॥ अंतर्मुहूर्त्तं सर्वासां । जघन्यतः स्थितिर्भवेत् ॥ ३१ ॥ आद्यात्र सप्तममही—गरिष्ठस्थित्यपेक्षया ॥ धूमप्रज्ञाद्यप्रतरो—त्कृष्टायुश्चिंतया परा ॥ ३२ ॥ शैलाद्यप्रतरे ज्येष्ट—मपेक्ष्यायुस्तृतीयिका ॥ तुर्या चैशानदेवाना—मुत्कृष्टस्थित्यपेक्षया ॥ ३३ ॥ पंचमी ब्रह्मलोकस्य—गरिष्ठायुरपेक्षया ॥ षष्ठी चानुत्तरसुर—परमायुरपेक्षया ॥ ३४ ॥

❀ अत्र यद्यपि पंकप्रज्ञाशैलाद्यप्रस्तटयोः पूर्वोक्तादधिकापि स्थितिरस्ति परं प्रस्तुतलेश्यावतामियमेवोत्कृष्टा स्थितिरिति ज्ञेयं. यत्तु प्रज्ञापनोत्तराध्ययनसूत्रादौ कृष्णादीनामंतर्मुहूर्त्ताभ्यधिकत्वमुच्यते, तत्प्राच्याग्र्यभवसत्कांतर्मुहूर्त्तयोरेकस्मिन्नंतर्मुहूर्त्ते समावेशात्, इत्थं चैतदंतर्मुहूर्त्तस्यासंख्यानभेदत्वादुपपद्यते इत्यादिप्रज्ञापनावृत्तौ ❀ इति सामान्यतो लेश्यास्थितिः ॥

स्थितिं वक्ष्येऽथ लेश्यानां । नारकस्वर्गिणोर्नृणां ॥ तिरश्चां च जघन्येनो—त्कर्षेण च यथागमं ॥ ३५ ॥ दश वर्षसहस्राणि । कापोत्याः स्याल्लघुः स्थितिः ॥ उत्कृष्टा त्रीण्यतराणि । पल्यासंख्यलवस्तथा ॥ ३६ ॥ जघन्या तत्र घर्माद्य—प्रस्तटापेक्षया भवेत् ॥ उत्कृष्टा च तृतीयाद्य—प्रस्तटापेक्षयोदिता ॥ ३७ ॥ नीलाया लघुरेषैवो—त्कृष्टा च दश वार्धयः ॥ पल्यासं-

ख्येन्नागाढ्याः । कृष्णायाः स्यादसौ लघुः ॥ ३८ ॥ स्थितिर्जघन्या नीलायाः । शैलाद्यप्रस्तटे न्नवेत् ॥ रिष्टाद्यप्रस्तटे त्वस्या । ज्येष्ठा कृष्णा स्थितिर्लघुः ॥ ३९ ॥ कृष्णायाः पुनरुत्कृष्टा । त्रयस्त्रिंशत्पयोधयः ॥ इयं माघवतीवर्त्ति–ज्येष्ठायुष्कव्यपेक्षया ॥ ४० ॥ इत्थं नारकलेश्यानां । स्थितिः प्रकटिता मया ॥ अथ निर्जरलेश्यानां । स्थितिं वक्ष्ये यथाश्रुतं ॥ ४१ ॥ दशवर्षसहस्राणि । कृष्णायाः स्याल्लघुः स्थितिः ॥ एतस्याः पुनरुत्कृष्टा । पल्यासंख्यांशसंमिता ॥ ४२ ॥ इयमेवैकसमया–धिका नीला स्थितिर्लघुः ॥ पल्यासंख्येयन्नागश्च । नीलोत्कृष्टास्थितिर्न्नवेत् ॥ ४३ ॥ पल्यासंख्येयन्नागोऽयं । पूर्वोक्तासंख्यन्नागतः ॥ बृहत्तरो न्नवेदेवं । ज्ञेयमग्रेऽपि धीधनैः ॥ ४४ ॥ या नीलायाः स्थितिर्ज्येष्ठा । समयान्न्यधिका च सा ॥ कापोत्या लघुरस्याः स्यात् । पल्यासंख्यलवो गुरुः ॥ ४५ ॥ लेश्यानां तिसृणामासां । स्थितिर्यादृशी सा न्नवेत् ॥ न्नवनेशव्यंतरेषु । नान्येषु तदसंन्नवात् ॥ ४६ ॥ एवं वक्ष्यमाणतेजो––लेश्याया अप्यसौ स्थितिः ॥ न्नवनव्यतरज्योति–राद्यकल्पद्वयावधि ॥ ४७ ॥ पद्मायाश्च स्थितिर्ब्रह्मा–वधीशानादनंतरं ॥ लांतकात्परतः शुक्ल–लेश्याया न्नाव्यतामिति ॥ ४८ ॥ अथ प्रकृतं–

दशवर्षसहस्राणि । तेजोलेश्याजघुस्थितिः ॥ ज्ञवनेशव्यंतराणां । प्रज्ञसा ज्ञानज्ञानुज्ञिः ॥ ४ए ॥ नुत्कृष्टा ज्ञवनेशेनां । साधिकं सागरोपमं ॥ व्यंतराणां समुत्कृष्टा । पल्योपममुदीरिता ॥ ५० ॥ स्यात्पल्यस्याष्टमो ज्ञागो । ज्योतिषां सा लघीयसी ॥ नुत्कृष्टा वर्षलक्षेणाधिकं पल्योपमं ज्ञवेत् ॥ ५१ ॥ सा लघुर्वैमानिकाना–मेकं पल्योपमं मता ॥ नुत्कृष्टा द्वौ पयोराशी । पल्यासंख्यलवाधिकौ ॥ ५२ ॥ समयाज्यधिकैवैव । पद्मायाः स्याल्लघुः स्थितिः ॥ नुत्कृष्टा पुनरेतस्याः । स्थितिर्दश पयोधयः ॥ ५३ ॥ इयमेव च शुक्लायाः । स्थितिर्लघ्वी क्षणाधिका ॥ नुत्कृष्टा पुनरेतस्या–स्त्रयस्त्रिंशत्पयोधयः ॥ ५४ ॥ इत्थं नारकदेवानां । लेश्यास्थितिरुदीरिता ॥ अथ तिर्यग्मनुष्याणां । लेश्यास्थितिरुदीर्यते ॥५५॥ या या लेश्या येषु येषु । नृषु तिर्यक्षु वक्ष्यते ॥ आंतर्मुहूर्त्तिकी सा सा । शुक्ललेश्यां विना नृषु ॥ ५६ ॥ शुक्ललेश्यास्थितिर्नृणां । जघन्यांतर्मुहूर्त्तिकी ॥ नुत्कृष्टा नववर्षोना । पूर्वकोटी प्रकीर्त्तिता ॥ ५७ ॥ यद्यप्यष्टवर्षवयाः । कश्चिद्दीक्षामवाप्नुयात् ॥ तथापि तादृग्वयसः । पर्यायं वार्षिकं विना ॥५८॥ नोदेति केवलज्ञान–मतो युक्तमुदीरिता ॥ पूर्वकोटी नवाब्दोना । शुक्ललेश्यागुरुस्थितिः ॥५ए॥

इत्युत्तराध्ययनसूत्रवृत्तिप्रज्ञापनावृत्त्यभिप्रायः ।

तथैव संग्रहण्यामप्युक्तं—'चरमा नराण पुण नववासूणा पुव्व कोडीवि इति ।' संग्रहणीवृत्तौ प्रवचनसारोद्धारवृत्तौ च नराणां पुनश्चरमा शुक्ललेश्या उत्कर्षतः किंचिन्न्यूननववर्षोनपूर्वकोटिप्रमाणापि, इयं च पूर्वकोटरूर्ध्वं संयमावाप्तेरभावात्पूर्वकोट्यायुषःकिंचित्समधिकवर्षाष्टकादूर्ध्वमुत्पादितकेवलज्ञानस्य केवलिनोऽवसेया इत्युक्तं । अत्र च पूर्वकोट्या नववर्षोनत्वं किंचिन्न्यूननवर्षोनत्वं किंचित्समधिकाष्टवर्षोनत्वमिति त्रयं मिथो यथा न विरुध्यते, तथा बहुश्रुतेभ्यो भावनीयं ❀

प्रत्येकं सर्वलेश्याना—मनंता वर्गणाः स्मृताः ॥ प्रत्येकं निखिला लेश्या—स्तथानंतप्रदेशिकाः ॥ ६० ॥ असंख्यातप्रदेशावगाढाः सर्वा उदाहृताः ॥ स्थानान्यध्यवसायस्य । तासां संख्यातिगानि च ॥ ६१ ॥ क्षेत्रतस्तान्यसंख्येय—लोकाभ्रांशसमानि वै ॥ कालतोऽसंख्येयकाल—चक्रक्षणमितानि च ॥ ६२ ॥ यदुक्तं—

❀ असंखेज्जाण उस्स—प्पिणीण उस्सप्पिणीण जे समया ॥ संखाइया लोगा । लेस्सा-

णं हुंति-गणाइं ॥ १ ॥ ❀

अत्नप्रायो यादृशः स्यात् । सतीष्वेतासु देहिनां ॥ स मया समयोक्ताभ्यां । दृष्टांताभ्यां प्रदर्श्यते ॥ ६३ ॥ यथा पथः परिभ्रष्टाः । पुरुषाः षण् महाटवीं ॥ प्राप्ताः समंतादैकांतभक्ष्यं दिक्षु बुभुक्षिताः ॥ ६४ ॥ जंबूवृक्षं क्वचित्तत्र । ददृशुः फलभंगुरं ॥ आह्वयंतमिवाध्वन्यान् । मरुच्चपलपल्लवैः ॥ ६५ ॥ एकस्तत्राह वृक्षोऽयं । मूलादुन्मूल्यते ततः ॥ सुखासीनाः फलास्वादं । कुर्मः श्रमविवर्जिताः ॥ ६६ ॥ अन्यः प्राह किमेतावान् । पात्यते प्रौढपादपः ॥ शाखा महत्यश्छिद्यंते । संति तासु फलानि यत् ॥ ६७ ॥ तृतीयोऽप्यावदत् शाखा । भविष्यंति कदेदृशः ॥ प्रशाखा एव पात्यंते । यत एताः फलैर्भृताः ॥ ६८ ॥ उवाच वाचं तुर्योऽथ । तिष्ठंत्वेता वराकिकाः ॥ यथेष्टं गुच्छसंदोहं । छिन्नो येषु फलोद्गमः ॥ ६९ ॥ न नः प्रयोजनं गुच्छैः । फलैः किंतु प्रयोजनं ॥ तान्येव भुवि कीर्यंते । पंचमः प्रोचिवानिति ॥ ७० ॥ षष्ठेन शिष्टमतिना । समादिष्टमिदं ततः ॥ पतितानि फलान्यत्रो । माभूत्पातनपातकं ॥७१॥ भाव्याः षसामप्यमीषां । लेश्याः कृष्णादिकाः क्रमात् ॥ दर्श्यतेऽन्योऽपि दृष्टांतो दृ-

ष्टः श्रीश्रुतसागरे ॥ ७२ ॥ केचन ग्रामघाताय । चौराः क्रूरपराक्रमाः ॥ क्रामंतो मार्गमन्योऽन्यं । विचारमिति चक्रिरे ॥ ७३ ॥ एकस्तत्राह दुष्टात्मा । यः कश्चिद्दृष्टिमेति नः ॥ हंतव्यः सोऽद्य सर्वोऽपि । द्विपदो वा चतुष्पदः ॥ ७४ ॥ अन्यः प्राह चतुष्पद्भि–रपराद्धं न किंचन ॥ मनुष्या एव हंतव्या । विरोधो यैः सहात्मनां ॥ ७५ ॥ तृतीयः प्राह न स्त्रीणां । हत्या कार्यातिनिंदिता ॥ पुरुषा एव हंतव्या । यतस्ते क्रूरचेतसः ॥ ७६ ॥ निरायुधैर्वराकैस्तै–र्हतैः किं नः प्रयोजनं ॥ घात्याः सशस्त्रा एवेति । तुर्यश्चातुर्यवान् जगौ ॥ ७७ ॥ सशस्त्रैरपि नश्यद्भि–र्हतैः किं नः फलं भवेत् ॥ सायुधो युध्यते यः स । वध्य इत्याह पंचमः ॥ ॥ ७८ ॥ परद्रव्यापहरण–मेकं पापमिदं महत् ॥ प्राणापहरणं चान्य–च्चेत्कुर्मस्तर्हि का गतिः ॥ ७९ ॥ धनमेव तदादेयं । मारणीयो न कश्चन ॥ षष्ठः स्पष्टमभाषिष्ट । प्राग्वदत्रापि भावना ॥ ८० ॥ सर्वस्तोकाः शुक्ललेश्या । जीवास्तेभ्यो यथोत्तरं ॥ पद्मलेश्यास्तेजोलेश्या । असंख्येयगुणाः क्रमात् ॥ ८१ ॥ अनंतघ्नास्ततो लेश्याः । कापोत्याद्यास्ततस्तथा ॥ तेभ्यो नीलकृष्णलेश्याः । क्रमाद्विशेषतोऽधिकाः ॥ ८२ ॥ इति लेश्यास्वरूपं ॥

निर्व्याघातं प्रतीत्य स्या—दाहारः षड्दिगुद्भवः ॥ व्याघाते त्वेष जीवानां । त्रिचतुष्पंचदि-
ग्भवः ॥ ८३ ॥ अलोकवियताहार—द्रव्याणां स्खलनं हि यत् ॥ सव्याघातस्तदभावो । नि-
र्व्याघातमिहोच्यते ॥ ८४ ॥ भावनात्वेवं—सर्वाधस्तादधोलोक—निष्कुटस्याग्निकोणके ॥ स्थि-
तो भवेद्यदैकाक्ष—स्तदासौ त्रिदिगुद्भवः ॥ ८५ ॥ पूर्वस्यां च दक्षिणस्या—मधस्तादिति दिक्त्र-
ये ॥ संस्थितत्वादलोकस्य । ततो नाहारसंभवः ॥ ८६ ॥ अपरस्या उत्तरस्या । ऊर्ध्वतश्चेति
दिक्त्रयात् ॥ पुद्गलानाहरत्येवं । सूक्ष्माः पंचानिलोऽनणुः ॥ ८७ तथोक्तं— ❁इहलोकचर-
मांते बादरपृथिवीकायिकाप्कायिकतेजोवनस्पतयो न संति, सूक्ष्मास्तु पंचापि संति, बादरा
वायुकायिकाश्चेति । पर्याप्तापर्याप्तकभेदेन द्वादशस्थानान्यनुसर्त्तव्यानीति भगवती श ०३४ उ०
१ वृत्तौ. ❁ द्वयोर्दिशोस्तथैकस्या । अलोकव्याहतौ बुधैः ॥ चतुःपंचदिगुत्पन्नो—ऽप्येषामेव वि-
भाव्यतां ॥ ८८ ॥ तथाहि—सर्वाधस्तादधोलोक—एव चेत्पश्चिमां दिशं ॥ स्थितोऽनुसृत्यैका
क्षः स्या—त्प्राच्यां न व्याहतिस्तदा ॥ ८९ ॥ अधस्तनी दक्षिणा च । द्वे एव व्याहते इति ॥
दिग्भ्योऽन्याभ्यश्चतसृभ्यः । पुद्गलानाहरत्यसौ ॥ ९० ॥ द्वितीयादिप्रतरेषु । यदोर्ध्वं पश्चि-

मादिशं ॥ स्थितोऽनुसृत्यैकाक्षः स्या–न्न व्याहतिरधोऽपि तत् ॥ ९१ ॥ व्याहता दिक्षिवैका । ततः पंचदिगागतान् ॥ पुद्गलानाहरत्येष । एवं सर्वत्र भावना ॥ ९२ ॥ द्रव्यतश्च स आहारः । स्यादनंतप्रदेशवः ॥ संख्यासंख्यप्रदेशौ हि । नात्मग्रहणगोचरः ॥ ९३ ॥ असंख्याभ्रप्रदेशानां । क्षेत्रतः सोऽवगाहकः ॥ जघन्यमध्यमोत्कृष्ट–स्थितिकः कालतः पुनः ॥ ९४ ॥ भावतः पंचधा वर्ण–रसैर्गंधैर्द्विधाष्टधा ॥ स्पर्शैरेकगुणत्वादि–भेदैः पुनरनेकधा ।९५। किंच–

अनंतरावगाढानि । स्वगोचरगतानि च ॥ द्रव्याण्यन्यवहार्याण्य–णूनि वा बादराणि च ॥ ९६ ॥ आहरंति वर्णगंध–रसस्पर्शान्पुरातनान् ॥ विनाश्यान्यांस्तथोत्पाद्या–पूर्वान् जीवाः स्वभावतः ॥ ९७ ॥ इत्याहारदिक्प्रसंगात्किंचिदाहारस्वरूपं च—अस्थिसंबंधरूपाणि । तत्र संहननानि तु ॥ षोढा खलु विभिद्यंते । दार्ढ्यादितारतम्यतः ॥ ९८ ॥ तथाहुः—❀ वज्जरिसहनारायं । पढमं बीयं च रिसहनारायं ॥ नारायमद्धनाराय–कीलिया तहय छेवठं ॥ १ ॥ ❀ कीलिका वज्रमृषभः । पट्टोऽस्थिद्वयवेष्टकः ॥ अस्थ्नोर्मर्कटबंधो यः । स नाराच इति स्मृतः ॥ ९९ ॥ ततश्च–बद्धे मर्कटबंधेन । संधौ संधौ यदस्थिनी ॥ अस्थ्ना च पट्टाकृतिना

| न्नवतः परिवेष्टिते ॥ ४०७ ॥ तदस्थित्रयमाविद्ध्य । स्थितेनास्थना दृढीकृतं ॥ कीलिकाकृतिना वज्र–र्षन्ननाराचकं हि तत् ॥ १ ॥ अन्यदृषन्ननाराचं । कीलिकारहितं च तत् ॥ केचित्तुवज्ञनाराचं । पट्टोष्मितमिदं जगुः ॥ २ ॥ अस्थ्नोर्मर्कटबंधेन । केवलेन दृढीकृतं ॥ आहुः संहनं पूज्या । नाराचाख्यं तृतीयकं ॥ ३ ॥ बद्धं मर्कटबंधेन । यन्नवेदेकपार्श्वतः ॥ अन्यतः कीलिकानद्ध–मर्धनाराचकं हि तत् ॥ ४ ॥ तत्कीलिकाख्यं यत्रास्थ्नां । केवलं कीलिकाबलं ॥ अस्थ्नां पर्यंतसंबंध–रूपं सेवार्त्तमुच्यते ॥ ५ ॥ सेवयाऽभ्यंगाद्यया वा । ऋतं व्याप्तं ततस्तथा ॥ छेदैः खंडैर्मिथः स्पृष्टं । छेदस्पृष्टमतोऽथवा ॥ ६ ॥ यद्यपि स्युरनस्थीना–मेतान्यस्थ्यात्मकानि न ॥ तच्छनः शक्तिविशेष–स्तत्राप्येषूपचर्यते ॥ ७ ॥ एकेंद्रियाणां सेवार्त्तं । तमपेक्ष्यैव कथ्यते ॥ जीवाभिगमानुसृतैः । कैश्चिच्चाद्यं सुधाभुजां ॥ ८ ॥ संग्रहणीकारैस्तु–

❀ छ गब्भतिरिनराणं । समुत्तिपणिंदिविगलछेवद्धं ॥ सुरनेरइया एगिं–दियाय सव्वे असंघयणा ॥ १ ॥ इत्युक्तं—❀ इति संहननानि ॥ कषं संसारकांतार–मयते यांति यैर्जनाः ॥ ते कषायाः क्रोधमान–मायालोभा इति श्रुताः ॥ ९ ॥ तत्र च—क्रोधोऽप्रीत्यात्मको मानो–

ऽन्येर्ष्या स्वोत्कर्षलक्षणः ॥ मायान्यवंचनारूपा । लोभस्तृष्णाभिगृध्नुता ॥ १० ॥ चत्वारोंतर्भवंत्येते । तन्नयोर्द्वेषरागयोः ॥ आदिमौ द्वौ भवेद् द्वेषो । रागः स्यादंतिमौ च तौ ॥ ११ ॥ केचित्तु—स्वपक्षपातरूपत्वा—न्मानोऽपि राग एव यत् ॥ ततस्त्रयात्मको रागो । द्वेषः क्रोधस्तु केवलं ॥ १२ ॥ चत्वारोऽपि चतुर्भेदाः । स्युस्तेऽनंतानुबंधिनः ॥ अप्रत्याख्यानकाः प्रत्या—ख्यानाः संज्वलना इति ॥ १३ ॥ एतल्लक्षणानि च श्रीहेमचंद्रसूरिभिरित्थमूचिरे—पक्षं संज्वलनः प्रत्या—ख्यानो मासचतुष्टयं ॥ अप्रत्याख्यानको वर्षं । जन्मानंतानुबंधिकः ॥ १४ ॥ वीतरागयतिश्राद्ध—सम्यग्दृष्टित्वघातकाः ॥ ते देवत्वमनुष्यत्व—तिर्यक्त्वनरकप्रदाः ॥ १५ ॥ प्रज्ञापनावृत्तौ च—अनंतान्यनुबध्नंति । यतो जन्मानि भूतये ॥ तेनानंतानुबंध्याख्या । क्रोधाद्येषु नियोजिता ॥ १६ ॥ एषां ' संयोजना ' इति द्वितीयमपि नाम ॥

संयोजयंति यन्नर—मनंतसंख्यैर्भवैः कषायास्ते ॥ संयोजनतानंता—नुबंधिता वाप्यतस्तेषां ॥ १७ ॥ नाल्पमप्युत्सहेदेषां । प्रत्याख्यानमिहोदयात् ॥ अप्रत्याख्यानसंज्ञातो । द्वितीयेषु निवेशिता ॥ १८ ॥ सर्वसावद्यविरतिः । प्रत्याख्यानमिहोदितं ॥ तदावरणतः संज्ञा ।

सा तृतीयेषु योजिता ॥ १९ ॥ संज्वलयंति यतिं य–त्संविग्नं सर्वपापविरतमपि ॥ तस्मात्सं-
ज्वलना इ–त्यप्रशमकरा निरुच्यंते ॥ २० ॥ अन्यत्राप्युक्तं–शब्दादीन् विषयान् प्राप्य । सं-
ज्वलंति यतो मुहुः ॥ ततः संज्वलनाह्वानं । चतुर्थानामिहोच्यते ॥ २१ ॥ स्युः प्रत्येकं चतु-
र्भेदा । भेदाः संज्वलनादयः ॥ एवं पोमशधैकैक–श्चतुःषष्टिविधा इति ॥ २२ ॥ यथा कदा-
चिच्छिष्टोऽपि । क्रोधादेर्याति डुष्टतां ॥ एवं संज्वलनोऽप्येति । काप्यनंतानुबंधितां ॥ २३ ॥ ए-
वं सर्वेष्वपि भाव्यं–तत एवोपपद्येता–नंतानुबंधिभाविनी ॥ कृष्णादेर्दुर्गतिर्नूनं । क्षीणानंता-
नुबंधिनः ॥ २४ ॥ एवंच–वर्षावस्थायिमानस्य । श्रीबाहुबलिनो मुनेः ॥ कैवल्यहेतुश्चारित्रं ।
ज्ञेयं संज्वलनोचितं ॥ २५ ॥ कर्मग्रंथकारैश्च सदृष्टांता एवमेते जगदिरे–❀ जलरेणुपुढवीप-
व्वय–राईसरिसो चउविहो कोहो ॥ तिणिसलयाकठ्ठठिय । सेलत्थंभोवमो माणो ॥ २६ ॥ मा-
यावलेहिगोमुत्ति । मिंढसिंगघणवंसिमूलसमा ॥ लोहो हलिद्दखंजण–कद्दमाकिमरागसारित्थो
॥ २७ ॥–❀ तथा–प्रज्ञापनायां प्रज्ञप्ताः । स्वान्योभयप्रतिष्ठिताः ॥ अप्रतिष्ठितकाश्चैवं । च-
त्वारोऽपि चतुर्विधाः ॥ २८ ॥ तथाहि––स्वदुश्चेष्टिततः कश्चित् । प्रत्यपायमवेक्ष्य यत् ॥ कु-

यदात्मोपरिक्रोधं। स एष स्वप्रतिष्ठितः ॥ २९ ॥ उदीरयेद्यदा क्रोधं। परः संतर्जनादिभिः ॥ तदा तद्विषयः क्रोधो । भवेदन्यप्रतिष्ठितः ॥ ३० ॥ एतच्च नैगमनय–दर्शनं चिंत्यतां यतः ॥ स तद्विषयता मात्रा–न्मन्यते तत्प्रतिष्ठितं ॥ ३१ ॥ यश्चात्मपरयोस्तादृ–गपराधकृतो भवेत् ॥ क्रोधः परस्मिन् स्वस्मिंश्च । स स्यादुभयसंश्रितः ॥ ३२ ॥ विना पराक्रोशनादि। विना च स्वकुचेष्टितं ॥ निरालंबन एव स्यात् । केवलं क्रोधमोहतः ॥ ३३ ॥ स चाऽप्रतिष्ठितः क्रोधो । दृश्यतेऽयं च कस्यचित् ॥ क्रोधमोहोदयात्क्रोधः । कर्हिचित्कारणं विना ॥ ३४ ॥ अत एवोक्तं पूर्वमहर्षिभिः—❀ सापेक्षाणि च निरपे–क्षाणि च कर्माणि फलविपाकेषु ॥ सोपक्रमं च निरुप–क्रमं च दृष्टं यथायुष्कं ॥ ३५ ॥ इत्याद्यर्थतः प्रज्ञा० तृ० पदे ॥ एवमन्येऽपि त्रयः कषाया भाव्या इति ॥

चतुर्भिः कारणैरेते । प्रायः प्रादुर्भवंति च ॥ क्षेत्रं वास्तु शरीरं च ॥ प्रतीत्योपधिमंगिनां ॥ ३६ ॥ सर्वस्तोका निष्कषाया । मानिनोऽनंतकास्ततः ॥ क्रुद्धमायाविलुब्धाश्च । स्युर्विशेषाधिकाः क्रमात् ॥ ३७ ॥ एकेंद्रियाणां चत्वारो–ऽप्यनाभोगाद्भवंत्यमी ॥ अदर्शितबहिर्दे-

ह—विकारा अस्फुटात्मकाः ॥ ३८ ॥ सर्वदा सहचारित्वात् । कषायाऽव्यभिचारिणः ॥ नोकषाया नव प्रोक्ता । भवनीयक्रमांबुजैः ॥ ३९ ॥ तदुक्तं प्रज्ञापनावृत्तौ—कशायसहवर्त्तित्वात् । कशायप्रेरणादपि ॥ हास्यादिनवकस्योक्ता । नोकषायकषायता ॥ ४० ॥ हासो रत्यरतिर्भीति—र्जुगुप्सा शोक एव च ॥ पुंस्त्रीक्लीबाभिधा वेदाः । नोकषाया अमी मताः ॥ ४१ ॥ इतिकषायाः ॥—संज्ञा स्याद् ज्ञानरूपैका । द्वितीयानुभवात्मिका ॥ तत्राद्या पंचधाज्ञान—मन्या च स्यात्स्वरूपतः ॥४२॥ असातवेदनीयादि—कर्मोदयसमुद्भवा ॥ आहारादिपरीणाम—भेदात्सा च चतुर्विधा ॥ ४३ ॥ तथाहुः—❀ चत्तारि सन्नाउ पन्नत्ते, आहारसन्ना, भयसन्ना, मेहुणसन्ना, परिग्गहसन्ना, इति स्थानांगे. ❀ आहारे योऽभिलाषः स्या—ज्जंतोः क्षुद्वेदनीयतः ॥ आहारसंज्ञा सा ज्ञेया । शेषाः स्युर्मोहनीयजाः ॥ ४४ ॥ भयसंज्ञा भयं त्रास—रूपं यदनुभूयते ॥ मैथुनेच्छात्मिका वेदो—दयजा मैथुनाभिधा ॥ ४५ ॥ स्यात्परिग्रहसंज्ञा च । लोभोदयसमुद्भवा ॥ अनाभोगाऽव्यक्तरूपा । एताश्चैकेंद्रियांगिनां ॥ ४६ ॥ भगवतीसप्तमशतकाष्टमोदेशके तु—❀ आहारभयपरिग्गह—मेहुण तह कोह-माण-माया-य-॥-लोभो लोगो उ-

हो । सन्ना दस सव्वजीवाणं ॥ ४७ ॥ ❀

एताश्च वृक्षोपलक्षणेन सर्वैकेंद्रियाणां साक्षादेवं दर्शिताः । तद्यथा—❀ रुरकाण जलाहारो । संकोअणिआ न्नएण सकुश्यं ॥ निअतंतुएहिं वेढइ । वल्ली रुरके परिगहेइ ॥४८॥ इत्थिपरिरंन्नणेणं । कुरुवगतरुणो फलंति मेहुणे ॥ तह कोकनदस्स कंदे । हुंकारे मुअइ कोहेणं ॥ ४९ ॥ माणे झरइ रुअंती । बायइ वल्ली फलाइं मायाए ॥ लोन्ने बिल्लपलासा । खिवंति मूले निहाणुवरिं ॥ ५० ॥ रयणीए संकोउ । कमलाणं होइ लोगसन्नाए ॥ उहे चइत्तु मग्गं । चडंति रुरवेसु वल्लीउ ॥ ५१ ॥ ❀ अन्यैरपि वृक्षाणां मैथुनसंज्ञान्निधीयते, तथोक्तं शृंगारतिलके—सुन्नग कुरुवकस्त्वं नो किमालिंगनोत्कः । किमु मुखमदिरेच्छुः केसरो नो हृदिस्थः ॥ त्वयि नियतमशोके युज्यते पादघातः । प्रियमितिपरिहासात्पेशल काचिडुचे ॥५२॥ तथा पारदोऽपि स्फारशृंगारया स्त्रियावलोकितः कूपाडुल्लतीति लोके श्रूयते इति ॥ स्तोका मैथुनसंज्ञोप—युक्ता नैरयिकाः क्रमात् ॥ संख्येयघ्ना जग्धिपरि—ग्रहत्रासोपयुक्तकाः ॥ ५३ ॥ स्युः परिग्रहसंज्ञाद्यास्तिर्यंचोऽल्पास्ततः क्रमात् ॥ ते मैथुनन्नयाहार—संज्ञाः संख्यगुणाधि-



॥ ।

काः ॥ ५४ ॥ भयसंज्ञान्विताः स्तोका । मनुष्याः स्युर्यथाक्रमं ॥ संख्येयघ्ना भुक्तिपरि—ग्रह-
मैथुनसंज्ञकाः ॥ ५५ ॥ आहारसंज्ञाः स्युः स्तोका । देवाः संख्यगुणाधिकाः ॥ संत्रासमैथु-
नपरि—ग्रहसंज्ञा यथाक्रमं ॥ ५६ ॥ प्रवचनसारोद्धारवृत्तौ-त्वेवं लिखितं—❀ तथा मतिज्ञाना-
वरणकर्मक्षयोपशमात् शब्दार्थगोचरा सामान्यावबोधक्रिया ओघसंज्ञा, तद्विशेषावबोधक्रिया
लोकसंज्ञा, एवं चेदमापतितं—दर्शनोपयोग ओघसंज्ञा, ज्ञानोपयोगो लोकसंज्ञा, एष स्थानां-
गटीकाभिप्रायः ।

आचारांगटीकायां पुनरभिहितं ओघसंज्ञा तु अव्यक्तोपयोगरूपा वल्लीवितानारोहणादि-
संज्ञा, लोकसंज्ञा स्वच्छंदघटितविकल्परूपा लोकोपचारिता, यथा न संत्यनपत्यस्य लोकाः
श्वानो यक्षा विप्रा देवा काकाः पितामहाः बर्हिणां पक्षवातेन गर्भ इत्यादिका इति । आचा-
रांगे तु—मोहधर्म सुखदुःख—जुगुप्साशोकनामभिः ॥ दश ताः षड्भिरेताभिः । सह षोडश
वर्णिताः ॥ ५७ ॥ अथवा त्रिविधाः संज्ञाः । प्रथमा दीर्घकालिकी ॥ द्वितीया हेतुवादाख्या ।
दृष्टिवादाभिधा परा ॥ ५८ ॥ सुदीर्घमप्यतीतार्थं । स्मरत्यथ विचिंतयेत् ॥ कथं नु नाम क-

र्त्तव्य–मित्यागामिनमाद्यया ॥ ५९ ॥ तथा विविंत्येष्टानिष्ट–छायातपादिवस्तुषु ॥ द्वितीयया
स्वसौख्यार्थं । स्यात्प्रवृत्तिनिवृत्तिमान् ॥ ६० ॥ भवेत्सम्यग्दृशामेव । दृष्टिवादोपदेशिकी ॥
एतामपेक्ष्य सर्वेऽपि । मिथ्यादृशो ह्यसंज्ञिनः ॥ ६१ ॥ सुरनारकगर्भोत्थ–जीवानां दीर्घका-
लिकी ॥ संमूर्छिमांतद्वयक्षादि–जीवानां हेतुवादिकी ॥ ६२ ॥ छद्मस्थसम्यग्दृष्टीनां । श्रुत-
ज्ञानात्मिकांतिमा ॥ मतिव्यापारनिर्मुक्ताः । संज्ञातीता जिनाः समे ॥ ६३ ॥ इति संज्ञाः ॥
इदुः स्यात्परमैश्वर्ये । धातोरस्य प्रयोगतः ॥ इंदनात्परमैश्वर्या–दिंद्र आत्माभिधीयते ॥ ६४ ॥
तस्य लिंगं तेन सृष्ट–मितींद्रियमुदीर्यते ॥ श्रोत्रादि पंचधा तच्च । तथाहुर्वाचकाग्र्यकाः ॥
॥ ६५ ॥ ❀ इंदो जीवो सव्वो–वलद्धिभोगपरमेसरत्तणओ ॥ सोत्ताइभेयमिंदिय–मिह तल्लिं-
गाइ भावाओ ॥ ६६ ॥ श्रोत्राक्षिघ्राणरसन–स्पर्शनानीति पंचधा ॥ तान्येकैकं द्विभेदं तद् ।
द्रव्यभावविभेदतः ॥ ६७ ॥ तत्र निर्वृत्तिरूपं स्या–त्तथोपकरणात्मकं ॥ द्रव्येंद्रियमिति द्वेधा
। तत्र निर्वृत्तिराकृतिः ॥ ६८ ॥ सापि बाह्यांतरंगा च । बाह्या तु स्फुटमीक्ष्यते ॥ प्रतिजाति
पृथग्रूपा । श्रोत्रपर्पटिकादिका ॥ ६९ ॥ नानात्वान्नोपदेष्टुं सा । शक्या नियतरूपतः ॥ ना-

नाकृतीनींद्रियाणि । यतो वाजिनरादिषु ॥ ३० ॥ अभ्यंतरा तु निर्वृत्तिः । समाना सर्वजातिषु ॥ उक्तं संस्थाननैयत्य–मेनामेवाधिकृत्य च ॥ ३१ ॥ तथाहि—

श्रोत्रं कदंबपुष्पाभ–मांसैकगोलकात्मकं ॥ मसूरधान्यतुल्या स्या–च्चक्षुषोऽतर्गताकृतिः ॥ ३२ ॥ अतिमुक्तकपुष्पाभं । घ्राणं च काहलाकृति ॥ जिह्वा क्षुरप्राकारा स्यात् । स्पर्शनं विविधाकृति ॥ ३३ स्पर्शनेंद्रियनिवृत्तौ । बाह्याभ्यंतरयोर्नभित् ॥ तथैव प्रतिपत्तव्य–मुक्तत्वाभ्पूर्वसूरिभिः ॥ ३४ ॥ बाह्यनिर्वृत्तींद्रियस्य । खड्गोपमितस्य या ॥ धारोपमांतर्निर्वृत्ति–रत्यच्छपुद्गलात्मिका ॥ ३५ ॥ तस्याः शक्तिविशेषो यः । स्वीयस्वीयार्थबोधकः ॥ उक्तं तदेवोपकर–णेंद्रियं तीर्थपार्थिवैः ॥ ३६ ॥ युग्मं ॥ तदुक्तं प्रज्ञापनावृत्तौ—

❀ उपकरणं, खड्गस्थानीयाया बाह्यनिर्वृत्तेर्या खड्गधारासमाना स्वच्छतरपुद्गलसमूहात्मिका अभ्यंतरानिर्वृत्तिस्तस्याः शक्तिविशेष इति ॥ आचारांगवृत्तौ तु निर्वृत्त्यत इतिनिर्वृत्तिः, केन निर्वर्त्यते ? कर्मणा; तत्रोत्सेधांगुलासंख्येयभागप्रमितानां शुद्धानामात्मप्रदेशानां प्रतिनियतचक्षुरादींद्रियसंस्थानेनावस्थितानां या वृत्तिरभ्यंतरा निर्वृत्तिस्तेष्वेवात्मप्रदेशेष्विंद्रियव्यपदे-

शन्नाग् यः प्रतिनियतसंस्थानो निर्माणनाम्ना पुद्गलविपाकिनावर्द्धकीसंस्थानीयेनारचितः कर्णशष्कुल्यादिविशेषः अंगोपांगनाम्ना तु निष्पादित इति बाह्यनिर्वृत्तिः, तस्या एव निर्वृत्तेर्द्विरूपाया येनोपकारः क्रियते, तदुपकरणं, तच्चेंद्रियकार्यं सत्यामपि निर्वृत्तावनुपहतायामपि मसूराद्याकृतिरूपायां निर्वृत्तौ तस्योपघातान्न पश्यति, तदपि निर्वृत्तिवद् द्विधेति । एवं च प्रज्ञापनावृत्त्यभिप्रायेण स्वच्छतरपुद्गलात्मिका अभ्यंतरनिर्वृत्तिः, प्रथमांगवृत्त्यभिप्रायेण तु शुद्धात्मप्रदेशरूपा अभ्यंतरनिर्वृत्तिरितिध्येयं

इदमांतरनिर्वृत्ते—र्नतूपकरणेंद्रियं ॥ अर्थांतरं शक्तिशक्ति—मतोर्भेदात्कथंचन ॥७७॥ कथंचिद्भेदश्च—तस्यामांतरनिर्वृत्तौ । सत्यामपि पराहते ॥ द्रव्यादिनोपकरणें—द्रियेऽर्थाज्ञानदर्शनात् ॥ ७८ ॥ इतिद्रव्येंद्रियं ॥ द्विधा भावेंद्रियमपि । लब्धितश्चोपयोगतः ॥ यथाश्रुतमथो वच्मि । स्वरूपमुभयोरपि ॥ ७९ ॥

जंतोः श्रोत्रादिविषय—स्तत्तदावरणस्य यः ॥ स्यात्क्षयोपशमो लब्धि—रूपं भावेंद्रियं हि तत् ॥ ८० ॥ स्वस्वलब्ध्यनुसारेण । विषयेषु य आत्मनः ॥ व्यापार उपयोगाख्यं । भवेद्भा-

वेंद्रियं च तत् ॥ ८१ ॥ उपयोगेंद्रियं चैक—मेकदा नाधिकं भवेत् ॥ एकदा ह्युपयोगः स्या—देक एव यदंगिनां ॥ ८२ ॥ तथाहि—इंद्रियेणेह येनैव । मनः संयुज्यतेऽगिनः ॥ तदेवैकं स्व-विषय—ग्रहणाय प्रवर्त्तते ॥ ८३ ॥ सशब्दां सुरभिं मृद्वीं । खादतो दीर्घशष्कुलीं ॥ पंचाना-मुपयोगानां । यौगपद्यस्य यो भ्रमः ॥ ८४ ॥ स चेंद्रियेषु सर्वेषु । मनसः शीघ्रयोगतः ॥ सं-भवेद्युगपत्तत्र—शतवेधाभिमानवत् ॥ ८५ ॥ अन्यथा तूपयोगौ द्वौ । युगपन्नार्हतोऽपि चेत् ॥ छद्मस्थानां पंच तर्हि । संभवेयुः कथं सह ॥ ८६ ॥ तदुक्तं प्रथमांगवृत्तौ—आत्मा सहैति मनसा मन इंद्रियेण । स्वार्थेन चेंद्रियमिति क्रम एष शीघ्रः ॥ योगोऽयमेव मनसः किमगम्य-मस्ति । यस्मिन्मनो व्रजति तत्र गतोऽयमात्मा ॥ ८७ ॥ किंच—एकाक्षादिव्यवहारो । भवेद् द्रव्येंद्रियैः किल ॥ अन्यथा बकुलः पंचा—क्षः स्यात्पंचोपयोगतः ॥ ८७ ॥ यदुक्तं—पंचिंदिउ उ बउलो । नरोव्व सव्वोवलाद्धिभावाउ ॥ तहवि न भणइ पंचिं—दिउत्ति दव्विंदिया भावा ॥८८॥ तरुणान्नूपुरशृंगार—चारुलोलेक्षणामुखात् ॥ निर्यत्सुगंधिमदिरा—गंडूषादेष पुष्प्यति ॥ ८९ ॥ ततः पंचाप्युपयोगा भाव्या इति ॥ अंगुलासंख्येयभाग—ग्राह्यानि जिनेश्वराः ॥ ऊचुः पं-

चापींद्रियाणि । बाहल्यं स्थूलता किल ॥ ८० ॥

नन्वंगुलासंख्यभाग—बहले स्पर्शनेंद्रिये ॥ खड्गादिघाते देहांत—र्वेदनानुभवः कथं ॥८१॥ अत्रोच्यते—त्वगिंद्रियस्य विषयः । स्पर्शाः शीतादयो यथा ॥ चक्षुषो रूपमेवं तु । विषयो नास्य वेदना ॥ ८२ ॥ दुःखानुभवरूपा सा । तां त्वात्मानुभवत्ययं ॥ सकलेनापि देहेन । ज्वरादिवेदनामिव ॥ ८३ ॥ अथ शीतलपानीय—पानेंतर्वेद्यते कथं ॥ शीतस्पर्शोंतरा कौत—स्कुतं स्यात्स्पर्शनेंद्रियं ॥ ८४ ॥ अत्रोच्यते—सर्वत्रांगप्रदेशांत—र्वर्त्ति त्वगिंद्रियं किल ॥ भवेदेवेतिमंतव्यं । पूर्वर्षिसंप्रदायतः ॥ ८५ ॥ यदाहप्रज्ञापनामूलटीकाकारः—सर्वप्रदेशपर्यंतवर्त्तित्वात्ततोऽभ्यंतरतोऽपि शुषिरस्योपरि त्वगिंद्रियस्य भावादुपपद्यतेंतरपि शीतस्पर्शवेदनानुभव इति ॥ ततोंतरेऽपि शुषिर—पर्यंतेऽस्ति त्वगिंद्रियं ॥ अतः संवेद्यते शैत्यं । कर्णादिशुषिरेष्विव ॥८६॥ पृथुत्वमंगुलासंख्य—भागोऽनींद्रियवेदिभिः ॥ त्रयाणामपि निर्दिष्टः । श्रवणघ्राणचक्षुषां ॥८७॥ अगुलानां पृथक्त्वं च । पृथुत्वं रसनेंद्रिये ॥ स्वस्वदेहप्रमाणं च । भवति स्पर्शनेंद्रियं ॥ ८८ ॥ त्वगिंद्रियं विनान्येषां । चतुर्णां पृथुना भवेत् ॥ आत्मांगुलेन सोत्सेधां—गुलेन स्पर्शनस्य तु

॥ ४९९ ॥ ननूत्सेधांगुलेनैव । मितो देहो भवेत्ततः ॥ मातुं तेनैव युज्यंते । तद्गतानींद्रियाण्य-
पि ॥ ५०० ॥ आत्मांगुलेन चत्वार्यौ-त्सेधिकेनैकमिंद्रियं ॥ तानीह मीयमानानि । कथमौ-
चित्यमियूति ॥ ' ॥ अत्रोच्यते—

जिह्वादीनां पृथुलत्वे । औत्सेधेनोररीकृते ॥ त्रिगव्यूतनरादीनां । न स्याद्विषयवेदिता ॥
॥ २ ॥ तथाहि—त्रिगव्यूनादिमनुजाः । षट्गव्यूतादिकुंजराः ॥ स्वस्वदेहानुसारात्स्यु-र्वि-
स्तीर्णरसनेंद्रियाः ॥ ३ ॥ तेषामांतरनिर्वृत्ति-रूपं चेद्रसनेंद्रियं ॥ उत्सेधांगुलपृथक्त्व-मितं
स्यादल्पकं हि तत् ॥ ४ ॥ न व्याप्नुयात्सर्वजिह्वां । ततोतिविदितोऽनया ॥ सर्वात्मना रस-
ज्ञान-व्यवहारो न सिद्ध्यति ॥ ५ ॥ गंधादिव्यवहारोऽपि । भावनीयो दिशानया ॥ तत आ-
त्मांगुलेनैव । पृथुत्वं रसनादिषु ॥ ६ ॥ जघन्यतोऽक्षिवर्ज्याण्यं-गुलासंख्येयभागतः ॥ गृह्णंति
विषयं चक्षु-स्त्वंगुलसंख्यभागतः ॥ ७ ॥ अयं भावः—प्राप्यार्थावच्छेदकत्वात् । श्रवणादीनि
जानते ॥ अंगुलासंख्येयभागा-दपि शब्दादिमागतं ॥ ८ ॥ चतुर्णामत एवैषां । व्यंजनावग्र-
हो भवेत् ॥ दृष्टांतान्नव्यमृत्पात्र-शयितोद्बोधनात्मकात् ॥ ९ ॥ यथा शरावकं नव्यं । नैवै-

केनोदबिंदुना ॥ क्लियते किंतु भूयोभिः । पतद्भिस्तैर्निरंतरं ॥ १० ॥ एवं सुप्तोऽपि नैकेन । शब्देन प्रतिबुध्यते ॥ किंतु तैः पंचषैः कर्णे । शब्दद्रव्यैर्भृते सति ॥ ११ ॥ एवं व्यंजनावग्रहभावना नंदीसूत्रे ॥ चक्षुस्त्वप्राप्यकारित्वा—दंगुलसंख्यभागतः ॥ अर्थं जघन्याद् गृह्णाति । ततोऽप्यर्वाक्तरं न तु ॥ १२ ॥ तत एवातिपार्श्वस्थं । नैवांजनमलादिकं ॥ चक्षुः परिछिनत्तीति । प्रतीतं सर्वदेहिनां ॥ १३ ॥ तथा—

श्रुतिर्द्वादशयोजन्याः । शृणोति शब्दमागतं ॥ रूपं पश्यति चक्षुः सा—धिकयोजनलक्षतः ॥ १४ ॥ आगतं नवयोजन्याः । शेषाणि त्रीणि गृह्णते ॥ गंधं रसमथ स्पर्श—मुत्कृष्टो विषयो ह्ययं ॥ १५ ॥ ननु च प्राप्यकारीणि । श्रोत्रादीनींद्रियाणि चेत् ॥ परतोऽप्यागतान् शब्दा—दीन् गृह्णंति कथं न तत् ॥ १६ ॥ द्वादशयोजनादिर्यो । नियमः सोऽपि निष्फलः ॥ गृह्णाति प्राप्तसबंधं । सर्वमित्येव यौक्तिकं ॥ १७ ॥ अत्रोच्यते—शब्दादीनां पुद्गला ये । परतः स्युः समागताः ॥ तथा मंदपरीणामा—स्ते—जायंते स्वभावतः ॥ १८ ॥ यथा स्वविषयं ज्ञानं । नोत्पादयितुमीशते स्वभावान्नास्ति शक्तिश्चें—द्रियाणामपि तद्ग्रहे ॥ १९ ॥ ततो वि-

षयनियमो । युक्तोऽयं दर्शितः श्रुते ॥ प्राप्यकारित्वे चतुर्णा–मिंद्रियाणां स्थितेऽपि हि ॥
॥ २० ॥ किंच–नास्ति शक्तिश्चक्षुषोऽपि । विषयात्परतः स्थितं ॥ परिछेत्तुं द्रव्यजातं । युक्त-
स्तस्याप्यसौ ततः ॥ २१ ॥ जिह्वाघ्राणस्पर्शनानि । त्रीण्यप्येतानि गृह्णते ॥ बद्धस्पृष्टं द्रव्यजा-
तं । स्पृष्टमेव परं श्रुतिः ॥ २२ ॥ यदुक्तं—पुट्ठं सुणेइ सद्दं । रूवं पुण पासई अपुठ्ठंतु ॥ गंधं
रसं च फासं च । बद्धपुठ्ठं वियागरे ॥ २३ ॥ बद्धं तत्रात्मप्रदेशै–रात्मीकृतमिहोच्यते ॥ स्पृ-
ष्टमालिंगितमात्रं । ज्ञेयं वपुषि रेणुवत् ॥ २४ ॥ बद्धमप्पाकयं पएसेहिं । पुठ्ठं रेणुं व तणु-
मि इतिवचनात् ॥ समेऽपि प्राप्यकारित्वे चतुर्णामपि नन्वयं ॥ को विशेषः स्पृष्टबद्ध–स्पृष्टा-
र्थग्रहणात्मकः ॥ २५ ॥ अत्रोच्यते—स्पर्शगंधरसद्रव्यौ–घानां शब्दव्यपेक्षया ॥ अल्पत्वाद्बा-
दरत्वाच्चा–भावकत्वाच्च सत्वरं ॥ २६ ॥ स्पर्शनघ्राणजिह्वानां । मंदशक्तितयापि च ॥ बद्धस्पृ-
ष्टं वस्तुजातं । गृह्णंत्येतानि निश्चितं ॥ २७ ॥ स्पर्शादिद्रव्यसंघाता–पेक्षया शब्दसंहतिः ॥ ब-
ह्वी सूक्ष्मासन्न शब्द–योग्यद्रव्याधिवासिका ॥ २८ ॥ तन्निर्वृत्तींद्रियस्यांत–र्गत्वोपकरणेंद्रियं
॥ स्पृष्टापि सद्यः कुरुते–ऽभिव्यक्तिं सा स्वगोचरां ॥ २९ ॥ अन्येंद्रियापेक्षया च । श्रवणं

पटुशक्तिकं ॥ ततः स्पृष्टानेव शब्दान् । गृह्णातीत्युचितं जगुः ॥ १० ॥ स्पृष्टार्थग्राहकत्वं यत् परैरक्ष्णोऽपि कथ्यते ॥ तदयुक्तं तथात्वे हि । दाहः स्याद्वन्ह्यवेक्षणात् ॥ ११ ॥ तथा—काचपात्राद्यंतरस्थं । दूरादवेक्ष्यते जलं ॥ ताश्चित्वांतः प्रवेशे तु । जलश्रावः प्रसज्यते ॥ १२ ॥ इत्याद्यधिकं रत्नाकरावतारिकादिभ्योऽवसेयं, विस्तरभयान्नेह प्रतन्यते, ॥

❀ ॥ यच्च सिद्धांते 'चक्खु फासं हव्वमागच्छइ' इति श्रूयते, तत्र स्पर्शशब्देन इंद्रियार्थसन्निकर्ष उच्यते, तथाहुः— 'सूरिए चक्खुफासं हव्वमागच्छइ' इत्येतज्जंबूद्वीपप्रज्ञप्तिप्रतीकवृत्तौ. ॥ अत्र च स्पर्शशब्द इंद्रियार्थसन्निकर्षपरश्चक्षुषोऽप्राप्यकारित्वेन तदसंभवादिति ॥ ❀

मेया आत्मांगुलैरेव । प्रागुक्तेंद्रियगोचराः ॥ प्रमाणांगुलमाने स्यु–र्महीयांसोऽधुना हिते ॥ १३ ॥ उत्सेधांगुलमाने तु । कथं भरतचक्रिणः ॥ पुर्यादौ स्वांगुलमित–नवद्वादशयोजने ॥ १४ ॥ एकत्र वादिता भंभा । सर्वत्र श्रूयते जनैः ॥ तस्मादात्मांगुलोन्मेया । विषया इति युक्तिमत् ॥ १५ ॥ आह—प्रमाणांगुलजानेक–लक्षयोजनसम्मिते ॥ स्वर्विमाने कथं घंटा—सर्वत्रः श्रूयते सुरैः ॥ १६ ॥ त्रैधैरप्यंगुलैर्नैष–विषयो घटते श्रुतेः ॥ द्वितीयोपांगटीकाया–म·

स्योत्तरमवेक्ष्यतां ॥ १७ ॥ तथाहि—❀ ॥ तस्यां मेघौघरसितगम्भीरमधुरशब्दायां योजनपरिमंडलायां सुस्वराभिधानायां घंटायां त्रिस्ताडितायां सत्यां यत्सूर्याभं विमानं तत्प्रासादनिष्कुटेषु ये आपतिताः शब्दवर्गणापुद्गलास्तेभ्यः समुच्छलितानि यानि घंटाप्रतिश्रुतिशतसहस्राणि घंटाप्रतिशब्दलक्षास्तैः संकुलमपि जातमभूत्. किमुक्तं भवति ? घंटायां महता प्रयत्नेन ताडितायां ये विनिर्गताः शब्दपुद्गलास्तत्प्रतिघाततः सर्वासु दिक्षु विदिक्षु च दिव्यानुभावतः समुच्छलितैः प्रतिशब्दैः सकलमपि विमानमनेकयोजनलक्षमानमपि बधिरितमुपजायते इति, एतेन द्वादशभ्यो योजनेभ्यः समागतः शब्दः श्रोत्रग्राह्यो भवति, न परतः, ततः कथमेकत्र ताडितायां घंटायां सर्वत्र तच्छब्दश्रुतिरुपजायते इति यदुच्यते तदपाकृतमवसेयं, सर्वत्र दिव्यानुभावतस्तथारूपप्रतिशब्दोच्छलने यथोक्तदोषासंभवात् । अपरं च—इगवीसं खलु लक्खा । चउत्तीसं एव तह सहस्साइं ॥ तह पंच सया भणिया । सत्तत्तीसाय अइरित्ता ॥ २१३४५३७ ॥ इति नयणविसयमाणं । पुक्खरदीवड्ढवासिमणुआणं ॥ पुव्वेण य अवरेणाय । पिहं पिहं होइ नायव्वं ॥ १८ ॥ ❀ एवं च—स प्रागुक्तोऽर्कविषयो । न विसंवदते कथं ॥ अ-

त्रैतत्सूत्रतात्पर्यं । व्याचचक्षे बुधैरिदं ॥ ३९ ॥ लक्षयोजनमानो दृग्—विषयः परमस्तु यः ॥ अभास्वरं पर्वतादि । वस्त्वपेक्ष्य स निश्चितः ॥ ४० ॥ स्याद्भास्वरं तु सूर्यादि—वस्त्वपेक्ष्या-धिकोऽपि सः ॥ व्याख्यानतो विशेषार्थ—प्रतिपत्तिरियं किल ॥ ४१ ॥ इदं विशेषावश्यकेऽर्थ-तः ॥ अनंताणून्नवान्येता—नींद्रियाण्यखिलान्यपि ॥ असंख्येयप्रदेशाव—गाढानि निखिलानि च ॥ ४२ ॥ स्तोकावगाहा दृक् श्रोत्र—घ्राणे संख्यगुणे क्रमात् ॥ ततोऽसंख्यगुणा जिह्वा । संख्यघ्नं स्पर्शनं ततः ॥ ४३ ॥

स्तोकप्रदेशं नयनं । श्रोत्रं संख्यगुणाधिकं ॥ ततोऽसंख्यगुणं घ्राणं । जिह्वाऽसंख्यगुणा ततः ॥ ४४ ॥ ततोऽप्यसंख्यगुणित—प्रदेशं स्पर्शनेंद्रियं ॥ इत्यल्पबहुतैषां स्या—दवगाढ-प्रदेशयोः ॥ ४५ ॥ तुर्योपांगेतु—श्रोत्राक्षिनासिकं द्वेद्वे । जिह्वका स्पर्शनं तथा ॥ एवं द्रव्यें-द्रियाण्यष्टौ । भावेंद्रियाणि पंच तु ॥ ४६ ॥ सर्वेषां सर्वजातित्वे । द्रव्यतो भावतोऽपि च ॥ अतीतानींद्रियाणि स्यु—रनंतान्येव देहिनां ॥ ४७ ॥ विनानादिनिगोदेभ्यो । ज्ञेयमेतत्तु कोवि-दैः ॥ स्वजातावेव तेषां तु । तान्यतीतान्यनंतशः ॥ ४८ ॥ किंच—येषामनंतः कालोऽभू—न्नि-

र्गतानां निगोदतः ॥ तेषामपेक्षया ज्ञेय-मेतत् श्रुतविशारदैः ॥ ४९ ॥ एवमन्यत्रापि यथासं-
भवं भाव्यं ॥ एकादीनि संति पंचां-तानि भावेंद्रियाणि च ॥ एकद्वित्रिचतुःपंचें-द्रियाणां
स्युर्यथाक्रमं ॥ ५० ॥ भावीनि नैव केषांचि-द्वर्त्त ते मुक्तियायिनां ॥ केषांचित्पंचषट् सप्त ।
संख्यासंख्यान्यनंतशः ॥ ५१ ॥ सिध्यतां भाविनि भवे । नरनारकनाकिनां ॥ पंचाक्षतिर्यक्-
पृथ्व्यंबु—भूणां पंच जघन्यतः ॥ ५२ ॥ पृथ्व्यादिजन्मांतरित—मुक्तीनां तु मनीषिभिः ।
षट् सप्तप्रमुखाण्येवं । भाव्यानि प्रोक्तदेहिनां ॥ ५३ ॥ संख्येयानि च तानि स्युः । संख्यात-
भवकारिणां ॥ असंख्येयान्यनंतान्य—संख्येयानंतजन्मनां ॥ ५४ ॥ रिष्टामघामाघवती—ना-
रकाणां च युग्मिनां ॥ नृणां तिरश्चां भावीनि । दश तानि जघन्यतः ॥ ५५ ॥ पंचाक्षेऽन्यो-
ऽन्यत्र नैषा—मुत्पत्तिर्नाप्यनंतरे ॥ भवे मुक्तिस्ततः एषां । दशोक्तानि जघन्यतः ॥ ५६ ॥ वा-
य्वग्निविकलाक्षाणां । जघन्यतो भवंति षट् ॥ क्ष्मादिजन्मांतरितैषां । मुक्तिर्नानंतरं यतः ।५७।
एकद्वित्रिचतुःपंचें-द्रियाणां स्युरनुक्रमात् ॥ इत्येंद्रियाणि संत्येकं । द्वे चत्वारि षडष्ट च
॥ ५८ ॥ भविष्यंति न केषांचि-त्केषांचिदष्ट वा नव ॥ दश षोडश केषांचि-त्संख्यासंख्या-

न्यनंतशः ॥ ५९ ॥ भावना प्राग्वत् ॥ नारकस्य नारकत्वे । भावतो ऽव्यतोऽपि च ॥ ता-
न्यतीतान्यनंतानि । संति पंचाष्ट च स्फुटं ॥ ६० ॥ भविष्यंति न केषांचित्केषांचित्पंच चाष्ट
च ॥ ज्ञेयानि तान्येकवारं । नरकं यास्यतोंगिनः ॥ ६१ ॥ संख्येयान्येतानि संख्य-वारं नर-
कयायिनः ॥ असंख्येयान्यप्यनंता-न्येवं भाव्यानि धीधनैः ॥ ६२ ॥ अतिक्रांतान्यनंतानि ।
सुरत्वे नारकस्य च ॥ वर्त्तमानानि नैव स्यु-र्भावीनि पुनरुक्तवत् ॥ ६३ ॥ विजयादिविमा-
नित्वे । यदि स्युर्नारकांगिनां ॥ नातीतानि भविष्यंति । पंचाष्टादश षोमश ॥ ६४ ॥ एवं स-
र्वगतित्वेन । सर्वेषामपि देहिनां ॥ भावनीयान्यतीतानि । संति भावीनि च स्वयं ॥ ६५ ॥
नृत्वे नृणामतीतान्य-नंतान्यष्ट च पंच च ॥ संति तद्भवमुक्तीनां । तानि भावीनि नैव च
॥ ६६ ॥ अन्येषां तु मनुष्यत्वे । भावीनि पंच चाष्ट च ॥ जघन्यतोऽपि स्युर्मुक्ति-र्यन्न मा-
नुष्यमंतरा ॥ ६७ ॥ अनुत्तरामराणां च । स्वत्वे संत्यष्ट पंच च ॥ यदि स्युर्नृतद्भावीनि ।
तावंत्येव तदा खलु ॥ ६८ ॥ विजयादिविमानेषु । द्विरुत्पन्नो ह्यनंतरे ॥ भवे विमुक्तिमाप्नोति
। ततो युक्तं यथोदितं ॥ ६९ ॥ अन्यजातित्वे त्वनंता-न्यतीतान्यग्र संति न ॥ भावीनि सं-

ख्यान्येवैषां । नृत्ववैमानिकत्वयोः ॥ ७० ॥ तथोक्तं-प्रज्ञापनावृत्तौ—

❀ ॥ इह विजयादिषु चतुर्षु गतो जीवो नियमात्तत उध्धृतो न जातुचिदपि नैरयिकादिषु पंचेंद्रियतिर्यक्पर्यवसानेषु तथाव्यंतरेषु ज्योतिष्केषु च मध्ये समागमिष्यति, मनुष्येषु सौधर्मादिषु वा गमिष्यतीति ॥ ❀

सर्वार्थसिद्धदेवत्वे । सर्वार्थसिद्धनाकिनां ॥ न स्युर्नूतन्नविष्यंति । संति पंचाष्ट च स्फुटं ॥ ७१ ॥ तेषामन्यगतित्वे चा-तीतानि स्युरनंतशः ॥ नैव संति नविष्यंति । नृगतावष्ट पंच च ॥ ७२ ॥ संज्ञिपंचेंद्रियाणां यत् । स्मृत्यादिज्ञानसाधनं ॥ मनो नोइंद्रियं तच्च । द्विविधं ड्व्यन्नावतः ॥ ७३ ॥ तत्रच-मनःपर्याप्त्यन्निधान-नामकर्मोदयादिह ॥ मनोयोग्यवर्गणाना-मादाय दलिकान्यलं ॥ ७४ ॥ मनस्त्वेनापादितानि । जंतुना ड्व्यमानसं ॥ जिनैरूचे तथा चाह । तंद्यध्ययनचूर्णिकृत् ॥ ७५ ॥ ❀ ॥ मणपज्जत्तिनामकर्मोदयतो जोगो मणो दव्वे घेत्तुं मणत्तेण परिणामिया दव्वा दव्व मणो न्नन्नइ-इति ॥ ❀ मनोड्व्यावलबेन । मनःपरिणतिस्तु या ॥ जंतोर्न्नावमनस्तत्स्या-त्तथोक्तं पूर्वसूरिन्निः ॥ ७६ ॥ ❀ ॥ जीवो पुण मणपरि-

णामकिरियावंतो भावमणो, किं भणियं होइ? मणदव्वालंबणो जीवस्स मणणवावारो भावम-
णो भन्नइ, इति नंद्यध्ययनचूर्णौ ॥ ❀ अत एवच—द्रव्यचित्तं विना भाव-चित्तं न स्याद-
संज्ञिवत् ॥ विनापि भावचित्तं तु । द्रव्यतो जिनवद्भवेत् ॥ ७७ ॥ तथोक्तं—भावमनोविना
पि च द्रव्यमनो भवति, यथा भवस्थकेवलिनः, इति प्रज्ञापनावृत्तौ ॥ स्तोका मनस्विनोऽसं-
ख्य-गुणाः श्रोत्रान्वितास्ततः ॥ चक्षुर्घ्राणरसज्ञाद्याः । स्युः क्रमेणाधिकाधिकाः ॥ ७८ ॥ अ-
निंद्रियाश्च निर्दिष्टा । एभ्योऽनंतगुणाधिकाः ॥ स्पर्शनेंद्रियवंतस्तु । तेभ्योऽनंतगुणाधिकाः ॥
॥ ७९ ॥ लोकैश्च—

चक्षुःश्रोत्रघ्राणरसनत्वङ्मनोवाक्पाणिपादपायूपस्थलक्षणान्येकादशेंद्रियाणि सुश्रुतादौ
उक्तानि, नाममालायामपि ' बुद्धींद्रियं स्पर्शनादि । पाण्यादि तु क्रियेंद्रियं ' इत्यभिहितं,
इतींद्रियाणि ॥

संज्ञा येषां संति ते स्युः । संज्ञिनोऽन्ये त्वसंज्ञिनः ॥ संज्ञिनस्ते च पंचाक्षा । मनःप-
र्याप्तिशालिनः ॥ ७९ ॥ ननु संमूर्छिमपंचाक्षा—तेष्वेकेंद्रियादिषु ॥ आहाराद्याः संति संज्ञा—

स्ततस्ते किं न संज्ञिनः ॥ ८० ॥ अत्रोच्यते—भयरूपा दशाप्येता—स्तीव्रमोहोदयेन च ॥ अशोभना अव्यक्ताश्च । तन्नाभिः संज्ञिता मता ॥ ८१ ॥ निद्राव्याप्तोऽसुमान्कंडू—यनादिकुरुतेयथा ॥ मोहाच्छादितचैतन्या—स्तथाहाराद्यमी अपी ॥ ८२ ॥ ततश्च—संज्ञासंबंधमात्रेण । न संज्ञित्वमुरीकृतं ॥ नह्येकेनैव निष्केण । धनवानुच्यते जनैः ॥ ८३ ॥ अतादृग्रूपयुक्तोऽपि । रूपवानाभिधीयते ॥ धनी किंतु बहुद्रव्यै—रूपवान् रम्यरूपतः ॥ ८४ ॥ महत्या व्यक्तया कर्म—क्षयोपशमजातया ॥ संज्ञया शस्तयैवांगी । लभते संज्ञितां तथा ॥ ८५ ॥ इदमर्थतो विशेषावश्यके ॥ ततश्च—येषामाहारादिसंज्ञा । व्यक्तचैतन्यलक्षणाः ॥ कर्मक्षयोपशमजाः । संज्ञिनस्तेऽपरेऽन्यथा ॥ ८६ ॥ दीर्घकालिकयादिका वा । संज्ञा येषां भवंति ते ॥ संज्ञिनः स्युर्यथायोग—मसंज्ञिनस्तदुज्झिताः ॥ ८७ ॥ इति संज्ञितादि ॥ वेदस्त्रिधा स्यात्पुंवेदः—स्त्रीवेदश्च तथा परः ॥ क्लीववेदश्च तेषां स्यु—र्लक्षणानि यथाक्रमं ॥ ८८ ॥ पुंसां यतो योषिदिच्छा । स पुंवेदोऽभिधीयते ॥ पुरुषेच्छा यतः स्त्रीणां । स स्त्रीवेद इति स्मृतः ॥ ८९ ॥ यतो द्वयाभिलाषः स्यात् । क्लीववेदः स उच्यते ॥ तृणफुंफमकइंग—ज्वलनोपमिता इमे ॥ ९० ॥ पुरुषादिलक्षणा-

नि चैवं—प्रज्ञापनावृत्तौ स्थानांगवृत्तौ च—योनिर्मृदुत्वमस्थैर्यं । मुग्धता क्लीबता स्तनौ ॥ पुंस्कामितेति लिंगानि । सप्त स्त्रीत्वे प्रचक्षते ॥ ९१ ॥ मेहनं खरता दार्ढ्यं । शौंडीर्यं श्मश्रु-धृष्टता ॥ स्त्रीकामितेति लिंगानि । सप्त पुंस्त्वे प्रचक्षते ॥ ९२ ॥ स्तनादि श्मश्रुकेशादि-भावाभावसमन्वितं ॥ नपुंसकं बुधाः प्राहु-र्मोहानलसुदीपितं ॥ ९३ ॥ अभिलाषात्मकं देहा-कारात्मकमथापरं ॥ नेपथ्यात्मकमेकैक-मिति लिंगं त्रिधा विदुः ॥ ९४ ॥ पुमांसोऽल्पाः स्त्रियः संख्य-गुणाः क्रमादनंतकाः ॥ अवेदाः क्लीबवेदाश्च । सवेदा अधिकास्ततः ॥ ९५ ॥ ❀

( पुंस्त्वसञ्ज्ञित्वयोः काय-स्थितिरंतर्मुहूर्त्तिकी ॥ लघ्वी गुर्वी चाब्धिशत-पृथक्त्वं किंचनाधिकं ॥ १ ॥ स्त्रीत्वकायस्थितिः प्रज्ञा-पनायां समयो लघुः ॥ उक्ताथास्यां गरीयस्या-मादेशाः पंच दर्शिताः ॥ २ ॥ चतुर्दशाष्टादश वा । शतं वाथ दशोत्तरं ॥ पूर्णं शतं वा पल्यानि । पल्यानां वा पृथक्त्वकं ॥ ३ ॥ पूर्वकोटिपृथक्त्वाढ्याः । पंचाप्येते विकल्पकाः ॥ पंचसंग्रहवृत्त्यादे-र्ज्ञेयैतेषां च विस्तृतिः ॥ ४ ॥ आद्ये द्वितीये स्वर्गे द्विः । पूर्वकोट्यायुषः स्त्रियाः ॥ सत्भर्तृकान्यदेवीत्वे । नोत्पत्त्यैषां च भावना ॥ ५ ॥ ) ॥ ❀ इति वेदः ॥ –जिनोक्ता

दविपर्यस्ता । सम्यग्दृष्टिर्निगद्यते ॥ सम्यक्त्वशालिनां सा स्या-त्तच्चैवं जायतेंगिनां ॥ ९६ ॥
चतुर्गतिकसंसारे । पर्यटंति शरीरिणः ॥ वशीकृता निपाकेन । गुरुस्थितिककर्मणां ॥ ९७ ॥
अथैतेषु कश्चिदंगी । कर्माणि निखिलान्यपि ॥ कुर्याद्यथाप्रवृत्ताख्य-करणेन स्वभावतः ।९८।
पल्यासंख्यलवोनैक-कोट्याब्धिस्थितिकानि वै ॥ परिणामविशेषोऽत्र । करणं प्राणिनां मतं
॥ ९९ ॥ तत्त्रिधा तत्र चाद्यं स्या-द्यथाप्रवृत्तनामकं ॥ अपूर्वकरणं नामा-ऽनिवृत्तिकरणं त-
था ॥ ६०० ॥ वक्ष्यमाणग्रंथिदेशा-वधि प्रथममीरितं ॥ द्वितीयं विद्यमानेऽस्मिन् । भिन्ने
ग्रंथौ तृतीयकं ॥ १ ॥ त्रीण्यप्यमूनि भव्यानां । करणानि यथोचितं ॥ संभवंत्येकमेवाद्य-
मभव्यानां तु संभवेत् ॥ २ ॥ आद्येन करणेनांगी । करोति कर्मलाघवं ॥ धान्यपल्यगिरिस-
रिदू-हषदादिनिदर्शनैः ॥३॥ यथा धान्यं भूरि भूरि । कश्चिद्गृह्णाति पल्यतः ॥ क्षिपत्यत्राल्प-
मल्पं च । कालेन कियताप्यथ ॥ ४ ॥ धान्यपल्यः सोऽल्पधान्य-शेष एवावतिष्ठते ॥ एवं
बहूनि कर्माणि । जरयन्नसुमानपि ॥ ५ ॥ बध्नंश्चाल्पाल्पानि तानि । कालेन कियतापि हि
॥ स्यादल्पकर्माऽनाभोगा-त्मकाद्यकरणेन सः ॥ ६ ॥ यथाप्रवृत्तकरणं । नन्वनाभोगरूपकं ॥

भवत्यनाभोगतश्च । कथं कर्मक्षयोगिनां ॥ ७ ॥ अत्रोच्यते—यथा मिथो घर्षणेन । ग्रावाणोऽद्रिनदीगताः ॥ स्युश्चित्राकृतयो ज्ञान-शून्या अपि स्वभावतः ॥ ८ ॥ तथा यथाप्रवृत्तात्स्यु-रप्यनाभोगलक्षणात् ॥ लघुस्थितिककर्माणो । जंतवोऽत्रांतरेऽथ च ॥ ९ ॥ रागद्वेषपरिणाम-रूपोऽस्ति ग्रंथिरुत्कटः ॥ दुर्भेदो दृढकाष्ठादि-ग्रंथिवद्गाढचिक्कणः ॥ १० ॥ ❀ मिथ्यात्वं नोकषायाश्च । कषायाश्चेति कीर्त्तितः ॥ जिनैश्चतुर्दशविधो-ऽभ्यंतरग्रंथिरागमे ॥ ❀

प्रागुक्तरूपस्थितिक-कर्माणः केऽपि देहिनः ॥ यथाप्रवृत्तकरणाद् । ग्रंथेरभ्यर्णमियृति ॥ ॥ ११ ॥ एतावच्च प्राप्तपूर्वा । अभव्या अप्यनंतशः ॥ नत्वीशते ग्रंथिमेन-मेते भेत्तुं कदापि हि ॥ १२ ॥ श्रुतसामायिकस्य स्या-ल्लाभः केषांचिदत्र च ॥ शेषाणां सामायिकानां । लाभस्त्वेषां न संभवेत् ॥ १३ ॥ तथोक्तं—❀ ॥ तित्थंकराइ पूअं । दट्ठूणन्नेण वा विकज्जेण ॥ सुअसामाइय लाभो । होइ अभवस्स गंठिंमि ॥ १४ ॥ अर्हदादिविभूतिमतिशयवतीं दृष्ट्वा धर्मादेवंविधः सत्कारो देवत्वराज्यादयो वा प्राप्यंते इत्येवमुत्पन्नबुद्धेरभव्यस्यापि ग्रंथिस्थानं प्राप्तस्य तद्विभूतिनिमित्तमितिशेषः, देवत्वनरेंद्रत्वसौभाग्यबलादिलक्षणेनान्येन वा प्रयोजनेन स-

वैश्च निर्वाणश्रद्धानरहितस्याज्नव्यस्यापि कष्टानुष्ठानं किंचिदंगीकुर्वतोऽज्ञानरूपस्य श्रुतसामायिकमात्रस्य लाज्नो ज्नवेत्, तस्याप्येकादशांगपाठानुज्ञानादिति विशेषावश्यकसूत्रवृत्तौ. ॥ ❀

॥ ज्नव्या अपि वर्ततेऽत्रा—गत्य रागादिज्निर्जिताः ॥ केचित्कर्माणि बध्नंति । प्राग्वद्दीर्घस्थितीनि त ॥ १५ ॥ केचित्तत्रैव तिष्ठंति । तत्परीणामशालिनः ॥ न स्थितीः कर्मणामेते । वर्ध्दयंत्यल्पयंति वा ॥ १६ ॥ चतुर्गतिज्नवा ज्नव्याः । संज्ञिपर्याप्तपंचखाः ॥ अपार्ध्दपुज्नलपरा—वर्तांतर्ज्नाविमुक्तयः ॥ १७ ॥ तीव्रधारपर्शुकल्पा—ऽपूर्वाख्यकरणेन हि ॥ आविःकृत्य परं वीर्यं । ग्रंथिं ज्निंदंति केचन ॥ १८ ॥ यथा जनास्त्रयः केऽपि । महापुरं यियासवः ॥ प्राप्ताः क्वचन कांतारे । स्थानं चौरैर्ज्नयंकरं ॥ १९ ॥ तत्र द्रुतं द्रुतं यांतो । ददृशुस्तस्करद्वयं ॥ तद्दृष्ट्वा त्वरितं पश्चा—देको ज्नीतः पलायितः ॥ २० ॥ गृहीतश्चापरस्ताज्न्या—मन्यस्त्ववगणय्य तौ ॥ ज्नयस्थानमतिक्रम्य । पुरं प्राप पराक्रमी ॥ २१ ॥ दृष्टांतोपनयश्चात्र । जना जीवा ज्नवोऽटवी ॥ पंथाः कर्मस्थितिर्ग्रंथि—देशास्त्विह ज्नयास्पदं ॥ २२ ॥ रागद्वेषौ तस्करौ द्वौ । तज्नीतो वलितस्तु सः ॥ ग्रंथिं प्राप्यापि दुर्ज्नावा—द्यो ज्येष्ठस्थितिबंधकः ॥२३॥ चौररुद्धस्तु स ज्ञे-

य—स्तादृग्रागादिबाधितः ॥ ग्रंथिं भिनत्ति यो नैव । न चापि वलते ततः ॥ २४ ॥ स त्व-
भीष्टपुरं प्राप्तो । योऽपूर्वकरणाद्द्रुतं ॥ रागद्वेषावपाकृत्य । सम्यग्दर्शनमाप्तवान् ॥ २५ ॥
सम्यक्त्वमौपशमिकं । ग्रंथिं भित्वाश्नुतेऽसुमान् ॥ महानंदं भट इव । जितदुर्जयशात्रवः ॥
॥ २६ ॥ तच्चैवं—

अत्रानिवृत्तिकरणेना—तिस्वच्छाशयात्मना ॥ करोत्यंतरकरण—मंतर्मुहूर्तसंमितं ॥ २७ ॥
कृते च तस्मिन्मिथ्यात्व—मोहस्थितिर्द्विधा भवेत् ॥ तत्राद्यांतरकरणा—दधस्तन्यपरोर्ध्वगा ॥
॥ २८ ॥ तत्राद्यायां स्थितौ मिथ्या—दृक् स तद्दलवेदनात् ॥ अतीतायामथैतस्यां । स्थितावं-
तर्मुहूर्त्ततः ॥ २९ ॥ प्राप्नोत्यंतरकरणं । तस्याद्यक्षण एव सः ॥ सम्यक्त्वमौपशमिक—मपौ-
द्गलिकमाप्नुयात् ॥ ३० ॥ यथा वनदवो दग्धें—धनः प्राप्यातृणं स्थलं ॥ स्वयं विध्यायति त-
था । मिथ्यात्वोग्रदवानलः ॥ ३१ ॥ अवाप्यांतरकरणं । क्षिप्रं विध्यायति स्वयं ॥ तदौपश-
मिकं नाम । सम्यक्त्वं लभतेऽसुमान् ॥ ३२ ॥ अत्रायमौपशमिक—सम्यक्त्वेन सहाप्नुयात्
॥ देशतो विरतिं सर्व—विरतिं वापि कश्चन ॥ ३३ ॥ तथोक्तं शतकचूर्णौ——❀ ॥ उवसमस-

म्मदिट्ठी अंतरकरणेठिन कोइ देशविरइंपि लनेइ, कोइ पमत्तापमत्तन्नावंपि; सासायणो पुण किंपि न लनेइत्ति, इत्यर्थतः कर्मप्रकृतिवृत्तावपि ॥ किंच—

बध्यते त्यक्तसम्यक्त्वै—रुत्कृष्टा कर्मणां स्थितिः ॥ निन्नग्रंथिन्निरप्युग्रो । नानुन्नागस्तु तादृशः ॥ १ ॥ इदं कार्मग्रंथिकमतं ॥ नवेन्निन्नग्रंथिकस्य । मिथ्यादृष्टेरपि स्फुटं ॥ सैद्धांतिकमते ज्येष्ठः । स्थितिबंधो न कर्मणां ॥ २ ॥ ❀ ॥ अथ प्रकृतं—इदं चोपशमश्रेण्या—मपि दर्शनसप्तके ॥ नुपशांते नवेच्चूर्णि—पर्यंतावधि देहिनां ॥ ३४ ॥ तथा—यथौषधिविशेषेण । जनैर्मदनकोद्रवाः ॥ त्रिधा क्रियंते शुद्धार्ध—विशुद्धाशुद्धन्नेदतः ॥ ३५ ॥ तथानेनौपशमिक—सम्यक्त्वेनपटीयसा ॥ विशोध्य क्रियते त्रेधा । मिथ्यात्वमोहनीयकं ॥ ३६ ॥ तत्राशुद्धस्य पुंजस्यो—दये मिथ्यात्ववान् नवेत् ॥ पुंजस्यार्धविशुद्धस्यो—दये नवति मिश्रदृग् ॥ ३७ ॥ नुदये शुद्धपुंजस्य । क्षायोपशमिकं नवेत् ॥ मिथ्यात्वस्योदितस्यांता—दन्यस्योपशमाच्च तत् ॥ ॥३८॥ आरब्धक्षपकश्रेणेः । प्रक्षीणे सप्तके नवेत ॥ क्षायिकं तद्भवसिद्धे—स्त्रिचतुर्जन्मनोऽथवा ॥३९॥ तत्वार्थन्नाष्ये चैतेषां स्वरूपमेवमुक्तं—❀ ॥ क्षयादि त्रिविधं सम्यग्दर्शनं, तदावरणीयस्य

कर्मणो दर्शनमोहस्य च क्षयादिन्य इति ॥ अस्यवृत्तिः—मत्याद्यावरणीयदर्शनमोहसप्तकक्षया-
डुपजातं क्षयसम्यग्दर्शनमभिधीयते, तेषामेवोपशमाज्जातमुपशमसम्यग्दर्शनमुच्यते, ते-
षामेव क्षयोपशमाभ्यां जातं क्षयोपशमसम्यग्दर्शनमभिदधति प्रवचनाभिज्ञा इति तत्वार्थप्रथ-
माध्याये. ❀ ॥ ननुच—तत्वश्रद्धानजनकं । क्षायोपशमिकं यदि ॥ सम्यक्त्वस्य क्षायिकस्य । कथ-
मावारकं तदा ॥४०॥ यदि मिथ्यात्वजातीय—तया तदपवारकं ॥ तदात्मधर्मः श्रद्धानं । कथमस्मा-
त्प्रवर्त्तते ॥४१॥ अत्रोच्यते—यथा श्लक्ष्णाभ्रकांतःस्था । दीपादेर्द्योतते द्युतिः ॥ तस्मिन् दूरीकृते स-
र्वा—त्मना संजृंभतेऽधिकं ॥४२॥ यथा वा मलिनं वस्त्रं । भवत्यावारकं मणेः ॥ निर्मिज्योज्वलिते त-
स्मिन् । भाति काचन तत्प्रभा ॥ ४३ ॥ मूलाद्दूरीकृते चास्मिन् । सा स्फुटा स्यात्स्वरूपतः
॥ मिथ्यात्वपुञ्जेष्वेवं । रसापवर्त्तनादिभिः ॥ ४४ ॥ क्षायोपशमिकत्वं ङाक् । प्राप्तेषु प्रकटी-
भवेत् ॥ आत्मधर्मात्मकं तत्व—श्रद्धानं किंचिदस्फुटं ॥ ४५ ॥ क्षायोपशमिके क्षीणे । स्फुटं
सर्वात्मना भवेत् ॥ आत्मस्वरूपं सम्यक्त्वं । तच्च क्षायिकमुच्यते ॥ ४६ ॥ एवं च—

तत्वश्रद्धानजनक—सम्यक्त्वपुद्गलक्षये ॥ कथं श्रद्धा भवेत्तत्वे । शंकैषापि निराकृता ॥४७॥

तथाहुर्न्नाष्यकारः—❀ ॥ सो तस्स विसुद्धयरो । जायइ सम्मत्तपोग्गलरकयउ ॥ दिहिव्वसस्स-सुद्धस्स । पडलविगमे मणूमस्स ॥ ४७ ॥ ❀ ॥ इदं कर्मग्रंथमतं । सिद्धांतस्य मते पुनः ॥ अपूर्वकरणेनैव । मिथ्यात्वं कुरुते त्रिधा ॥ ४ए ॥ सम्यक्त्वावारकरसं । दृपयित्वा विशोधिताः ॥ मिथ्यात्वपुञ्जास्ते स्युः । सम्यक्त्वमुपचारतः ॥ ५० ॥ अर्धशुद्धा अशुद्धाश्च । मिश्रमिथ्यात्वसंज्ञकाः ॥ एवं कोऽत्रदृष्टांतात्—त्रिषु पुंजेषु सत्स्वपि ॥ ५१ ॥ यदानिवृत्तिकरणात् । सम्यक्त्वमेव गच्छति ॥ मिश्रमिथ्यात्वपुंजौ तु । तदा जीवो न गच्छति ॥ ५२ ॥ पुनःपतितसम्यक्त्वो । यदा सम्यक्त्वमश्नुते ॥ तदाप्यपूर्वकरणे—नैव पुंत्रजयं सृजन् ॥ ए३ ॥ करणेनानिवृत्याख्ये—नैव प्राप्नोति पूर्ववत् ॥ नन्वत्रापूर्वकरणे । प्रागलब्धेऽन्वर्थता कथं ॥ ५४ ॥ अत्रोच्यते—

अपूर्ववदपूर्वं स्यात् । स्तोकवारोपलंजनतः । अपूर्वत्वव्यपदेशो । जवेल्लोकेऽपि कुर्लन्ने ॥ ॥ ५५ ॥ इदमर्थतो विशेषावश्यकवृत्तौ ॥ सम्यग्दृष्टिव्यपदेश—निबंधनमितीरीतं ॥ सम्यक्त्वं त्रिविधं शुद्ध—श्रद्धारूपं मनीषिन्निः ॥ ५६ ॥ यदिवैकद्वित्रिचतुः—पंचन्नेदं जवेदिदं ॥ विनोक्त-

तत्वश्रद्धान–रूपमेकविधं भवेत् ॥ ५७ ॥ द्विधा नैसर्गिकं चौप–देशिकं चेतिभेदतः ॥ भवे-
न्नैश्चयिकं व्याव–हारिकं चेति वा द्विधा ॥ ५८ ॥ द्रव्यतो भावतश्चेति–द्विधा वा परिकीर्त्तितं
॥ तत्र नैसर्गिकं स्वात्मा–त्रिकमन्यद्गुरोर्गिरा ॥ ५९ ॥ यथा पथश्च्युतः कश्चि–दुपदेशं वि-
ना भ्रमन् ॥ मार्गं प्राप्नोति कश्चित्तु । मार्गविज्ञोपदेशकैः ॥ ६० ॥ यथा वा कोद्रवाः केचित्
। स्युः कालपरिपाकतः ॥ स्वयं निर्मदनाः केचि–द्गोमयादिप्रयत्नतः ॥ ६१ ॥ कश्चिज्ज्वरो य-
था दोष–परिपाकाद् व्रजेत्स्वयं ॥ कश्चित्पुनर्भेषजादि–प्रयत्नेनोपशाम्यति ॥ ६२ ॥ स्वभावा-
दथवोपाया–द्यथा शुद्धं भवेत्पयः ॥ यथोज्ज्वलं स्याद्वस्त्रं वा । स्वभावाद्यत्नतोऽपि च ॥६३॥
सम्यक्त्वमेवं केषांचि–दंगिनां स्यान्निसर्गतः ॥ गुरूणामुपदेशेन । केषांचित्तु भवेदिदं ॥ ६४ ॥
नैश्चयिकं सम्यक्त्वं । ज्ञानादिमयात्मशुद्धपरिणामः ॥ स्याद्व्यावहारिकं तद्धे–तुसमुत्थं च स-
म्यक्त्वं ॥ ६५ ॥ जिनवचनं तत्वमिति–श्रद्दधतोऽकलयतश्च परमार्थं ॥ तद्द्रव्यतो भवेद्भा–व-
तस्तु परमार्थविज्ञस्य ॥ ६६ ॥ क्षायोपशमिकमुत । पौद्गलिकतया द्रव्यतस्तदुपदिष्टं ॥ आ-
त्मपरिणामरूपे च । भावतः क्षायिकोपशमिके ते ॥ ६७ ॥ गीतिः ॥ कारकरोचकदीपक–

ज्ञेदादेतन्निधाथवा त्रिविधं ॥ ख्यातं क्षायोपशमिक–मुपशमजं क्षायिकं चेति ॥ ६८ ॥ आर्या ॥ जिनप्रणीताचारस्य । करणे कारकं ज्ञवेत् ॥ रुचिमात्रकरं तस्य । रोचकं परिकीर्त्तितं ॥ ६९ ॥ स्वयं मिथ्यादृष्टिरपि । परस्य देशनादिज्ञिः ॥ यः सम्यक्त्वं दीपयति । सम्यक्त्वं तस्य दीपकं ॥ ७० ॥

क्षायोपशमिकादीनां । स्वरूपं तूदितं पुरा ॥ सास्वादनयुते तस्मिं–स्त्रये तत्स्याच्चतुर्विधं ॥७१॥ वेदकेनान्विते तस्मिं–श्चतुष्के पंचधापि तत् ॥ सास्वादनं च स्यादौप–शमिकं वमतोंगिनः ॥७२॥ त्रयाणामुक्तपुंजानां । मध्ये प्रक्षीणयोर्द्वयोः ॥ शुद्धस्य पुंजस्यांत्याणु–वेदने वेदकं ज्ञवेत् ॥ ७३ ॥ षट्षष्टिः साधिकाब्धीनां । क्षायोपशमिकस्थितिः ॥ उत्कृष्टा सा जघन्या चां–तर्मुहूर्त्तमिता मता ॥ ७४ ॥ ज्येष्ठान्या चौपशमिक–स्थितिरांतर्मुहूर्त्तिकी ॥ क्षायिकस्य स्थितिः सादि–रनंता वस्तुतःस्मृता ॥७५॥ साधिकाः स्युर्ज्ञवस्थन्वे। सा त्रयस्त्रिंशदब्धयः॥ उत्कर्षतो जघन्या च । सा स्यादांतर्मुहूर्तिकी ॥ ७६ ॥ सास्वादनस्यावल्यः षट् । ज्येष्ठा लघ्वी क्षणात्मिका ॥ एकः क्षणो वेदकस्यो–त्कर्षाज्जघन्यतोऽपि च ॥ ७७ ॥ उत्कर्षादौपशमिकं ।

सास्वादनं च पंचशः ॥ वेदकं क्षायिकं चैक–वारं जीवस्य संभवेत् ॥७८॥ वारान् भवत्यसं-
ख्येयान् । क्षायोपशमिकं पुनः ॥ अथैतेषां गुणस्थान–नियमः प्रतिपाद्यते ॥ ७९ ॥ सास्वा-
दनं स्यात्सम्यक्त्वं । गुणस्थाने द्वितीयके ॥ तुर्यादिषु चतुर्ष्वेषु । क्षायोपशमिकं भवेत् ॥८०॥
अष्टासु तुर्यादिष्वौप–शमिकं परिकीर्त्तितं ॥ तुर्यादिष्वेकादशसु । सम्यक्त्वं क्षायिकं भवेत् ॥
॥ ८१ ॥ तुर्यादिषु चतुर्ष्वेषु । वेदकं कीर्त्तितं जिनैः ॥ गुणस्थानप्रकरणा–द्विशेषः शेष उह्य-
तां ॥ ८२ ॥ सम्यक्त्वं लभते जीवो । यावत्यां कर्मणां स्थितौ ॥ क्षपितायां ततः पल्य–पृ-
थक्त्वप्रमितस्थितौ ॥ ८३ ॥ लभेत देशविरतिं । क्षपितेषु ततोऽपि च ॥ संख्येयेषु सागरेषु
चारित्रं लभतेऽसुमान् ॥ ८४ ॥ एवं चोपशमश्रेणिं । क्षपकश्रेणिमप्यथ ॥ क्रमात्संख्येयपा-
थोधि–स्थितिह्रासादवाप्नुयात् ॥ ८५ ॥ एतानभ्रष्टसम्यक्त्वो । न्यान्यदेव नृजन्मसु ॥ लभे-
तान्यतरश्रेणि–वर्जान् कोऽप्येकजन्मनि ॥ ८६ ॥ श्रेणिद्वयं चैकभवे सिद्धांताभिप्रायेण न
स्यादेव, आहुश्च—

❀ ॥ सम्मत्तंमि उ लद्धे । पलिअपुहत्तेण सावओ हुज्जा ॥ चरणोवसमखयाणं । सागर-

संखंतरा हुंति ॥ १ ॥ ❀ ॥ एवं अप्परिवडिए । सम्मत्ते देवमणुअजम्मेसु ॥ अन्नयरसेढिवज्जं । एगन्नवेणं च सव्वाइं ॥ ८७ ॥ इतिमहाभाष्यसूत्रवृत्त्यादिषु ॥ सम्यक्त्वं च श्रुतं चेति । देशतः सर्वतोऽपि च ॥ विरती इति निर्दिष्टं । सामायिकचतुष्टयं ॥ १ ॥ चारित्रस्याष्ट समयान् । प्रतिपत्तिर्निरंतरं ॥ शेषत्रयस्य चावल्य–संख्येयांशमितान् क्षणान् ॥ २ ॥ उत्कर्षेण प्रतिपत्ति–काल एष निरंतरः ॥ जघन्यतो द्वौ समयौ । चतुर्णामपि कीर्त्तितः ॥ ३ ॥ द्वादशपंचदशाहो–रात्रास्तृतीयतुर्ययोः॥ आद्ययोः सप्तविरहो । ज्येष्ठोऽन्यश्च क्षणत्रयं ॥४॥ सम्यक्त्वं देशविरतिं चा–प्नोत्युत्कर्षतोऽसुमान्॥ क्षेत्रपल्योपमासंख्य–भागक्षणमितान् भवान् ॥५॥ चारित्रं च भवानष्टौ । श्रुतसामायिकं पुनः ॥ भवाननंतान् सर्वाणि । भवमेकं जघन्यतः ॥ ॥ ६ ॥ आकर्षाणां खलु शत–पृथक्त्वं सर्वसंवरे ॥ स्यात्सहस्रपृथक्त्वं च । त्रयाणामेकजन्मनि ॥ ७ ॥ नानाभवेषु चाकर्षा । असंख्येयाः सहस्रकाः ॥ आद्यत्रये तुरीये च । स्यात्सहस्रपृथक्त्वकं ॥ ८ ॥ यत्त्रयाणां प्रतिभवं । स्युः सहस्रपृथक्त्वकं ॥ असंख्येया भवाश्चेति । युक्तास्तेऽमी यथोदिताः ॥ ९ ॥ चारित्रे यत्प्रतिभवं । तेषां शतपृथक्त्वकं ॥ भवाश्चाष्टौ ततो यु-

क्तं । तत्सहस्रपृथक्त्वकं ॥ १० ॥ आकर्षः प्रथमतया ग्रहणं मुक्तस्य या ग्रहणमिति ॥ इद-
मर्थत आवश्यकसूत्रवृत्त्यादिषु ॥ ❀ ॥

मिथ्यादृष्टिर्विपर्यस्ता । जिनोक्ताद्वस्तुतत्वतः ॥ सा स्यान्मिथ्यात्विनां तच्च । मिथ्यात्वं पंचधा मतं ॥ ८८ ॥ आभिग्रहिकमाद्यं स्या–दनाभिग्रहिकं परं ॥ तृतीयं किल मिथ्यात्व–मुक्तमाभिनिवेशिकं ॥ ८९ ॥ तुर्यं सांशयिकाख्यं स्या–दनाभोगिकमंतिमं ॥ अभिग्रहेण निर्वृत्तं । तत्राभिग्रहिकं स्मृतं ॥ ९० ॥ नानाकुदर्शनेष्वेक–मस्मात्प्राणीकुदर्शनं ॥ इदमेव शुभं नान्य–दित्येवं प्रतिपद्यते ॥ ९१ ॥ मन्यतेऽगी दर्शनानि । यद्वशादखिलान्यपि ॥ शुभानि माध्यस्थ्यहेतु–रनाभिग्रहिकं हि तत् ॥ ९२ ॥ यतो गोष्ठामाहिलादि–वदात्मीयकुदर्शने ॥ भवत्यभिनिवेशस्त–त्प्रोक्तमाभिनिवेशिकं ॥ ९३ ॥ यतो जिनप्रणीतेषु । देशतः सर्वतोऽपि वा ॥ पदार्थेषु संशयः स्या–त्तत्सांशयिकमीरितं ॥ ९४ ॥ अनाभोगेन निर्वृत्त–मनाभोगिकसंज्ञिकं ॥ यत्स्यादेकेंद्रियादीनां । मिथ्यात्वं पंचमं तु तत् ॥ ९५ ॥ यस्यां जिनोक्ततत्वेषु । न रागो नापि मत्सरः ॥ सम्यग्मिथ्यात्वसंज्ञा सा । मिश्रदृष्टिः प्रकीर्त्तिता ॥ ९६ ॥ धान्येष्विव

नरा नालि–केरद्वीपनिवासिनः ॥ जिनोक्तेषु मिश्रदृशो । न द्विष्टा नापि रागिणः ॥ ७७ ॥ यदाहुः कर्मग्रंथकाराः—❀ जिअअजिअपुंणपावा । सवसंवरबंधमुरकनिज्जरणा ॥ जिणं सद्दहइतं । सम्मं खइगाइबहुन्नेयं ॥ ७८ ॥ मीसा न रागदोसो । जिणधम्मे अंतमुहुत्त जहा अन्ने ॥ नालीअरंदीवमणुणो । मिछं जिणधम्मविवरीयं ॥ ७९ ॥ ❀

गुणस्थानक्रमारोहे त्वेवमुक्तं–जात्यंतरसमुद्भूति–र्वडवाखरयोर्यथा ॥ गुडदध्नोः समायोगे । रसभेदांतरं यथा ॥ १ ॥ तथा धर्मद्वये श्रद्धा । जायते समबुद्धितः ॥ मिश्रोऽसौ जायते तस्मा–द्भावो जात्यंतरात्मकः ॥ २ ॥ ❀ ॥ सम्यग्मिथ्यादृशः स्तोका–स्तेभ्योऽनंतगुणाधिकाः ॥ सम्यग्दृशस्ततोमिथ्या–दृशोऽनंतगुणाधिकाः ॥ ७०० ॥ इति दृष्टिः ॥ मतिश्रुतावधिमनः–पर्यायाण्यथ केवलं ॥ ज्ञानानि पंच तत्राद्य–मष्टाविंशतिधा स्मृतं ॥ ७०१ ॥ तथाहि–अवग्रहेहावायाख्या–धारणा चेति तीर्थपैः ॥ मतिज्ञानस्य चत्वारो । मूलभेदाः प्रकीर्तिताः ॥ २ ॥ शब्दादीनां पदार्थानां । प्रथमग्रहणं हि यत् ॥ अवग्रहः स्यात्स द्वेधा । व्यंजनार्थविभेदतः ॥ ३ । व्यज्यंते येन सद्भावा ॥ दीपेनेव घटादयः ॥ व्यंजनं ज्ञानजनकं । त-

च्चौकरणेंड्रियं ॥ ४ ॥ शब्दादिन्नावमापन्नो । इव्यसंघात एव वा ॥ व्यज्यते यद्व्यंजनं त— दितिव्युत्पत्त्यपेक्षया ॥ ५ ॥ ततश्च—व्यंजनैर्व्यंजनानां यः । संबंधः प्रथमः स हि ॥ व्यंजनावग्रहोऽस्पष्ट—तरावबोधलक्षणः ॥ ६ ॥ अस्य च स्वरूपमेवं तत्वार्थवृत्तौ—

❀ ॥ यदोपकरणेंड्रियस्य स्पर्शनादिपुजलैः स्पर्शाद्याकारपरिणतैः संबंध उपजातो नवति, तदा किमप्येतदिति गृह्णाति, किंत्वव्यक्तज्ञानोऽसौ सुप्तमत्तादिसूक्ष्मावबोधसहितपुरुषवदिति, तदातैः स्पर्शाद्युपकरणेंड्रियसंश्लिष्टैर्याचयावती च विज्ञानशक्तिराविरस्ति, सैवंविधाज्ञानशक्तिरवग्रहाख्या, तस्य स्पर्शनाद्युपकरणेंड्रियसंश्लिष्टस्पर्शाद्याकारपरिणतपुजलराशेर्व्यंजना ख्यस्य ग्राहिकाऽवग्रह इति नण्यते, तेनैतदुक्तं नवति, स्पर्शनाद्युपकरणेंड्रियसंश्लिष्टाः स्पर्शाद्याकारपरिणताः पुजला नण्यंते व्यंजनं । विशिष्टार्थावग्रहकारित्वात्तस्य व्यंजनस्य परिच्छेदको व्यक्तोऽवग्रहो नण्यते अपरोऽपि, तस्मान्मनागूनिश्चिततरः किमप्येतदित्येवंविधसामान्यपरिच्छेदोऽवग्रहो नण्यते, ततः परमीहादयः प्रवर्त्तंते इति ॥ रत्नाकरावतारिकायां चावग्रहलक्षणमेवमुक्तं—विषयविषयिसन्निपातानंतरसमुद्भूतसत्तामात्र गोचरदर्शनाज्ज्ञातमाद्यमवांतरसा-

मान्याकारविशिष्टवस्तुग्रहणमवग्रह इति । विषयः सामान्यविशेषात्मकोऽर्थो, विषयी चक्षुरादिस्तयोः समीचीनो भ्रांत्याद्यजनकत्वेनाऽनुकूलोनिपातो योग्यदेशाद्यवस्थानं तस्मादनंतरं समुद्भूतमुत्पन्नं यत्सत्तामात्रगोचरं निःशेषविशेषवैमुख्येन सन्मात्रविषयं दर्शनं, निराकारो बोधस्तस्माज्जातमाद्यं सत्त्वसामान्यादवांतरैः सामान्याकारैर्मनुष्यत्वादिभिर्जातिविशेषैर्विशिष्टस्य वस्तुनो यद्ग्रहणं ज्ञानं तदवग्रह इति नाम्नाभिधीयत इति ॥ अत्र च प्राच्यमते दर्शनस्यावकाशं न पश्यामो, द्वितीयमते च व्यंजनावग्रहावकाशं न पश्यामस्तदत्र तत्त्वं बहुश्रुतेभ्योऽवसेयं; वक्ष्यमाणो वा महाभाष्याभिमतो व्यंजनावग्रहादीनां दर्शनस्य वा भेदोऽनुसरणीय इत्यलं प्रसंगेन ॥ ❀

आवल्यसंख्येयभागो। व्यंजनावग्रहे भवेत्॥ कालमानं लघुज्येष्ट–मानप्राणपृथक्त्वकं ।७।
स चतुर्धा श्रोत्रजीह्वा–घ्राणस्पर्शनसंभवः ॥ अप्राप्यकारिभावात्स्या–न्न चक्षुर्मनसोरसौ ।८।
शब्दादेर्यः परिछेदो । मनाक् स्पष्टतरो भवेत् ॥ किंचिदित्यात्मकः सोऽय–मर्थावग्रह उच्यते ॥ ९ ॥ कालतोऽर्थावग्रहस्तु । स्यादेकसमयात्मकः ॥ निश्चयाद्व्यवहारात्तु । स स्यादांत-

मुहूर्त्तिकः || १० || तस्यैवावगृहीतस्य । धर्मान्वेषणरूपिका || ईहा भवेत्कालमान-मस्या अंतर्मुहूर्त्तकं || ११ || अथेहितस्य तस्येद-मिदमेवेति निश्चयः || अवायो मानमस्यापि । स्मृतमंतर्मुहूर्त्तकं || १२ || निर्णीतार्थस्य मनसा । धरणं धारणा स्मृता || कालः संख्य भतासंख्य-स्तस्या मानमवस्थितेः || १३ || बाल्ये दृष्टं स्मरत्येव । पर्यंतेऽसंख्यजीवितः || ततः स्याद्धारणामान-मसंख्यकालसम्मितं || १४ || यथाहि सृज्यते पूर्वं । श्रोत्रेण शब्दसंहतिः ततश्च किंचिदश्रोष-मित्यर्थावगृहो भवेत् || १५ || ततः स्त्र्यादिशब्दनिष्टं । माधुर्यादि विचिंतयेत् || इयमीहा ततोऽवायो । निश्चयात्मा धृतिस्ततः || १६ ||

एवं गंधरसस्पर्शे-ष्वपि भाव्या मनीषिभिः || घ्राणजीह्वास्पर्शनानां । व्यंजनावग्रहादयः || १७ || व्यंजनावग्रहाभावा-च्चक्षुर्मानसयोः पुनः || चत्वारोऽर्थावग्रहाद्या । धारणांता भवंति हि || १८ || यथा प्रथमतो वृक्षे । चक्षुर्गोचरमागते || किंचिदेतदिति ज्ञानं । स्यादर्थावग्रहो ह्ययं || १९ || ततस्तद्गतधर्माणां । समीक्षेहा प्रजायते || निश्चयस्तरुरेवाय-मित्यवायस्ततो भवेत् || २० || ततस्तथा निश्चितस्य । धारणं धारणा भवेत् || भाव्यते मनसो-

ऽप्येव–मथार्थावग्रहादयः ॥ २१ ॥ यथाहि विस्मृतं वस्तु । पूर्वं किंचिदिति स्मरेत् ॥ तत-
श्च तद्गता धर्माः । स्मर्यंते लीनचेतसा ॥ २२ ॥ ततश्च तत्तद्धर्माणां । स्मरणात्तद्विनिश्चयः ॥
ततः स्मृत्या निश्चितस्य । पुनस्तस्यैव धारणं ॥ २३ ॥ अनिंद्रियनिमित्तं च । मतिज्ञानमिदं
भवेत् ॥ अत एव त्रिधैतत्स्या–दाद्यमिंद्रियहेतुकं ॥ २४ ॥ अनिंद्रियसमुत्थं चें–द्रियानिंद्रिय-
हेतुकं ॥ तत्राद्यमेकाक्षादीनां । मनोविरहिणां हि यत् ॥ २५ ॥ केवलं हींद्रियनिमित्त–क-
मेव भवेदिदं ॥ अभावान्मनसो नास्ति । व्यापारोऽत्र मनागपि ॥ २६ ॥ अनिंद्रियनिमित्तं
च । स्मृतिज्ञानं निरूपितं ॥ व्यापाराभावतोऽक्षाणां । तदक्षनिरपेक्षकं ॥ २७ ॥ भवज्ञानम-
विभक्त–रूपं यदपि लक्ष्यते ॥ वल्ल्यादीनां वृतिनीध्र–द्यभिसर्पणलक्षणं ॥ २८ ॥ तदप्यनिं-
द्रियनिमि–त्तकमेव प्रकीर्त्यते ॥ हेतुभावं भजंतीह । नाक्षाणि न मनोऽपि यत् ॥ २९ ॥
मत्यज्ञानावरणीय–क्षयोपशम एव हि ॥ केवलं हेतुतामोघ–ज्ञानेऽस्मिन्नश्नुते च यत् ॥३०॥
यत्तु जाग्रदवस्थाया–मुपयुक्तस्य चेतसा ॥ स्पर्शादिज्ञानमेतच्चें–द्रियानिंद्रियहेतुकं ॥ ३१ ॥
इदमर्थतस्तत्त्वार्थवृत्तौ ॥ अथ प्रकृतं––एवमर्थावग्रहेहा । अवायधारणा इह ॥ स्युश्चतुर्विंश-

तिः षड्भि–र्हता इंद्रियमानसैः ॥ ३२ ॥ व्यंजनावग्रहैः पूर्वो–दितैश्चतुर्भिरन्विताः ॥ स्युस्तेऽ-
ष्टाविंशतिर्भेदा । मतिज्ञानस्य निश्चिताः ॥ ३३ ॥ भगवतीवृत्तौ तु—षोढा श्रोत्रादिभेदेना–
वायश्च धारणापि च ॥ इत्येवं द्वादशविधं । मतिज्ञानमुदाहृतं ॥ ३४ ॥ द्वादशेहावग्रहयो–
श्चत्वारो व्यंजनस्य च ॥ उक्ता भेदाः षोडशैते । दर्शने चक्षुरादिके ॥३५॥ यदाह–भाष्यकारः–

❀ नाणमवायधिइउ । दंसणमिठ्ठं जहोग्गहेहाउ ॥ ❀ तन्वष्टाविंशतिविधं । मतिज्ञानं
यदागमे ॥ जेगीयते तन्नकथ–मेवमुक्तं विरुध्यते ॥ ३६ ॥ अत्रोच्यते–मतिज्ञानचक्षुरादि–द-
र्शनानां मिथो भिदं ॥ अविवक्षित्वैव मति–मष्टाविंशतिधा विदुः ॥ ३७ ॥ किंच–एकैकश्च
प्रकारोऽयं । द्वादशधा विभिद्यते । ज्ञानस्यास्य ततो भेदाः । स्युः षट्त्रिंशं शतत्रयं ॥ ३८ ॥
तथोक्तं तत्वार्थभाष्ये–❀एवमेतन्मतिज्ञानं द्विविधं चतुर्विधमष्टाविंशतिविधमष्टषष्ट्युत्तरशत-
विधं षट्त्रिंशत्त्रिशतविधं च भवतीति ॥ ❀ ते चैवं–बहुबहुविधान्यक्षि–प्राक्षिप्राख्यनिश्चित-
तदन्याः ॥ संदिग्धासंदिग्ध–ध्रुवाध्रुवाख्या मतेर्भेदाः ॥ ३९ ॥ तथाहि–आस्फालिते तूर्यवृंदे ।
कश्चिद्यथैकहेलया ॥ भेरीशब्दा इयंतोऽत्रै–तावंतः शंखनिःस्वनाः ॥ ४० ॥ इत्थं पृथक् पृथक्

गृह्णन् । बहुग्राही भवेदथ ॥ तदतोऽन्यस्तूर्यशब्दं । गृह्णन् बहुविद्भवेत् ॥ ४१ ॥ माधुर्यादिविविध बहु-धर्मयुक्तं वेत्ति यः स बहुविधवित् ॥ अबहुविधवित्तु शब्दं । वेत्त्येकद्व्यादिधर्मयुतं ॥ ॥ ४२ ॥ वेत्ति कश्चिदचिरेण । चिरेणान्यो विमृश्य च ॥ क्षिप्राक्षिप्रग्राहिणौ तौ । निर्दिष्टव्यौ यथाक्रमं ॥ ४३ ॥ लिंगापेक्षं वेत्ति कश्चिद् । ध्वजेनेव सुरालयं ॥ स भवेन्निश्रितग्राही । परो लिंगानपेक्षया ॥ ४४ ॥ निःसंशयं यस्तु वेत्ति । सोऽसंदिग्धविदाहितः ॥ ससंशयं यस्तु वेत्ति । संदिग्धग्राहको हि सः ॥ ४५ ॥ ज्ञाते य एकदा भूयो । नोपदेशमपेक्षते ॥ ध्रुवग्राही भवेदेष । तदन्योऽध्रुवविद्भवेत् ॥ ४६ ॥ नन्वेकसमयस्थायी । प्रोक्तः प्राच्यैरवग्रहः ॥ संभवंति कथं तत्र । प्रकारा बहुतादयः ॥ ४७ ॥ सत्यमेतन्मतः किंतु । द्विविधोऽवग्रहः श्रुते ॥ निश्चयात्क्षणिको व्याव-हारिकश्चामितक्षणः ॥ ४८ ॥ अपेक्ष्यावग्रहं भाव्या-स्ततश्च व्यावहारिकं ॥ भेदा यथोक्ता बहुता-—दयो नैश्चयिके तु न ॥ ४९ ॥ तथोक्तं तत्वार्थवृत्तौ—

॥ ननु चावग्रह एकसामयिकः शास्त्रे निरूपितो, न चैकस्मिन् समये चैवैकोऽवग्रह एवंविधो युक्तोऽल्पकालत्वादित्युच्यते, सत्यमेवमेतत्किंतु अवग्रहो द्विधा, नैश्चयिको व्याव-

हारिकश्च, तत्र नैश्चयिको नाम सामान्यपरिच्छेदः स चैकसामायिकः शास्त्रेऽभिहितस्ततो नैश्चयकादनंतरमीहैवमात्मिका प्रवर्त्तते, किमेष स्पर्श उतास्पर्श इति, ततश्चानंतरोऽपायः, स्पर्शोऽयमिति, अयं चापायोऽवग्रह इत्युपचर्यते, आगामिनो भेदानंगीकृत्य यस्मादेतेन सामान्यमवच्छिद्यते, यतः पुनरेतस्मादीहा प्रवर्त्तिष्यते कस्यायं स्पर्शस्ततश्चापायो भविष्यत्यस्यायमिति । अयमपि चापायः पुनरवग्रह इत्युपचर्यते, अतोंतरवर्त्तिनीमीहामपायं चाश्रित्य, एवं यावदस्यांते निश्चय उपजातो भवति, यत्रापरं विशेषं नाकांक्षतीत्यर्थः । अपाय एव भवति न, तत्रोपचार इति । अतो य एष औपचारिकोऽवग्रहस्तमंगीकृत्य बहु अवगृह्णातीत्येतदुच्यते, नन्वेकसमयवर्त्तिनं नैश्चयिकमित्येवं सर्वत्रौपचारिकाश्रयणाद्व्याख्येयमिति ॥ ❀

औत्पत्तिकी वैनयिकी । कार्मिकी पारिणामिकी ॥ आभिः सहामी भेदाः स्यु–श्चत्वारिंशं शतत्रयं ॥ ४९ ॥ न दृष्टो न श्रुतश्च प्राग् । मनसापि न चिंतितः ॥ यथार्थस्तत्क्षणादेव । यथार्थो गृह्यते धिया ॥ ५० ॥ लोकद्वयाविरुद्धा सा । फलेनाव्यभिचारिणी ॥ बुद्धिरौत्पत्तिकीनाम । निर्दिष्टा रोहकादिवत् ॥ ५१ ॥ गुरूणां विनयात्प्राप्ता । फलदात्र परत्र च ॥

धर्मार्थकामशास्त्रार्थ–पटुर्वैनयिकी मतिः ॥ ५२ ॥

नैमित्तिकस्य शिष्येण । विनीतेन यथोदितः ॥ स्थविराया घटध्वंसे । सद्यः सुतसमागमः ॥ ५३ ॥ शिल्पमाचार्योपदेशा–ल्लब्धं स्यात्कर्म च स्वतः ॥ नित्यव्यापारश्च शिल्पं । कादाचित्कं तु कर्म वा ॥ ५४ ॥ या कर्माभिनिवेशोद्ध–लब्धतत्परमार्थिका ॥ कर्माभ्यासविचाराभ्यां । विस्तीर्णा तद्यशःफला ॥ ५५ ॥ तत्तत्कर्मविशेषेषु । समर्था कार्मिकी मतिः ॥ केषुचिद् दृश्यते सा च । चित्रकारादिकारुषु ॥ ५६ ॥ सुदीर्घकालं यः पूर्वा–परार्थालोचनादिजः ॥ आत्मधर्मः सोऽत्र परी–णामस्तत्प्रभवा तु या ॥ ५७ ॥ अनुमानहेतुमात्र–दृष्टांतैः साध्यसाधिका ॥ वयोविपाकेन पुष्टी–भूताभ्युदयमोक्षदा ॥ ५८ ॥ अभयादेरिव ज्ञेया । तुर्या सा पारिणामिकी ॥ आभ्योऽधिका पंचमी तु । नार्हताप्युपलभ्यते ॥ ५९ ॥ यद् द्वयैव मतिर्लोके । प्रथमा श्रुतनिश्रिता ॥ शास्त्रसंस्कृतबुद्धेस्सा । शास्त्रार्थालोचनोद्भवा ॥ ६० ॥ सर्वथा शास्त्रसंस्पर्श–रहितस्य तथाविधात् ॥ क्षयोपशमतो जाता । भवेदश्रुतनिश्रिता ॥६१॥ सर्वाप्यंतर्भवत्यस्मिन्न । मतिरश्रुतनिश्रिता ॥ यथोक्तधीचतुष्केऽतः । पंचम्या नास्ति संभवः

॥ ६२ ॥ इदमर्थतो नंदीसूत्रवृत्तिस्थानांगसूत्रवृत्त्यादिषु ॥ जातिस्मृतिरप्यतीन—संख्यातभव-
बोधिका ॥ मतिज्ञानस्यैव भेदः । स्मृतिरूपतया किल ॥ ६३ ॥ यदाहाचारांगटीका——❀
जातिस्मरणत्वाभिनिबोधिकविशेष इति ❀ इति मतिज्ञानं ॥

श्रूयते तत्श्रुतं शब्दः। स श्रुतज्ञानमुच्यते॥ भावश्रुतस्य हेतुत्वा—द्धेतौ कार्योपचारतः॥६४॥
श्रुताच्छब्दाद्भुत ज्ञानं । श्रुतज्ञानं तदुच्यते ॥ श्रुतग्रंथानुसारी यो । बोधः श्रोत्रमनः कृतः ॥
॥ ६५ ॥ ननु श्रुतज्ञानमपि । श्रोत्रेंद्रियनिमित्तकं ॥ तन्मतिज्ञानतः कोऽस्य । भेदो यत्क-
थ्यते पृथक् ॥ ६६ ॥ अतोच्यते——वर्त्तमानार्थविषयं । मतिज्ञानं परं ततः ॥ गरीयो विषयं
त्रैका—लिकार्थविषयं श्रुतं ॥ ६७ ॥ विशुद्धं च व्यवहिता—नेकसूक्ष्मार्थदर्शनात् ॥ छद्मस्थोऽ-
पि श्रुतबला—दुच्यते श्रुतकेवली ॥ ६८ ॥ तदुक्तं—❀ ॥ नाणं अणाइसेसी । वियाणइए स
व्वमज्ञोत्ति ॥ ❀ जीवस्य स्वस्वभावत्वा—न्मतिज्ञानं हि शाश्वतं ॥ संसारे भ्रमतोऽनादौ। प-
तितं न कदापि यत् ॥ ६९ ॥ अक्षरस्यानंतभागो । नित्योद्घाटित एव हि ॥ निगोदिनाम-
पि भवे—दित्येतत्पारिणामिकं ॥ ७० ॥ यदागमः—

❀ ॥ सव्व जीवाणंपि अणं, अरकरस्स अणंतभ्नागो निच्चुग्घाडित्त चिठ्ठइ, जइ सोवि आवरेज्जा ता जीवो, अजीवत्तणं पावेज्जा इति ॥ ❀ श्रुतज्ञानं पुनर्नैवं । भवेज्जीवस्य सर्वदा ॥ आप्तोपदेशापेक्षं यत् । स्यादेतन्मतिपूर्वकं ॥ ७१ ॥ मतिज्ञानं स्पर्शनादी–न्द्रियानिंद्रियहेतुकं ॥ श्रुतं तु स्याल्लब्धितोऽपि । पदानुसारिणामिव ॥ ७२ ॥ इत्याद्यधिकं तत्वार्थवृत्त्यादिभ्योऽवसेयं ॥ चतुर्दशविधं तच्च । यद्वा विंशतिधा भवेत् ॥ चतुर्दशविधत्वं तु । तत्रैवं परिभाव्यते ॥ ॥ ७३ ॥ अक्षरश्रुतमित्येकं । स्याद् द्वितीयमनक्षरं ॥ तार्त्तीयीकं संज्ञिश्रुतं । तुर्यं श्रुतमसंज्ञिनः ॥ ७४ ॥ सम्यक् श्रुतं पंचमं स्यात् । षष्टं मिथ्याश्रुतं भवेत् ॥ सादिश्रुतं सप्तमं स्या–दनादिश्रुतमष्टमं ॥ ७५ ॥ सांतश्रुतं तु नवम–मनंतं दशमं श्रुतं ॥ एकादशं गमरूप–मगमं द्वादशं पुनः ॥ ७६ ॥ त्रयोदशं त्वंगरूप–मंगबाह्यं चतुर्दशं ॥ प्रायो व्यक्ता अमी भेदा–स्तत्रापि किंचिदुच्यते ॥ ७७ ॥ तत्राक्षरं त्रिधा संज्ञा । व्यंजनलब्धिभेदतः ॥ तत्र संज्ञाक्षरमेता । लिपयोऽष्टादशोदिताः ॥ ७८ ॥ तथाहि—❀ ॥ हंसलिवी भूअलिवी । जरका तह रक्खसीय बोधव्वा ॥ उड्डी जवणि तुरक्की । कीरा दविडी य सिंधविआ ॥ १ ॥ मालवि-

णी नडि नागरि । लामालिवी पारसीय बोधव्वा ॥ तह अनिमित्तीअलिवी ।—चाणक्की मूलदेवी य ॥ २ ॥ ❀ ॥ अकारादिहकारांतं । नवति व्यंजनाक्षरं ॥ अज्ञानात्मकमप्येतद् । द्रयं स्यात् श्रुतकारणं ॥ ७९ ॥ ततः श्रुतज्ञानतया । प्रज्ञप्तं परमर्षिनिः ॥ लब्ध्यक्षरं त्वक्षरोप—लब्धिरर्थावबोधिका ॥ ८० ॥ तच्च लब्ध्यक्षरं षोढा । यत् श्रोत्रादिनिरिंडियैः ॥ बोधोऽक्षरानुविद्धं स्या—च्छब्दार्थालोचनात्मकः ॥ ८१ ॥ यथा शब्दश्रवणतो । रूपदर्शनतोऽथवा ॥ देवदत्तोऽयमित्येवं—रूपो बोधो नवेदिह ॥ ८२ ॥ एवं शेषेंडियनावना कार्या ॥ तैरक्षरैरनिलाप्य—नावानां प्रतिपादकं ॥ अक्षरश्रुतमुद्दिष्ट—मनक्षरश्रुतं परं ॥ ८३ ॥ तथोक्तं—

ऊससिअं नीससीअं । निच्छूढं खासिअं च छीअं च ॥ निस्संघिअमणुसारं । अणरकरं छेलियाइयं ॥ ८४ ॥ ❀ अयं नावः ॥ कामितक्ष्वेमितायं य—न्मामाह्वयति वक्ति वा ॥ इत्याद्यन्याशयग्राहि । तत्स्यात् श्रुतमनक्षरं ॥ ८५ ॥ इह च शिरःकंपनादिचेष्टानां परानिप्रायज्ञानहेतुत्वे सत्यपि श्रवणान्नावान्न श्रुतत्वं । तदुक्तं विशेषावश्यकसूत्रवृत्तौ ❀ रुढीइतं सुअं सुच्चइत्ति चेठा न सुच्चइ कयाविति ❀ नक्तन्यायेन श्रुतत्वप्राप्तौ समानीतायामपि तदेवोच्छ्-

वसितादिश्रुतं न शिरोधूननकरचलनादि चेष्टा, यतः शास्त्रज्ञलोकप्रसिद्धा रूढिरियमिति । क-
र्मग्रंथवृत्तौ तु शिरःकंपनादीनामप्यनक्षरश्रुतत्वमुक्तं । तथा च तद्ग्रंथः—अनक्षरश्रुतं क्ष्वे-
डितशिरःकंपनादिनिमित्तं मामाह्वयति वारयति वेत्यादिरूपमभिप्रायपरिज्ञानमिति । ❀ स्या-
द्दीर्घकालिकी संज्ञा । येषां ते संज्ञिनो मताः ॥ श्रुतं संज्ञिश्रुतं तेषां । परं त्वसंज्ञिकश्रुतं ॥
॥ ७६ ॥ सम्यक्श्रुतं जिनप्रोक्तं । भवेदावश्यकादिकं ॥ तथा मिथ्याश्रुतमपि । स्यात्सम्य-
क् परिग्रहात् ॥ ७७ ॥ आवश्यकं तदपर—मिति सम्यक् श्रुतं द्विधा ॥ षोढा चावश्यकं त-
त्र । सामायिकादिभेदतः ॥ ७८ ॥ तथाहि—❀ सामाइयं चउवीसत्थउ । वंदणयं पडिक्कम-
णं काउसग्गो पच्चखाणं इति ❀ आवश्यकेतरच्चांगा—नंगात्मकतया द्विधा ॥ अंगान्येकादश
दृष्टि—वादश्चांगात्मकं भवेत् ॥ ७९ ॥

आचारांगं सूत्रकृतं । स्थानांगं समवाययुग् ॥ पंचमं भगवत्यंगं । ज्ञाताधर्मकथापि च
॥ ७० ॥ उपासकांतकृदनु—त्तरोपपातिकादशा ॥ प्रश्नव्याकरणं चैव । विपाकश्रुतमेव च ॥
॥ ७१ ॥ परिकर्म सूत्र पूर्वा—नुयोग पूर्वगतचूलिकाः पंच ॥ स्युर्दृष्टिवादभेदाः । पूर्वाणि च-

तुर्दशापि पूर्वगते ॥ ९२ ॥ तानि चैवं—उत्पादपूर्वमग्रायणीय—मथ वीर्यतः प्रवादं स्यात् ॥
अस्तेर्ज्ञानात्सत्वा—त्तदात्मनः कर्मणश्च परं ॥ ९३ ॥ प्रत्याख्यानं विद्या—प्रवाद कल्याण ना-
मधेये च ॥ प्राणावायं च क्रिया—विशालमथ लोकबिंदुसारमिति ॥ ९४ ॥ दृष्टिवादः पंच-
धाय—मंगं द्वादशमुच्यते ॥ उपांगमूलसूत्रादि—स्यादनंगात्मकं च तत् ॥ ९५ ॥ एवंच—य-
दुक्तमर्थतोऽर्हद्भिः । संदृब्धं सूत्रतश्च यत् ॥ महाधीभिर्गणधरै—स्तत्स्यादंगात्मकं श्रुतं ॥९६॥
ततो गणधराणां य—त्पारंपर्यात्तवाङ्मयैः ॥ शिष्यप्रशिष्यैराचार्यैः । प्राज्यवाङ्मतिशक्तिभिः
॥ ९७ ॥ कालसंहननायुर्दो—षादल्पशक्तिधीस्पृशां ॥ अनुग्रहाय संदृब्धं । तदनंगात्मकं श्रुतं
॥ ९८ ॥ सृष्टान्यङ्गोपकराय । तेभ्योऽप्यर्वाक्तनर्षिभिः ॥ शास्त्रैकदेशसंबद्धा—न्येवं प्रकरणा-
न्यपि ॥ ९९ ॥ एतल्लक्षणं चैवं—शास्त्रैकदेशसंबद्धं । शास्त्रकार्यांतरे स्थितं ॥ आहुः प्रकरणं
नाम । ग्रंथभेदं विपश्चितः ॥ १०० ॥ एवं च वक्तृवैशिष्ट्या—दस्य द्वैविध्यमीरितं ॥ वस्तुतो-
ऽर्हत्प्रणीतार्थ—मेकमेवाखिलं श्रुतं ॥ १ ॥ तथोक्तं तत्वार्थभाष्ये— । ' वक्तृविशेषाद् द्वैवि-
ध्यमिति ' । किंच—व्याकरणछंदोऽलंकृति—काव्यनाट्यतर्कगणितादि ॥ सम्यग्दृष्टिपरिग्रह—

पूतं सम्यक्श्रुतं जयति ॥ २ ॥ मिथ्याश्रुतं तु मिथ्यान्वि–लोकैः स्वमतिकल्पितं ॥ रामायणभारतादि । वेदवेदांगकादि च ॥ ३ ॥ उक्तं च भाष्यकृता—❀ सदसदविसेसणाउ । भवहेउ जहि च्छिउवलंभाउ ॥ नाणफलाभावाउ । मिच्छद्दिट्ठिस्स अन्नाणं ॥ १ ॥ पूर्वांतर्गतेयं गाथा–ऋग् यजुः सामाथर्वाणो। वेदा अंगानि षट् पुनः ॥ शिक्षाकल्पो व्याकरणं। छंदो ज्योतिर्निरुक्तयः ॥ ४ ॥ ततश्च–षडंगी वेदाश्चत्वारो । मीमांसान्विक्षिकी तथा ॥ धर्मशास्त्रं पुराणं च । विद्या एताश्चतुर्दश ॥ ५ ॥ तथा—आयुर्वेदो धनुर्वेदो । गांधर्वं चार्थशास्त्रकं ॥ चतुर्भिरेतैः संयुक्ताः । स्युरष्टादश ताः पुनः ॥ ६ ॥ अपूर्णदशपूर्वांत–मपि सम्यक् श्रुतं भवेत् ॥ मिथ्यात्विभिः संगृहीतं । मिथ्याश्रुतं विपर्ययात् ॥ ७ ॥ द्रव्यक्षेत्रकालभावैः । साद्यंतं भवति श्रुतं ॥ अनाद्यपर्यवसित–मपि ज्ञेयं तथैव च ॥ ८ ॥ एकं पुरुषमाश्रित्य । साद्यंतं भवति श्रुतं ॥ अनाद्यपर्यवसितं । भूयसस्तान् प्रतीत्य च ॥ ९ ॥ भवांतरं गतस्याशु । पुंसो यन्नश्यति श्रुतं ॥ कस्यचित्तद्भव एव । मिथ्यात्वगमनादिभिः ॥ १० ॥ तदुक्तं विशेषावश्यके—❀ चउदसपुव्वी मणुउ । देवत्ते तं न संभरइ सव्वं ॥ देसंमि होइ भयणा । सट्ठाणभा-

वेवि भयणाउ ॥ १ ॥

❀ देशे–पुनरेकादशांगलक्षणे इति कल्पचूर्णिः ॥ ❀ स्वस्थानभाव-इति मनुष्यभवेऽपि तिष्ठतो भजना ॥ तत्र श्रुतज्ञाननाशकारणान्यमूनि—' मिच्छभवंतरकेवल–गेलन्नपमायमाइणानासोत्ति ' ॥ षष्ठांगचतुर्दशाध्ययने तु तेतलिमंत्रिणः पूर्वाधीतचतुर्दशपूर्वस्मरणमुक्तमस्तीति ज्ञेयं ॥ ❀ साद्यंतं क्षेत्रतो ज्ञेयं । भरतैरवताश्रयात् ॥ अनाद्यपर्यवसितं । विदेहापेक्षया पुनः ॥ ११ ॥ कालतश्चावसर्पिण्यु–त्सर्पिण्योः सादिसांतकं ॥ महाविदेहकालस्यापेक्षयाद्यंतवर्जितं ॥ १२ ॥ भवसिद्धिकमाश्रित्य । साद्यंत भावतो भवेत् ॥ गद्मस्थिकज्ञाननाशो । यदस्य केवलक्षणे ॥ १३ ॥ ' नहंमिय गउमत्थिए नाणे ' इति वचनात् ॥ अनाद्यनंतं चाभव्य–माश्रित्य श्रुतमुच्यते ॥ श्रुतज्ञानश्रुताज्ञान–भेदस्यात्राविवक्षणात् ॥ १४ ॥ क्षायोपशमिकभावे । यद्वानाद्यंतमीरितं ॥ एवं साद्यानादिसांत–मनंतं श्रुतमूह्यतां ॥ १५ ॥ गमाः सदृशपाठाः स्यु–र्यत्र तद्गमिकं श्रुतं ॥ तत्प्रायो दृष्टिवादे स्या–दन्यच्चागमिकं भवेत् ॥ १६ ॥ अंगाविष्टं द्वादशांगा–न्यन्यदावश्यकादिकं ॥ इत्थं प्ररूपिताः प्राज्ञैः । श्रुतभेदाश्चतुर्द-

श ॥ १७ ॥ ये भेदा विंशतिस्तेऽपि । कथ्यंते लेशमात्रतः ॥ न ग्रंथविस्तरभ्नया–दिह सम्यक् प्रपंचिताः ॥ १८ ॥ तथाहुः–पज्जय अरकर पयसं–घाया पमिवत्ति तहय अणुओगो ॥ पाहुडपाहुड पाहुम । वत्थु पुव्वाय ससमासा ॥ १९ ॥ तत्र च–अविभागः परिछेदो । यो ज्ञानस्य प्रकल्पितः ॥ सपर्यायो द्व्यादयस्ते । स्यात्पर्यायसमासकः ॥ २० ॥ लब्ध्यपर्याप्तस्य सूक्ष्म–निगोदस्याशरीरिणः ॥ यदाद्यक्षणजातस्य । श्रुतं सर्वजघन्यतः ॥ २१ ॥ तस्मादन्यत्र यो जीवां–तरे ज्ञानस्य वर्द्धते ॥ अविभागपरिछेदः । स पर्याय इति स्मृतः ॥ २२ ॥ ये विभागपरिछेदा । द्व्यादयोऽन्येषु देहिषु ॥ वृद्धिं गतास्ते पर्याय–समास इति कीर्त्तिताः ॥ २३ ॥
तथोक्तमाचारांगवृत्तौ–

सर्वनिकृष्टो जीवस्य । दृष्ट उपयोग एष वीरेण ॥ सूक्ष्मनिगोदापर्या–प्तानां स च भवति विज्ञेयः ॥ २४ ॥ तस्मात्प्रभृतिज्ञानवि–वृद्धिर्दृष्टा जिनेन जीवानां ॥ लब्धिनिमित्तैः करणैः । कार्येंद्रियवाङ्मनोदृग्भिः ॥ २५ ॥ मध्ये लब्ध्यक्षराणां स्या–द्यदन्यतरदक्षरं ॥ तदक्षरं तत्संदोहो–ऽक्षरसमास इष्यते ॥ २६ ॥ पदानां यादृशानां स्या–दाचारांगादिषु ध्रुवं ॥ अष्टा-

दशसहस्रादि–प्रमाणं तत्पदं भवेत् ॥ २७ ॥ इत्यादीनि तत्समासः स्या–देवं सर्वत्र भाव्यतां ॥ संघातप्रतिपत्त्यादौ । समासो ह्यनया दिशा ॥ २८ ॥ गतींद्रियादिद्वाराणां । द्वाषष्टेरेकदेशकः ॥ गत्यादिरेकदेशोऽस्याः स्वर्गतिस्तत्र मार्गणा ॥ २९ ॥ जीवादेः क्रियते सोऽयं । संघात इति कीर्त्यते ॥ गत्यादिद्व्याद्यवयव–मार्गणा तत्समासकः ॥ ३० ॥ संपूर्णगत्यादिद्वारे । जीवादेर्मार्गणा तु या ॥ प्रतिपत्तिरियं जीवा–भिगमे दृश्यतेऽधुना ॥ ३१ ॥ सत्पदप्ररूपणाद्य–नुयोगद्वारमुच्यते ॥ प्राभृतांतःस्थोऽधिकारः । प्राभृतप्राभृतं भवेत् ॥ ३२ ॥ वस्त्वंतर्वर्त्त्यधिकारः । प्राभृतं परिकीर्त्तितं ॥ पूर्वांतर्वर्त्त्यधिकारो । वस्तुनाम्ना प्रचक्षते ॥ ३३ ॥ पूर्वमुत्पादपूर्वादि–ससमासाः समेऽप्यमी ॥ श्रुतस्य विंशतिर्भेदा । इत्थं संक्षेपतः स्मृताः ॥ ३४ ॥ इतिश्रुतज्ञानं ॥

अवधानं स्यादवधिः । साक्षादर्थविनिश्चयः ॥ अवशब्दोऽव्ययं यद्वा । सोऽधः शब्दार्थवाचकः ॥ ३५ ॥ अधोऽधो विस्तृतं वस्तु । धीयते परिबुध्यते ॥ अनेनेत्यवधिर्यद्वा । मर्यादावाचकोऽवधिः ॥ ३६ ॥ मर्यादा रूपिद्रव्येषु प्रवृत्तिर्नत्वरूपिषु तयोपलक्षितं ज्ञान–मवधिज्ञा-

नमुच्यते ॥ ३७ ॥ अनुगाम्यननुगामी । वर्धमानस्तथा क्षयी ॥ प्रतिपात्यप्रतिपाती–त्यवधिः
षड्विधो भवेत् ॥ ३८ ॥ यद्विदेशांतरगत–मप्यन्वेति स्वधारिणं ॥ अनुगाम्यवधिज्ञानं । त-
द्विज्ञेयं स्वनेत्रवत् ॥ ३९ ॥ यत्र क्षेत्रे समुत्पन्नं । यत्तत्रैवाववबोधकृत् ॥ द्वितीयमवधिज्ञानं ।
तच्छृंखलितदीपवत् ॥ ४० ॥ यदंगुलस्यासंख्येय–भागादिविषयं पुरा ॥ समुत्पद्यानुविषय–
विस्तारेण विवर्धते ॥ ४१ ॥ अलोके लोकमात्राणि । यावत्खंडान्यसंख्यशः ॥ स्यात्प्रकाश-
यितुं शक्तं । वर्द्धमानं तदीरितं ॥४२॥ अप्रशस्ताध्यवसायात् । हीयते यत्प्रतिक्षणं ॥ आहुस्त-
दवधिज्ञानं । हीयमानं मुनीश्वराः ॥ ४३ ॥ स्याद्वर्द्धमानं शुष्कोप–चीयमानेंधनाग्निवत् ॥ ही-
यमानं परिमिता–ऽतादृगिंधनवन्हिवत् ॥ ४४ ॥ योजनानां सहस्राणि । संख्येयान्यप्यसंख्य-
शः ॥ यावल्लोकमपि दृष्ट्वा । पतति प्रतिपाति तत् ॥ ४५ ॥ प्रमादेन पतत्येत–द्भवांतराश्रये-
ण वा ॥ यथा श्रुतं स्वरूपं च । वक्ष्येऽथाऽप्रतिपातिनः ॥ ४६ ॥ यत्प्रदेशमलोकस्य । दृष्टुमे-
वमपि क्षमं ॥ तत्स्यादप्रतिपात्येव । केवलं तदनंतरं ॥ ४७ ॥ हीयमानप्रतिपातिनोश्चायं वि-
शेषः––प्रतिपाति हि निर्मूलं । विध्यायत्येकहेलया ॥ हीयमानं पुनर्ह्रास–मुपयाति शनैःशनैः

॥ ४८ ॥ इदं कर्मग्रंथवृत्त्यभिप्रायेण, तत्वार्थभाष्ये तु—

❀ अनवस्थितावस्थिताख्ययोरंत्यभेदयोरेवं स्वरूपमुक्तं—अनवस्थितं हीयते वर्द्धते च, वर्द्धते हीयते च, प्रतिपतति चोत्पद्यते चेति पुनः पुनरूर्म्मिवत् । अवस्थितं यावति क्षेत्र उत्पन्नं भवति, ततो न प्रतिपतत्याकेवलप्राप्तेरवतिष्ठते, आभवक्षयाद्वा जात्यंतरस्थायि वा भवति लिंगवत्, यथा लिंगं पुरुषादिवेदमिह जन्मन्युपादाय जन्मांतरं याति जंतुस्तथावधिज्ञानमपीति भावः ॥ नृतिरश्चामयं षोढा । क्षायोपशमिकोऽवधिः ॥ भवेद्भवप्रत्ययश्च । देवनारकयोरिह ॥ १ ॥ तदुक्तं—द्विविधोऽवधिर्भवप्रत्ययः, क्षयोपशमनिमित्तश्चेति तत्वार्थसूत्रे । स्याद्भवप्रत्ययोऽप्येष । न क्षयोपशमं विना ॥ अन्वयव्यतिरेकाभ्यां । हेतुत्वादस्य किंत्विह ॥ २ ॥ स्यात्क्षयोपशमे हेतु—र्भवोऽयं तदसौ तथा ॥ उपचाराद्धेतुहेतु—रपि हेतुरिहोदितः ॥ ३ ॥ इत्यवधिज्ञानं ॥ ❀ मनस्त्वेन परिणत—द्रव्याणां यस्तु पर्यवः ॥ परिछेदस्य हि मनः—पर्यवज्ञानमुच्यते ॥ ४९ ॥ यद्वा—मनोद्रव्यस्य पर्याया । नानावस्थात्मका हि ये ॥ तेषां ज्ञानं खलु मनः—पर्यायज्ञानमुच्यते ॥५०॥ स्यादृजुधीविपुलधी । लक्षणस्वामिभेदतः ॥ तद् द्वि-

भेदं संयतस्या-ऽप्रमत्तस्यर्द्धिशालिनः ॥ ५१ ॥ अनेन चिंतितः कुंभ । इति सामान्यग्राहिणी ॥ मनोद्रव्यपरिच्छित्ति-र्यस्यासावृजुधीः श्रुतः ॥ ५२ ॥ अनेन चिंतितः कुंभः । स सौवर्णः स माथुरः ॥ इयत्प्रमाणोऽद्यतनः । पीतवर्णः सदाकृतिः ॥ ५३ ॥ एवं विशेषविज्ञाने । मतिर्यस्य पटीयसी ॥ ज्ञेयोऽयं विपुलमति-र्मनःपर्यायलब्धिमान् ॥ ५४ ॥ ननुच-अवधिश्च मनःपर्य-वश्चोभे अप्यतींद्रिये ॥ रूपिद्रव्यविषये च । भेदस्तदिह कोऽनयोः ॥ ५५ ॥ अत्रोच्यतेऽवधिज्ञान-मुत्कर्षात्सर्वलोकवित् ॥ संयतासंयतनर-तिर्यक्स्वामिकमीरितं ॥ ५६ ॥ अन्यद्विशदमेतस्मा-द्बहुपर्यायवेदनात् ॥ अप्रमत्तसंयतिक-लभ्यं नृक्षेत्रगोचरं ॥ ५७ ॥ उक्तं च तत्वार्थभाष्ये-' विशुद्धिक्षेत्रस्वामिविषयेभ्योऽवधिमनःपर्ययोर्विशेष इति ' । सामान्यग्राहि ननु य-न्मनःपर्यायमादिमं ॥ तदस्य दर्शनं किं न । सामान्यग्रहणात्मकं ॥ ५८ ॥ अत्रोच्यते -विशेषमेकं द्वौ त्रीन्वा । गृह्णात्यृजुमतिः किल ॥ ईष्टे बहून् विशेषांश्च । परिछेत्तुमयं न यत् ॥५९॥ सामान्यग्राह्यसौ तस्मात् । स्तोकग्राहितया भवेत् ॥ सामान्यशब्दः स्तोकार्थो । नत्वत्र दर्शनार्थकः ॥६०॥ कर्मक्षयोपशमजो-त्कर्षाद्विपुलधीः पुनः ॥ बहून् विशेषान्वेत्त्यत्र । ब-

ह्यर्थोविपुलध्वनिः ॥ ६१ ॥ नचान्यधायि सिद्धांते । कुत्राप्येतस्य दर्शनं ॥ दर्शनात्मकसामान्य–ग्राहिता नैतयोस्ततः ॥ ६२ ॥ विशेषरूप[redacted]ाहित्ये । प्राप्ते नन्वेवमेतयोः ॥ द्वयोर्मनोविषयो–द्वैविध्ये किं निबंधनं ॥ ६३ ॥ अत्रोच्यते–अल्पपर्यायवेद्यायं । घटादिवस्तुगोचरं ॥ नानाविधविशेषाव–च्छेदि शुद्धतरंपरं ॥ ६४ ॥ कस्यचिन्न पतत्याद्यं । कस्यचिच्च पतत्यपि ॥ अंत्यं चाकेवलप्राप्ते–र्न पतत्येव तिष्ठति ॥ ६५ ॥ तथोक्तं तत्त्वार्थवृत्तौ–❀ यस्य पुनर्विपुलमतेर्मनःपर्यायज्ञानं समजनि, तस्य न पतत्याकेवलप्राप्तेरिति । एतत्सूत्रेऽपि विशुध्यप्रतिपाताभ्यां तद्विशेष इति ॥ योगशास्त्रप्रथमप्रकाशवृत्तावपि–ऋजुश्च विपुलश्चेति । स्यान्मनःपर्यवो द्विधा ॥ विशुध्यप्रतिपाताभ्यां । विपुलस्तु विशिष्यते ॥ १ ॥ इति मनःपर्यायज्ञानं. ❀ केवलं यन्मतिज्ञाना–द्यन्यज्ञानानपेक्षणात् ॥ ज्ञेयानंत्यादनंतं वा । शुद्धं चावरणक्षयात् ॥६६॥

॥ १६

सकलं वादित एव । निःशेषावरणक्षयात् ॥ अनन्यसदृशत्वेना–थवा साधारणं भवेत् ॥६७॥ भूतभाविभवद्भाव–स्वरूपोद्दीपकं स्वतः ॥ तद् ज्ञानं केवलज्ञानं । केवलज्ञानिभिर्मतं ॥६८॥ इतिकेवलज्ञानं ॥

कुत्सितं ज्ञानमज्ञानं । कुत्सार्थस्य नञोऽन्वयात् ॥ कुत्सितत्वं तु मिथ्यात्व–योगात्तत्त्रि-
विधं पुनः ॥ ६९ ॥ मत्यज्ञानं श्रुताज्ञानं । विभंगज्ञानमित्यपि ॥ अथ स्वरूपमेतेषां । दर्श-
यामि यथाश्रुतं ॥ ७० ॥ मतिज्ञानश्रुतज्ञाने । एव मिथ्यात्वयोगतः ॥ अज्ञानसंज्ञां भजतो ।
नीचसंगादिवोत्तमः ॥ ७१ ॥ तथोक्तं—❀ अविसेसिया मइ च्चिय । समदिट्ठिस्स सा मइना-
णं ॥ मइअन्नाणं मिच्छा–दिट्ठिस्स सुअंपि एमेव ॥ १ ॥ ❀ भंगा विकल्पा विरुद्धाः । स्युस्त-
तेति विभंगकं ॥ विरूपो वावधेर्भंगो । भेदोऽयं तद्विभंगकं ॥ ७२ ॥ एतच्च ग्रामनगर–सन्निवे-
शादिसंस्थितं ॥ समुद्रद्वीपवृक्षादि–नानासंस्थानसंस्थितं ॥ ७३ ॥ अष्टानामप्यथैतेषां । विष-
यान्वर्णयाम्यहं ॥ द्रव्यक्षेत्रकालभावै–र्द्रव्यतस्तत्र कथ्यते ॥ ७४ ॥ सामान्यतो मतिज्ञानी ।
सर्वद्रव्याणि बुध्यते ॥ विशेषतोऽपि देशादि–भेदैस्तानवगच्छति ॥ ७५ ॥ किंतु तद्गतनिःशे-
ष–विशेषापेक्षया स्फुटान् ॥ एष धर्मास्तिकायादीन् । पश्येत्सर्वात्मना तु न ॥ ७६ ॥ यो-
ग्यदेशस्थितान् शब्दा–दींस्तु जानाति पश्यति ॥ श्रुतभावितया बुद्ध्या । सर्वद्रव्याणि वेत्ति
वा ॥ ७७ ॥ लोकालोकौ क्षेत्रतश्च–कालतस्त्रिविधं च तं ॥ सर्वाद्धा वा भावतस्तु । भावानौद-

यिकादिकान् ॥ ७८ ॥ आह च भाष्यकारः—✽ आएसोत्तिपगारो । उघादेसेण सव्व दव्वाइं ॥ घमत्थिकाइयाइं । जाणइ न उ सव्वभावेणं ॥ ७९ ॥ खेत्तं लोगालोगं । कालंसव्वद्धमहव ति-विहंपि ॥ पंचोदइयाईए । भावे जन्नेयमेवइयं ॥ १ ॥ आएसात्तिवसुतं । सुत्तवलद्धे सुतस्स मइनाणं ॥ पसरइ तब्भावणया । विणावि सुत्ताणुसारेणं ॥ ८० ॥ तत्त्वार्थवृत्तावप्युक्तं—मतिज्ञानी तावत् श्रुतज्ञानोपलब्धेष्वर्थेषु यदाक्षरपरिपाटीमंतरेण स्वभ्यस्तविद्यो द्रव्याणि ध्यायति, तदा मतिज्ञानविषयः सर्वद्रव्याणि, न तु सर्वान्पर्यायानल्पकालविषयत्वान्मनसश्चासक्तेरिति । इति मतिज्ञानविषयः ॥

✽ भावश्रुतोपयुक्तः सन् । जानाति श्रुतकेवली ॥ दशपूर्वादिभृद्‌द्रव्या—एयभिलाप्यानि केवलं ॥ ८१ ॥ यद्यप्यभिलाप्यार्था—नंतांशोऽस्ति श्रुते तथाप्येते ॥ सर्वे स्युः श्रुतविषयः । प्रसंगतोऽनुप्रसंगाच्च ॥ ८२ ॥ यथाहुः—पन्नवणिज्जा भावा । अणंतभागो उ अणभिलप्पाणं ॥ पन्नवणिज्जाणं पुण । अणंतभागो सुअनिबद्धो ॥ १ ॥ ✽ तथा—श्रुतानुवर्त्तिमनसा । ह्यचक्षुर्दर्शनात्मना ॥ दशपूर्वादिभृद्‌द्रव्या—एयभिलाप्यानि पश्यति ॥ ८३ ॥ तदारतस्तु भजना ।

विज्ञेया धीविशेषतः ॥ वृद्धैस्तु पश्यतीत्यत्र । तत्वमेतन्निरूपितं ॥ ७४ ॥ सर्वात्मनादर्शनेऽपि । पश्यत्येव कथंचन ॥ ग्रैवेयकानुत्तरादि । विमानालेख्यनिर्मितेः ॥ ७५ ॥ नोचेत्स्यात्सर्वथा दृष्ट—स्यालेख्यकरणं कुतः ॥ तुर्योपांगे श्रुतज्ञान—पश्यत्तापि प्ररूपिता ॥ ७६ ॥ क्षेत्रतः कालतोऽप्येवं । भावतो वेत्ति सश्रुतः ॥ भावानौदयिकादीन्वा । पर्यायान्वाभिलाप्यगान् ॥ ॥ ७७ ॥ इतिश्रुतज्ञानविषयः ॥

द्रव्यतोऽथावधिज्ञानी । रूपिद्रव्याणि पश्यति ॥ भाषातैजसयोरंतः—स्थानि तानि जघन्यतः ॥ ७८ ॥ उत्कर्षतस्तु सर्वाणि । सूक्ष्माणि बादराणि च ॥ विशेषाकारतो वेत्ति । ज्ञानत्वादस्य निश्चितं ॥ ७९ ॥ क्षेत्रतोऽथावधिज्ञानी । जघन्याद्वेत्ति पश्यति ॥ असंख्येयतमं भाग—मंगुलस्योपयोगतः ॥ ८० ॥ विशेषश्चात्र—जावइया तिसमयाहारगस्स । सुहुमस्स पणगजीवस्स ॥ उगाहणा जहन्ना । उहिखित्तं जहन्नं तु ॥ ८१ ॥ इति नंदीसूत्रादिषु नंदीवृत्तौ च ॥ योजनसहस्रमानो । मत्स्यो मृत्वा स्वकायदेशे यः ॥ उत्पद्यते हि पनकः । सूक्ष्मत्वेनेह स ग्राह्यः ॥ ८२ ॥ संहृत्य चाद्यसमये । सह्यायामं करोति च प्रतरं ॥ संख्या-

तीता ख्यांगुल–विभागबाहल्यमानं तु ॥ ९३ ॥ स्वतनूपृथुत्वमात्रं । दीर्घत्वेनापि जीवसाम-
र्थ्यात् ॥ तमपि द्वितीयसमये । संहृत्य करोत्यसौ सूचिं ॥ ९४ ॥ संख्यातीताख्यांगुल–वि-
भागविष्कंभमाननिर्दिष्टं ॥ निजतनुपृथुत्वदीर्घं । तृतीयसमये तु संहृत्य ॥ ९५ ॥ उत्पद्यते
च पनकः । स्वदेहदेशे सुसूक्ष्मपरिणामः ॥ समयत्रयेण तस्या–ऽवगाहना यावती भवति ॥
॥ ९६ ॥ तावज्जघन्यमवधे–रालंबनवस्तुभाजनं क्षेत्रं ॥ इदमित्थमेव मुनिगण–सुसंप्रदाया-
त्समवसेयं ॥ ९७ ॥ तथा—❀ मच्छो महल्लकाओ । संखित्तो जोउ तीहिं समएहिं ॥ स कि-
रपयत्तविसेसेण । सण्हमोगाहणं कुणइ ॥ १ ॥ सण्हयरासण्हयरो । सुहुमो पणओ जहन्न-
देहो य ॥ स बहुविसेसविसिद्धो । सण्हयरो सव्वदेहेसु ॥ ९८ ॥ पढमबितीये सण्हो । जा-
यइ थुलो चउत्थयाइसु ॥ तइय समयंमि जुग्गो । गहिओ तो तिसमयाहारो ॥ ९९ ॥ ❀
अलोके लोकमात्राणि । पश्येत्खंडान्यसंख्यशः ॥ उत्कृष्टतोऽवधिज्ञान–विषयः शक्त्यपेक्षया
॥ १०० ॥ असंख्यभागमावल्या । जघन्यादेष पश्यति ॥ उत्सर्पिण्यवसर्पिण्य–उत्कर्षेण
त्वसंख्यकाः ॥ १ ॥ अतीता अपि तावत्य–स्तावत्योऽनागता अपि ॥ तावत्काले भूतभावि–

रूपिद्रव्यावबोधतः ॥ २ ॥ पर्यायान् भावतोऽनंता—नेष वेत्ति जघन्यतः ॥ आधारद्रव्यानंत्ये-
न । प्रतिद्रव्यं तु नो यतः ॥ ३ ॥ उत्कर्षतोऽपि पर्याया—ननंतान् वेत्ति पश्यति ॥ सर्वेषां प-
र्यवाणां चा—नंतेंशे तेऽपि पर्यवाः ॥ ४ ॥ अथावधेर्विषययो—र्नियमः क्षेत्रकालयोः ॥ मिथो
विज्ञाप्यते वृद्धि—माश्रित्य श्रुतवर्णितः ॥ ५ ॥ अंगुलस्यासंख्यभागं । क्षेत्रतो यो निरीक्षते ॥
आवल्यसंख्येयभागं । कालतः स निरीक्षते ॥ ६ ॥ प्रमाणांगुलमत्राहुः । केचित्क्षेत्राधिकार-
तः ॥ अवधेरधिकाराच्च । केचनात्रोच्छ्रयांगुलं ॥ ७ ॥ यश्चांगुलस्य संख्येयं । क्षेत्रतो भाग-
मीक्षते ॥ आवल्या अपि संख्येयं । कालतोंशं स वीक्षते ॥ ८ ॥ संपूर्णमंगुलं यस्तु । क्षेत्रतो
वीक्षते जनः ॥ पश्येदावलिकां तः स । कालतोऽवधिचक्षुषा ॥७॥ पश्यन्नावलिकां पश्ये—दंगुलानां
पृथक्त्वकं ॥ क्षेत्रतो हस्तदर्शी च । मुहूर्त्तांतः प्रपश्यति ॥ ए ॥ कालतो भिन्नदिनदृग् । गव्यूतं
क्षेत्रमीक्षते ॥ योजनक्षेत्रदर्शी च । भवेद्दिनपृथक्त्वदृक् ॥ १० ॥ कालतो भिन्नपक्षेक्षी । पंच-
विंशतियोजनीं ॥ क्षेत्रतो वेत्ति भरत—दर्शी पक्षमनूनकं ॥ ११ ॥ जानाति जंबूद्वीपं च । का-
लतोऽधिकमासवित् ॥ कालतो वर्षवेदी स्यात् । क्षेत्रतो नरलोकवित् ॥ १२ ॥ रुचकद्वीपद-

र्शी च । पश्येद्वर्षपृथक्त्वकं ॥ संख्येयकालदर्शी च । संख्येयान् द्वीपवारिधीन् ॥ १३ ॥ सा-
मान्यतोऽत्र प्रोक्तोऽपि । कालः संख्येयसंज्ञकः ॥ विज्ञेयः परतो वर्ष-सहस्रादिह धीधनैः ॥
॥ १४ ॥ असंख्यकालविषये-ऽवधौ च द्वीपवार्धयः ॥ भजनीया असंख्येयाः । संख्येया अ-
पि कुत्रचित् ॥ १५ ॥ विज्ञेया भजना चैवं । महांतो द्वीपवार्धयः ॥ संख्येया एव किंचैको
-ऽप्येकदेशोऽपि संभवेत् ॥ १६ ॥ तत्र स्वयंभूरमण-तिरश्चोः संख्यकालिके ॥ अवधौ विष-
यस्तस्यां—भोधेः स्यादेकदेशकः ॥ १७ ॥ योजनापेक्षयासंख्य—मेव क्षेत्रं भवेदिह ॥
असंख्यकालविषये-ऽवधाविति तु भाव्यतां ॥ १८ ॥ कालवृद्धौ द्रव्यभाव—क्षेत्रवृद्धिरसंशयं
॥ क्षेत्रवृद्धौ तु कालस्य । भजना क्षेत्रसौक्ष्म्यतः ॥ १९ ॥ द्रव्यपर्याययोर्वृद्धि—रव-
श्यं क्षेत्रवृद्धितः ॥ अत्र शेषो विशेषश्च । ज्ञेय आवश्यकादितः ॥ २० ॥ अवध्यातिपयत्वे-
ना-ऽमूर्त्तयोः क्षेत्रकालयोः ॥ उक्तक्षेत्रकालवर्त्ति—द्रव्ये कार्यात लक्षणा ॥ २१ ॥ इत्यव-
धिज्ञानविषयः ॥ स्कंधाननंतानृजुधी-रुपयुक्तो हि पश्यति ॥ नृक्षेत्रे संज्ञिपर्याप्तै-र्मनस्त्वेनो-
रीकृतान् ॥ २२ ॥ मनोज्ञानस्य नितरां । क्षयोपशमपाटवात् ॥ विशेषयुक्तमेवासौ । वेत्ति

वस्तु घटादिकं ॥ २३ ॥ स्कंधान् जानाति विपुल—धीश्च तानेव साधिकान् ॥ अपेक्ष्य द्रव्य-पर्यायान् । तथा स्पष्टतरानपि ॥ २४ ॥ द्विधा मनःपर्यवस्य । द्रव्यतो विषयो ह्ययं ॥ विषयं क्षेत्रतोऽथास्य । ब्रवीमि ऋजुधीरिह ॥ २५ ॥ अधस्तिर्यग्लोकमध्या—द्वेत्ति रत्नप्रभाक्षितौ ॥ ऋजुधीर्योजनसह—स्रांतं संज्ञिमनांस्यसौ ॥ २६ ॥ ज्योतिश्चक्रोपरितलं । यावदूर्ध्वं स वीक्षते ॥ तिर्यक्क्षेत्रं द्विपाथोधि—सार्धद्वीपद्वयात्मकं ॥ २७ ॥ उक्तं क्षेत्रं विपुलधी—र्निर्मलं वीक्षते तथा ॥ विष्कंभायामबाहल्यैः । सार्धद्व्यंगुलसाधिकं ॥ २८ ॥ ❁ अयं भगवतीसूत्रवृत्तिराजप्रश्नीयवृत्तिनंदीसूत्रनंदीमलयगिरीयवृत्तिविशेषावश्यकवृत्तिकर्मग्रंथवृत्त्याद्यभिप्रायः॥ सामान्यं घटादिवस्तुमात्रचिंतनपरिणामग्राहि किंचिदविशुद्धतरमर्धतृतीयांगुलहीनमनुष्यक्षेत्रविषयं ज्ञानं ऋजुमतिलब्धिः, संपूर्णमनुष्यक्षेत्रविषयं विपुलमतिलब्धिरिति तु प्रवचनसारोद्धारवृत्त्यौपपातिकवृत्त्योर्लिखितं अर्धतृतीयद्वीपसमुद्रेष्वर्धतृतीयांगुलहीनेषु संज्ञिमनांसि ऋजुमतिर्जानाति, विपुलमतिरर्धतृतीयैरंगुलैरभ्यधिकेष्विति चार्थतः श्रीज्ञानसूरिकृतावश्यकावचूर्णौ ॥ ❁ ऋजुधीः कालतः पल्या—संख्यभागं जघन्यतः ॥ अतीतानागतं जाना—त्युत्कर्षादपि त-

न्मितं ॥ ९ए ॥ तावत्कालन्नूतन्नावि–मनःपर्यायबोधतः ॥ तावंतमेव विपुल–धीस्तु पश्यति निर्मलं ॥ १० ॥ सर्वन्नावानंतन्नाग–वर्त्तिनोऽनंतपर्यवान् ॥ ऋजुधीर्न्नावतो वेत्ति । विपुलस्तांश्च निर्मलान् ॥ ११ ॥ इतिमनःपर्यायविषयः ॥

केवली ड्व्यतः सर्वं । ड्व्यं मूर्त्तममूर्त्तकं ॥ क्षेत्रतः सकलं क्षेत्रं । सर्वं कालं च कालतः ॥ १२ ॥ न्नावतः सर्वपर्यायान् । प्रतिड्व्यमनंतकान् ॥ न्नावतो न्नाविनो न्नूतान् । सम्यग् जानाति पश्यति ॥ १३ ॥ विहायःकालयोः सर्व–ड्व्येषु संगतावपि ॥ पृथगुक्तिः पुनः क्षेत्र–कालरूढ्येति चिंत्यतां ॥ १४ ॥ इति केवलज्ञानविषयः ॥ मत्यज्ञानी तु मिथ्यत्व–मिश्रेणावग्रहादिना ॥ औत्पत्तिक्यादिना यद्वा । पदार्थान् विषयीकृतान् ॥ १५ ॥ वेत्त्यपायादिना तांश्च । पश्यत्ववग्रहादिना ॥ मत्यज्ञानेन विशेष–सामान्यावगमात्मना ॥ १६ ॥ मत्यज्ञानपरिगतं । क्षेत्रं कालं च वेत्त्यसौ ॥ मत्यज्ञानपरिगतान् । स वेत्ति पर्यवानपि ॥ १७ ॥ श्रुताज्ञानी पुनर्मिथ्या–श्रुतसंदर्न्नगर्न्नितान् ॥ ड्व्यक्षेत्रकालन्नावान् । वेत्ति प्रज्ञापयत्यपि ॥१०॥ एवं विन्नंगानुगतान् । विन्नंगज्ञानवानपि ॥ ड्व्यक्षेत्रकालन्नावान् । कथंचिद्वेत्ति पश्यति ।१ए।

यथा स शिवराजर्षि–र्दिशाप्रोक्षकतापसः ॥ विभंगज्ञानतोऽपश्य–त्सप्त द्वीपपयोनिधीन् ॥४०॥
निशम्य तानसंख्येयान् । जगद्गुरुनिरूदितान् ॥ संदिहानो वीरपार्श्वे । प्रव्रज्य स ययौ शि-
वं ॥ ४१ ॥ इदं पंचविधं ज्ञानं । जिनैर्यत्परिकीर्त्तितं ॥ तद् द्वे प्रमाणे भवतः । प्रत्यक्षं च
परोक्षकं ॥ ४२ ॥ स्वस्य ज्ञानस्वरूपस्य । घटादेर्यत्परस्य च ॥ निश्चायकं ज्ञानमिद । तत्प्र-
माणमिति स्मृतं ॥ ४३ ॥ यदाहुः—

❋ स्वपरव्यवसायि ज्ञानं प्रमाणमिति ❋ तत्रेंद्रियानपेक्षं य–ज्जीवस्यैवोपजायते ॥ त-
त्प्रत्यक्षं प्रमाणं स्या–दंत्यज्ञानत्रयात्मकं ॥ ४४ ॥ इंद्रियैर्हेतुभिर्ज्ञानं । यदात्मन्युपजायते ॥
तत्परोक्षमिति ज्ञेय–माद्यज्ञानद्वयात्मकं ॥ ४५ ॥ प्रत्यक्षे च परोक्षे चा–पायांशो निश्चया-
त्मकः ॥ यः स एवात्र साकारः । प्रमाणव्यपदेशभाक् ॥ ४६ ॥ यथाभिहितं—साकारः प्र-
त्ययः सर्वो । विमुक्तः संशयादिना ॥ साकारार्थपरिच्छेदा–त्प्रमाणं तन्मनीषिणां ॥ ४७ ॥
सामान्यैकगोचरस्य । दर्शनस्यात एव च ॥ न प्रामाण्यं संशयादे–रप्येवं न प्रमाणता ॥४८॥
अत एव मतिज्ञाने । सम्यक्त्वदलिकान्वितः ॥ योऽपायांशः स प्रमाणं । स्यात्पौद्गलिकमद्-

दृशां ॥ ४९ ॥ प्रक्षीणसप्तकानां चा—पायांश एव केवलः ॥ प्रमाणमप्रमाणं चा—वग्रहाद्या
अनिर्णयात् ॥५०॥ ❀ अयं च तत्वार्थवृत्त्याद्यभिप्रायो, रत्नाकरावतारिकादौ च मतिज्ञानस्य
तद्भेदानां अवग्रहादीनां च सांव्यावहारिकप्रत्यक्षप्रमाणमुक्तं । तथा च तद्ग्रंथः—अवग्रहश्चे-
हाचावायश्च धारणा च, तान्निर्भेदो विशेषस्तस्मात्प्रत्येकमिंद्रियानिंद्रियनिबंधनं प्रत्यक्षं चतु-
र्भेदमिति ॥ ❀ श्रुतज्ञानेऽप्यपायांशः । प्रमाणमनया दिशा ॥ निमित्तापेक्षणादेते । परोक्षे
इति कीर्तिते ॥ ५१ ॥ परोक्षं ह्यनलज्ञानं । धूमज्ञाननिमित्तकं ॥ लोके तद्वदिमे ज्ञेये । इंद्रि-
यादिनिमित्तके ॥ ५२ ॥ इदं च निश्चयनया—पेक्षया व्यपदिश्यते ॥ प्रत्यक्षव्यपदेशोऽपि । व्य-
वहारान्मतोऽनयोः ॥ ५३ ॥ तथोक्तं नंद्यां—❀ तं समासओ दुविहं पण्णत्तं, तं इंदियपच्चक्खं
च नोइंदियपच्चक्खं च इत्यादि ❀ ननु च—

प्रत्यक्षमनुमानं चा—गमश्चेति त्रयं विदुः ॥ प्रमाणं कापिला आहु—पादास्तत्रोपमान-
कं ॥ ५४ ॥ मीमांसकाः समर्थाप—त्यभावाभ्यां सहोचिरे ॥ द्वे त्रीणि वा काणभुजा । द्वे
बौद्धा आदितो विदुः ॥ ५५ ॥ एकं च लौकायतिकाः । प्रमाणानीत्यनेकधा ॥ परैरुक्तानि किं

तानि । प्रमाणान्यथवान्यथा ॥ ५६ ॥ अत्रोच्यते—एतान्याद्यज्ञानयुग्मं—तद्भूतान्यखिलान्यपि ॥ इन्द्रियार्थसन्निकर्ष—निमित्तकतया किल ॥ ५७ ॥ अप्रमाणानि—वामूनि । मिथ्यादर्शनयोगतः ॥ असद्बोधव्यापृतेभ्यो—न्मत्तवाक्यप्रयोगवत् ॥ ५८ ॥ पंचानामप्यथैतेषां । सहभावो विचार्यते ॥ एकं द्वे त्रीणि ॥ चत्वारि । स्युः सहैकत्र देहिनि ॥ ५९ ॥ तथाहि—प्राप्तं निसर्गसम्यक्त्वं । येन स्यात्तस्य केवलं ॥ मतिज्ञानमनवाप्त—श्रुतस्यापि शरीरिणः ॥ ६० ॥ अत एव मतिर्यत्र । श्रुतं तत्र न निश्चितं ॥ श्रुतं यत्र मतिज्ञानं । तत्र निश्चितमेव हि ॥ ६१ ॥

❀ ॥ अयं तत्वार्थवृत्त्याद्यभिप्रायः, नंदीसूत्रादौ तु—' जत्थ मइनाणं तत्थ सुअनाणं, जत्थ सुअनाणं तत्थ मइनाणं ' इत्युक्तं; अत एवैकेंद्रियाणामपि श्रुतज्ञानं स्वीकृतं श्रुते. यथा—जह सुहुमं भाविंदिय—नाणं दव्विंदियावरोहे वि ॥ दव्वसुआभावंमि वि । भावसुअं पत्थिवाइणं ॥१॥ भावेंद्रियोपयोगश्च बकुलादिवदेकेंद्रियाणां सर्वेषां भाव्यः । तथा मलयगिरिपूज्या अप्याहुः नंदीवृत्तौ—यद्यपि तेषामेकेंद्रियादीनां परोपदेशश्रवणाऽसंभवस्तथापि तेषां तथाविधक्षयोपशमभावतः कश्चिदव्यक्तोऽक्षरलाभो भवति, यद्वशादक्षरानुषक्तं श्रुतज्ञानमुपजायते, इत्थं चैतद-

गीकर्त्तव्यं, तेषामप्याहाराद्यभिलाष उपजायते, अभिलाषश्च प्रार्थना, सा च यदीदमहं प्रा-
प्नोमि तदा भव्यं भवतीत्याद्यक्षरानुविद्धैव, ततस्तेषामपि काचिदव्यक्ताक्षरोपलब्धिरवश्यं प्र-
तिपत्तव्येति ॥ ❀ मतिज्ञानश्रुतज्ञान-रूपे द्वे भवतः सह ॥ त्रीणि ते सावधिज्ञाने । सम-
नःपर्यवे तु वा ॥ ६२ ॥ चतुर्णां सहभावोऽपि । छद्मस्थश्रमणे भवेत् ॥ पंचानां सहभावे तु
। मतद्वितयमुच्यते ॥ ६३ ॥ केचिदूचुर्न नश्यंति । यथार्केऽभ्युदिते सति ॥ महांसि चंद्रनक्षत्र
-दीपादीन्यखिलान्यपि ॥ ६४ ॥ भवंत्यकिंचित्कराणि । किंतु प्रकाशनंप्रति ॥ छाद्मस्थिकानि
ज्ञानानि । प्रोद्भूते केवले तथा ॥ ६५ ॥ ततो न केवलेनैषां । सहभावो विरुध्यते ॥ अव्या-
पारान्निष्फलाना-मप्यक्षाणामिवार्हति ॥ ६६ ॥ अन्ये त्वाहुर्न संत्येव । केवलज्ञानशालिनि ॥
छाद्मस्थिकानि ज्ञानानि । युक्तिस्तत्राभिधीयते ॥६७॥ अपायसद्द्रव्यताभावा-न्मतिज्ञानं न सं-
भवेत् ॥ न श्रुतज्ञानमपि य-त्तन्मतिज्ञानपूर्वकं ॥ ६८ ॥ रूपिद्रव्यैकविषये । न तृतीयतुरी-
यके ॥ लोकालोकविषयक-ज्ञानस्य सर्ववेदिनः ॥ ६९ ॥ क्षयोपशमजान्यन्या-न्यंत्यं च क्षा-
यिकं मतं ॥ सहभावस्तदेतेषां । पंचानामेति नौचितीं ॥ ७० ॥ कटे सत्युपकल्प्यंते । जा-

लकान्यंतरांरा ॥ मूलतः कटनाशे तु । तेषां व्यवहृतिः कुतः ॥ ७१ ॥ किंच—ज्ञानदर्शनयोरे-
वौ—पयोगौ स्तो यथाक्रमं ॥ अशेषपर्यायद्रव्य—बोधिनोः सर्ववेदिनः ॥ ७२ ॥ एकस्मिन् स-
मये ज्ञानं । दर्शनं चापरक्षणे ॥ सर्वज्ञस्योपयोगौ द्वौ । समयांतरितौ सदा ॥७३॥ तथाहुः—

❀ नाणंमि दंसणंमिय । एत्तो एक्कतरयंमि उवउत्ता ॥ सव्वस्स केवलिस्सवि । जुगवं
दो नत्थि उवउगा ॥ ७४ ॥ इदं सैद्धांतिकमतं । तार्किकाः केचनोचिरे ॥ स्यातामेवोपयोगौ
द्वा—वेकस्मिन् समयेऽर्हतः ॥ ७५ ॥ अन्यथा कर्मण इव । स्यादावारकता मिथः ॥ एकैक-
स्योपयोगस्या—न्योपयोगोदयद्रुहः ॥ ७६ ॥ यच्चैतयोः साद्यनंता—स्थितिरुक्तोपयोगयोः ॥ व्य-
र्था स्यात्साप्यनुदया—देकैकसमयांतरे ॥ ७७ ॥ अन्ये च केचन प्राहु—र्ज्ञानदर्शनयोरिह ॥
नास्ति केवलिनो भेदो । निःशेषावरणक्षयात् ॥ ७८ ॥ ज्ञानैकदेशः सामान्य—मात्रज्ञानं हि
दर्शनं ॥ तत्कथं देशतो ज्ञानं । संभवेत्सर्ववेदिनः ॥ ७९ ॥ इत्यादि । उक्तं च—❀ केइ भ-
णंति जुगवं । जाणइ पासइ य केवलि नियमा ॥ अन्ने एगंतरीयं । इच्छंति सुत्तवएसेणं ॥ १ ॥
अन्ने न चेव वीसुं । दंसणमिच्छंति जिणवरिंदस्स ॥ जंचिय केवलनाणं । तं चिय से दंसणं

विंति ॥ ७० ॥ अत्र च नूयान् युक्तिसंदर्नोऽस्ति, स तु नंदीवृत्तिसम्मत्यादिज्योऽवसेयः ॥

❀ अथ प्रकृतं–विनैताज्यां परः कश्चि–न्नोपयोगोऽर्हतां मतः ॥ ततः कथं नवेत्तेषां । म-
त्यादिज्ञानसंनवः ॥ ७१ ॥ इत्यादि प्रायोऽर्थतस्तत्वार्थनाष्यवृत्तिगतं ॥ अथ ज्ञानस्थितिर्द्वेधा
। प्रज्ञप्ता परमेश्वरैः ॥ साद्यनंता सादिसांता । तत्राद्या केवलस्थितिः ॥ ७२ ॥ शेषज्ञानानां
द्वितीया । तत्राद्यज्ञानयोर्लघुः ॥ अंतर्मुहूर्त्तमुत्कृष्टा । षट्षष्टिः सागराणि च ॥ ७३ ॥ इयं
चैवं–त्रयस्त्रिंशद्वार्द्धिमानौ । नवौ द्वौ विजयादिषु ॥ द्वाविंशत्यब्धिमानान् वा । नवांस्त्रीन-
च्युतादिषु ॥ ७४ ॥ कृत्वोत्कर्षाच्छिवं यायात् । सम्यक्त्वमथवा त्यजेत् ॥ सातिरेका नरनवैः
। षट्षष्टिर्वार्द्धयस्तदा ॥ ७५ ॥ यदाहुः–दोवारे विजयाइसु । गयस्सतिन्नचुए अहवताइं ॥ अ-
इरेगं नरनवियं । नाणाजीवाण सवद्धं ❀ ॥ ७६ ॥ अथोत्कृष्टावधिज्ञान–स्थितिरेषैव वर्णिता
॥ जघन्या चैकसमयं । सा त्वेवं परिनाव्यते ॥ ७७ ॥ यदा विनंगकज्ञानी । सम्यक्त्वं प्रति-
पद्यते ॥ तदा विनंगसमये । तस्मिन्नेवावधिर्नवेत् ॥ ७८ ॥ क्षणे द्वितीये तद्ज्ञानं । चेच्यवते-
न्मरणादिना ॥ तदा जघन्या विज्ञेया–वधिज्ञानस्थितिर्बुधैः ॥ ७९ ॥

संयतस्याप्रमत्तत्वे । वर्त्तमानस्य कस्यचित् ॥ मनोज्ञानं समुत्पद्य । द्वितीयसमये पतेत् ॥ ९० ॥ एवं मनःपर्यवस्य । स्थितिर्लघ्वी क्षणात्मिका ॥ देशोना पूर्वकोटी तु । महती सापि ज्ञाव्यते ॥ ९१ ॥ पूर्वकोट्यायुषो दीक्षा–प्रतिपत्तेरनंतरं ॥ मनोज्ञाने समुत्पन्ने । यावज्जीवं स्थिते च सा ॥ ९२ ॥ तत्र च—स्थितिर्लघ्वी ऋजुमति–मनोज्ञानव्यपेक्षया ॥ अन्यस्त्वप्रतिपातित्वा–दाकैवल्यं हि तिष्ठति ॥ ९३ ॥ केवलस्थितिरुक्तैव । साद्यनंतत्यनंतरं ॥ मत्यज्ञानश्रुताज्ञान–स्थितिस्त्रेधा भवेदथ ॥ ९४ ॥ अनाद्यनंताऽभव्यानां । भव्यानां द्विविधा पुनः ॥ अनादिसांता साद्यंता । तत्राद्या ज्ञानसंभवे ॥ ९५ ॥ सादिसांता पुनर्द्वेधा । जघन्योत्कृष्टभेदतः ॥ जघन्यांतर्मुहूर्त्तं स्यात् । सा चैवं परिभाव्यते ॥ ९६ ॥ जंतोर्भ्रष्टस्य सम्यक्त्वात् । पुनरंतर्मुहूर्त्ततः ॥ सम्यक्त्वलब्धौ लघ्वी स्या–दज्ञानद्वितयस्थितिः ॥ ९७ ॥ अनंतकालचक्राणि । कालतः परमास्थितिः ॥ देशोनं पुद्गलपरा–वर्त्तार्द्धं क्षेत्रतस्तु सा ॥ ९८ ॥ भावना—सम्यक्त्ववतः परिभ्रश्य । वनस्पत्यादिषु भ्रमन् ॥ सम्यक्त्वं लभतेऽवश्यं । कालेनैतावता पुनः ॥ ९९ ॥ जघन्या त्वेकसमयं । विभंगस्य स्थितिः किल ॥ उत्पद्य समयं स्थित्वा ।

भ्रश्यतः सा पुनर्भवेत् ॥ १००० ॥ त्रयस्त्रिंशत्सागराणि । विभंगावस्थितिर्गुरुः ॥ देशोनया पूर्वकोट्या–धिकानि तत्र भावना ॥ १ ॥ देशोनपूर्वकोट्यायुः । कश्चिदंगी विभंगवान् ॥ ज्येष्टायुरप्रतिष्ठाने । तिष्ठेद्विभंगसंयुतः ॥ २ ॥ इति ज्ञानस्थितिः ॥ अथांतरं—मत्यादिज्ञानतो भ्रष्टः । पुनः कालेन यावता ॥ ज्ञानमाप्नोति मत्यादि–ज्ञानानामंतरं हि तत् ॥ ३ ॥ अनंतकालचक्राणि । कालतः स्यान्मतिश्रुते ॥ देशोनं पुद्गलपरा–वर्त्तार्द्धं क्षेत्रतोंतरं ॥ ४ ॥

एवमेवावधिमनः–पर्यायज्ञानयोः परं ॥ अंतर्मुहूर्त्तमात्रं च । सर्वेष्वेष्वंतरं लघु ॥ ५ ॥ केवलस्यांतरं नास्ति । साद्यनंता हि तत्स्थितिः ॥ अनाद्यंतानादिसांते–ऽज्ञानद्वयेऽपि नांतरं ॥ ॥ ६ ॥ सादिसांते पुनस्तत्रा–धिकाः षट्षष्टिसागराः ॥ इयमुत्कृष्टसम्यक्त्व–स्थितिरेव तदंतरं ॥ ७ ॥ अंतरं स्याद्विभंगस्य । ज्येष्टं कालो वनस्पतेः ॥ अंतर्मुहूर्त्तमेतेषु । त्रिषु ज्ञेयं जघन्यतः ॥ ८ ॥ स्तोका मनोज्ञा अवधि–मंतोऽसंख्यगुणास्ततः ॥ मतिश्रुतज्ञानवंतो । मिथस्तुल्यास्ततोऽधिकाः ॥ ९ ॥ असंख्येयगुणास्तेभ्यो । विभंगज्ञानशालिनः ॥ केवलज्ञानिनोऽनंत–गुणास्तेभ्यः प्रकीर्त्तिताः ॥ १० ॥ तदनंतगुणास्तुल्या । मिथो द्व्यज्ञानवर्त्तिनः ॥ अप्य-

ष्स्वेषु पर्याया । अनंताः कीर्त्तिता जिनैः ॥ ११ ॥ सर्वेषां पर्यवा द्वेधा । स्वकीयापरभेदतः ॥
स्वधर्मरूपास्तत्र स्वे । परधर्मात्मकाः परे ॥ १२ ॥ क्षयोपशमवैचित्र्या–न्मतेरवग्रहादयः ॥
अनंतभेदाः षट्स्थान–पतितत्वाद्भवंति हि ॥ १३ ॥ षट्स्थानानि चैवं–संख्येयासंख्येयानंत–
भागैर्वृद्धिर्यथाक्रमं ॥ संख्येयासंख्येयानंत–गुणैर्वृद्धिरितीह षट् ॥ १४ ॥ अनंतासंख्यसंख्याना–
मनंतासंख्यसंख्यकाः ॥ भेदाः स्युरित्यनंतास्ते । मतिज्ञानस्य पर्यवाः ॥ १५ ॥ प्रतिज्ञेयं म-
तिज्ञानं । विभिद्येत यतोऽथवा ॥ ज्ञेयानंत्यात्ततोऽनंता । मतिज्ञानस्य पर्यवाः ॥ १६ ॥ नि-
र्विभागैः परिच्छेदै–श्छिन्नं कल्पनयाथवा ॥ अनंतखंडं भवती–त्यनंता मतिपर्यवाः ॥ १७ ॥
स्वेभ्योऽनंतगुणा ये च । संत्यर्थांतरपर्यवाः ॥ यतस्तत्रोपयुज्यंते । ततस्तेऽप्यस्य पर्यवाः ॥
॥ १८ ॥ यद्यप्यस्मिन्नसंबद्धा–स्तथाप्यस्योपयोगतः ॥ तेऽदसीया असंबद्ध–स्वोपयोगिधनादि-
वत् ॥ १९ ॥ आह च—❀ जइ ते परपज्जाया । न तस्स अह तस्स न परपज्जाया ॥ आ-
चार्यः प्राह–जं तंमि असंबद्धा । तो परपज्जायववदेसो ॥ २० ॥ चायसपज्जायविसे—सणा-
इणा तस्स जमुवजुज्जंति ॥ सधणमिवासंबद्धं । हवंति तो पज्जवा तस्स ॥ २१ ॥ चायत्ति

त्यागेन स्वपर्यायविशेषणादिना च परपर्याया घटादिपर्याया येन कारणेन तस्य ज्ञानस्योपयुज्यंते, उपयोगं यांति स्वपर्यायविशेषणादिना च परपर्याया घटादिपर्याया येन कारणेन तस्य ज्ञानस्योपयुज्यंते, उपयोगं यांति यतो घटादिसकलवस्तुपर्यायपरित्याग एव ज्ञानादिरर्थः सुज्ञातो भवतीति सर्वे पर्यायाः परित्यागमुखेनोपयुज्यंते, तथा परपर्यायसद्भाव एव एते स्वपर्याया इति विशेषयितुं शक्या इति स्वपर्यायविशेषणेन परपर्याय उपनज्यंत इतितात्पर्यं❀

श्रुतेऽप्यनंताः पर्यायाः । प्रोक्ताः स्वपरभेदतः ॥ स्वीयास्तत्र च निर्दिष्टा–स्तेऽक्षरानक्षरादयः ॥ २२ ॥ क्षयोपशमवैचित्र्या–द्विषयानंत्यतश्च ते ॥ श्रुतानुसारिबोधाना–मानंत्यात्स्युरनंतकाः ॥ २३ ॥ अविभागपरिच्छेदै–रनंता वा भवंति ते ॥ अनंताः परपर्याया । अप्यस्मिंस्ते तु पूर्ववत् ॥ २४ ॥ अथवा स्यात् श्रुतज्ञानं । श्रुतग्रंथानुसारतः ॥ श्रुतग्रंथश्चाक्षरात्मा । तान्यकारादिकानि च ॥ २५ ॥ तत्रैकैकमुदात्तानु–दात्तस्वरितभेदतः ॥ अल्पानल्पप्रयत्नानु–नासिकान्यविशेषतः ॥ २६ ॥ संयुक्तासंयुक्तयोग–द्व्यादिसंयोगभेदतः ॥ आनंत्याच्चाभिधेयानां । भिद्यमानमनंतधा ॥ २७ ॥ केवलो लभतेऽकारः । शेषवर्णयुतश्च यान् ॥ ते स-

र्वेऽस्य स्वपर्याया–स्तदन्ये परवर्यवाः ॥ २८ ॥ एवंच–अनंतस्वान्यपर्याय–मेकैकमक्षरं श्रुते ॥ पर्यायास्तेऽखिलद्रव्य–पर्यायराशिसम्मिताः ॥ २९ ॥ आहच–❀एक्केकमरकरं पुण। सपरपज्जायन्नेयन्नो भिन्नं ॥ तं सव्वदव्वपज्जाय–रासिमाणं मुणेयव्वं ॥ ३० ॥ जे लहइ केवलो। सेसवण्णसहिओ अ पज्जवेऽगारो ॥ ते तस्स पज्जाया। सेसा परपज्जवा तस्स ॥ ३१ ॥ अयं भावः–यान्पर्यायान् केवलोऽकारः शेषवर्णसहितश्च लभते, ते तस्य स्वपर्यायाः, शेषाः शेषवर्णसंबंधिनो घटाद्यपरपदार्थसंबंधिनश्च परपर्यायास्तस्याकारस्येति ॥ ❀

एवंविधानेकवर्ण–पर्यायौघैः समन्वितं ॥ ततश्चानंतपर्यायं। श्रुतज्ञानं श्रुतं श्रुते ॥३२॥ अथावधेः स्वपर्याया। विविधा या भिदोऽवधेः ॥ क्षायोपशमिकभव–प्रत्ययादिविभेदतः ॥ ३३ ॥ तिर्यग्नैरयिकस्वर्गि–नरादिस्वामिभेदतः ॥ अनंतभित्स्वविषय–द्रव्यपर्यायभेदतः ॥ ३४ ॥ असंख्यभित्स्वविषय–क्षेत्राद्यभेदतोऽपि च ॥ निर्विभागैर्विभागैश्च। ते चैवं स्युरनंतकाः ॥ ३५ ॥ एवं मनःपर्यवस्य। केवलस्य च पर्यवाः ॥ निर्विभागैर्विभागैः स्वे। स्वाम्यादिभेदतोऽपि च ॥ ३६ ॥ अनंतद्रव्यपर्याय–ज्ञानाच्च स्युरनंतकाः ॥ अज्ञानत्रितयेऽप्येवं।

ज्ञेया अनंतपर्यवाः ॥ ३७ ॥ परपर्यवास्तु सर्वत्र प्राग्वत् ॥ अष्टाप्येतानि तुल्यानि । व्यपेक्ष्य स्वान्यपर्यवान् ॥ यद्वक्ष्येऽल्पबहुत्वं त-दपेक्ष्य स्वीयपर्यवान् ॥ ३८ ॥ तत्र स्युः सर्वतः स्तोका । मनःपर्यायपर्यवाः ॥ मनोद्रव्यैकविषय-मिदं ज्ञानं भवेद्यतः ॥ ३९ ॥ एभ्योऽनंतगुणाः किं च । विभंगज्ञानपर्यवाः ॥ मनोज्ञानापेक्षया य-द्विभंगविषयो महान् ॥ ४० ॥ आरभ्य नवमग्रैवे-यकादासप्तमक्षितिं ॥ ऊर्ध्वाधः क्षेत्रके तिर्यक् । चासंख्यद्वीपवार्धिगे ॥ ४१ ॥ रूपिद्रव्याणि कतिचि-त्तत्पर्यायांश्च वेत्ति सः ॥ अनंतघ्नास्ते च मनो-ज्ञानज्ञेयव्यपेक्षया ॥४२॥

समस्तरूपिद्रव्याणि । प्रतिद्रव्यमसंख्यकान् ॥ भावान्वेत्तीत्यनंतघ्ना । विभंगापेक्षयावधौ ॥ ४३ ॥ अनंतगुणितास्तेभ्यः । श्रुताज्ञान इदं यतः ॥ सर्वमूर्त्तामूर्त्तद्रव्य-सर्वपर्यायगोचरं ॥ ॥ ४४ ॥ श्रुताज्ञानाविषयाणां । केषांचिद्विषयत्वतः ॥ स्पष्टत्वाच्च श्रुतज्ञाने । तेभ्यो विशेषतोऽधिकाः ॥ ४५ ॥ अभिलाप्यानभिलाप्य-विषयेऽनंतसंगुणाः ॥ मत्यज्ञाने श्रुतज्ञाना-दभिलाप्यैकगोचरात् ॥ ४६ ॥ मतिज्ञानपर्यवाश्च । ततो विशेषतोऽधिकाः ॥ मत्यज्ञानाविषयाणां । विषयत्वात् स्फुटत्वतः ॥ ४७ ॥ तेभ्योऽप्यनंतगुणिताः । केवलज्ञानपर्यवाः ॥ सर्वाद्धाभा-

विनिखिल–द्रव्यपर्यायन्नासनात् ॥ ४७ ॥ इति–ज्ञानं ॥ द्विरूपं हि नवेद्दस्तु । सामान्यतो विशेषतः ॥ तत्र सामान्यबोधो य–स्तद्दर्शनमिहोदितं ॥ ४९ ॥ यथा प्रथमतो दृष्टो । घटोऽयमिति बुध्यते ॥ तद्दर्शनं तद्विशेष–बोधो ज्ञानं नवेत्त्वतः ॥ ५० ॥ नपचारनयेनेदं । दर्शनं परिकीर्त्तितं ॥ विशुद्धनयतस्तच्चा–ऽनाकारज्ञानलक्षणं ॥ ५१ ॥ इदं साकारबोधात्प्रा–गवश्यमन्त्युपेयते ॥ अन्यथेदं किंचिदिति । स्यात्कुतोऽव्यक्तबोधनं ॥ ५२ ॥ अनेन च विनापि स्याद्बोधः साकार एव चेत् ॥ तदैकसमयेनैव । स्याद्घटादिविशेषवित् ॥ ५३ ॥ तथोक्तं तत्वार्थवृत्तौ–औपचारिकनयश्च ज्ञानप्रकारमेव दर्शनमिच्छति, शुद्धनयः पुनरनाकारमेव संगीरते दर्शनं, आकारवच्च विज्ञानं, आकारश्च विशेषनिर्देशो नावस्य पर्यायतः प्रोक्तस्य च दर्शनसमनंतरमेव संपद्यतेंतर्मुहूर्त्तकालान्नावित्वात्, आकारपरिज्ञानाच्च प्रागालोचनमवश्यमन्त्युपेयमन्यथा प्रथमत एव पश्यतः किमपीदमिति कुतोऽव्यक्तबोधनं स्यात्? यदि चालोचनमंतरेणाकारपरिज्ञानोत्पाद एव पुंसः स्यात्, तथा सत्येकसमयमात्रेण स्तंनकुंनादीन् विशेषान् गृह्णीयात् इति ॥ ❁ सामान्येनाववोधो य–श्चक्षुषा जायतेंगिनां तच्चक्षुर्दर्शनं प्राहु–स्तत्स्या-

दाचतुरिंद्रियान् ॥ ५४ ॥ यः सामान्यानबोधः स्या–च्चक्षुर्वर्जापरेंद्रियैः ॥ अचक्षुर्दर्शनंतत्स्यात् । सर्वेषामपि देहिनां ॥ ५५ ॥ तथोक्तं तत्वार्थवृत्तौ—❀ ॥ चक्षुर्दर्शनमित्यादि, चक्षुषादर्शनमुपलब्धिस्सामान्यार्थग्रहणं, स्कंधावारोपयोगवत्तदहर्जातबालदारकनयनोपलब्धिवद्वा व्युत्पन्नस्यापि, अचक्षुर्दर्शनं शेषेंद्रियैः श्रोत्रादिभिः सामान्यार्थग्रहणमिति ॥ ❀ येनावधेरुपयोगे । सामान्यमवबुध्यते ॥ अवधिज्ञानिनामेव । तत्स्यादवधिदर्शनं ॥ ५६ ॥ यथैवमवधिज्ञाने । भवन्त्यवधिदर्शनं ॥ एवं विभंगेऽप्यवधि–दर्शनं कथितं श्रुते ॥ ५७ ॥ अयं भावः—सम्यग्दृगवधिज्ञाने । सामान्यावगमात्मकं ॥ यथैतत्स्यात्तथा मिथ्या–दृग्विभंगेऽपि तद्भवेत् ॥५८॥ नाम्ना च कथितं प्राज्ञै–स्तदप्यवधिदर्शनं ॥ अनाकारत्वाविशेषा–द्विभंगदर्शनं न तत् ॥५९॥ अयं सूत्राभिप्रायः ॥ आहुः कार्मग्रंथिकास्तु । यद्यपि स्तः पृथक्पृथक् ॥ साकारेतरभेदेन । विभंगावधिदर्शने ॥ ६० ॥ तथापि मिथ्यारूपत्वा–न्न सम्यग्वस्तुनिश्चयः ॥ विभंगाद्भाप्यनाकार–त्वेनास्यावधिदर्शनात् ॥ ६१ ॥ ततोऽनेन दर्शनेन । पृथग्विवक्षितेन किं ॥ तत्कार्मग्रंथिकैर्नास्य । पृथगेतद्विवक्षितं ॥ ६२ ॥ तथोक्तं—❀ ॥ सुत्ते अ विभंगस्सय । परूवियं उ-

ह्विदंसणं बहुसो ।. कीसपुणो पन्निसिद्ध । कम्मपगडीपगरणंमि ॥ ६३ ॥ इत्याद्यधिकं विशेषणवत्याः प्रज्ञापनाष्टादशपदवृत्तितश्चावसेयं; तत्वार्थवृत्तिकृतापि विभंगज्ञानेऽवधिदर्शनं नांगीकृतं. तथा च तद्ग्रंथः—अवधिदृगावरणक्षयोपशमाद्विशेषाग्रहणविमुखोऽवधिरवधिदर्शनमित्युच्यते, नियमतस्तु तत्सम्यग्दृष्टिस्वामिकमिति ॥ ❁

सर्वं भूतभवद्भावि—वस्तुसामान्यभावतः ॥ बुध्यते केवलज्ञाना—दनुकेवलदर्शनात् ॥ ॥ ६४ ॥ आदौ दर्शनमन्येषां । ज्ञानं तदनुजायते ॥ केवलज्ञानिनामादौ । ज्ञानं तदनुदर्शनं ॥ ६५ ॥ अत एव ' सव्वन्नूणं, सव्वदरीसीणमिति ' पठ्यते. ॥ प्रक्रमाः सर्वतः स्तोका । जंतवोऽवधिदर्शनाः ॥ असंख्यगुणितास्तेभ्य—श्चक्षुर्दर्शनिनो मताः ॥ ६६ ॥ अनंतगुणितास्तेभ्यो । मताः केवलदर्शनाः ॥ अचक्षुर्दर्शनास्तेभ्यो—ऽप्यनंतगुणाधिकाः ॥ ६७ ॥ कालश्चक्षुर्दर्शनस्य । जघन्योंतर्मुहूर्त्तकं ॥ सातिरेकं पयोराशि—सहस्रं परमः पुनः ॥ ६८ ॥ अचक्षुर्दर्शनस्यासा—वभव्यापेक्षया भवेत् ॥ अनाद्यंतोऽनादिसांतो । भव्यानां सिद्धियायिनां ॥ ६९ ॥ जघन्येनैकसमयः । स्यात्कालोऽवधिदर्शने ॥ उत्कर्षतो द्विःषट्षष्टि—र्वार्धयः साधिका मताः ॥७०॥

ज्येष्ठो नन्ववधिज्ञान–कालः षट्षष्टिवार्धयः ॥ अवधेर्दर्शने तर्हि । यथोक्तो घटते कथं ॥७१॥
अत्रोच्यते–अवधौ च विभंगे चा–वधिदर्शनमास्थितं ॥ ततो द्वाभ्यां सद्भावा–द्युक्तः सोऽव-
धिदर्शने ॥ ७२ ॥ अत्र बहुवक्तव्यं, तत्तु प्रज्ञापनाष्टादशपदवृत्तितोऽवसेयं ॥ कालः सादिरनंत-
श्च । भवेत्केवलदर्शने । एषु कस्याप्यनादित्वं । नाचक्षुर्दर्शनंविना ॥ ७३ ॥ इति दर्शनं ॥ च-
तुष्टयी दर्शनानां । त्र्यज्ञानीज्ञानपंचकं ॥ अमी द्वादश निर्दिष्टा । उपयोगा बहुश्रुतैः ॥७४॥
ज्ञानपंचकमज्ञान–त्रयं साकारका अमी ॥ उक्ताः शेषास्त्वनाकारा–श्चतुर्दर्शनलक्षणाः ।७५।
इत्युपयोगाः ॥ आहारकाः स्युश्छद्मस्थाः । सर्वे वक्रगतिंविना ॥ त्रिचतुःसमयांता स्या–त्त-
त्रानाहारितापि च ॥ ७६ ॥ गतिर्द्विधाहि जंतूनां । प्रस्थितानां परं भवं ॥ सरला कुटिला
चापि । तत्रैकसमयादिमा ॥ ७७ ॥

उत्पत्तिदेशो यत्र स्या–त्समश्रेणिव्यवस्थितः ॥ तत्रैकसमयेनैव । ऋजुगत्यासुमान् व्रजे-
त् ॥ ७८ ॥ परजन्मायुराहारौ । क्षणेऽस्मिन्नेव सोऽश्नुते ॥ तुल्यमेतदृजुगतौ । निश्चयव्यव-
हारयोः ॥ ७९ ॥ द्वितीयसमये ऋज्व्या । व्यवहारनयाश्रयात् ॥ उदेति परजन्मायु–रिदं ता-

त्पर्यमत्र च ॥ ८० ॥ प्राग्भवांत्यक्षणो वक्रा–परिणामाभिमुख्यतः ॥ कैश्चिद्वक्रादिसमयो ।
गण्यते व्यवहारतः ॥ ८१ ॥ ततश्च—भवांतराद्यसमये । गतेस्त्वस्मिन् द्वितीयके ॥ समये
परजन्मायु–रुदेति खलु तन्मते ॥ ८२ ॥ यदाहुः—❀ उज्जुगइपढमसमये । परभवियं आ-
उग्रं तदाहारो ॥ वक्काइबीअसमये । परभवि आउं उदयमेइ ॥ ८३ ॥ निश्चयनयाश्रयाच्च–सं-
मुख्योंगी गतेर्यद्य–प्यंत्यक्षणे तथापि हि ॥ सत्त्वात्प्राग्भवसंबंधि–संघातपरिशाटयोः ॥ ८४ ॥
समयः प्राग्भवस्यैव । संभवेन्न पुनर्गतेः ॥ प्राच्यांगसर्वशाटोऽप्यू भवाद्यक्षण एव यत् ।८५।
परभवपढमे साडोत्ति आगमवचनात् ॥ उदेति समयेऽत्रैव । गतिः सह तदायुषा ॥ ततोऽ-
न्यजन्मायुर्वक्र–गतावप्यादिमक्षणे ॥ ८६ ॥ त्रिभिर्विशेषकं ॥ तत्र संघातपरिशाटस्वरूपं चैव-
मागमे ॥ संघातः परिशाटश्च । तौ द्वौ समुदिताविति ॥ औदारिकादिदेहानां । प्रकृतं कर-
णत्रयं ॥ ८७ ॥ सर्वात्मना पुद्गलाना–माद्ये हि ग्रहणं क्षणे ॥ चरमे सर्वथा त्यागो । द्विती-
यादिषु चोभयं ॥ ८८ ॥ यथा तप्ततापिकायां । सस्नेहायामपूपकः ॥ गृह्णाति प्रथमं स्नेहं
। सर्वात्मना न तु व्रजेत् ॥ ८९ ॥ ततश्च किंचिद् गृह्णाति । स्नेहं किंचित्पुनस्त्यजेत् ॥ संघा-

तद्भेदरूपत्वा-त्पुद्गलानां स्वभावतः ॥ ९० ॥ तथैव प्रथमोत्पन्नः । प्राणभृत्प्रथमक्षणे ॥ सर्वात्मनोत्पत्तिदेश-स्थितान् गृह्णाति पुद्गलान् ॥९१॥ ततश्चाभवपर्यंतं । द्वितीयादिक्षणेषु तु ॥ गृह्णंस्त्यजंश्च तान् कुर्यात् । संघातपरिशाटनं ॥ ९२ ॥ तत आयुःसमाप्तौ च । भाव्यायुःप्रथमक्षणे ॥ स्याच्छाट एव प्राग्देह-पुद्गलानां न तु ग्रहः ॥ ९३ ॥ औदारिकवैक्रियाहा-रकेषु स्युस्त्रयोऽप्यमी ॥ संघातपरिशाटः स्या-त्तैजसकार्मणे सदा ॥ ९४ ॥ अनादित्वाद्भवेन्नैव । संघातः केवलोऽनयोः ॥ केवलः परिशाटश्च । संभवेन्मुक्तियायिनां ॥ ९५ ॥ अत्र च भूयान् विस्तरोऽस्ति, स चावश्यकवृत्त्यादिभ्योऽवसेयः अथ प्रकृतं-वक्रा गतिश्चतुर्धा स्या-द्वक्रैरेकादिभिर्युता ॥ तत्राद्या द्विक्षणैकैक-क्षणवृद्ध्या क्रमात्पराः ॥ ९६ ॥ तथाहि-

यदोर्ध्वलोकपूर्वस्या । अधः श्रयति पश्चिमां ॥ एकवक्रा द्विसमया । ज्ञेया वक्रा गतिस्तदा ॥ ९७ ॥ समश्रेणिगतित्वेन । जंतुरेकेन यात्यधः ॥ द्वितीयसमये तिर्य-गुत्पत्तिदेशमाश्रयेत् ॥ ९८ ॥ पूर्वदक्षिणोर्ध्वदेशा-दधश्चेदपरोत्तरां ॥ व्रजेत्तदा द्विकुटिला । गतिस्त्रिसमयात्मिका ॥ ९९ ॥ एकेनाधस्समश्रेण्या । तिर्यगन्येन पश्चिमां ॥ तिर्यगेव तृतीयेन । वा-

यथ्यां दिशि याति सः ॥ ११०० ॥ त्रसानामेतदंतैव । वक्रा स्यान्नाधिका पुनः ॥ स्थावराणां चतुःपंच– समयांतापि सा भवेत् ॥ १ ॥ तत्र चतुःसमया त्वेवं–त्रसनाड्या बहिरधो–लोकस्य विदिशो दिशं ॥ यात्येकेन द्वितीयेन । त्रसनाड्यंतरे विशेत् ॥ २ ॥ ऊर्ध्वं याति तृतीयेन । चतुर्थे समये पुनः ॥ त्रसनाड्या विनिर्गत्य । दिश्यं स्वस्थानमाश्रयेत् ॥ ३ ॥ दिशो विदिशि याने तु । नाडीमाद्ये द्वितीयके ॥ ऊर्ध्वं चाधस्तृतीये तु । बहिर्विदिशि तुर्यके ॥४॥ यदोक्तरीत्या विदिशो । जायते विदिशि क्वचित् ॥ तदा तत्समयाधिक्यात् । स्यात्पंचसमया गतिः ॥ ५ ॥ उक्तं च—❀ विदिसाउ दिसं पढमे । बीए पइसरइ नाडिमझंमि ॥ उड्ढं तइए तुरिएउ । नीइ विदिसं तु पंचमए ॥ ६ ॥ इति भगवतीवृत्तौ शतक १४ प्रथमोद्देशके, भगवतीसप्तमशतकप्रथमोद्देशके तु पंचसामयिकीं विग्रहगतिमाश्रित्येदमुक्तं दृश्यते, इदं च सूत्रे न दर्शितं, प्रायेणाभमनुत्पत्तिरिति. ॥

❀ व्यवहारापेक्षया च । भवेदाहारकोऽसुमान् ॥ गतौ किलैकवक्रायां । समयद्वितयेऽपि हि ॥ ७ ॥ तथाहि समये पूर्वे । शरीरमेष उत्सृजेत् ॥ तस्मिन्पुनस्तच्छरीर–योग्याः केच-

न पुद्गलाः ॥ ८ ॥ लोमाहारेण संबंध–मायांति जीवयोगतः ॥ औदारिकादिपुद्गला–दानं चाहार उच्यते ॥ ए ॥ एवमत्राद्यसमये । आहारः परिज्ञावितः ॥ सर्वत्रैव द्विवक्रादा–वप्याद्यक्षण आहृतिः ॥ १० ॥ द्वितीयसमये चासा–वुत्पत्तिदेशमापतेत् ॥ तदा तद्भवयोग्याणून् । यथासंभवमाहरेत् ॥ ११ ॥ द्विवक्रा तु त्रिसमया–मध्यस्तत्र निराहृतिः ॥ आद्यंतयोः समययो–राहारः पुनरुक्तवत् ॥ १२ ॥ एवं त्रिचतुर्वक्रे । चतुःपंचक्षणात्मके ॥ मध्यास्तयोर्निराहाराः । साहारावादिमांतिमौ ॥ १३ ॥ यदाहुः–❀ इगडुतिचउवक्कासु । दुगाइसमयेसु परभववाहारो ॥ दुगवक्काइसु समया । इगदो तिन्नि उ अणाहारा ॥ १४ ॥ ❀ निश्चयनये तु–भवस्य भाविनः पूर्वे । क्षणे प्राग्वपुषा सह ॥ असंबंधादनाप्त्या च । भाविनोंगस्य नाहृतिः ॥ ॥ १५ ॥ द्वितीयसमये तु स्वं । स्थानं प्राप्याहरेत्ततः ॥ समयः स्यादनाहार–एकवक्रगतावपि ॥ १६ ॥ अन्यस्यां द्वावनाहारौ । तृतीयस्यां त्रयस्तथा ॥ चतुर्थ्यामपि चत्वारः । साहारोंत्योऽखिलासु यत् ॥ १७ ॥ ततश्च व्यवहारेणो–त्कर्षतः समयास्त्रयः ॥ निश्चयेन तु चत्वारो । निराहाराः प्रकीर्त्तिताः ॥ १८ ॥ सामान्यात्सर्वतः स्तोका । निराहाराः शरीरिणः ॥ आ-

॥

हारका असंख्येय–गुणास्तेभ्यः प्रकीर्त्तिताः ॥ १ए ॥

त्रिविधश्च स आहार । उजआहार आदिमः ॥ लोमाहारो द्वितीयश्च । प्रक्षेपाख्यस्तृतीयकः ॥ २० ॥ तत्राद्यं हेतुमुत्सृज्य । ऋज्व्या कुटिलयाथवा ॥ गत्वोत्पत्तिस्थानमाप्य । प्रथमे समयेऽसुमान् ॥ २१ ॥ तैजसकार्मणयोगे–नाहारयति पुजलान् ॥ औदारिकाद्यंगयोग्यान् । द्वितीयादिक्षणेष्वथ ॥ २२ ॥ औदारिकादिमिश्रेण–रब्धत्वाद्वपुषस्ततः ॥ यावब्छरीरनिष्पत्ति–रंतर्मुहूर्त्तकालिकी ॥ २३ ॥ युग्मं ॥ यदाहुः—❀ तेएण कम्मएणं । आहारेइ अणंतरं जीवो । तेण परं मीसेणं । जाव सरीरस्स निप्फत्ती ॥ २४ ॥ स सर्वोऽप्योजआहार । उजो देहाहपुजलाः ॥ उजो वा तैजसः काय–स्तद्रूपस्तेन वा कृतः ॥ २५ ॥ शरीरोपष्टंभकानां । पुजलानां समाहृतिः ॥ त्वगिंद्रियादिस्पर्शेन । लोमाहारः स उच्यते ॥ २६ ॥ मुखे कवलनिक्षेपा–दसौ कावलिकाभिधः ॥ एकेंद्रियाणां देवानां । नारकाणां च न ह्यसौ ॥ २७ ॥ जीवाः सर्वेऽप्यपर्याप्ता । उजआहारिणो मताः ॥ देहपर्याप्तिपर्याप्ता । लोमाहाराः समेंगिनः ॥२८॥ उजसोऽनाभोग एव । लोमस्त्वाभोगजोऽपि च ॥ एकेंद्रियाणां लोमोऽपि । स्यादनाभोग ए-

व हि ॥ २९ ॥ तथोक्तं संग्रहणीवृत्तौ—❀ एकेंद्रियाणामतिस्तोकापटुमनोऽव्यक्तलब्धीनामाभोगमांद्याद्वस्तुतोऽनाभोगनिर्वर्त्तित एव, यदागमः–' एगेंदियाणं नो आभोगवित्तिए अणाभोगनिव्वत्तिए इति '–इत्याहारः ॥ ( छिकणोनोभवः क्षुल्लो । जघन्या कायसंस्थितिः ॥ आहारित्वे गरिष्टा च । कालचक्राण्यसंख्यशः ॥ ३० ॥ ) ❀ ॥ गुणानामगुणस्थाना—न्यमूनि च चतुर्दश ॥ वच्मि स्वरूपमेतेषा–मन्वर्थव्यक्तिपूर्वकं ॥ ३१ ॥ तथाहुः—❀ मिच्छे सासणमीसे । अविरय देसे पमत्त अपमत्ते ॥ नियट्टी अनियट्टी सुहुमु–वसम खीण सजोगि अजोगि गुणा ॥ ३२ ॥ ❀ गुणा ज्ञानादयस्तेषां । स्थानं नाम स्वरूपभित् ॥ शुद्ध्यशुद्धिप्रकर्षाप–कर्षकृतात्र प्रकीर्त्यते ॥ ३३ ॥ तत्र मिथ्याविपर्यस्ता । जिनप्रणीतवस्तुषु ॥ दृष्टिर्यस्य प्रतिपत्तिः । स मिथ्यादृष्टिरुच्यते ॥ ३४ ॥ यत्तु तस्य गुणस्थानं । सम्यग्दृष्टिमबिभ्रतः ॥ मिथ्यादृष्टिगुणस्थानं । तदुक्तं पूर्वसूरिभिः ॥ ३५ ॥ ननु मिथ्यादृशां दृष्टे–र्विपर्यासात्कुतो भवेत् ॥ ज्ञानादिगुणसद्भावो । यद् गुणस्थानतोच्यते ॥ ३६ ॥ अत्र ब्रूमः—भवेद्यद्यपि मिथ्यात्व–वतामसुमतामिह ॥ प्रतिपत्तिर्विपर्यस्ता । जिनप्रणीतवस्तुषु ॥ ३७ ॥ तथापि का-

चिन्मनुज–पश्वादिवस्तुगोचरा ॥ तेषामप्यविपर्यस्ता । प्रतिपत्तिर्भवेद् ध्रुवं ॥ ३८ ॥ आस्ता-
मन्ये मनुष्याद्या । निगोददेहिनामपि ॥ अस्त्यव्यक्तस्पर्शमात्र–प्रतिपत्तिर्यथास्थिता ॥ ३९ ॥
यथा घनघनछन्ने–ऽर्केऽपि स्यात्कापि तत्प्रभा ॥ अनावृत्ता न चेद्रात्रि–दिनाभेदः प्रसज्यते ॥
॥ ४० ॥ इति प्रथमगुणस्थानं ॥ आयमौपशमिकाख्यं । सम्यक्त्वस्यात्र सादयेत् ॥ योऽनं-
तानुबंधिकषा–योदयः सायसादनः ॥ ४१ ॥ उत्कर्षादावलीषट्कात् । सम्यक्त्वमपगच्छति ॥
अनंतानुबंध्युदये । जघन्यात्समयेन यत् ॥ ४२ ॥ पृषोदरादित्वाच्चलोपे । यकारस्य भवेत्पदं ॥
आसादनमित्यनंता–नुबंध्युदयवाचकं ॥ ४३ ॥ ततश्च—आसादनेन युक्तो यः । स सासादन
उच्यते ॥ स चासौ सम्यग्दृष्टिस्तद् । गुणस्थानं द्वितीयकं ॥ ४४ ॥ तच्चैवं–प्रागुक्तस्यौपश-
मिक–सम्यक्त्वस्य जघन्यतः ॥ शेषे क्षणे षट्सु शेषा–सूत्कर्षादावलीष्वथ ॥ ४५ ॥ महा-
विभीषिकोत्थान–कल्पः केनापि हेतुना ॥ कस्याप्यनंतानुबंधि–कषायाभ्युदयो भवेत् ॥४६॥
अथैतस्मिन्ननंतानु–बंधिनामुदये सति ॥ सासादनसम्यग्दृष्टि–गुणस्थानं स्पृशत्यसौ ॥ ४७ ॥
यद्दिवोपशमश्रेण्याः । स्याद्दिदं पतितांगिनः ॥ सम्यक्त्वस्यौपशमिक–स्यांते कस्यापि पूर्ववत्

॥४८॥ तत ऊर्ध्वं च मिथ्यात्व—मवश्यमेव गच्छति ॥ पतन् द्वितीयसोपाना—दाद्यमेव हि गच्छति ॥ ४९ ॥ नाम्ना सास्वादनसम्यग्—दृग्गुणस्थानमप्यदः ॥ उच्यते तत्र चान्वर्थो । मतिमद्भिरयं स्मृतः ॥ ५० ॥ उद्वम्यमानसम्यक्त्वा—स्वादेनेन सहास्ति यः ॥ स हि सास्वादनसम्यग्—दृष्टिरित्यभिधीयते ॥ ५१ ॥ यथाहि भुक्तं क्षीरान्न—मुद्वमन्मक्षिकादिना ॥ किंचिदास्वादयत्येव । तद्रसं व्यग्रमानसः ॥ ५२ ॥ तथायमपि मिथ्यात्वा—भिमुखो भ्रांतमानसः ॥ सम्यक्त्वमुद्वमन्नास्वा—दयेत्किंचन तद्रसं ॥ ५३ ॥ इति द्वितीयं—

पूर्वोक्तपुंजत्रितये । स यद्यर्धविशुद्धकः ॥ समुदेति तदा तस्यो—दयेन स्याच्छरीरिणः ॥ ॥ ५४ ॥ श्रद्धा जिनोक्ततत्वेऽर्ध—विशुद्धासौ तदोच्यते ॥ सम्यग्मिथ्यादृष्टिरिति । गुणस्थानं च तस्य तत् ॥ ५५ ॥ अंतर्मुहूर्तं कालोऽस्य । तत ऊर्ध्वं स देहभृत् ॥ अवश्यं याति मिथ्यात्वं । सम्यक्त्वमथवाप्नुयात् ॥ ५६ ॥ इति तृतीयं ॥ सावद्ययोगाविरतो । यः स्यात्सम्यक्त्ववानपि ॥ गुणस्थानमविरत—सम्यग्दृष्ट्याख्यमस्य तत् ॥५७॥ पूर्वोक्तमौपशमिकं । शुद्धपुंजोदयेन वा ॥ क्षायोपशमिकाभिख्यं । सम्यक्त्वं प्राप्तवानपि ॥ ५८ ॥ सम्यक्त्वं क्षायिकं

वासो । क्षीणदर्शनसप्तकः ॥ कलयन्नपि सावद्य–विरतिं मुक्तिदायिनीं ॥ ५९ ॥ नैवाप्रत्या-
ख्याननाम–कषायोदयविघ्नतः ॥ स देशतोऽपि विरतिं । कर्त्तुं पालयितुं क्षमः ॥ ६० ॥ इति
चतुर्थं ॥ स्थूलसावद्यविरमा–द्यो देशविरतिं श्रयेत् ॥ स देशविरतस्तस्य । गुणस्थानं तदु-
च्यते ॥ ६१ ॥ सर्वसावद्यविरतिं । जानतोऽप्यस्य मुक्तिदां ॥ तदावृतौ प्रत्याख्याना–वरणा
यांति विघ्नतां ॥ ६२ ॥ इति पंचमं ॥ संयतस्सर्वसावद्य–योगेभ्यो विरतोऽपि यः ॥ कषाय-
निद्राविकथा–दिप्रमादैः प्रमाद्यति ॥ ६३ ॥ स प्रमत्तः संयतोऽस्य । प्रमत्तसंयताभिधं ॥ गु-
णस्थानं प्राक्तनेभ्यः । स्याद्विशुद्धिप्रकर्षभृत् ॥ ६४ ॥ वक्ष्यमाणेभ्यश्च तेभ्यः । स्याद्विशु-
द्ध्यपकर्षभृत् ॥ शुद्धिप्रकर्षापकर्षा–वेवं भाव्यौ परेष्वपि ॥ ६५ ॥ इतिषष्ठं ॥

यश्च निद्राकषायादि–प्रमादरहितो यतिः ॥ गुणस्थानं भवेत्तस्या–प्रमत्तसंयताभिधं
॥ ६६ ॥ इति सप्तमं ॥ स्थितिघातो रसघातो । गुणश्रेणिस्तथा परा ॥ गुणानां संक्रमश्चैव
। बंधो भवति पंचमः ॥ ६७ ॥ एषां पंचानामपूर्वं । करणं प्रागपेक्षया ॥ भवेद्यस्यासावपूर्व–
करणो नाम कीर्त्तितः ॥ ६८ ॥ गरीयस्याः स्थितेर्ज्ञाना–वरणीयादिकर्मणां ॥ योऽपवर्त्तनया

घातो । स्थितिघातः स उच्यते ॥ ६९ ॥ कर्मद्रव्यस्यकटुक–त्वादिकस्य रसस्य हि ॥ योऽप-वर्त्तनया घातो । रसघातः स कीर्त्यते ॥ ७० ॥ एतौ पूर्वगुणस्थाने–ष्वल्पावेव करोति सः ॥ विशुद्ध्यल्पतयास्मिंस्तु । महांतौ शुद्धिवृद्धितः ॥ ७१ ॥ यत्प्रागाश्रित्य दलिक–रचनां तां ल-घीयसीं ॥ चकार कालतो द्राघी–यसीं शुद्ध्यपकर्षतः ॥ ७२ ॥ अस्मिंस्त्वाश्रित्य दलिक–रचनां तां प्रथीयसीं ॥ करोति कालतोऽल्पां त–दपूर्वां प्रागपेक्षया ॥ ७३ ॥ तथा बध्यमान-शुभ–प्रकृतिष्वशुभात्मनां ॥ तासामबध्यमानानां । दलिकस्य प्रतिक्षणं ॥ ७४ ॥ असंख्य-गुणवृद्ध्या यः । क्षेपः स गुणसंक्रमः ॥ तमप्यपूर्वं कुर्वीत । सोऽत्र शुद्धिप्रकर्षतः ॥ ७५ ॥ स्थितिं द्राघीयसीं पूर्व–गुणस्थानेषु बद्धवान् ॥ अशुद्धत्वादिह पुन–स्तामपूर्वां विशुद्धितः ॥ ॥ ७६ ॥ पल्यासंख्येयभागेन । हीनहीनतरां सृजेत् ॥ तद् गुणस्थानमस्य स्या–दपूर्वकरणा-भिधं ॥ ७७ ॥ अष्टभिः कुलकं ॥ क्षपकश्चोपशमक–श्चेत्यसौ भवति द्विधा ॥ क्षपणोपशमा-र्हत्वा–देवायं प्रोच्यते तथा ॥ ७८ ॥

न यद्यपि क्षपयति । न चोपशमयत्ययं ॥ तथाप्युक्तस्तथा राज्या–र्हः कुमारो यथा नृ-

पः ॥ ७९ ॥ अंतर्मुहूर्त्तमानाया । अपूर्वकरणस्थितेः ॥ आद्य एव क्षण एत—द्गुणस्थानंप्रपन्न-
कान् ॥ ८० ॥ त्रैकालिकांगिनोऽपेक्ष्य । जघन्यादीन्यसंख्यशः ॥ स्थानान्यध्यवसायस्यो—
त्कृष्टांतानि भवंति हि ॥ ८१ ॥ असंख्यलोकाकाशांश—मितानि स्युरमूनि च ॥ ततोऽधिका-
धिकानि स्यु—र्द्वितीयादिक्षणेषु तु ॥ ८२ ॥ आद्ये क्षणे यज्जघन्यं । ततोऽनंतगुणोज्ज्वलं ॥ भ-
वेदाद्यक्षणोत्कृष्टं । ततोऽनंतगुणाधिकं ॥ ८३ ॥ क्षणे द्वितीये जघन्य—मेवमंत्यक्षणावधि ॥
मिथः षट्स्थानपतिता—न्येकक्षणभवानि तु ॥ ८४ ॥ समकालं प्रपन्नानां । गुणस्थानमिदं
खलु ॥ बहूनां भव्यजीवानां । वर्त्तते यत्परस्परं ॥ ८५ ॥ तद्रूपाध्यवसाय—स्थानव्यावृत्ति-
लक्षणा ॥ निवृत्तिस्तुतन्निवृत्त्या—मप्येतत्कीर्त्यते बुधैः ॥ ८६ ॥ इत्यष्टमं ॥ तथा—परस्पराध्य-
वसाय—स्थानव्यावृत्तिलक्षणा ॥ निवृत्तिर्यस्य नास्त्येषोऽ—निवृत्त्याख्योऽसुमान् भवेत् ॥८७॥
तथा किट्टीकृतसूक्ष्म—संपरायव्यपेक्षया ॥ स्थूलो यस्यास्त्यसौ स स्या—द्बादरसंपरायकः ॥
॥ ८८ ॥ ततः पदद्वयस्यास्य । विहिते कर्मधारये ॥ स्यात्सोऽनिवृत्तिबादर—संपरायाभिध-
स्ततः ॥ ८९ ॥ तस्यानिवृत्तिबादर—संपरायस्य कीर्त्तितं ॥ गुणस्थानमनिवृत्ति—बादरसंपराय-

कं ॥ ९० ॥ अंतर्मुहूर्त्तमानस्य । यावंतोऽस्य क्षणाः खलु ॥ तावंत्येवाध्यवसाय–स्थानान्याहुर्जिनेश्वराः ॥ ९१ ॥ अस्मिन्यदेकसमये । प्राप्तानां भूयसामपि ॥ एकमेवाध्यवसाय–स्थानकं कीर्त्तितं जिनैः ॥ ९२ ॥ अनंतगुणशुद्धं च । प्रतिक्षणं यथोत्तरं ॥ स्थानमध्यवसायस्य । गुणस्थानेऽत्र कीर्त्तितं ॥ ९३ ॥ क्षपकश्चोपशमक–श्चेत्यसौ भवति द्विधा ॥ क्षपयेद्वोपशमये–द्वासौ यन्मोहनीयकं ॥ ९४ ॥ इति नवमं ॥ सूक्ष्मः कीट्टीकृतो लोभ–कषायोदयलक्षणः ॥ संपरायो यस्य सूक्ष्म––संपरायः स भच्यते ॥ ९५ ॥ क्षपकश्चोपशमक–श्चेति स्यात्सोऽपि हि द्विधा ॥ गुणस्थानं तस्य सूक्ष्म–संपरायाभिधं स्मृतं ॥ ९६ ॥ इति दशमं ॥ येनोपशमिता विद्य––माना अपि कषायकाः ॥ नीता विपाकप्रदेशो–दयादीनामयोग्यतां ॥ ९७ ॥ भपशांतकषायस्य । वीतरागस्य तस्य यत् ॥ छद्मस्थस्य गुणस्थानं । तदाख्यातं तदाख्यया ॥ ९८ ॥ असौ ह्युपशमश्रेण्या–रंभेऽनंतानुबंधिनः ॥ कषायान् डागविरतो । देशेन विरतोऽथवा ॥ ९९ ॥ प्रमत्तो वाऽप्रमत्तः सन् । शमयित्वा ततः परं ॥ दर्शनमोहत्रितयं । शमयेदथ शुद्धधीः ॥ ११०० ॥ ❀ कर्मग्रंथावचूरौ तु इहोपशमश्रेणिकृदप्रमत्तयतिरेव, केचिदाचा-

र्यां अविरतदेशविरतप्रमत्ताप्रमत्तयतीनामन्यतम इत्याहुरिति दृश्यते. ❀ अयंत्युपशमश्रेणि-
माद्यं संहननत्रयं ॥ दधाना नार्धनाराचा-दिके संहननत्रये ॥ १ ॥ तथोक्तं—

उपशमश्रेणिस्तु प्रथमसंहननत्रयेणारुह्यते, इतिकर्मस्तववृत्तौ ❀ परिवृत्तिशतान् कृत्वा-सौ प्रमत्ताप्रमत्तयोः ॥ गत्वा चापूर्वकरण-गुणस्थानं ततः परं ॥ २ ॥ क्लीबस्त्रीवेदौ हास्यादि-षट्कं पुंवेदमप्यथ ॥ क्रमात्प्रत्याख्यानाप्रत्या-ख्यानसंज्वलनाः क्रुधः ॥ ३ ॥ तथैव त्रिविधं मानं । मायां च त्रिविधां तथा ॥ द्वितीयतृतीयौ लोभौ । विंशतिः प्रकृतीरिमाः ॥ ४ ॥ शमयित्वा गुणस्थाने । नवमे दशमे ततः ॥ शमी संज्वलनं लोभं । शमयत्यतिदुर्जयं ॥ ५ ॥ एकं क्षणं जघन्येनो-त्कर्षेणांतर्मुहूर्त्तकं ॥ उपशांतकषायः स्या-दूर्ध्वं च नियमात्ततः ॥ ६ ॥ अद्धाक्षयाद्भवांताद्वा । पतत्यद्धाक्षयात्पुनः ॥ पतन्पश्चानुपूर्व्यासौ । याति यावत्प्रमत्तकं ॥ ७ ॥ गुणस्थानद्वयं याति । कश्चित्ततोऽप्यधस्तनं ॥ कश्चित्सासादनभावं । प्राप्य मिथ्यात्वमप्यहो ॥ ८ ॥ पतितश्च भवे नास्मिन् । सिद्ध्येदुत्कर्षतो वसेत् ॥ देशोनपुद्गलपरा-वर्त्तार्द्धं कोऽपि संसृतौ ॥ ९ ॥ तथोक्तं महाभाष्ये-❀ जइ उवसंतकसाउ । लहइ

अणंतं पुणोवि पमिवायं ॥ न हु भे वीससियव्वं । थोवे वि कसायसेसंमि ॥९॥ ❀ भवक्षया-
द्यः पतति । आद्य एव क्षणे स तु ॥ सर्वाण्यपि बंधनादि–करणानि प्रवर्त्तयेत् ॥ १० ॥ ब-
द्धायुरायुःक्षयतो । म्रियते श्रेणिगो यदि ॥ अनुत्तरसुरेष्वेष । नियमेन तदोद्भवेत् ॥ ११ ॥ त-
थोक्तं भाष्यवृत्तौ—❀

❀ यदि बद्धायुरुपशमश्रेणिं प्रतिपन्नः श्रेणिमध्यगतगुणस्थानवर्त्ती वा उपशांतमोहो
वा भूत्वा कालं करोति, तदा नियमेनानुत्तरसुरेष्वेवोत्पद्यते इति. ❀ गुणस्थानस्यास्य प्रोक्ता
। स्थितिरेकं क्षणं लघुः ॥ अनुत्तरेषु व्रजतः । सा ज्ञेया जीवितक्षयात् ॥ १२ ॥ कुर्यादुपश-
मश्रेणि–मुत्कर्षादेकजन्मनि ॥ द्वौ वारौ चतुरो वारां–श्चांगी संसारमावसन् ॥ १३ ॥ श्रेणि-
रेकैवैकभवे । भवेत्सिद्धांतिनां मते ॥ क्षपकोपशमश्रेण्योः । कर्मग्रंथमते पुनः ॥ १४ ॥ कृ-
तैकोपशमश्रेणिः । क्षपकश्रेणिमाश्रयेत् ॥ भवे तत्र द्विःकृतोप–शमश्रेणिस्तु नैव तां ॥१५॥
इति कर्मग्रंथलघुवृत्तौ ॥ इत्येकादशं ॥ क्षीणाः कषाया यस्य स्युः । स स्यात् क्षीणकषाय-
कः ॥ वीतरागश्छद्मस्थश्च । गुणस्थानं यदस्य तत् ॥ १६ ॥ क्षीणकषायछद्मस्थ–वीतरागाह्वयं

न्नवेत् ॥ गुणस्थानं केवलित्व–ङंगाधिगमंगोपुरं ॥ १७ ॥ तत्र च–श्रेष्टसंहननो वर्षा–ष्टकाधिकवया नरः ॥ सद्ध्यानः क्षपकश्रेणि–मप्रमादः प्रपद्यते ॥ १८ ॥ तथोक्तं कर्मग्रंथलघुवृत्तौ–

❀ क्षपकश्रेणिप्रतिपन्नो मनुष्यो वर्षाष्टकोपरिवर्त्ती अविरतादीनामन्यतमोऽत्यंतशुद्धपरिणाम उत्तमसंहननः, तत्र पूर्वविदप्रमत्तः शुक्लध्यानोपगतोऽपि, केचन धर्मध्यानोपगत इत्याहुः। विविशेषावश्यकवृत्तौ च पूर्वधरोऽप्रमत्तः शुक्लध्यानोपगतोऽप्येतां प्रतिपद्यते, शेषास्त्वविरतादयो धर्मध्यानोपगता इति निर्णयः। तत्क्रमश्चायं—

स तुर्यादिगुणस्थान–चतुष्कान्यंतरेंतयेत् ॥ अंतर्मुहूर्त्ताद्युगपत्। प्रागनंतानुबंधिनः ॥१९॥ ततः क्रमेण मिथ्यात्वं। मिश्रं सम्यत्त्वमंतयेत् ॥ उच्यते कृतकरणः। क्षीणेऽस्मिन् सप्तके च सः ॥ २० ॥ बद्धायुः क्षपकश्रेण्या–रंभकश्चेन्निवर्त्तते ॥ अनंतानुबंधिनाशा–नंतरं जीवितक्षयात् ॥ २१ ॥ तदा मिथ्यात्वोदयेन। भूयोऽनंतानुबंधिनः ॥ बध्नाति मिथ्यात्वरूप–तद्बीजस्याविनाशतः ॥ २२ ॥ क्षीणे मिथ्यात्वबीजे तु। भूयोऽनंतानुबंधिनां ॥ न बंधोऽस्ति क्षितिरुहो। बीजे दग्धे हि नांकुरः ॥ २३ ॥ सूरेपूत्पद्यतेऽवश्यं। बद्धायुः क्षीणसप्तकः ॥ चेत्त-

दानीमपतित–परिणामो म्रियेत सः ॥ २४ ॥ निपतत्परिणामस्तु । बद्धायुर्म्रियते यदि ॥ गतिमन्यतमां याति । स विशुद्ध्यनुसारतः ॥ २५ ॥ बद्धायुष्कोऽथाकृतायुः । क्षपको म्रियते न चेत् ॥ नियमात्सप्तके क्षीणे । विश्राम्यति तथाप्यसौ ॥ २६ ॥

सकलक्षपकश्चाथ । विधाय सप्तकक्षयं ॥ क्षयं नयेत्स्वर्नरक–तिर्यगायूंष्यतः परं ॥ २७ ॥ प्रत्याख्यानाप्रत्या–ख्यानाष्टकमंतयेद्गुणे नवमे ॥ तस्मिन्नर्द्धक्षपिते । क्षपयेदिति षोडशप्रकृतीः ॥ २८ ॥ तिर्यग्नरकस्थावर–युगलान्युद्योतमातपं चैव ॥ स्त्यानर्द्धित्रयसाधा–रणविकलैकाक्षजातीश्च ॥ २९ ॥ ❀ अत्र तिर्यग् युगलं तिर्यग्गतितिर्यगानुपूर्वीरूपं, नरकयुगलं नरकगतिनरकानुपूर्वीरूपं, स्थावरयुगलं स्थावरसूक्ष्माख्यमिति ज्ञेयं. ❀ अर्धदग्धेंधनो वह्नि–र्दहेत्प्राप्यैंधनांतरं ॥ क्षपकोऽपि तथात्रांतः । क्षपयेत्प्रकृतीः पराः ॥ ३० ॥ कषायाष्टकशेषं च । क्षपयित्वांतयेत्क्रमात् ॥ क्लीवस्त्रीवेदहास्यादि–षट्कपूरुषवेदकान् ॥ ३१ ॥ एष सूत्रादेशः, अन्ये पुनराहुः–❀ षोडश कर्माण्येव पूर्वं क्षपयितुमारभन्ते, केवलमपांतरालेऽष्टौ कषायान् क्षपयति, पश्चात्षोडशकर्माणीति कर्मग्रंथवृत्तौ ❀ क्रमः पुंस्यारंभकेयं । स्त्री तु क्षपयति क्रमा-

त् ॥ क्लीवपुंवेदहास्यादि-षट्कं स्त्रीवेदमेव च ॥ ३२ ॥ क्लीवस्त्वारंभको नूनं । स्त्रीवेदं प्रथमं क्षिपेत् ॥ पुंवेदं हास्यषट्कं च । नपुंवेदं ततः क्रमात् ॥ ३३ ॥ ततः संज्वलनक्रोध-मानमायाश्च सोंतयेत् ॥ ततः संज्वलनं लोभं । क्षपयेद्दशमे गुणे ॥ ३४ ॥ लोभे च मूलतः क्षीणे । निस्तीर्णो मोहसागरं ॥ विश्राम्यति स तत्रांत-मुहूर्तं क्षपको मुनिः ॥ ३५ ॥ तथोक्तं भाष्ये -❀ खीणे खवगनियट्ठो । वीसमए मोहसागरं तरिउं ॥ अंतोमुहुत्तमुदहिं । तरिउं थाहेश जहा पुरिसो ॥३६॥ गतोऽथ द्वादशे क्षीण-कषायाख्ये गुणेऽसुमान् निद्रां ॥ सप्रचलां चास्यां-तयेदंत्यादिमक्षणे ॥ ३७ ॥ पंच ज्ञानावरणानि । चतस्रो दर्शनावृतीः ॥ पंचविघ्नांश्च क्षणेंत्ये । क्षपयित्वा जिनो भवेत् ॥ ३८ ॥ एवं च-अष्टचत्वारिंशदाद्यं । शतं प्रकृतयोऽत्र याः ॥ सत्तायामभवंस्तासु । षट्चत्वारिंशतः क्षयात् ॥ ३९ ॥ द्व्याद्यं शतं प्रकृतयो-ऽवशिष्टा दशमे गुणे ॥ क्षीणमोहद्विचरम-क्षणावध्येकयुक्शतं ॥ ४० ॥ सत्तायां नवनवतिः । क्षीणमोहांतिमक्षणे ॥ चतुर्दशक्षयादत्र । पंचाशीतिः सयोगिनि ॥ ४१ ॥ ततो योगिद्विचरम—क्षणे द्वासप्ततिक्षयः ॥ अयोगिनः क्षणेंत्ये च । शेषत्रयोदशक्षयः ॥ ४२ ॥ अत्र भाष्यं—❀

❀ आवरणक्षयसमये । निट्ठइ य नन्यस्स केवलुप्पत्ती ॥ तत्तोणंतरसमए । ववहारो केवलं भणइ ॥ ४३ ॥ ❀ योगो नामात्मनो वीर्यं । तत्स्याद्वाधिविशेषतः ॥ वीर्यांतरायक्षय-ण-क्षयोपशमसंभवात् ॥ ॥ ४४ ॥ योगो द्विधा सकरणो-ऽकरणश्चेति कीर्त्तितः ॥ तत्र केवलिनो ज्ञेय-दृश्येष्वखिलवस्तुषु ॥ ४५ ॥ उपयुंजानस्य किल । केवले ज्ञानदर्शने ॥ योऽसावप्रतिघो वीर्य-विशेषोऽकरणः स तु ॥ ४६ ॥ अयं च नात्राधिकृतो । योगः सकरणस्तु यः ॥ मनोवाक्कायकरण-हेतुकोऽधिकृतोऽत्र सः ॥ ४७ ॥ केवल्युपेतस्तैर्योगैः । सयोगीकेवली भवेत् ॥ सयोगिकेवल्याख्यं स्या-द्गुणस्थानं च तस्य यत् ॥ ४८ ॥ मनोवाक्कायजाश्चैवं । योगाः केवलिनोऽपि हि ॥ भवंति कायिकस्तत्र । गमनागमनादिषु ॥४९॥ वाचिको यंतमाननां । जिनानां देशनादिषु ॥ भवत्येवं मनोयोगो-ऽप्येषां विश्वोपकारिणां ॥५०॥ मनःपर्यायवद्भिर्वा । देवैर्वानुत्तरादिभिः ॥ पृष्टस्य मनसार्थस्य । कुर्वतां मनसोत्तरं ॥ ५१ ॥ द्विचत्वारिंशतः कर्म-प्रकृतीनामिहोदयः ॥ जिनेंद्रस्यापरस्यैक-चत्वारिंशत एव च ॥ ५२ ॥ औदारिकांगोपांगे च । शुभान्यखगतिद्वयं ॥ अस्थिरं चाशुभं चेति । प्रत्येकं च स्थिरं शुभं

॥ ५३ ॥ संस्थानषट्कमगुरु–लघूपघातमेव च ॥ पराघातोच्छ्वासवर्ण–गंधस्पर्शरसा इति ॥
॥ ५४ ॥ निर्माणाद्यसंहनने । देहे तैजसकार्मणे ॥ असातसातान्यतरत् । तथा सुस्वरदुःस्वरे
॥ ५५ ॥ एतासां त्रिंशतः कर्म–प्रकृतीनां त्रयोदशे ॥ गुणस्थाने व्यवच्छेद । उदयापेक्षया भवेत्
॥ ५६ ॥ भाषापुद्गलसंघात–विपाकित्वादयोगिनि ॥ नोदयो दुःस्वरनाम–सुस्वरनामकर्मणोः
॥ ५७ ॥ शरीरपुद्गलदल–विपाकित्वादयोगिनि ॥ शेषा न स्युः काययोगा–भावात्प्रकृतय-
स्त्विमाः ॥ ५८ ॥ ततश्च–यशः सुभगमादेयं । पर्याप्तं त्रसबादरे ॥ पंचाक्षजातिर्मनुजा–युर्ग-
त्यौ जिननाम च ॥ ५९ ॥ उच्चैर्गोत्रं तथासाता–सातान्यतरदेव च ॥ अंत्यक्षणावध्युदया ।
द्वादशैता अयोगिनः ॥ ६० ॥ नास्ति योगोऽस्येत्ययोगी । तादृशो यश्च केवली ॥ गुणस्थानं
भवेत्तस्या–योगिकेवलिनामकं ॥ ६१ ॥ तच्चैवं—अंतर्मुहूर्त्तशेषायुः । सयोगी केवली किल ॥
लेश्यातीतं प्रतिपित्सु–र्ध्यानं योगान् रुणाद्धि सः ॥ ६२ ॥ तत्र पूर्वं बादरेण । काययोगेन बा-
दरौ ॥ रुणाद्धि वाग्मनोयोगौ । काययोगं ततश्च तं ॥ ६३ ॥ सूक्ष्मक्रियं चानिवृत्ति–शुक्लध्या-
नं विभावयन् ॥ रुंध्यात्सूक्ष्मांगयोगेन । सूक्ष्मौ मानसवाचिकौ ॥ ६४ ॥ रुणद्ध्यथो काय-

योगं । स्वात्मनैव च सूक्ष्मकं ॥ स स्यात्तदा त्रिभागोन–देहव्यापिप्रदेशकः ॥६५॥ शुक्लध्या-
नं समुच्छिन्न–क्रियमप्रतिपाति च ॥ ध्यायन्पंचह्रस्ववर्णो–च्चारमानं स कालतः ॥ ६६ ॥ शै-
लेशीकरणं याति । तच्च प्राप्तो भवत्यसौ ॥ योगव्यापाररहितो–ऽयोगी सिद्ध्यत्यसौ ततः ॥६७॥

गत्यानुपूर्व्यौ देवस्य । शुभान्यखगतिद्वयं ॥ द्वौ गंधावष्ट च स्पर्शा । रसवर्णांगपंचकं
॥ ६८ ॥ तथा पंच बंधनानि । पंच संघातनान्यपि ॥ निर्माणं षट् संहनना–न्यस्थिरं वा शु-
भं तथा ॥ ६९ ॥ दुर्भगं च दुःस्वरं चा–नादेयमयशोऽपि च ॥ संस्थानषट्कमगुरु–लघूप-
घातमेव च ॥ ७० ॥ पराघातमथोच्छ्वास–मपर्याप्ताभिधं तथा ॥ असातसातयोरेकं । प्रत्ये-
कं च स्थिरं शुभं ॥ ७१ ॥ उपांगत्रितयं नीचै–र्गोत्रसुस्वरमेव च ॥ अयोग्युपांतसमये । इ-
ति द्वासप्ततेः क्षयः ॥ ७२ ॥ मनुजस्य गतिश्चायु–श्चानुपूर्वीति च त्रयं ॥ त्रसबादरपर्याप्त—
यशांसीति चतुष्टयं ॥ ७३ ॥ उच्चैर्गोत्रमथादेयं । सुभगं जिननाम च ॥ असातसातयोरेकं ।
जातिः पंचेंद्रियस्य च ॥ ७४ ॥ त्रयोदशैताः प्रकृतीः । क्षपयित्वांतिमे क्षणे ॥ अयोगिकेवली
सिद्ध्ये–न्निर्मूलगतकल्मषः ॥ ७५ ॥ मतांतरेऽत्रानुपूर्वी । क्षिपत्युपांतिमक्षणे ॥ ततस्त्रिसप्त-

तिं तत्र । द्वादशांत्ये क्षणे क्षिपेत् ॥ ७६ ॥ आद्यं द्वितीयं तुर्यं च । गुणस्थानान्यमूनि वै ॥
गछंतमनुगछंति । परलोके शरीरिणं ॥ ७७ ॥ मिश्रदेशविरत्यादी–न्येकादश पराणि च ॥ स-
र्वथात्र परित्यज्य । जीवा यांति परं भवं ॥ ७८ ॥

तत्र मिश्रे स्थितः प्राणी । मृतिं नैवाधिगछति ॥ स्युर्देशविरतादीनि । यावज्जीवावधीनि
च ॥ ७९ ॥ यत्तृतीयं गुणस्थानं । द्वादशं च त्रयोदशं ॥ विनान्येष्वेकादशसु । गुणेषु म्रिय-
तेऽसुमान् ॥ ८० ॥ स्तोका एकादशगुण–स्थिता उत्कर्षतोऽपि यत् ॥ चतुःपंचाशदेवामी ।
युगपत्संभवंति हि ॥ ८१ ॥ तेभ्यः संख्यगुणाः क्षीण–मोहास्तेऽष्टयुक्शतं ॥ युगपत्स्युरष्ट-
माद्वि–त्रिगुणस्थास्ततोऽधिकाः ॥ ८२ ॥ मिथस्तुल्याश्च यच्छ्रेणि–द्वयस्था अपि संगताः ॥
स्युर्द्वाषष्ट्युत्तरशतं । प्रत्येकं त्रिषु तेषु ते ॥ ८३ ॥ योग्यप्रमत्तप्रमत्ता–स्तेभ्यः संख्यगुणाः क्र-
मात् ॥ यत्ते मिताः कोटिकोटि–शतकोटिसहस्रकैः ॥ ८४ ॥ पंचमस्था द्वितीयस्था । मिश्रा-
श्चाविरताः क्रमात् ॥ प्रत्येकं स्युरसंख्येय–गुणास्तेभ्यस्त्वयोगिनः ॥ ८५ ॥ स्युरनंतगुणा मि-
थ्या–दृशस्तेभ्योऽप्यनंतकाः ॥ इदमल्पबहुत्वं स्यात् । सर्वत्रोत्कर्षसंभवे ॥ ८६ ॥

विपर्ययोऽप्यन्यथा स्यात् । स्तोकाः स्युर्जातुचिद्यथा ॥ उत्कृष्टशांतमोहेभ्यो । जघन्याः क्षीणमोहकाः ॥ ८४ ॥ एवं सास्वादनादिष्वपि भाव्यं ॥ मिथ्यात्वं कालतोऽनादि–सांतं स्यात्सादिसांतकं ॥ अनाद्यनंतं च न त–त्साद्यनंतं तु संभवेत् ॥ ८८ ॥ स्यादाद्यं तत्र भव्या–ना–मनाप्तपूर्वसद्दृशां ॥ द्वितीयं प्राप्य सम्यक्त्वं । पुनर्मिथ्यात्वमीयुषां ॥ ८९ ॥ स्यात्तृतीयमभव्यानां । सदा मिथ्यात्ववर्तिनां ॥ आनंत्यासंभवात्सादे–स्तुर्यं युक्तमसंभवि ॥ ९० ॥ सासादनं चोक्तमेव । षडावलिमितं पुरा ॥ तुर्यं मितं समधिक–त्रयस्त्रिंशत्पयोधिभिः ॥ ॥ ९१ ॥ सर्वार्थसिद्धदेवत्वे । त्रयस्त्रिंशत्पयोनिधीन् ॥ धृत्वाऽविरतसम्यक्त्वं । ततोऽत्राप्यागतोऽसकौ ॥ ९२ ॥

यावदद्यापि विरतिं । नाप्नोति तावदेष यत् ॥ तुर्यमेव गुणस्थान–मुररीकृत्य वर्त्तते ॥ ॥ ९३ ॥ किंचिन्न्यूननवाब्दोन–पूर्वकोटिमिते मते ॥ त्रयोदशं पंचमं च । गुणस्थाने उभे अपि ॥ ९४ ॥ अंतिमं ङञणनमे–त्येवंरूपैः किलाक्षरैः ॥ अविलंबात्वरतयो–च्चारितैः प्रमितं भवेत् ॥ ९५ ॥ आंतर्मुहूर्त्तिकानि स्युः । शेषाण्यष्टाप्यमूनि च ॥ केचिदूचुर्न्यूनपूर्व–कोटिके

षष्ठसप्तके ॥ ए६ ॥ तथोक्तं भगवतीसूत्रे—❀ पमत्तसंजयस्स णं पमत्तसंजमवट्टमाणस्स सव्वाविणं पमत्तद्धाकालन केवच्चिरं होइ? मंमिआ एगजीवं पडुच्च जह एगं समयं नक्कोसं देसूणा पुव्वकोडी, णाणाजीवे पडुच्च सव्वद्धा, अस्यवृत्तिः—जह एक्कं समयंति कथं नुच्यते, प्रमत्तसंयतप्रतिपत्तिसमयसमनंतरमेव मरणात्, देसूणा पुव्वकोडित्ति, किल प्रत्येकमंतर्मुहूर्त्तप्रमाणे एव प्रमत्ताप्रमत्तगुणस्थाने, ते च पर्यायेण जायमाने देशोनपूर्वकोटिं यावडुत्कर्षेण नवतः महांति चाप्रमत्तापेक्षया प्रमत्तांतर्मुहूर्त्तानि कल्प्यंते, एवं चांतर्मुहूर्त्तप्रमाणानां प्रमत्ताद्धानां सर्वासां मिलने देशोनपूर्वकोटीकालमानं नवति, अन्ये चाहुरष्टवर्षोनां पूर्वकोटिंयावडुत्कर्षतः प्रमत्तता स्यात्, एवमप्रमत्तसूत्रमपि. नवरं, जह अंतमुहुत्तंति, किलाप्रमत्ताद्धायां वर्त्तमानस्यांतर्मुहूर्त्तमध्ये मृत्युर्नन्नवतीति, चूर्णिकारमतं तु प्रमत्तसंयतवर्जः सर्वोऽपि सर्वविरतोऽप्रमत्त नुच्यते, प्रमादान्नावात् स चोपशमश्रेणिं प्रतिपद्यमानो मुहूर्त्ताभ्यंतरे कालं कुर्वन् जघन्यकालो लभ्यते इति, देशोनपूर्वकोटी तु केवलिनमाश्रित्येति ॥ ❀ यन्निर्दिष्टं जिनाधीशै—रेकजीवव्यपेक्षया ॥ त्यक्त्वा पुनः प्राप्तिरूप—मथैषामुच्यतेंतरं ॥ ए६ ॥ जघन्यं सासादनस्य ।

षड्यासंख्यांशसंमितं ॥ शेषेषु च दशानां स्या–दंतर्मुहूर्त्तमंतरं ॥ ९७ ॥ मिथ्यात्वस्य तदु
त्कृष्टं । द्विःषट्षष्टिः पयोधयः ॥ साधिकाः कथितास्तत्र । श्रूयतां भावना त्वियं ॥ ९८ ॥ अ
नुभूय स्थितिं कश्चित् । सम्यक्त्वस्य गरीयसीं ॥ मिश्रं ततोंतर्मुहूर्त्त–मनुभूय ततः पुनः ॥
॥ ९९ ॥ षट्षष्टयंभोनिधिमितां । सम्यक्त्वस्य गुरुस्थितिं ॥ समाप्य कोऽपि मिथ्यात्वं । जा-
तु याति तदा हि तत् ॥ १३०० ॥ देशोनपुद्गलपरा–वर्त्तार्द्धप्रमितं मतं ॥ द्वितीयादीनां दशा-
नां । गुणानां ज्येष्टमंतरं ॥ १ ॥ क्षपकस्यांतरं जातु । न स्यात्त्रिष्वष्टमादिषु ॥ सकृत्प्राप्तेः
क्षीणमोहा–दित्रयेऽप्यंतरं न हि ॥ २ ॥ इति गुणाः ॥ दशपंचाधिका योगाः । सप्त स्युस्त-
त्र कायिकाः ॥ चत्वारो मानसोद्भूता–स्तावंत एव वाचिकाः ॥ ३ ॥ औदारिकस्तन्मिश्रः
स्या–द्वैक्रियस्तेन मिश्रितः ॥ आहारकस्तन्मिश्रः । सप्तमस्तैजसकार्मणः ॥ ४ ॥ पर्याप्तानां
नृतिरश्चा–मौदारिकाभिधो भवेत् ॥ स्यात्तन्मिश्रस्तु पर्याप्ता–पर्याप्तानां तथोच्यते ॥ ५ ॥
कार्मणेन वैक्रियेणा–हारकेणेति च त्रिधा ॥ औदारिकमिश्रकाय–योगं योगीश्वरा जगुः ॥
॥ ६ ॥ औदारिकांगनामादि–तादृक्कर्मनियोगतः ॥ उत्पत्तिदेशं प्राप्तेन । तिरश्चा मनुजेन वा

॥ ७ ॥ यदौदारिकमारब्धं । न च पूर्णीकृतं न्नवेत् ॥ तावदौदारिकमिश्रः । कार्मणेन सह ध्रुवं ॥ ८ ॥

तथा चोक्तं निर्युक्तिकारेण शस्त्रपरिज्ञाध्ययने—❀तेएण कम्मएणं । आहारेइ अणंतरं जीवो ॥ तेण परं मिस्सेणं । जाव सरीरस्स निप्फत्ती ॥ ए ॥❀ ननु मिश्रत्वमुन्नय—निष्ट-मौदारिकं यथा ॥ मिश्रं न्नवेत्कार्मणेन । तथा तेनापि कार्मणं ॥ १० ॥ ततश्चौदारिकमिश्र-मेवेदं कथमुच्यते ॥ अस्य कार्मणमिश्रत्व—मपि किं नान्निधीयते ॥ ११ ॥ अत्राहुः—आसंसारं कार्मणस्या—वस्थितत्वेन सर्वदा ॥ सकलेष्वपि देहेषु । संन्नवेदस्य मिश्रता ॥ १२ ॥ ततश्च—कार्मणमिश्रमित्युक्ते । निर्णेतुं नैव शक्यते ॥ किमौदारिकसंबंधि । किं वापरशरीरजं ॥१३॥ औदारिकस्य चोत्पत्तिं । समाश्रित्य प्रधानता ॥ कादाचित्कतया चास्य । प्रतिपत्तिरसंशया ॥ १४ ॥ तदौदारिकमिश्रत्व—व्यपदेशोऽस्य यौक्तिकः ॥ न तु कार्मणमिश्रत्व—व्यपदेशस्तथा-विधः ॥ १५ ॥ यदाप्यौदारिकदेह—धरो वैक्रियलब्धिमान् ॥ पंचाक्षतिर्यङ्मर्त्यश्च । पर्याप्तो बादरानिलः ॥ १६ ॥ वैक्रियांगमारन्नते । न च पूर्णीकृतं न्नवेत् ॥ तदौदारिकमिश्रः स्या—दै-

क्रियेण सह ध्रुवं ॥ १७ ॥ एवमाहारकारंज्ञ—काले तल्लब्धिशालिनः ॥ सहाहारकदेहेन । मिश्र औदारिको ज्ञवेत् ॥ १८ ॥ यद्यप्यत्रोज्ञयत्रापि । मिथस्तुल्यैव मिश्रता ॥ तथाप्यारंज्ञकत्वेनौ—दारिकस्य प्रधानता ॥ १९ ॥ तत औदारिकेणैव । व्यपदेशो द्वयोरपि ॥ न वैक्रियाहारकाज्यां । व्यपदेशो ज़िनैः कृतः ॥ २० ॥

मतं सिद्धांतिनामेतत् । कर्मग्रंथविदः पुनः ॥ वैक्रियाहारकमिश्रे । एव प्राहुरिमे क्रमात् ॥ २१ ॥ यदारंज्ञे वैक्रियस्य । परित्यागेऽपि तस्य ते ॥ वदंति वैक्रियं मिश्र—मेवमाहारकेऽपि च ॥ २२ ॥ वैक्रियदेहपर्याप्त्या । पर्याप्तस्य शरीरिणः ॥ वैक्रियः काययोगः स्या—त्तन्मिश्रस्तु द्विधा ज्ञवेत् ॥ २३ ॥ योऽपर्याप्तदशायां स्या—न्मिश्रो नारकनाकिनां ॥ योगः समं कार्मणेन । स स्याद्वैक्रियमिश्रकः ॥ २४ ॥ तथा यदा मनुष्यो वा । तिर्यक्पंचेंद्रियोऽथवा ॥ वायुर्वा वैक्रियं कृत्वा । कृतकार्योऽथतत्त्यजन् ॥ २५ ॥ औदारिकशरीरांतः—प्रवेष्टुं यतते तदा ॥ योगो वैक्रियमिश्रः स्या—त्सममौदारिकेण च ॥ २६ ॥ मिश्रीज्ञावो यदप्यत्रोज्ञयनिष्ठस्तथाप्यसौ ॥ प्राधान्याद्वैक्रियेणैव । ख्यातो नौदारिकेण तु ॥ २७ ॥ प्राधान्यं तु वै-

क्रियस्य । प्राज्ञैर्निरूपितं ततः ॥ औदारिके तु प्रवेश—एतस्यैव बलेन यत् ॥ २८ ॥ आहार-
कांगपर्याप्त्या । पर्याप्तानां शरीरिणां ॥ आहारकः काययोगः । स्याच्चतुर्दशपूर्विणां ॥ २९ ॥
आहारकवपुः कृत्वा । कृतकार्यस्य तत्पुनः ॥ त्यक्त्वा स्वांगे प्रविशतः । स्यादाहारकमिश्रकः
॥ ३० ॥ द्वयोः समेऽपि मिश्रत्वे । बलेनाहारकस्य यत् ॥ औदारिकेऽनुप्रवेश—स्तेनेदं व्यप-
दिश्यते ॥ ३१ ॥ तैजसं कार्मणं चेति । द्वे सदा सहचारिणी ॥ ततो विवक्षितः सैको । यो-
गस्तैजसकार्मणः ॥ ३२ ॥ जंतूनां विग्रहगता—वयं केवलिनां पुनः ॥ समुद्घाते समयेषु ।
स्यात्तृतीयादिषु त्रिषु ॥ ३३ ॥ एवं निरूपिताः सप्त । योगाः कायसमुद्भवाः ॥ अथ चित्तव-
चोजातां—श्चतुरश्चतुरो ब्रुवे ॥ ३४ ॥ सत्योमृषासत्यमृषा । न सत्यो न मृषापि च ॥ मनो-
योगश्चतुर्धैवं । वाग्योगोऽप्येवमेव च ॥ ३५ ॥ तत्र च—

संत इत्यभिधीयंते । पदार्था मुनयोऽथवा ॥ तेषु साधुहितं सत्य—मसत्यं च ततोऽन्य-
था ॥ ३६ ॥ पदार्थानां हितं तत्र । यथावस्थितचिंतनात् ॥ मुनीनां च हितं यस्मा—न्मोक्ष-
मार्गैकसाधनं ॥ ३७ ॥ स्वतो विप्रतिपत्तौ वा । वस्तु स्थापयितुं किल ॥ सर्वज्ञोक्तानुसारेण

। चिंतनं सत्यमुच्यते ॥ ३० ॥ यथास्ति जीवः सदस–द्रुपो व्याप्य स्थितस्तनुं ॥ जोक्ता स्व-
कर्मणां सत्य–मित्यादिपरिचिंतनं ॥ ३ए ॥ प्रश्ने विप्रतिपत्तौ वा । स्वन्नावाद्भुतवस्तुषु ॥ वि-
कल्प्यते जैनमतो–त्तीर्णं यत्तदसत्यकं ॥ ४० ॥ नास्ति जीवो यथैकांत–नित्योऽनित्यो महा-
नणुः ॥ अकर्त्ता निर्गुणोऽसत्य–मित्यादिपरिचिंतनं ॥ ४१ ॥ किंचित्सत्यमसत्यं वा । यत्स्या-
दुन्नयधर्मयुक् ॥ स्यात्तत्सत्यमृषान्निख्यं । व्यवहारनयाश्रयात् ॥ ४२ ॥ यथान्यवृक्षमिश्रेषु ।
बहुष्वशोकशाखिषु ॥ अशोकवनमेवेद–मित्यादिपरिचिंतनं ॥ ४३ ॥ सत्त्वात्कतिपयाशोक–
तरूणामत्र सत्यता ॥ अन्येषामपि सन्नावा–न्नवेदसत्यतापि च ॥ ४४ ॥ न्नवेदसत्यमेवेदं । नि-
श्चयापेक्षया पुनः ॥ विकल्पितस्वरूपस्या–सन्नावादिह वस्तुनः ॥ ४५ ॥ विनार्थप्रतिष्ठां च ।
स्वरूपमात्रचिंतनं ॥ उक्तलक्षणायोगा–न्न सत्यं न मृषा च तत् ॥ ४६ ॥ यथा चैत्राद्याच-
नीया । गौरानेयो घटस्ततः ॥ पर्यालोचनमित्यादि । स्यादसत्यामृषान्निधं ॥ ४७ ॥ व्यवहा-
रापेक्षयैव । पृथगेतदुदीर्यते ॥ निश्चयापेक्षया सत्ये । सत्येवांतर्न्नवेदिदं ॥ ४० ॥ तथाहि–गौ-
र्याच्येत्यादिसंकल्पं । दंन्नेन विदधीत चेत् ॥ अंतर्न्नवेत्तदाऽसत्ये । सत्ये पुनः स्वन्नावतः ॥४ए॥ स-

वैमेतद्भावनीयं । वाग्योगेऽप्यविशेषतः ॥ भाविताश्चिंतने भेदा । भाष्यास्तेऽत्र तु जल्पने ॥ ॥ ५० ॥ एवं मनोवचोयोगाः । स्युः प्रत्येकं चतुर्विधाः ॥ ततो योगाः पंचदश । व्यवहारनयाश्रयात् ॥ ५१ ॥ किमु कश्चिद्विशेषोऽस्ति । भाषावाग्योगयोर्ननु ॥ भाषाधिकारो यत्प्रोक्तः । सूत्रे वाग्योगतः पृथक् ॥ ५२ ॥ अत्रोच्यते—

युज्यते इति योगः स्या—दितिव्युत्पत्तियोगतः ॥ भाषाप्रवर्त्तको जंतु—यतो वाग्योग उच्यते ॥ ५३ ॥ भाषात्वेनापादिता या । भाषार्हद्रव्यसंततिः ॥ सा भाषा स्यादतो भेदो । भाषावाग्योगयोः स्फुटः ॥ ५४ ॥ तथोक्तमावश्यकबृहद्वृत्तौ—❀ गिण्हइय काइएणं । निसिरइ तह वाइएण जोगेणंति ❀ अत्र कश्चिदाह—❀ तत्र कायिकेन गृह्णातीत्येतद्युक्तं, तस्यात्मव्यापाररूपत्वात्, निसृजति तु कथं वाचिकेन कोऽयं वाग्योग इति, किं वागेव व्यापारापन्ना, आहोश्वित्तद्विसर्गहेतुः कायसंरंभ इति । यदि पूर्वो विकल्पः स खल्वयुक्तस्तस्यायोगत्वानुपपत्तेस्तथा च न वाक्केवला जीवव्यापारस्तस्याः पुद्गलमात्रपरिणामरूपत्वात्, रसादिवत्, योगश्चात्मनः शरीरवतो व्यापार इति, न च तया भाषा निसृज्यते, किंतु सैव निसृ-

ज्यत इत्युक्तं । अथ द्वितीयः पक्षः, ततः स कायव्यापार एवेति कृत्वा कायिकेनैव निसृजतीत्यापन्नमनिष्टं चैतदत्रोच्यते, नाभिप्रायापरिज्ञानादिह तनुयोगविशेष एव वाग्योगो मनोयोगश्चेति कायव्यापारशून्यस्य सिद्धवत्तदभावात्ततश्चात्मनः शरीरव्यापारे सति येन शब्दद्रव्योपादानं करोति स कायिकः, येन तु कायसंरंभेण तान्येव मुंचति स वाचिक इति । तथा येन मनोद्रव्याणि मन्यते स मानस इति । कायव्यापार एवायं व्यवहारार्थं त्रिधा विभक्त इत्यतोऽदोषः ॥❀

अथ प्रसंगतो भाषा—स्वरूपं वच्मि सापि हि ॥ चतुर्विधोक्तन्यायेन । सत्यासत्यादिभेदतः ॥ ५४ ॥ संतो जीवादयो भावाः । संतो वा मुनयोऽथवा ॥ मूलोत्तरगुणास्तेभ्यो । हिता सत्याभिधीयते ॥ ५५ ॥ अयं भावः—मुक्तिमार्गाराधनीया । सा गीः सत्योच्यते हिता ॥ सा तु सत्याप्यसत्यैव । यान्येषामहितावहा ॥ ५६ ॥ असत्या तु भवेद्भाषा । मुक्तिमार्गविराधनी ॥ द्विस्वभावा तृतीयांत्या । नाराधनविराधनी ॥ ५७ ॥ उक्तं च—❀ सच्चा हिया सयामिह । संतो मुणयो गुणा पयत्था वा ॥ तव्विवरीया मोसा । मीसा जा तदुभयसहावा ॥ ५८ ॥ अ

एहिगया जातीसुवि सद्दोच्चिय केवलो असवमोसा इति ❀ तत्र सत्या दशविधा । प्रज्ञप्ता परमर्षिभिः ॥ एभिः प्रकारैर्दशभि–र्वदन्न स्याद्विराधकः । ५९ ॥ तथाहुः–❀ जणवय सम्मयठवणा । नामे रूवे पडुच्च सच्चे अ ॥ ववहारभावजोगे । दसमेउवम्मसच्चे अ ॥ १ ॥ ❀ तस्मिंस्तस्मिन् जनपदे । वचोऽर्थप्रतिपत्तिकृत् ॥ सत्यं जानपदं पिच्चं । कोंकणादौ यथा पयः ॥ ६० ॥ भवेत्संमतसत्यं त–द्यत्सर्वजनसंमतं ॥ यथान्येषां पंकजत्वेऽ–प्यरविंदं हि पंकजं ॥ ॥ ६१ ॥ तद्भवेत्स्थापनासत्यं । स्थापितं तत्प्रतीतिकृत् ॥ यथैककः पुरो बिंदु–द्वययुक्तः शतं भवेत् ॥ ६२ ॥ अर्हदादिविकल्पेन । कर्म लेप्यादिकं हि यत् ॥ स्थाप्यते तदपि प्राज्ञैः । स्थापनासत्यमीरितं ॥ ६३ ॥ यद्यस्य निर्मितं नाम । नामसत्यं तु तद्भवेत् ॥ अवर्धयन्नपि कुलं । यथा स्यात्कुलवर्द्धनः ॥ ६४ ॥ तत्तद्वेषाद्युपादाना–द्रूपसत्यं भवेदिह ॥ यथात्तमुनिनेपथ्यो । दांभिकोऽप्युच्यते मुनिः ॥ ६५ ॥ वस्त्वंतरं प्रतीत्य स्या–द्दीर्घताह्रस्वतादिकं ॥ यदेकत्र तत्प्रतीत्यं । सत्यमुक्तं जिनेश्वरैः ॥ ६६ ॥ दैर्घ्यं यथानामिकाया । अधिकृत्य कनिष्ठिकां ॥ तस्या एव च ह्रस्वत्वं । मध्यमामधिकृत्य तु ॥ ६७ ॥ यथा चैत्रस्य पुत्रत्वं । स्यात्तत्पितुरपेक्ष-

या ॥ पितृत्वमपि तस्यैव । स्वपुत्रस्य व्यपेक्षया ॥ ६८ ॥ विवक्षया यल्लोकानां । तत्सत्यं व्यवहारतः ॥ गलत्यमत्रं शिखरी । दह्यतेऽनुदरा कनी ॥ ६९ ॥ भूनृत्तत्स्थतृणादीना—ममत्रोदकयोरपि ॥ अविज्ञेदं विवक्षित्वा । लोको ब्रूते तथाविधं ॥ ७० ॥

संज्ञोगबीजप्रज्ञवो—दराज्ञावे वदंति च ॥ कन्यामनुदरां सत्य—मित्यादिव्यवहारतः ॥ ॥ ७१ ॥ ज्ञावो वर्णादिकस्तेन । सत्यं नु ज्ञावतो यथा ॥ नैकवर्णोऽपि नीलस्य । प्रबलत्वाच्छुको हरित् ॥ ७२ ॥ स्थूलस्कंधेषु सर्वेषु । सर्वे वर्णरसादयः ॥ निश्चयाद्व्यवहारस्तु । प्रबलेन प्रवर्त्तते ॥ ७३ ॥ योगोऽन्यवस्तुसंबंधो । योगसत्यं ततो ज्ञवेत् ॥ छत्रयोगाद्यथा छत्री । छत्राज्ञावेऽपि कर्हिचित् ॥ ७४ ॥ हृद्यं साधर्म्यमौपम्यं । तेन सत्यं तु ज्ञूयसा ॥ काव्येषु विदितं यद्व—त्तटाकोऽयं पयोधिवत् ॥ ७५ ॥ मृषाज्ञाषापि दशधा । क्रोधमानविनिःसृताः ॥ मायालोज्ञप्रेमहास्य—ज्ञयद्वेषविनिःसृता ॥ ७६ ॥ आख्यायिकानिःसृतातु । कथास्वसत्यवादिनः ॥ चौर्यादिनाज्याख्यातोऽन्य—मुपघातविनिःसृताः ॥ ७७ ॥ तथाहुः—❀ कोहे माणे माया । लोज्ञे पेज्जे तहेव दोसे य ॥ हासे ज्ञय अरकाइया । उवघाइय णिस्सिया दसमा ॥

॥ ७८ ॥ ❀ सत्यामृषापि दशधा । प्रथमोत्पन्नमिश्रिता ॥ विगतमिश्रिता चान्यो–त्पन्नविग-
तमिश्रिता ॥ ७९ ॥ जीवाजीवमिश्रिते द्वे । स्याज्जीवाजीवमिश्रिता ॥ प्रत्येकमिश्रितानंत–
मिश्रिताद्धाविमिश्रिता ॥ ८० ॥ अद्धाद्धामिश्रितेत्यत्र । प्रथमोत्पन्नमिश्रिता ॥उत्पन्नानाम-
निश्चित्य । संख्यानं वदतो भवेत् ॥ ८१ ॥ यथात्र नगरे जाता । नूनं दशाद्य दारकाः ॥ मृ-
तास्तान् वदतोऽप्येवं । भवेद्विगतमिश्रिता ॥ ८२ ॥ एवं च–उत्पन्नांश्च विपन्नांश्च । युगपद्वद-
तो भवेत् ॥ उत्पन्नविगतमिश्रा–द्वयो भेदस्तृतीयकः ॥८३॥ शंखशंखनकादीनां । राशौ ता-
न् जीवतो बहून् ॥ दृष्ट्वाल्पांश्च मृतान् जीव–राश्युक्तौ जीवमिश्रिता ॥ ८४ ॥ तत्रैव च मृ-
तान् भूरीन् । दृष्ट्वा स्वल्पांश्च जीवतः ॥ अजीवराशिरित्येवं । वदतोऽजीवमिश्रिता ॥ ८५ ॥
एतावंतोऽत्र जीवंत । एतावंतो मृता इति ॥ तत्रानिश्चित्य वदतो । जीवाजीवविमिश्रिता ॥
॥ ८६ ॥ अनंतकायनिकरं । दृष्ट्वा प्रत्येकमिश्रितं ॥ अनंतकायं तं सर्वं । वदतोऽनंतमिश्रिता
॥ ८७ ॥ एवं प्रत्येकनिकर–मनंतकायमिश्रितं ॥ प्रत्येकं वदतः सर्वं । भवेत्प्रत्येकमिश्रिता
॥ ८८ ॥ अद्धा कालः स च दिनं । रात्रिर्वा परिगृह्यते ॥ यस्यांशमिश्रितासाद्धा–मिश्रिता

जायते यथा ॥ ८९ ॥ कंचन त्वरयन् कश्चि—द्वदेउत्तिष्ठ भो लघु ॥ रात्रिर्जातेतिदिवसे । रात्रौ च रविरुद्गतः ॥ ९० ॥

अद्धाद्धा त्वेकदेशः स्या—द्रात्रेर्वा दिवसस्य वा ॥ सा मिश्रिता यथाद्धाद्धा । मिश्रिता सा भवेदिह ॥ ९१ ॥ कश्चिद्यथाद्यपौरुष्यां । कंचन त्वरयन् वदेत् ॥ त्वरस्व जातो मध्यान्ह—एवमेव निशास्वपि ॥ ९२ ॥ या त्वसत्यामृषाभिख्या । भाषा सापि जिनेश्वरैः ॥ प्रज्ञप्ता द्वादशविधा । विविधातिशयान्वितैः ॥ ९३ ॥ आमंत्रण्याज्ञापनी च । याचनी प्रछनी तथा ॥ प्रज्ञापनी प्रत्याख्यानी । भाषा चेछानुकूलिका ॥ ९४ ॥ अनभिगृहीता भाषा—भिगृहीता तथा परा ॥ संदेहकारिणी भाषा । व्याकृताव्याकृता तथा ॥ ९५ ॥ हे देवेत्यादि तत्राद्या । द्वितीया त्वमिदं कुरु ॥ तृतीयेदं ददस्वेति । तुर्याज्ञातार्थनोदनं ॥ ९६ ॥ पंचमी तु विनीतस्य । विनेयस्योपदेशनं ॥ यथा हिंसाया निवृत्ता । जंतवः स्युश्चिरायुषः ॥ ९७ ॥ उक्तं च—❀पाणिवहाउ नियत्ता । हवंति दीहाउया अरोगा य ॥ एमाइ पन्नत्ता । पन्नवणी वीयरायेहिं ॥ ९८ ॥ ❀ षष्ठी तु याचमानस्य । प्रतिषेधात्मिका भवेत् ॥ सप्तमी पृछतः कार्यं।

स्वीशानुनतिदानतः ॥ ९९ ॥ कार्यं यश्चारन्नमाणः । कश्चित्कंचन पृछति ॥ सप्राहेदं कुरु ल-
घु । ममाप्येतन्मतं सखे ॥ १४०० ॥ उपस्थितेषु बहुषु ! कार्येषु युगपद्यदि ॥ किमिदानीं क-
रोमीति । कश्चित्कंचन पृछति ॥ १ ॥ स प्राह सुंदरं यत्त । प्रतिन्नाति विधेहि तत् ॥ न्नाषा-
नन्निगृहीताख्या । सा प्रज्ञप्ता जिनेश्वरैः ॥ २ ॥ अन्निगृहीता तत्रैव । नियतार्थावधारणं ॥
यथाघुनेदं कर्त्तव्यं । न कर्त्तव्यमिदं पुनः ॥ ३ ॥ अनेकार्थवादिनी तु । न्नाषा संशयकारिणी
॥ संशयः सिंधवस्योक्तौ । यथा लवणवाजिनोः ॥ ४ ॥ व्याकृता तु न्नवेन्नाषा । प्रकटार्था-
न्निधायिनी ॥ अव्याकृता गन्नीरार्था—थवाऽव्यक्ताक्षरांचिता ॥ ५ ॥ आद्यास्तिस्रो दशविधा—
स्तुर्या द्वादशधा पुनः ॥ द्विचत्वारिंशदित्येवं । न्नापान्नेदा जिनैः स्मृताः ॥ ६ ॥ स्तोकाः स-
त्यगिरः शेषा—स्त्रयोऽसंख्यगुणाः क्रमात् ॥ अन्नाषकाश्चतुर्भ्योऽपि । स्युरनंतगुणाधिकाः ॥७॥
इति योगाः ॥ के के जीवाः कियंतः स्यु—रितिदृष्टांतपूर्वकं ॥ निरूपणं यत्तन्मान—मित्यत्र प-
रिकीर्त्तितं ॥ ८ ॥ परस्परं कतिपय—सजातीयव्यपेक्षया ॥ वक्ष्यते याल्पबहुता । सात्र ज्ञे-
या कनीयसी ॥ ९ ॥ न्नूयांसो दिशि कस्यां के । जीवाः कस्यां च केऽल्पकाः ॥ एवंरूपा-

ल्पबहुता । विज्ञेया दीगपेक्षया ॥ १० ॥

प्राप्य पृथ्व्यादित्वमंगी । जघन्योत्कर्षतः पुनः ॥ कालेन यावताप्नोति । तद्भावं स्यात्तदंतरं ॥ ११ ॥ विवक्षितभवात्तुल्ये–ऽतुल्ये च यद्भवांतरे ॥ गत्वा भूयोऽपि तत्रैव । यथा संभवमागतिः ॥ १२ ॥ जघन्यादुत्कर्षतश्च । वारानेतावतो भवेत् ॥ इत्यादि यत्रोच्यतेऽसौ । भवसंवेध उच्यते ॥ १३ ॥ सर्वजातीयजीवानां । परस्परव्यपेक्षया ॥ वक्ष्यते याल्पबहुता । महाल्पबहुतात्र सा ॥ १४ ॥ भवतु सुगमं द्वारैरेभिः सदागमशोभनै–र्नगरमिव सश्रीकं जीवास्तिकायनिरूपणं ॥ विमलमनसां चेतांसीह प्रविश्य परां मुदं । दधतु विविधैरर्थैर्व्यक्तीकृतैश्च पदे पदे ॥ १५ ॥ विश्वाश्चर्यदकीर्त्तिकीर्त्तिविजयश्रीवाचकेंद्रांतिष–द्राजश्रीतनयोऽतनिष्ट विनयः श्रीतेजपालात्मजः ॥ काव्यं यत्किल तत्र निश्चितजगत्तत्त्वप्रदीपोपमे । सर्गो निर्गलितार्थसार्थसुभगः पूर्णस्तृतीयः सुखं ॥ १६ ॥

॥ इति श्रीलोकप्रकाशे तृतीयः सर्गः समाप्तः ॥

## ॥ अथ चतुर्थः सर्गः प्रारभ्यते ॥

द्वाराण्येवं वर्णितानि । सप्तत्रिंशदिति क्रमात् ॥ निर्दिश्यंतेऽथ संसारि–जीवेष्वमूनि तत्र च ॥ १ ॥ ओघतो भाव्यते संसा–रिषु द्वारकदंबकं ॥ आदौ ततो विशेषेण । प्रत्येकं भावयिष्यते ॥ २ ॥ द्विधा संसारिणो जीवा–स्त्रसस्थावरभेदतः ॥ त्रिविधाः स्युस्त्रिभिर्वेदै–र्गतिभेदैश्चतुर्विधाः ॥ ३ ॥ एकद्वित्रिचतुःपंचें–द्रिया इति च पंचधा ॥ षोढा कायप्रकारैः स्यु–र्भवंत्येवं च सप्तधा ॥ ४ ॥ एकाक्षा बादराः सूक्ष्माः । पंचाक्षाः संज्ञ्यसंज्ञिनः ॥ चत्वारोऽमी विकलाक्षै–स्त्रिभिः सह समन्विताः ॥ ५ ॥ चतुर्धैकेंद्रियाः सूक्ष्मा–न्यपर्याप्तान्यभेदतः ॥ पंचाक्षा विकलाक्षाश्च । भवंतीत्येवमष्टधा ॥ ६ ॥ अंडजादिभेदतोऽष्टौ । त्रसास्तत्रांडजाः किल । पक्षिसर्पाद्या रसोद्भा । मद्यकीटादयोंऽगिनः ॥ ७ ॥ जरायुजा नृगवाद्या । यूकाद्याः स्वेदजा मताः ॥ संमूर्छजा जलूकाद्याः । पोतजाः कुंजरादयः ॥ ८ ॥ उद्भेदजाः खंजनाद्याः । देवाद्याश्चौपपातिकाः ॥ स्थावरेणैकेन युक्ता । नववेत्यंगिनो मताः ॥ ९ ॥ अथवा–नवधा स्थावराः पंच । पंचाक्षविकलैर्युताः ॥ दशधा विकलैः क्ष्माद्यैः । पंचाक्षैः संज्ञ्यसंज्ञिभिः ॥

॥ १० ॥ स्थावरैर्विकलैः पंचें–द्रियैश्च वेदतस्त्रिभिः ॥ एकादश द्वादश स्युः । कायैः पर्याप्त-
कापरैः ॥ ११ ॥ पर्याप्तापर्याप्तकैश्च । स्थावरैस्त्रिविधैः त्रसैः ॥ वेदभेदाद्भवंत्येवं । त्रयोदश
विधाः किल ॥ १२ ॥ प्रागुक्ताः सप्तधा पर्या–प्तकापर्याप्तभेदतः ॥ चतुर्दशविधा जीवाः ।
स्युः पंचदशधाप्यमी ॥ १३ ॥
पंचाक्षा नरतिर्यंच–स्त्रिविधा वेदभेदतः ॥ देवा द्विधा नारकश्चे–त्येवं पचेंद्रिया नव ।१४।
द्विविधा बादरैकाक्षाः । पर्याप्तापरभेदतः ॥ सूक्ष्मैकाक्षा विकलाक्षाः । स्युः पंचदशसंयुताः ॥
॥ १५ ॥ तिर्यंचः पंचधैकाक्षा–दिकाः पंचाक्षसप्तकाः ॥ नृदेवनारकाश्चाष्टा–प्येते पर्याप्तका-
परा ॥ १६ ॥ इति षोडशभेदाः ॥ प्रागुक्ता नवधा पंचें–द्रियाश्च पंचधैकखाः ॥ त्रिविधा वि-
कला एवं । स्युः सप्तदशधांगिनः ॥ १७ ॥ प्रागुक्ता नवधा जीवाः । पर्याप्तापरभेदतः ॥ भवं-
त्यष्टादशविधा । जीवा एवं विवक्षिताः ॥ १८ ॥ पंचाक्षा नवधा प्राग्व–द्दशधा च परेंगिनः ॥
पर्याप्तान्याः स्थूलसूक्ष्मै–काक्षाः सविकलेंद्रियाः ॥ १९ ॥ एकोनविंशतिविधा । भवंत्येवं श-
रीरिणः ॥ प्रागुक्ता दशधा पर्या–प्तान्या विंशतिधेति च ॥ २० ॥ स्थापरा विंशतिः सूक्ष्मा

—न्यपर्याप्तान्यभेदतः ॥ त्रसेन च समायुक्ता । एकविंशतिधांगिनः ॥ २१ ॥ पूर्वोदिताः प्रकारा ये । एकादश शरीरिणां ॥ द्वाविंशतिविधाः पर्या—प्तान्यभेदाद् द्विधा कृताः ॥ २२ ॥ एवं विवक्षावशतो । जीवा भवंत्यनेकधा ॥ जीवानामोघतः स्थानं । लोकः सर्वोऽप्युदीरितः ॥ ॥ २३ ॥ द्वाराणि पर्याप्त्यादीनि । सर्वाण्यप्यविशेषतः ॥ संभवंत्योघतो जीवे । विज्ञेयानि यथागमं ॥ २४ ॥ इति सामान्यतः संसारिजीवनिरूपणं ॥ संसारिणो द्विधोक्ताः प्राक् । त्रसस्थावरभेदतः ॥ स्थावरास्तत्र पृथ्व्यंबु—तेजोवायुमहीरुहः ॥२५॥ पंचामी स्थावराः स्थाव—राख्यकर्मोदयात्किल ॥ हुताशमरुतौ तत्र । जिनैरुक्तौ गतित्रसौ ॥२६॥ ❀ इति जीवाभिगमाभिप्रायेण, आचारांगनिर्युक्तिवृत्त्यभिप्रायेण तु द्विविधेत्यादि—त्रसा एव जीवास्त्रसजीवाः; लब्धित्रसा गतित्रसाश्च लब्ध्या तेजोवायू त्रसौ इति; अन्ये च नारकादयो गतित्रसा इतितात्पर्यं ❀

वनस्पतिश्च प्रत्येकः । साधारण इति द्विधा ॥ सर्वेऽमी बादराः सूक्ष्मा । विना प्रत्येकभूरुहं ॥ २७ ॥ एकादशैकेंद्रियाः स्यु—रेवं प्रत्येकसंयुताः ॥ अपर्याप्ताश्च पर्याप्ता । एवं द्वाविंशतिः कृताः ॥ २८ ॥ तत्र क्ष्मांभोऽग्निपवनाः । साधारणवनस्पतिः ॥ एतेऽपर्याप्तपर्या-

प्ता । दशैवं सूक्ष्मदेहिनः ।२९। सूक्ष्मनाम कर्मयोगा–द्ये प्राप्ताः सूक्ष्मतामिह । चर्मचक्षुरगम्या-स्ते । सूक्ष्माः पृथ्व्यादयः स्मृताः । ३० । सूक्ष्माः साधारणवन–स्पतयो येऽत्र शंसिताः ॥ ते च सूक्ष्म निगोदा इ–त्युच्यते श्रुतकोविदैः ॥३१॥ अनंतानामसुमता–मेकसूक्ष्मनिगोदिनां ॥ साधारणं शरीरं य–त्स निगोद इति स्मृतः ॥३२॥ तच्चैक सर्वतच्छासि–संबंधि स्तिबुकाकृति ॥ औदारिकं स्यात्प्रत्येकं । त्वेषां तैजसकार्मणे ॥ ३३ ॥ ते सहोच्छ्वासनिःश्वासाः । समं चाहारकारिणः ॥ अनंता अतिसूक्ष्मांगे । सहते हंत यातनां ॥ ३४ ॥ तथोक्तं—जं नरए नेरइया । दुक्खं पावंति गोअमा तिक्खं ॥ तं पुण निगोअजीवा । अणंतगुणियं वियाणाहि ॥ ३५ ॥ सूक्ष्मा अनंतजीवा–त्मका निगोदा भवंति भुवनेऽस्मिन् ॥ पृथ्व्यादिसर्वजीवाः–संख्येयकसंमिता असंख्येयाः ॥३६॥ गीतिः ॥ भगवतीवृत्तौ ॥ एभिः सूक्ष्मनिगोदैश्च । निचितोऽस्त्यखिलोऽपि हि ॥ लोकोंजनचूर्णपूर्ण–समुद्गवत्समंततः ॥ ३७ ॥ जीवाभिगमवृत्तौ । असंख्येयैर्निगोदैश्च । स्यादेकः किल गोलकः ॥ गोलकास्तेऽप्यसंख्येया । भवंति भुवनत्रये ॥ ३८ ॥ गोलकप्ररूपणा चैवं—षड्दिशं यत्र लोकः स्या–त्तत्र संपूर्णगोलकः ॥ निष्पद्यते तन्मध्ये च । स्यादु-

त्कृष्टपदं खलु ॥ ३ए ॥ भूम्यासन्नापवरक–कोणांतिमप्रदेशकं ॥ देशोऽनुकुर्यात्रिदिश–मलोकावरणेन यः ॥ ४० ॥ तत्र खंमस्य गोलस्य । निष्पत्तिः सकलस्य न ॥ स्याज्जघन्यपदं तस्मिन् । स्पष्टमल्पैर्निगोदकैः ॥ ४१ ॥

लोकांतर्यत्रकुत्रापि । संस्थितः स्यान्निगोदकः ॥ एकांगुलासंख्यभाग–मितक्षेत्रावगाहनः ॥ ४२ ॥ अन्येऽपि तत्रासंख्येया–स्तावन्मात्रावगाहनाः ॥ अन्योऽन्यानुप्रवेशेन । स्थितास्संति निगोदकाः ॥ ४३ ॥ तत्रान्यापेक्षया प्राज्यैः–स्पष्टं जीवप्रदेशकैः ॥ विवक्षणीयमुत्कृष्ट–पदमेकप्रदेशकं ॥ ४४ ॥ तस्यामेव निगोदाव–गाहनायां समंततः ॥ अन्ये निगोदास्तिष्ठंति । प्रदेशवृद्धिहानितः ॥ ४५ ॥ विवक्षितनिगोदस्य । मुक्त्वा कांश्चित्प्रदेशकान् ॥ आक्रम्य चापरानेतै–रवस्थितैर्निगोदकैः ॥ ४६ ॥ विवक्षितममुंचद्भि–स्तदुत्कृष्टपदं किल ॥ एको निष्पाद्यते गोलो । ह्यसंख्येयनिगोदकः ॥ ४७ ॥ तथोक्तं—❀ उक्कोसपयममोत्तुं । निगोअनुगाहणाए सव्वत्तो ॥ निप्पाइज्जइ गोलो । पएसपरिवुढिहाणीहिं ॥ ४८ ॥ अथ गोलकमाश्रित्यै–तमेव प्रोक्तलक्षणं ॥ अन्यो निष्पद्यते गोलो । मुक्त्वोत्कृष्टपदं हि तत् ॥ ४ए ॥ निरुक्तगोलको-

त्कृष्ट—पदास्पर्शिनिगोदके ॥ परिकल्प्योत्कृष्टपद—मन्यगोलककल्पनात् ॥ ५० ॥ इत्येकैकनि-
गोदाव—गाहनाप्रमिते किल ॥ क्षेत्रे भवति निष्पत्ति—रेककगोलकस्य वै ॥ ५१ ॥ विवक्षित-
निगोदाव—गाहनायास्तु येऽधिकाः ॥ निगोदांशास्तत्प्रदेश—हानिस्थित्या व्यवस्थिताः ॥५२॥
विवक्षणीयास्ते गोल—कांतरानुप्रविष्टकाः ॥ एवं गुरूपदेशेन । ज्ञेया गोलकपद्धतिः ॥ ५३ ॥
उक्तंहि—❀ तत्तोच्चियगोलाउ । उक्कोसपयं मुइत्तु जो अन्नो ॥ होइ निगोउ तस्सिंमवि । अन्नो
निप्फज्जइ गोलो ॥ ५४ ॥ एवं निगोयमित्ते । खेत्ते गोलस्स होइ निप्पत्ती ॥ एवं निप्फज्जंते ।
लोगे गोला असंखिज्जा ॥ ५५ ॥ इत्याद्यर्थतोभगवतीशतक ११ उद्देशके १० ॥ ❀ निगोदा
निचिता—श्चैते—ऽनंतानंतांगिभिस्तथा ॥ निर्गच्छद्भिर्यथा नित्यं । न ह्येकोऽपि स हीयते ॥५६॥
यद्व्यावहारिकांगिभ्यो । यावंतो यांति निर्वृतिं ॥ निर्यांति तावंतोऽनादि—निगोदेभ्यः शरीरि-
णः ॥ ५७ ॥ तथोक्तं—❀ सिझ्झंति जत्तिया किर । इह संववहाररासिमझ्झाउ ॥ इंति अणाइ-
वणस्सइ । मझ्झाउ तत्तिआ तंमि ॥ ५८ ॥ इत्यादि प्रज्ञापनावृत्तौ ॥ ❀
अनंतेनापि कालेन । यावंतः स्युः शिवंगताः ॥ सर्वेऽप्येकनिगोदैका—नंतभागमिता हि

ते ॥ ५९ ॥ कालेन ज्ञाविनाप्येव–मनंता मुक्तिगामिनः ॥ चिंत्यंते तैः समुदिता–स्तथापि
नाधिकास्ततः ॥ ६० ॥ एवंच–नताहृग्भविता कालः । सिद्धाः सोपचया अपि ॥ यत्राधिका
न्नवंत्येक–निगोदानंतज्ञागतः ॥ ६१ ॥ तथाहुः–❀ जइया होइ पुछा । जिणाणमग्गंमि-उत्त-
रं तइया ॥ इक्कस्स निगोअस्स य । अणंतज्ञागो उ सिद्धिगउ ॥ ६२ ॥ ❀ निगोदेऽपि द्विधा
जीवा–स्तत्रैके व्यावहारिकाः ॥ व्यवहारादतीतत्वा–त्परे चाव्यवहारिकाः ॥ ६३ ॥ सूक्ष्मा-
न्निगोदतोऽनादे–र्निर्गता एकशोऽपि ये ॥ पृथ्व्यादिव्यवहारं च । प्राप्तास्ते व्यवहारिकाः ॥
॥ ६४ ॥ सूक्ष्मानादिनिगोदेषु । यांति यद्यपि ते पुनः ॥ ते प्राप्तव्यवहारत्वा–त्तथापि व्यव-
हारिणः ॥ ६५ ॥ कदापि ये न निर्याता । बहिः सूक्ष्मनिगोदतः ॥ अव्यावहारिकास्ते स्यु
–र्दरीजातमृता इव ॥६६॥ तदुक्तं विशेषणवत्यां–❀ अत्थि अणंता जीवा । जेहिं न पत्तो तसाइप-
रिणामो ॥ तेवि अणंताणंता । निगोअवासं अणुहवंति ॥६७॥ ❀ इति सूक्ष्माणां न्नेदाः ॥ एन्निर्लो-
कोऽखिलो व्याप्तः । कज्जलेनेव कुंपिका ॥ कापि प्रदेशो नास्त्येन्नि–र्विहिनः पुद्गलैरिव ॥६८॥ इति
स्थानं। आद्याश्चतस्त्रास्तिस्रः स्यु–रेषां पर्याप्तयः क्रमात् ॥ पर्याप्तान्येषामथायुः–श्वासःकायबलं त-

था ॥ ६९ ॥ त्वगिंद्रियं चेत्यमीषां । प्राणाश्चत्वार ईरिताः ॥ संख्या योनिकुलानां तु । पृथगेषां न लक्ष्यते ॥ ७० ॥ ततश्च—

संख्या योनिकुलानां या । बादराणां प्रवक्ष्यते ॥ एतेषामपि सैवामी । सर्वे संवृतयोनयः ॥ ७१ ॥ इति पर्याप्त्यादिद्वारचतुष्टयं ॥ अंतर्मुहूर्त्तमुत्कृष्टा । जवत्येषां जवस्थितिः ॥ जघन्या क्षुल्लकजव—रूपमंतर्मुहूर्त्तकं ॥ ७२ ॥ तथोक्तं—❀ दस सहस्ससमा सुरनारयाण, सेसाणखुड्डजवो ❀ इति जवस्थितिः ॥ सूक्ष्मनिगोदजीवानां । त्रिधा कायस्थितिर्जवेत् ॥ अनाद्यतानादिमांता । साद्यंता चेतिजेदतः ॥ ७४ ॥ सूक्ष्मान्निगोदतोऽनादे—र्निर्गता न कदापि ये ॥ नैवापि निर्गमिष्यंति । तेषामाद्या स्थितिर्जवेत् ॥ ७५ ॥ अनंतपुद्गलपरा—वर्त्तमाना जवेदियं ॥ संति चैवंविधा जीवा । येषामेषा स्थितिर्जवेत् ॥ ७६ ॥ यदुक्तं—❀ सामग्गिअजावाउ । ववहारियरासिअप्पवेसाउ ॥ जवा वि ते अणंता । जे सिद्धिसुहं न पावंति ॥ ॥ ७७ ॥ ❀ निगोदात्सूक्ष्मतो ये च । निर्गता न कदाचन ॥ निर्यास्यंति पुनर्जातु । स्थितिस्तेषां द्वितीयिका ॥ ७८ ॥ अनंतपुद्गलपरा—वर्त्तमाना त्वसावपि ॥ गतस्य कालस्यानंत्या

—स्केषांचिद्भाविनोऽपि च ॥ ७९ ॥ अनादिस्थितिका न स्यु—र्यद्यनंता निगोदिनः ॥ तदा वक्ष्यमाणवन—स्पतिकायस्थितिक्षये ॥ ८० ॥ कृते कायपरावर्त्ते । निखिलैर्वनकायिकैः ॥ वनस्पतीनां निर्लेपो—ऽनन्निष्टोऽपि प्रसज्यते ॥ ८१ ॥ अनारतं किंच मुक्तिं । गच्छद्भिर्भव्यदेहिभिः ॥ अचिरादेव जगति । भव्याभावः प्रसज्यते ॥ ८२ ॥ मुक्तिमार्गव्यवच्छेदो—ऽप्येतच्च नेष्यते बुधैः ॥ संतीति प्रतिपत्तव्यं । ततोऽनादिनिगोदिनः ॥ ८३ ॥ इत्याद्यधिकं प्रज्ञापनाष्टादशपदवृत्तितोऽवसेयं ॥ पुनः प्राप्ता निगोदं ये—ऽनुभूय व्यवहारितां ॥ कायस्थितिः स्यात्साद्यंता । तेषां तां वच्मि मानतः ॥ ८४ ॥ उत्सर्पिण्यवसर्पिण्यः । संख्यातीताः प्रकीर्त्तिताः ॥ कालतः क्षेत्रतश्चास्याः । स्थितेर्मानमथ ब्रुवे ॥ ८५ ॥ लोकाकाशमितासंख्य—खखंमानां प्रदेशकाः ॥ एकैकस्यापहारेण । ह्रियमाणाः क्षणे क्षणे ॥ ८६ ॥ यावद्भिः कालचक्रैः स्यु—र्निर्लेपा मूलतोऽपि हि ॥ तावंति तानि स्यात्काय—स्थितिरेषां तृतीयिका ॥ ८७ ॥

कालचक्राण्यसंख्यानि । भवंत्येतानि संख्यया ॥ कालतो हि सूक्ष्मतरं । क्षेत्रमाहुर्जिनेश्वराः ॥ ८८ ॥ यतोंगुलमिताकाश—श्रेण्या अभ्रप्रदेशकाः ॥ गण्यमानाः समाः स्यु—रसं-

रूयोत्सर्पिणीकयैः ॥ ७९ ॥ यदाहुः—❀ सुहुमो य होइ-कालो । तत्तो सुहुमयरं हवइ खि-
त्तं ॥ अंगुलसेढीमित्ते । उसप्पिणिउ असंखिज्जा ॥ ८० ॥❀ सूक्ष्मक्ष्मांभोऽग्निमरुतां । का-
लतः क्षेत्रतोऽपि च ॥ स्यात्कायस्थितिरेषैव । सूक्ष्मत्वेऽपि तथौघतः ॥ ८१ ॥ एकेंद्रियत्वति-
र्यक्त्वा-संज्ञित्वेषु प्रसंगतः ॥ वनस्पतित्वे क्लीवत्वे । कायस्थितिमथ ब्रुवे ॥ ८२ ॥ आवल्य-
संख्यभागस्य । यावंतः समयाः खलु ॥ स्युः पुद्गलपरावर्त्ता-स्तावंतः कायसंस्थितिः ॥८३॥
सर्वेषामियमुत्कृष्टा । कायस्थितिरुदाहृता ॥ जघन्या तु भवेदंत-र्मुहूर्त्तमविशेषतः ॥ ८४ ॥

इतिकायस्थितिः ॥

तैजसं कार्मणं चौदा-रिकं चेति वपुस्त्रयं ॥ पृथ्व्यादिसूक्ष्मजीवानां । प्रज्ञप्तं परमेष्टि-
भिः ॥ ८५ ॥ निगोदानां त्वनंताना-मेकमौदारिकं वपुः ॥ सर्वसाधारणं द्वे चा-परे प्रत्येक-
मीरिते ॥ ८६ ॥ इति देहाः ॥ एकेंद्रियाणां संस्थानं । सर्वेषां हुंडमीरितं ॥ तत्राप्येष विशे-
षस्तु । दृष्टो दृष्टजगत्त्रयैः ॥ ८७ ॥ मसूरचंद्रसंस्थाना । सूक्ष्मा क्षोणी द्विधापि हि ॥ सू-
क्ष्माः स्तिबुकसंस्थाना । आपः पापहरैः स्मृताः ॥ ८८ ॥ सूचीकलापसंस्थानं । तेजोवायु-

ध्वजाकृतिः ॥ सूक्ष्मो निगोदोऽनियत–संस्थानः परिकीर्त्तितः ॥ ९९ ॥ ❁ इति जीवाभिगमाभिप्रायः ॥ संग्रहणीवृत्तौ च निगोदौदारिकदेहं स्तिबुकाकारमुक्तमिति ज्ञेयं ॥ इति संस्थानं ॥ ❁ अंगुलासंख्यांशमानं । सूक्ष्मैकेंद्रियदेहिनां ॥ सामान्यतः शरीरं स्या–द्विशेषतस्तु वक्ष्यते ॥ १०० ॥ इतिदेहमानं ॥ कषायाणां वेदनाया । मृत्योश्चेति जिनैस्त्रयः ॥ निरूपिताः समुद्घाताः । सूक्ष्मैकाक्षशरीरिणां ॥ १०१ ॥ इतिसमुद्घाताः ॥ एकेंद्रियेषु सर्वेषु । विकलेंद्रियकेषु च ॥ संख्येयायुर्गर्भजेषु । तिर्यक्पंचेंद्रियेष्वपि ॥ १०२ ॥ तादृशेष्वेव मर्त्येषु । तेषु संमूर्छिमेषु च ॥ एते विपद्योत्पद्यंते । सूक्ष्मा दशविधा अपि ॥ १०३ ॥ तेजोऽनिलौ तु न वरं । नोत्पद्येते स्वभावतः ॥ मनुष्येष्विति गच्छंति । ते पूर्वोक्तेषु तान्विना ॥ ४ ॥ इतिगतिः ॥ उत्पद्यंते च पूर्वोक्ताः । सूक्ष्मैकाक्षेषु तेऽखिलाः ॥ स्वस्वकर्मानुभावेन । गरिष्ठेन वशीकृताः ॥ ५ ॥ नारका निर्जरास्तिर्यग्–नराश्चासंख्यजीविनः ॥ नैषां सूक्ष्मेषु गमनं । न चाप्यागमनं ततः ॥ ६ ॥ गतिष्वेवं चतसृषु । संक्षेपात्ते विवक्षिताः ॥ द्विगतयो द्व्यागतयो । भवंति सूक्ष्मदेहिनः ॥ ७ ॥ तेजोऽनिलौ तु नृभवे । नोत्पद्येते स्वभावतः ॥ ततस्त एक-

गतयः । प्रोक्ता च्युयागतयोऽपि च ॥ ८ ॥ सूक्ष्मेषु पृथ्वीसलिल-तेजोऽनिलेषु जंतवः ॥ उत्प-द्यंते च्यवंते च । असंख्येया निरंतरं ॥ ९ ॥ वनस्पतौ त्वनंताना-मुत्पत्तिविलयौ सदा ॥ स्व-स्थानतः परस्थाना-त्वसंख्यानां गमागमौ ॥ १० ॥ एकस्यापि निगोदस्या-ऽसंख्यांशोऽनंत-जीवकः ॥ जायते म्रियते शश्वत् । किं पुनः सर्वमीलने ॥ ११ ॥ तथाहि—

विवक्षितनिगोदस्य । विवक्षितक्षणे यथा ॥ असंख्येयतमो भाग । एक उद्वर्त्तते ध्रुवं ॥ ॥ ११२ ॥ उत्पद्यतेऽन्यस्तथैव । द्वितीयसमयेऽपि हि ॥ एक उद्वर्त्ततेऽसंख्य-भाग उत्पद्यते-ऽपरः ॥ ११३ ॥ उद्वर्त्तनोपपातावि-त्येवं स्यातां प्रतिक्षणं ॥ यथैकस्य निगोदस्या-संख्यभाग-स्य सर्वदा ॥ ११४ ॥ तथैवान्यनिगोदाना-मपि त्रैलोक्यवर्त्तिनां ॥ उद्वर्त्तनोपपातौ स्तो-ऽसं-ख्यांशस्य पृथक् पृथक् ॥ ११५ ॥ उद्वर्त्तनोपपाताभ्यां । भवभ्यामित्यनुक्षणं ॥ परावर्त्तते नि-गोदा । अंतर्मुहूर्त्तमात्रतः ॥ १६ ॥ जायमानैर्म्रियमाणै-रंतर्मुहूर्त्तजीविभिः ॥ निगोदिभिर्नव-नवैः । स्युः शून्यास्तु मनाग् न ते ॥ १७ ॥ तथोक्तं—❀ एगो असंखभागो । वट्टइ उवट्टणो-ववायंमि ॥ एगनिगोए निच्चं । एवं सेसेसु विसएवं ॥ अंतोमुहुत्तमित्ता । ठिइ निगोआण जं

विनिद्दिठा ॥ पञ्चदंति निगोआ । तम्हा अंतोमुहुत्तेणं ॥ १८ ॥ एषामुत्पत्तिमरणे—विरहस्तु न विद्यते ॥ यज्जायंते म्रियंते चा—संख्यानंता निरंतरं ॥ १९ ॥ इत्यागतिः ॥ अनंतराशिः समये—सिद्धिर्वादरवद्बुधैः ॥ ज्ञेयैषां प्राच्यशास्त्रेषु । विज्ञागेनाविवक्षणात् ॥ २० ॥ इतिद्वारद्वयं ॥

कृष्णा नीला च कापोती । लेश्यात्रयमिदं ज्ञवेत् ॥ सर्वेषां सूक्ष्मजीवाना—मित्युक्तं सूक्ष्मदर्शिज्ञिः ॥ २१ ॥ इतिलेश्याः ॥ निर्व्याघातं प्रतीत्यैषा—माहारः षड्दिगुद्भवः ॥ ज्ञवेद्व्याघातमाश्रित्य । त्रिचतुष्पंचदिग्ज्ञवः ॥ २२ ॥ इत्याहारदिक् ॥ न संहननमेतेषां । संज्ञवत्यस्थ्यज्ञावतः ॥ मतांतरेण चैतेषां । सेवार्त्तं तद्धुरीकृतं ॥ २३ ॥ इति संहननानि ॥ सर्वे कषायाः संज्ञास्तु । स्युश्चतस्त्रोऽथवा दश ॥ इंद्रियं चैकमाख्यात—मेतेषां स्पर्शनेंद्रियं ॥ २४ ॥ इतिद्वारत्रयं ॥ ज्ञूतज्ञाविज्ञवज्ञाव—स्वज्ञावालोचनात्मिका ॥ संज्ञा नैकेंद्रियाणां स्या—त्तदेतेऽसंज्ञिनः स्मृताः ॥ २५ ॥ इति संज्ञिता ॥ अमी जिनेश्वरैः क्लीव—वेदा एव प्रकीर्त्तिताः ॥ वेदस्त्वव्यक्तरूपः स्या—देषां संज्ञाकषायवत् ॥ २६ ॥ इतिवेदः ॥ संक्लिष्टपरिणामत्वा—त्सर्वैकेंद्रियदेहिनां ॥ मिथ्यादृष्टय एवामी । निर्दिष्टाः परमेष्ठिज्ञिः ॥ २७ ॥ इति दृष्टिः ॥ मत्यज्ञान

न्न

श्रुताज्ञाने । सूक्ष्मैकेंद्रियदेहिनां ॥ ते अप्यत्यंतमल्पिष्टे । शेषजीवव्यपेक्षया ॥ २८ ॥ इतिज्ञा-
नं ॥ चतुर्षु दर्शनेष्वेषा-मचक्षुर्दर्शनं भवेत् ॥ उपयोगास्त्रयोऽज्ञान-द्वयमेकं च दर्शनं ॥२९॥
निराकारोपयोगाः स्यु-रचक्षुर्दर्शनाश्रयात् ॥ द्व्यज्ञानतस्तु साकारो-पयोगाः सूक्ष्मदेहिनः ॥
॥ ३० ॥ इतिद्वारद्वयं ॥ आहारकाः सदाप्येते । स्युर्विग्रहगतिंविना ॥ तस्यां त्वनाहारका अ-
प्येते त्रिचतुरान् क्षणान् ॥ ३१ ॥

एषामुत्पन्नमात्राणा-मोज आहार ईरितः ॥ लोमाहारस्ततो द्वेधा-प्यनाभोगज एव च
॥ ३२ ॥ सचित्तः स्यादचित्तः स्या-दुभयात्मापि कर्हिचित् ॥ आहारे चांतरं नास्ति । सदा-
हारार्थिनो ह्यमी ॥ ३३ ॥ तथोक्तं-प्रज्ञापनायां-पुढवीकाइयस्स णं भंते केवइ कालस्स आ-
हारठे समुप्पज्जइ? गो० अणुसमयं अविरहिए, एवं जाव वणस्सइकाइया इति ❀ इत्याहा-
रकत्वं ॥ आद्यमेव गुणस्थान-मेकं सूक्ष्मशरीरिणां ॥ अनाभोगिकमिथ्यात्व-वतामेषां नि-
रूपितं ॥ ३४ ॥ इति गुणाः ॥ दशानामपि सूक्ष्माणां । त्रयो योगाः प्रकीर्त्तिताः ॥ औदारि-
कस्तन्मिश्रश्च । कार्मणश्चापि विग्रहे ॥ ३५ ॥ इति योगाः ॥ असंख्येयलोकमान-नभःखं-

ऽप्रदेशकैः ॥ तुल्याः सूक्ष्माग्निपृथ्व्यंबु–मरुतः किंतु तत्र च ॥ ३६ ॥ लोकाकाशमिताः खं-
मा । असंख्येया अपि क्रमात् ॥ अग्न्यादिषु भूरिभूरि–तरभूरितमा मताः ॥ ३७ ॥ पर्याप्ता-
पर्याप्तसूक्ष्म–बादरानंतकायिकाः ॥ चत्वारोऽपि स्युरनंत–लोकाकाशांशसंमिताः ॥ ३८ ॥
अयं भावः—लोकाकाशप्रदेशेषु । निगोदस्तत्कजंतुषु ॥ प्रत्येकं स्थाप्यमानेषु । पूर्यंतेऽसाव-
नंतशः ॥ ३९ ॥ तत्रापि–बादरसाधारणेभ्यः । पर्याप्तेभ्यो भवंति हि ॥ अपर्याप्ताबादरास्ते
। असंख्येयगुणाधिकाः ॥ ४० ॥ बादरापर्याप्तकेभ्यः । सूक्ष्माऽपर्याप्तका इमे ॥ असंख्येयगु-
णास्तेभ्यः । सूक्ष्मपर्याप्तकास्तथा ॥ ४१ ॥ इति मानं ॥ सूक्ष्मास्तेजस्कायिकाः स्युः । स-
र्वस्तोकास्ततः क्रमात् ॥ सूक्ष्मक्ष्मांबुमरुतो । विशेषाभ्यधिकाः स्मृताः ॥ ४२ ॥ असंख्ये-
यलोकमान–नभःखंडप्रदेशकैः ॥ तुल्याः सर्वेऽप्यमी किंतु । यथोत्तराधिकाधिकाः ॥ ४३ ॥
असंख्येयगुणाःसूक्ष्म–वायुभ्यः स्युर्निगोदकाः ॥ असंख्येयप्रमाणत्वा–देतेषां प्रतिगोलकं ॥
॥ ४४ ॥ तेभ्योऽनंतगुणाः सूक्ष्माः । स्युर्वनस्पतिकायिकाः ॥ तेभ्यः सामान्यतः सूक्ष्मा ।
विशेषाभ्यधिकाः स्मृताः ॥ ४५ ॥ स्वस्वजातिष्वपर्याप्त–केभ्योऽसंख्यगुणा मताः ॥ पर्याप्त-

का यदेतेऽन्या–पेक्षयाधिकजीविनः ॥ ४६ ॥ उत्पद्यंते तथैकैका–पर्याप्तकस्य निश्रया ॥ प-
र्याप्तका असंख्येया–स्ततोऽमी बहवो मताः ॥ ४७ ॥ तथोक्तमाचारांगवृत्तौ–
❀ सूक्ष्मा अपि पर्याप्तकापर्याप्तकभेदेन द्विधा एव, किंत्वपर्याप्तकनिश्रया पर्याप्तकाः स-
मुत्पद्यंते, यत्र चैकोऽपर्याप्तकस्तत्र नियमादसंख्येयाः पर्याप्ताः स्युरिति. ❀ अत एवैकेंद्रियाः
स्युः । सामान्यतो विवक्षिताः ॥ पर्याप्ता एव भूयांसो । जीवा अप्योघतस्तथा ॥ ४८ ॥ इति
दृष्ट्यल्पबहुता ॥ दिशामपेक्षयात्यल्प–बहुतैषां न संभवेत् ॥ अमी प्रायः सर्वलोका–पन्नाः
सर्वत्र यत्समाः ॥ ४९ ॥ तथोक्तं प्रज्ञापनावृत्तौ–❀ इदं ह्यल्पबहुत्वं बादरानधिकृत्य द्रष्टव्यं,
न सूक्ष्मान्; सूक्ष्माणां सर्वलोकापन्नानां प्रायः सर्वत्र समत्वात् ❀ इति–दिगपेक्षयाल्पबहुता
ओघतः सूक्ष्मजीवाना–मंतरं यदि चिंत्यते ॥ अंतर्मुहूर्त्तं सूक्ष्मत्वे । जघन्यं कथितं जिनैः ॥
॥ ५० ॥ यदुत्पद्य बादरेषु । सूक्ष्मः संत्यज्य सूक्ष्मतां ॥ स्थित्वा तत्रांतर्मुहूर्त्तं । पुनः सूक्ष्म-
त्वमाप्नुयात् ॥ ५१ ॥ उत्कर्षतः कालचक्रा–ण्यसंख्येयानि तानि च ॥ निष्पाद्यान्यंगुलासं-
ख्यां–शस्थखांशमितैः क्षणैः ॥ ५२ ॥ अयं भावः—एकस्मिन्नंगुलासंख्य–भागे येऽभ्रप्रदेश-

कः ॥ यावंति कालचक्राणि । हृतैस्तैः स्युः प्रतिक्षणं ॥ ५३ ॥ उत्कर्षतो बादरत्वे । तावती
वर्णिता स्थितिः ॥ तां समाप्य पुनः सौक्ष्म्य–प्राप्तौ युक्तमदोंतरं ॥ ५४ ॥ सूक्ष्मक्ष्मांभोऽ-
ग्निमरुता–मिह प्रत्येकमंतरं ॥ लघु स्यादंतर्मुहूर्त्त–मनंताद्धामितं गुरु ॥ ५५ ॥ तच्च सूक्ष्म-
क्ष्मादिजंतोः । सूक्ष्मस्थूलवनस्पतौ ॥ गत्वा स्थित्वानंतकालं । सूक्ष्मक्ष्मादित्वमीयुषः ॥५६॥
वनस्पतेश्च सूक्ष्मस्यां–तरमुत्कर्षतो भवेत् ॥ कालचक्राण्यसंख्येय–लोकमानानि पूर्ववत् ॥
॥ ५७ ॥ तच्च सूक्ष्मक्ष्मादितयो–त्पद्य सूक्ष्मवनस्पतेः ॥ स्थित्वोक्तकालं पुनर–प्युत्पन्नस्य
वनस्पतौ ॥ ५८ ॥ न संभवति चैतेषा–मनंतकालमंतरं ॥ विना वनस्पतीन् कुत्रा–प्यनंत-
स्थित्यभावतः ॥ ५९ ॥ जघन्यमंतरं त्वेषा–मंतर्मुहूर्त्तमीरितं ॥ क्ष्मादिष्वंतर्मुहूर्त्तं तत् । स्थि-
त्वोत्पत्तौ भवेदिह ॥ ६० ॥ इत्यंतरं ॥ प्रायो भवसंवेधो । महाल्पबहुता त्वनेकजीवानां ॥ व-
क्तव्ये इत्युभयं । वक्ष्ये जीवप्रकरणांते ॥ ६१ ॥ वर्णिताः किमपि सूक्ष्मदेहिनः ॥ सूक्ष्मद-
र्शिवचनानुसारतः ॥ यत्तु नेह कथितं विशेषत–स्तद्बहुश्रुतगिरावसीयतां ॥ ६२ ॥ विश्वाश्च-
र्यदकीर्त्तिकीर्त्तिविजयश्रीवाचकेंद्रांतिष–द्राजश्रीतनयोऽतनिष्ट विनयः श्रीतेजपालात्मजः ॥

काव्यं यत्किल तत्र निखिलजगत्तत्त्वप्रदीपोपमे । सर्गो निर्गलितार्थसार्थसुभगः पूर्णश्चतुर्थः सुखं

॥ इति श्रीलोकप्रकाशे चतुर्थः सर्गः समाप्तः ॥

॥ पंचमः सर्गः प्रारभ्यते ॥

वर्ण्यंतेऽथ क्रमप्राप्ता—बादरैकेंद्रियांगिनः ॥ ते च षोढा पृथिव्यंबु—तेजोऽनिलास्तथा द्रुमाः ॥ १ ॥ प्रत्येकाः साधारणाश्च । षडप्येते द्विधा मताः ॥ पर्याप्तापर्याप्तभेदा—देवं द्वादश बादराः ॥ २ ॥ बादराख्यनामकर्मो—दयाद्ये स्थूलतां गताः ॥ चर्मचक्षुर्दृश्यमाना । बादरास्ते प्रकीर्तिताः ॥३॥ तत्र च——अपर्याप्तास्त्वविस्पष्ट—वर्णाद्या अल्पजीवनात् ॥ पर्याप्तानां च वर्णादि—भेदैर्भेदाः सहस्रशः ॥ ४ ॥ बादरा पृथिवी द्वेधा । मृदुरेका खराऽपरा ॥ भेदाः सप्त मृदोस्तत्र । वर्णभेदविशेषजाः ॥ ५ ॥ कृष्णा नीलारुणा पीता । शुक्लेति पंच मृद्भिदः ॥ षष्ठी देशविशेषोत्था । मृत्स्ना पांडुरिति श्रुता ॥ ६ ॥ नद्यादिपूरापगमे । देशे तत्रातिपिच्छिले ॥ मृदुश्लक्ष्णा पंकरूपा । सप्तमी पनकाभिधा ॥ ७ ॥ इत्यर्थतः प्रज्ञापनावृत्तौ ॥ उत्तराध्ययनवृत्तौ तु——❀ पांडुत्ति पांडुः पांडुरा इषच्छुक्लत्ववतीत्यर्थः, इति वर्णभेदेन षड्विधत्व-

मुक्तं, इह च पांडुरग्रहणं कृष्णादिभेदानामपि स्वस्थाने भेदांतरसंभवसूचकं, पनकोऽत्यंत-सूक्ष्मरजोरूपः, स एव मृत्तिका पनकमृत्तिका पनकस्य च नभसि विवर्त्तमानस्य लोके पृथ्वीत्वेन रूढत्वाद्भेदेनोपादानमित्याद्युक्तं ❀ चत्वारिंशत्खरायाश्च । भेदाः प्रज्ञापिताः क्षितेः ॥ अष्टादश मणीभेदा–स्तथा द्वाविंशतिः परे ॥ ८ ॥ गोमेद्यकांकस्फटिक–लोहिताक्षा हरिन्मणिः ॥ षष्ठो मसारगल्लः स्या–त्सप्तमो भुजमोचकः ॥ ९ ॥

इंद्रनीलश्चंदनश्च । गैरिको हंसगर्भकः ॥ सौगंधिकश्च पुलक–स्ततश्चंद्रप्रभाभिधः ॥१०॥ वैडुर्यं जलकांतश्च । रुचकार्कोपलाविति ॥ खरक्ष्माया एव भेदा–नन्यान् द्वाविंशतिं ब्रुवे ॥ ॥ ११ ॥ भूर्नदीतटभित्त्यादेः । शर्करोपलकर्कराः ॥ सिकताः सूक्ष्मकणिकाः । उपला लघवोऽश्मकाः ॥ १२ ॥ शिला महांतः क्षाराभू–रूपो लवणमब्धिजं ॥ सुवर्णरूप्यताम्राय–स्त्रपुसीसकधातवः ॥ १३ ॥ वज्रं च हरितालश्च । हिंगुलश्च मनःशिला ॥ प्रवालं पारदश्चापि । सौवीराभिधमंजनं ॥ १४ ॥ पटलं पुनरभ्राणां । तथा तन्मिश्रवालुकाः ॥ अन्येऽप्येवंविधा ग्राह्या । जेयावसेतिवाक्यतः ॥ १५ ॥ इत्यर्थतः प्रज्ञापनावृत्तौ ॥ इतिपृथ्वीकायभेदाः ॥ जल

भेदा जलं शुद्धं । शीतमुष्णं स्वभावतः ॥ क्षारमीषदतिक्षार–मम्लमीषत्तथाधिकं ॥ १६ ॥
हिमावश्याकरका । धूमरी क्ष्मांतरिक्षजं ॥ क्ष्मामुद्भिद्य तृणाग्रस्थं । नाम्ना हरतनूदकं ॥१७॥
घृतेक्षुवारुणीदुग्धो–दकं तत्तद्रसांकितं ॥ घनोदध्यादयश्चास्य । भेदा येऽन्येऽपि तादृशाः ॥१८॥
॥ इत्यप्कायभेदाः ॥ शुद्धाग्निरशनिर्ज्वाला । स्फुलिंगांगारविद्युतः ॥ अलातोल्का मुर्मुराख्या
। निर्घातकणकाभिधाः ॥ १९ ॥ काष्टसंघर्षसंभूतः । सूर्यकांतादिसंभवः ॥ वह्निभेदा अमी
ग्राह्या । ये चान्येऽपि तथाविधाः ॥ २० ॥ इत्यग्निभेदाः ॥ प्राच्योदीच्यप्रतीचीन–दाक्षिणात्या
विदिग्भवाः ॥ ऊर्ध्वाधःसंभवा जाता । उद्भ्रामोत्कलिकानिलाः ॥ २१ ॥ गुंजा झंझाख्यसं-
वर्त्ता–वातो मंडलिकाभिधः ॥ घनवातस्तनुवात–स्तत्रोद्भ्रामोऽनवस्थितः ॥ २२ ॥
लहर्य इव पाथोधे–र्वातस्योत्कलिकास्तु याः ॥ रेणुकासु स्फुटव्यंग्या–स्तद्वानुत्कलिका-
निलः ॥ २३ ॥ गुंजन् सशब्दं यो वाति । स गुंजावात उच्यते ॥ झंझानिलो वृष्टियुक्तः ।
स्याद्वा योऽत्यंतनिष्ठुरः ॥ २४ ॥ आवर्त्तकस्तृणादीनां । वायुः संवर्त्तकाभिधः ॥ मंडलाकृ-
तिरामूलान्न । मंडलीवात उच्यते ॥ २५ ॥ घनो घनपरीणामो । धराद्याधार ईरितः ॥ वि-

रत्नः परिणामेन । तनुवातस्ततोऽप्यधः ॥ २६ ॥ मंदंमंदं च यो वाति । शीतः स्पर्शसुखावहः ॥ स नच्यते शुद्धवात । इत्याद्याः स्युर्मरुद्भिदः ॥ २७ ॥ इतिवायुकायभेदाः ॥ क्रमप्राप्ता निरूप्यते । भेदा अत्र वनस्पतेः ॥ साधारणस्य प्रत्येक—वपुषश्च यथाक्रमं ॥ २८ ॥ स्थावराणां सात्मकत्व—मनंगीकुर्वतःप्रति ॥ आदौ वनस्पतिद्वारा । स्पष्टं तदुपपाद्यते ॥ २९ ॥ पृथ्व्यादीनां सात्मकत्वे । युक्तियुक्तेऽपि युक्तयः ॥ वनस्पतेः सात्मकत्वे । गम्याः स्थूलदृशामपि ॥ ३० ॥ दिग्मात्रेणात्र ता एव । दर्श्यंते व्यक्तिपूर्वकं ॥ ततस्तदनुसारेण । ज्ञेयान्येष्वपि चेतना ॥ ३१ ॥ मूले सिक्तेषु वृक्षेषु । फलादिषु रसः स्फुटः ॥ स चोच्छ्वासमंतरेण । कथमूर्ध्वं प्रसर्पति ॥ ३२ ॥ रसप्रसर्पणं स्पष्टं । सत्युच्छ्वासेऽस्मदादिषु ॥ तदभावे तदभावो । दृष्टश्च मृतकादिषु ॥ ३३ ॥ अन्वयव्यतिरेकाभ्यां । ततो रसप्रसर्पणं ॥ उच्छ्वासमाक्षिपति यत् । व्याप्यं न व्यापकंविना ॥३४॥ उच्छ्वासश्चात्मनो धर्मो । निर्विवादमिदं खलु ॥ धर्मश्च धर्मिणं ब्रूते । स्वाविनाभावतः स्फुटं ॥ ३५ ॥ किंच—

दृश्यते दोहदोत्पत्ति—र्द्रूणामपि नृणामिव ॥ यत्तत्प्राप्य फलंत्येते । हृष्टाः शुष्यंति चा-

न्यथा ॥ ३६ ॥ दोहदश्चात्मनो धर्मः । कथं नात्मानमाक्षिपेत् ॥ इच्छारूपो दोहदो हि । ने-
च्छावंतविना भवेत् ॥ ३७ ॥ सञ्ज्ञा नियतसंकोच-विकाशप्रमुखा अपि ॥ संज्ञिनं कथमा-
त्मानं । न ज्ञापयंति युक्तिभिः ॥ ३८ ॥ यद्वा तारतम्यमेवं । द्रुमेष्वपि नरेष्विव ॥ केऽप्येरं-
डादिवन्नीचाः । केऽप्याम्रादिवदुत्तमाः ॥ ३९ ॥ उत्कटाः कंटकैः केचित् । केचिदत्यंतकोम-
लाः ॥ कुटिलाः केऽपि सरलाः । कुब्जा दीर्घाश्च केचन ॥ ४० ॥ रूपवर्णगंधरस-स्पर्शाः के-
चित्ततोऽन्यथा ॥ सविषा निर्विषाः केऽपि । सफला निष्फलाः परे ॥ ४१ ॥ जाताः केचिद-
वकरे । सुधानादौ च केचन ॥ केचिच्चिरायुषः शस्त्रा-द्यैः केचित्क्षिप्रमृत्यवः ॥ ४२ ॥ विना
कर्माणि नानात्व-मिदं युक्तिसहं कथं ॥ विना कारणनानात्वं । कार्यं तद्धि न संभवेत् ॥४३॥
कर्माणि च कार्यतया-त्मानं कर्त्तारमेव हि ॥ आक्षिपंत्यविनाभूताः । कुलालं कलशा इव ॥
॥४४॥ वनस्पतेः सात्मकत्वं । स्फुटमेव प्रतीयते ॥ जन्मादिधर्म्मोपेतत्वा-न्मनुष्यादिशरीरवत्
॥ ४५ ॥ अनुमानं पुरस्कृत्य । साधयत्यागमोऽपि च ॥ वनस्पतेः सचैतन्य-माचारांगे य-
थोदितं ॥ ४६ ॥ ❀ इमंपि जाइधम्मयं, एयंपि जाइधम्मयं, इमंपि वुड्ढिधम्मयं, एयंपि वु-

द्धिधम्मयं, इमंपि चित्तमंतयं, एयंपि चित्तमंतयं; इमंपि छिन्नं मिलायइ, एयंपि छिन्नं मिलायइ; इमंपि आहारगं, एयंपि आहारगं; इमंपि अणिच्चयं, एयंपि अणिच्चयं; इमंपि अमासयं, एयंपि अमासयं; इमंपि चउवचइयं, एयंपि चउवचइयं; इमंपि विपरिणामधम्मयं, एयंपि विपरिणामधम्मयमित्यादि. ।

अत्रैकं इदंशब्दवाच्यं मनुष्यशरीरं, द्वितीयं चैतछब्दवाच्यं वनस्पतिशरीरमित्यनयोर्दृष्टांतदार्ष्टांतिकयोजना ॥ वनस्पतेः सचैतन्य–मेवं सिद्धं नरांगवत् ॥ ततोऽस्य योनिजातत्व–मपि सिद्ध तदुच्यते ॥४७॥ तथाहि–बीजस्य द्विविधावस्था । योन्यवस्था तथापरा ॥ तन्मध्ये योन्यवस्था या । सा चैवं परिज्ञाप्यते ॥ ४८ ॥ जंतूत्पत्तिक्षणे पूर्व–जंतुना स्याद्यदुज्झितं ॥ अत्यक्तयोन्यवस्थं च । तद्बीजं योनिभूतकं ॥ ४९ ॥ तत्रच—जंतूज्झितं निश्चयेना–धुना ज्ञातुं न शक्यते ॥ ततोऽनतिशयीबीजं । सचेतनमुतेतरत् ॥ ५० ॥ योनिभूतं व्यवहरे–द्यावदध्वस्तयोनिकं ॥ ध्वस्तयोनित्वजीवत्वा–दयोनीभूतमेव हि ॥५१॥ यन्नष्टेऽपि सजीवत्वे । योनित्वं जातुचिद्भवेत् ॥ परिभ्रष्टे तु योनित्वे । सजीवत्वं न संभवेत् ॥ ५२ ॥ एवं च–त्पत्तिस्थानकं

जंतो—र्यद् विध्वस्तशक्तिकं ॥ सा योनिस्तत्र शक्तिस्तु । जंतूत्पादनयोग्यता ॥ ५३ ॥ तथोक्तं
-प्रज्ञापनावृत्तौ—❀
❀ अथ योनिरिति किमभिधीयते? उच्यते, जंतोरुत्पत्तिस्थानमविध्वस्तशक्तिकं, तत्र-
स्थजीवपरिणामनशक्तिसंपन्नमिति भावः ❀ अत एव श्रुतेऽपि—यवा यवयवाश्चापि । गोधू-
मव्रीहिशालयः ॥ धान्यानां श्रीजिनैरेषा—मुक्ता योनिस्त्रिवार्षिकी ॥ ५४ ॥ कलादमाषचपल
—तिलमुग्गमसूरकाः ॥ तुलस्थतुवरीवृत्त—चणका वल्लकास्तथा ॥ प्रज्ञप्ता योनिरेतेषां श्री-
जिनैः पंचवार्षिकी ॥ षट्पदी ॥ लट्टातसीशणकंगु—कोरदूषककोद्रवाः ॥ बीजानि मूलकानां
स—र्षपावरट्टरालकाः ॥ प्रज्ञप्ता योनिरेतेषा—मागमे सप्तवार्षिकी ॥ ५६ ॥ षट्पदी ॥ इयमत्र
भावना—कोष्ठकादिषु निक्षिप्यै—तेषां पिधानशालिनां ॥ लिप्तानां मुद्रितानां चो—त्कृष्टैषा यो-
निसंस्थितिः ॥ ५७ ॥ तदनु क्षीयते योनि—रंकुरोत्पत्तिकारणं ॥ भवेद्बीजमबीजं त—न्नोप्तमं-
कुरितं भवेत् ॥ ५८ ॥ अंतर्मुहूर्त्तं सर्वेषा—मेषां योनिर्जघन्यतः ॥ यत्केषांचिदचित्तत्वं । जाय-
तेंतर्मुहूर्त्ततः ॥ ५९ ॥ परं तत्सर्वविद्वेद्यं । व्यवहारपक्षे तु न ॥ व्यवहारात्तु पूर्वोक्तैः । काल-

मानैरचित्तता ॥ ६० ॥ इदमर्थतः पंचमांगे प्रवचनसारोद्धारे च ॥ ततश्च—बीजे च योनिभू-
ते । व्युत्क्रामति सैव जंतुरपरो वा ॥ मूलस्य यश्च कर्त्ता । स एव तत्प्रथमपत्रस्य ॥ ६१ ॥
आर्या ॥ इयमत्रभावना—बीजस्य निर्वर्त्तकेन । जीवेन स्वायुषः क्षयात् ॥ यद्बीजं स्यात्प-
रित्यक्त—मथ बीजस्य तस्य च ॥ ६२ ॥ अंबुकालक्ष्मादिरूप—सामग्रीसंभवे सति ॥ स एव
जातु बीजांगी । बद्धनादृशकर्मकः ॥ ६३ ॥ उत्पद्यते तत्र बीजे—ऽन्यो वा भूकायिकादिकः
॥ निबद्धमूलादिनाम—गोत्रकर्मात्र जायते ॥ ६४ ॥ स एव निर्वर्त्तयति । मूलं पत्रं तथादिमं
॥ मूलप्रथमपत्रे च । तत एवैककर्तृके ॥ ६५ ॥ यदागमः—❀ जोविय मूले जीवो । सोविय
पत्ते पढमयाएत्ति ❀ अत्राह परः—नन्वेवमादिमदले । मूलजीवकृते सति ॥ उच्छ्रत्किशलेऽ-
नंत—कायिकत्वं विरुध्यते ॥ ६६ ॥ यदागमः—❀ सव्वो वि किसलड खलु । उग्गममाणो अ-
णंतउ भणिउत्ति ❀ अत्रोच्यते—बीजे मूलतयोत्पद्य । बीजजीवोऽथवापरः ॥ करोत्युत्सूनता-
वस्थां । ततोऽनंतरभाविनीं ॥ ६७ ॥ ध्रुवं किशलयावस्थां । सृजंत्यनंतजंतवः ॥ ततश्च तेषु
जीवेषु । विनष्टेषु स्थितिक्षयात् ॥ ६८ ॥ स एव मूलजीवस्तां । तनूमनंतदेहिनां ॥ समा-

प्याद्यस्वांगतया । तावद्वर्द्धयते किल ॥ ६९ ॥ यावत्प्रथमपत्रं स्या–त्ततश्च न विरुध्यते ॥ कि-
शलेऽनंतकायित्व–मेककर्तृकतापि च ॥ ७० ॥ चतुर्भिःकलापकं ॥ अन्ये तु व्याचक्षते–इह
बीजसमुत्सूना–वस्थैव प्रतिपाद्यते ॥ प्रथमपत्रशब्देन । तस्याः प्रथममुद्भवात् ॥ ७१ ॥ त-
तश्च–मूलं बीजसमुत्सूना–वस्था चेत्येककर्तृके ॥ अनेन चैवं नियमो । लभ्यते सूत्रसूचितः
॥ ७२ ॥ एकजीवकृते एव । मूलं चोत्सूनता दशा ॥ नावश्यं मूलजीवोत्थं । शेषं किशलया-
दिकं ॥ ७३ ॥ ततश्चोभयमप्यविरुद्धं ॥ ❀ जो विय मूले जीवो । सोविय पढमयाएत्ति ॥
सव्वोवि किसलओ खलु । उग्गसमाणो अणंतओ भणिओ ॥ ७४ ॥ इतिच । एतच्चार्थतः प्रज्ञा-
पनावृत्तौ ॥ आचारांगवृत्तावपि तथैव ॥ यदुक्तं–❀यश्च मूलतया जीवः परिणमते स एव
प्रथमपत्रतयापीति, एकजीवकर्तृके मूलप्रथमपत्रे इति यावत्, प्रथमपत्रकं च यासौ बीजस्य
समुत्सुनावस्था भूजलकालापेक्षा सैवोच्यते इति नियमप्रदर्शनमेतत्, शेषं तु किशलयादिस-
कलं न मूलजीवपरिणामाविर्भावितमेवेत्यवगंतव्यं. ❀

उद्भवन् प्रथमांकूरः । सर्वसाधारणो भवेत् ॥ वर्धमानो यथायोगं । स्यात्प्रत्येकोऽथवा-

परः ॥ ७४ ॥ तत्र साधारणलक्षणं सामान्यत एवं—शरीरोच्छ्वासनिःश्वासा—हाराः साधारणाः खलु ॥ येषामनंतजीवानां । ते स्युः साधारणांगिनः ॥ ७५ ॥ विशेषतस्तल्लक्षणं चैवं—मूलादिदशकस्येह । यस्य भंगः समो भवेत् ॥ अनंतजीवं तद् ज्ञेयं । मूलादिदशके खलु ॥ ७६ ॥ वनस्पतिसप्ततौ समभंगलक्षणमेवमुक्तं—❀ चक्किआई चुन्नानिप्फाइयाइ । वत्तीइ जारिसो भंगो ॥ सवन्न समसरुवो । केआरतरीइतुल्लो वा ॥ १ ॥ इञ्च पुण विसेसोयं । समभंगा हुंति जे सयाकालं ॥ ते च्चिय अणंतकाया । न भणो जे कोमलत्तेण ॥ २ ॥ मूलादिदशकं त्वेवं—❀ मूले कंदे खंधे । तयाय साले पवालपत्तेय ॥ पुप्फे फल बीएविय । पत्तेयं जीवठाणाई ॥ ७७ ॥ ❀ मूलादेर्यस्य भग्नस्य । मध्ये हीरो न दृश्यते ॥ अनंतजीवं तद्ज्ञेयं । यदन्यदपि तादृशं ॥ ७८ ॥ हीरो नाम विषमः छेद भ्रंदतुरो वा ॥ यत्र स्कंधकंद-मूल—शाखासु खलु वीक्ष्यते ॥ त्वचा स्थूलतरा काष्ठात् । सा त्वचानंतजीविका ॥ ७९ ॥ येषां मूलकंदपत्र—फलपुष्पत्वचां भवेत् ॥ चक्राकारः समछेदो । भंगेऽनंतात्मकं हि तत् ॥ ॥ ८० ॥ ग्रंथिः पर्वात्मिका भंग—स्थानं सामान्यतोऽथवा ॥ रजसा छुरितं यस्य । भंगेऽनं-

तात्मकं हि तत् ॥ ८१ ॥ केदारशुष्कतरिका–पुटवद्भिद्यते च यत् ॥ प्रागुक्तलक्षणाभावे-ऽ-
प्यनंतकायिकं हि तत् ॥ ८२ ॥ यदागमः—
❀ चक्कागं भज्जमाणस्स । गंठीचुन्नघणो भवे ॥ पुढवीसरिसभेएण । अणंतजीवं वि-
याणाहि ॥ ८३ ॥ ❀ सक्षीरं वापि निःक्षीरं । पत्रं गूढशिरं च यत् ॥ अलक्ष्यमाणपत्रार्ध-
द्वयसंधि च यद्भवेत् ॥ ८४ ॥ अनंतजीवं तत्सर्वं । ज्ञेयमित्यादिलक्षणैः ॥ बहुश्रुतेभ्यो ज्ञेयानि
। लक्षणान्यपराण्यपि ॥ ८५ ॥ अयोगोलो यथाध्मातो । जातस्तप्तसुवर्णरुक् ॥ सर्वोऽप्यग्नि-
परिणतो । निगोदोऽपि तथांगिभिः ॥ ८६ ॥ तत्रापि बादरानंत–कायिकाः स्युरनेकधा ॥ मू-
लकशृंगबेराद्याः । प्रत्यक्षा जनचक्षुषां ॥ ८७ ॥ तथाहि—❀ सव्वाउ कंदजाई । सूरणकंदो
य वज्जकंदो य ॥ अल्लहलिद्दाय तहा । अल्लं तह अल्लकच्चूरो ॥ ८८ ॥ सत्तावरी विराली ।
कुंआरि तह थोहरी गलोई अ ॥ लसणं वंसकरिल्ला । गज्जर लूणओ लोढो ॥ ८९ ॥ गिरिक-
न्नि किसलपत्ता । खिरिंसुआ थेग अल्लमुत्था य ॥ तह लूणरुक्खछल्ली । खिल्लहडो अमयवल्ली-
य ॥ ९० ॥ मूला तह भूमिरुहा । विरुहा तह ढक्कवत्थुलो पढमो ॥ सूअरवल्लो अ तहा ।

पल्लंको कोमलंबिलिया ॥ ए१ ॥ आलू तह पिंमालू । हवंति एए अणंतनामेहिं ॥ अन्नम-णतं नेयं । लरकणजुत्तीइ समयाल ॥ ए२ ॥ अन्येऽपि स्नुहीप्रभृतयोऽनंतकायिकाः 'अवए-पणए' इत्यादिप्रज्ञापनोक्तवाक्यप्रबंधतो ज्ञेयाः ॥ इति साधारणवनस्पतिभेदाः ॥ ❀ प्रत्ये-कलक्षणं चैवं—यत्र मूलादिदशके । प्रत्यंगं जंतवः पृथक् ॥ प्रत्येकनामकर्माद्या—स्तत्प्रत्ये-कमिहोच्यते ॥ ए३ ॥ तथाऽऽचाहुर्जीवविचारे—

❀ एगसरीरे एगो । जीवो जेसिं तु ते उ पत्तेया ॥ फलफुल्लगल्लिकठ्ठा । मूला पत्ता-णि बीआणि ॥ ए४ ॥ ❀ किंच—मूलादेर्यस्य भग्नस्य । मध्ये हीरः प्रदृश्यते ॥ प्रत्येकजीवं तद्भिद्या—द्यदन्यदपि तादृशं ॥ ए५ ॥ यत्र मूलस्कंधकंद—शाखासु दृश्यते स्फुटं ॥ त्वचातन-नीयसी काष्ठात् । सा त्वक् प्रत्येकजीविका ॥ ए६ ॥ तस्य द्वादश भेदाः स्युः । प्रत्येकस्य-वनस्पतेः ॥ यथाप्रसिद्धि तान् कांश्चि—द्दर्शयामि समासतः ॥ ए७ ॥ वृक्षा गुच्छा गुल्मा । ल-ताश्च वल्ल्यश्च पर्वगाश्चैव ॥ तृणवलयहरीतकौषधि—जलरुहकुहणाश्च विज्ञेयाः ॥ ए८ ॥ आर्या ॥ वृक्षास्तत्र द्विभेदाः स्युः । फलोघबीजभेदतः ॥ एकबीजफलाः केचिद् । भूरिबीज-

फलाः परे ॥ ९९ ॥ अंकुल्लजंबूनिंबाम्राः । प्रियालसालपीलवः ॥ सल्लकीशैलुबकुल–भिल्ला-
तकाबिभीतकाः ॥ १०० ॥ हरीतकीपुत्रजीवाः । करंजारिष्टकिंशुकाः ॥ अशोकनागपुन्नाग–
प्रमुखा एकबीजकाः ॥ १ ॥ कपित्थतिंदुकप्लक्ष–धवन्यग्रोधदाडिमाः ॥ कदंबकुटजालोध्रः ।
पणसश्चदनार्जुनाः ॥ २ ॥ काकोदुंबरिकामातु–लिंगहस्तलकसंज्ञकः ॥ सपूपर्णदधिपर्ण–प्र-
मुखा बहुबीजकाः ॥ ३ ॥ प्रत्येकमेषां वृक्षाणां । प्रत्येकासंख्यजीवकाः ॥ मूलकंदस्कंधशा-
खा–त्वक्प्रवाला उदीरिताः ॥ ४ ॥ पुष्पाण्यनेकजीवानि । एकैकोंगी दले दले ॥ प्रत्येकमे-
कजीवानि । बीजानि च फलानि च ॥ ५ ॥ एकः पूर्णतरुस्कंध–व्यापी भवति चेतनः ॥ मू
लादयो दशाप्यस्य । भवंत्यवयवाः किल ॥ ६ ॥ तथोक्तं सूत्रकृतांगवृत्तौ श्रुतस्कंध० २ अ-
ध्य० ३—— ❀ आहावरमित्याद्यालापकस्यार्थः——अथापरमेतदाख्यातं तद्दर्शयति——इहास्मि-
न् जगत्येके, न तु सर्वे, तथाकर्मोदयवर्त्तिनो वृक्षयोनिकाः सत्वा भवंति, तदवयवाश्रिताश्चा-
परे वनस्पतिरूपा एव प्राणिनो भवति; तथाहि——यो ह्येको वनस्पतिजीवः सर्ववृक्षावयवव्या-
पी भवति, तस्य चापरे तदवयवेषु मूलकंदस्कंधत्वक्शाखाप्रवालपुष्पपत्रफलबीजभूतेषु दश

सु स्थानेषु जीवाः समुत्पद्यंते, ते च तत्रोत्पद्यमाना वृक्षयोनिका वृक्षव्युत्क्रमाश्चोत्पद्यंते ❀

मूलं स्याद्भूमिसंबद्ध । तत्र कंदः समाश्रितः ॥ तत्र स्कंध इति मिथो । बीजांताः स्यु-र्युताः समे ॥ ७ ॥ अतः पृथ्वीगतरस-माहरंति समेऽप्यमी ॥ यावत्फलानि पुष्पस्थं । बी-जानि फलसंगतं ॥ ८ ॥ श्रावणादिचतुर्मास्यां । प्रावृड्वर्षासु भूरुहः ॥ सर्वतो बहुलाहारा । अपां बाहुल्यतः स्मृताः ॥ ९ ॥ ततः शरदि हेमंते । क्रमादल्पाल्पभोजिनः ॥ यावद्वसंतेऽ-ल्पाहारा । ग्रीष्मेऽत्यंतमिताशनाः ॥ १० ॥ यत्तु ग्रीष्मेऽपि द्रुमाः स्यु-र्दलपुष्पफलाद्भुताः ॥ तदुष्णयोनिजीवाना-मुत्पादात्तत्र भूयसां ॥ ११ ॥-इति भग० शत०-७ उ० ३ ॥ ननु च-मूलादयो दशाप्येवं । यदि प्रत्येकदेहिभिः ॥ जाता अनेकैस्तदस्मि-न्नेकमूलादिधीः कथ ॥१२॥ अत्रोच्यते-श्लेषणद्रव्यसंमिश्रै-र्घटितानेकसर्षपैः ॥ भूरिसर्षपरूपापि । वर्त्तिरेकैव भासते ॥१३॥ यथा ते सर्षपाः सर्वे । स्वस्वमानाः पृथक् पृथक् ॥ वर्त्तेर्बुद्धिं सृजंतोऽपि । स्थिताः स्वस्वाव-गाहनाः ॥ १४ ॥ तथा प्रत्येकजीवास्ते । पृथक् स्वस्ववपुर्भृतः ॥ सृजंत्येकत्वमिलिता । एक-मूलादिवासनां ॥ १५ ॥ इह यद् द्वेषरागाभ्यां । संचितं पूर्वजन्मनि ॥ हेतुरेकत्व संबंधे । त-

स्कर्म श्लेरगोपमं ॥ १६ ॥ कृतैवनिधकर्माणो । जीवास्ते सर्षपोपमाः ॥ मूलादिवर्त्तिस्थानीय-मितिदृष्टांतयोजना ॥ १७ ॥ तिलशष्कुलिकापिष्ट-मयी तिलविमिश्रिता ॥ अनेकतिलजातापि । यथैका प्रतिभासते ॥ १८ ॥ इहापि दृष्टांतयोजना प्राग्वत् ॥

अथ गुच्छादयः—वृंताकी बदरी नीली । तुलसीकरमर्दिकाः ॥ यावासाघाडनिर्गुंड्य । इत्याद्या गुच्छजातयः ॥ १९ ॥ मल्लिकाकुंदकोरिंट—यूथिकानवमल्लिकाः ॥ मुद्गरः कणवीरश्च । जात्याद्या गुल्मजातयः ॥ २० ॥ अशोकचंपकलता । नागपद्मलता अपि ॥ अतिमुक्तकवासती—प्रमुखाः स्युर्लता इमाः ॥ २१ ॥ ऐकैव शाखा यत्स्कंधे । महत्यूर्ध्वं विनिर्गता ॥ नैवान्यास्ताहृशः स स्या—त्तनाख्यश्चंपकादिकः ॥ २२ ॥ कुष्मांडीत्रपुषीतुंबी । कालिंगी चिर्भटी तथा ॥ गोस्तनी कारवेल्ली च । वल्ल्यः कर्कोटकादिकाः ॥ २३ ॥ इक्षुर्वंशो वीरणानि—इक्कुरुः शर इत्यपि ॥ वेत्रो नडश्च काशश्च । पर्वगा एवमादयः ॥ २४ ॥ दूर्वादर्भार्जुनै रंभाः । कुरुविंदकरोहिषाः ॥ सुकव्याख्यं क्षीरबिस-मित्याद्यास्तृणजातयः ॥ २५ ॥ पुगअर्जूग्मरदा । नालिकेर्यश्च केतकाः ॥ तमालनालकंदल्य । इत्याद्या वलयाभिधाः ॥ २६ ॥

आर्यकदमनकमरुबक–मंडुकीसर्षपान्निधौ शाकौ ॥ अपि तंडुलीयवास्तुक–मित्याद्याहरितका ज्ञेयाः ॥ २७ ॥ आर्या ॥ औषध्यः फलपाकांता–स्ताः स्फुटा धान्यजातयः ॥ चतुर्विंशतिरुक्तानि । तानि प्राधान्यतः किल ॥ २८ ॥ तथाहि–❀ धन्नाइं चउवीसं । जव गोहुम सालि वीहि सट्ठिका ॥ कोद्दव अणुया कंगू । रालय तिल मुग्ग मासाय ॥ २९ ॥

अयसि हरिमंथ तिउडग । निष्फाव सिलं राया मासाय ॥ उच्छू मसूर तुवरी । कुलछ तह धन्नय कलाया ॥ ३० ॥ इति ❀ रुहंति जलमध्ये ये । ते स्युर्जलरुहा इमे ॥ कदंबशैवलकशे–रुकाः पद्मन्निदो मताः ॥ ३२ ॥ कुहणा अपि बोद्धव्या । नामांतरतिरोहिताः ॥ ष्फुटा देशाविशेषेषु । चतुर्थोपांगदर्शिताः ॥ ३३ ॥ तद्यथा—❀ से किंति कुहणा? कुहणा अणेगविहा पसत्ता, तं० आएकाए कुहणे कुसके दव्वहलिया सप्पाए सज्जाए सत्ताए वंसीणहिया कुरुए, जेया वस्से तहप्पगारा सेत्तं कुहणा इत्यादि ❀ गुल्मादीनां च मूलाद्या । अपि षट् संख्यजीवकाः ॥ सूत्रे हि वृक्षमूलादे–रेवोक्ताऽसंख्यजीवता ॥ ३४ ॥ तथोक्तं वनस्पतिसप्ततौ—❀ रुक्काणमसंखजिआ । मूला कंदा तया य खंधाय ॥ साला तहा पवाला । पु-

ढो पुढो हुंति नायव्वा ॥ ३५ ॥ गुच्छाईणं पुण संख—जीवया नज्जए ईमं पायं ॥ रुक्खाणं चि-
य जमसं—खजीवभावो सुए भणिओ ॥ ३६ ॥ ❀ अत्राय विशेषः——तालश्च नालिकेरी च ।
भरलश्च वनस्पतिः ॥ एकजीनस्कंध एषां । पत्रपुष्पादि सर्ववत् ॥ ३७ ॥ तथा—पंचमांगे त्रि-
धा—वृक्षाः—। प्रज्ञप्ता गणधारिभिः ॥ अनंतासंख्यसंख्यात—जीवकास्ते क्रमादिमे ॥ ३८ ॥ त-
त्राद्या. शृंगबेराद्याः । कपित्थाम्रादिकाः परे ॥ संख्यातजीवका ये च । ज्ञेया गाथाद्वयेन ते
॥ ३९ ॥ तच्चेदं——
❀ ताले तमाले तक्कलि । तेतलिसाले य सालकल्लाणे ॥ सरले-जीवइ केयइ । कंदलि
तह चम्मरुक्खे य ॥ ४० ॥ चुअरुक्खहिंगुरुक्खे । लवंगुरुक्खे य होइ बोधव्वे ॥ पूयफलीखज्जू-
री । बोधव्वा नालिएरीय ॥ ४१ ॥ तथा प्रज्ञापनावृत्तावपि—तालसरलनालिकेरीग्रहणं उपल-
क्षणं तेनान्येषामपि यथागमं एकजीवाधिष्ठितत्वं स्कंधस्य प्रतिपत्तव्यमिति ❀ शृंगाटकस्य
गुच्छः स्या—दनेकजीवकः किल ॥ पत्राण्येकैकजीवानि । द्वौ द्वौ जीवौ फलंप्रति ॥ ४२ ॥ पु-
ष्पाणां त्वयं विशेषः——जलस्थलोद्भूततया । द्विधा सुमनसः स्मृताः ॥ नालबद्धा वृंतबद्धाः ।

प्रत्येकं द्विविधास्तु ताः ॥४३॥ याः काश्चिन्नालिकाबद्धा—स्ताः स्युः संख्येयजीवकाः ॥ अनंतजीवका ज्ञेयाः । स्नुहीप्रभृतिजाः पुनः ॥४४॥ किंच—पद्मोत्पलनलिनानां । सौगंधिकसुभगकोकनदकानां॥ अरविंदानां च तथा। शतपत्रसहस्रपत्राणां ॥४५॥ आर्या॥ वृंतं बाह्यदलानि च। सकेसराणि स्युरेकजीवस्य ॥ पृथगेकैकजीवा—न्यंतर्दलकेसराणि बीजानि ॥४६॥ गीतिः ॥ पर्वगाणां तृणानां च अयं विशेषः—इक्ष्वीक्षुनलादीनां । सर्ववंशभिदां तथा ॥ भवंत्येकस्य जीवस्य । पर्वाक्षिपरिमोटकाः ॥ ४७ ॥ तत्राक्षि प्रोच्यते ग्रंथिः । प्रतीतं पर्व सर्वतः ॥ चक्राकारं पर्वपरि—वेष्टनं परिमोटकः ॥ ४८ ॥ पत्राणि प्रत्येकमेषा—मेकजीवाश्रितानि वै ॥ पुष्पाण्यनेकजीवानि । प्रोक्तानि परमर्षिभिः ॥ ४९ ॥ फलेषु चैषामयं विशेषः—पुष्पफलं कालिंगं । तुंबं चिर्भटमथ त्रपुषसंज्ञं ॥ घोषातकं पटोलं । तिंदूकं चैव तैंदूषं ॥ ५० ॥ आर्या ॥ एतेषां च—वृंतगर्भकटाहाना—मेको जीवः समर्थकः ॥ पृथग्जीवानि पत्राणि । बीजानि केसराण्यपि ॥ ५१ ॥ एतच्च सर्वमर्थतः क्वचित्पाठतश्च प्रायः प्रज्ञापनागतमेव, श्रीहेमचंद्रसूरिभिश्चाभिधानचिंतामणावित्युक्तं—कुरंटाद्या अग्रबीजा । मूलजास्तूत्पलादयः ॥ पर्वयोनय

इक्ष्वाद्याः । स्कंधजाः सल्लकीमुखाः ॥ ५२ ॥ शाल्यादयो बीजरुहाः । संमूर्छजास्तृणादयः ॥ स्युर्वनस्पतिकायस्य । षडेता मूलजातयः ॥ ५३ ॥ इदमर्थतः प्रथमांगेऽपि दशवैकालिकेऽपि, तथा जीवाभिगमे तु —चतस्रो मुख्यवल्ल्यः स्यु—स्तावन्नाश्च तद्भिदः ॥ ख्याता मुख्यलता अष्टौ । तावन्तताश्च तद्भिदः ॥ ५४ ॥ नामग्राहं तु ता नोक्ताः । प्राक्तनैरपि पंडितैः ॥ ततो न तत्र दोषो न—स्तत्पदव्यनुसारिणां ॥ ५५ ॥ त्रयो हरितकायाः स्यु—र्जलस्थलोद्भवाः ॥ भेदाः शतानि तावंति । तदवांतरभेदजाः ॥ ५६ ॥ सहस्रं वृंतबद्धानि । वृंताकादिफलान्यथ ॥ सहस्रं नालबद्धानि । हरितेष्वेव तान्यपि ॥ ५७ ॥ किंच—

मूलत्वक्काष्ठनिर्यास—पत्रपुष्पफलान्यपि ॥ गंधांगभेदाः सप्तामी । जिनैरुक्ता वनस्पतौ ॥ ॥ ५८ ॥ मूलमौशीरवालादि—स्त्वक्प्रसिद्धा तजादिका ॥ काष्टं च काकतुंडादि । निर्यासो घनसारवत् ॥ ५९ ॥ पत्रं तमालपत्रादि । प्रियंग्वादिसुमान्यपि ॥ कक्कोलैलालवंगादि—फले जातिफलाद्यपि ॥ ६० ॥ मूलादयस्ते सप्तापि । नानावर्णा भवंत्यतः ॥ गुणिताः पंचभिर्वर्णैः । पंचत्रिंशद्भवंति हि ॥ ६१ ॥ दुर्गंधाभावतः श्रेष्ट—गंधेनैकेन ताडिताः ॥ ते पंचात्रिंशदेव स्यु—

रेकेन गुणितं हि तत् ॥ ६२ ॥ नानारमाश्च ते सर्वे । ततः पंचरसाहताः ॥ संजातः शतमेकं ते । पंचसप्ततिसंयुतं ॥ ६३ ॥ स्पर्शास्तु यद्यप्यष्टापि । संभवंत्येव वस्तुतः ॥ तथाप्येषां प्रशस्तत्वा—द्गृह्यंते तेऽपि तादृशाः ॥ ६४ ॥ तद्भघूष्णमृदुस्निग्धैः । स्पर्शैरेते चतुर्गुणाः ॥ शतानि सप्त जातानि । गंधांगानां दिशानया ॥ ६५ ॥ उक्तं च जीवाभिगमवृत्तौ—❀ मूलतयकट्ठनिय्यास—पत्त पुप्फफलमाइगंधंगा ॥ वसाउत्तरभेया । गंधंग सया मुणेयव्वा ॥ ६६ ॥ सूत्रालापश्च—कतिणं भंते गंधंगा प० गो० सत्त गंधंगा, सत्तगंधंगसया प० इत्यादि । एवं वल्ल्यादिसूत्रालापा अपि वाच्याः ❀ लोकैश्च—शून्यसप्तांकहस्ताश्च—सूर्येंदुवसुवह्नयः ॥ एतत्संख्यांकनिर्दिष्टो । वनभारः प्रकीर्त्तितः ॥ ६७ ॥ पाठांतरे च—रामो वसवश्चंद्रः । सूर्यो भूमिस्तथैव च ॥ मुनिः शून्यं समादिष्ट—भारसंख्या निगद्यते ॥ ६८ ॥ एकैकजातेरेकैक—पत्रप्रचयतो भवेत् ॥ प्रोक्तसंख्यैर्मणैर्भार—स्ते त्वष्टादश भूरुहां ॥ ६९ ॥ तथा—

भत्वारोऽपुष्पका भारा । अष्टौ च फलपुष्पिताः ॥ स्युर्वल्लीनां च षड् भाराः । शेषनागेन भाषितं ॥ ७० ॥ इत्याद्युच्यते । इति बादराणां भेदाः ॥ प्रसिद्धाः सप्त याः पृथ्व्यः । व-

सुमत्यष्टमी पुनः ॥ ईषत्प्राग्भाराभिधा स्या–त्तासु स्वस्थानतोऽष्टसु ॥ ७१ ॥ अधोलोके च
पाताल–कलशावलिभित्तिषु ॥ भवनेष्वसुरादीनां । नारकावसथेषु च ॥ ७२ ॥ ऊर्ध्वलोके वि-
मानेषु । विमानप्रस्तटेषु च ॥ तिर्यग्लोके च कूटाद्रि–प्राग्भारविजयादिषु ॥ ७३ ॥ वक्षस्का-
रवर्ष शैल–जगतीवेदिकादिषु ॥ द्वारद्वीपसमुद्रेषु । पृथ्वीकायिकोद्भवः ॥ ७४ ॥ चतुर्भिः क-
लापकं ॥ इति–पृथ्वीकायस्थानानि ॥ स्वस्थानतोंबुकायानां । स्थानान्युक्तानि सूरिभिः ॥ घ-
नोदधिवलयेषु । घनोदधिषु सप्तसु ॥ ७५ ॥ अधः पातालकुम्भेषु । भवनेष्वासुरेषु च ॥ ऊ
र्ध्वलोके विमानेषु । स्वर्गपुष्करणीषु च ॥ ७६ ॥ तिर्यग्लोके च कूपेषु । नदीनदसरस्सु च
॥ निर्झरेष्वरवापीषु । गर्त्ताकेदारपंक्तिषु ॥ ७७ ॥ जलाशयेषु सर्वेषु । शाश्वताशाश्वतेषु च ॥
द्वीपेषु च समुद्रेषु । बादराप्कायसंभवः ॥ ७८ ॥ चतुर्भिःकलापकं ॥ इत्यप्कायस्थानानि ॥
स्वस्थानतोऽग्निकायानां । स्थानमाहुर्जिनेश्वराः ॥ नरक्षेत्रे द्विपाथोधि–सार्धद्वीपद्वयात्मके ॥
॥ ७९ ॥ तत्रापि–काले युगलिनामग्निः । काले च बिलवासिनां ॥ विदेहेष्वेव सर्वासु । क
र्मभूषु ततोऽन्यदा ॥ ८० ॥ किंच–ऊर्ध्वाधोलोकयोर्नायं । तिर्यग्लोकेऽप्यसौ भवेत् ॥ सदा

विदेहे भरतै-रवतेषु च कर्हिचित् ॥ ८१ ॥ पाकदाहादिसंतापं । तनुते नरकेषु यः ॥ स नाग्निः किंतु तत्तुल्या-स्ते विकुर्वंति पुद्गलान् ॥ ८२ ॥ या चोष्णवेदना तेषु । श्रूयतेऽत्यंतदारुणा ॥ पृथिव्यादिपुद्गलानां । परिणामः स तादृशः ॥ ८३ ॥ तथोक्तं—

❀ ॥ ननु सप्तस्वपि पृथ्वीषु तेजस्कायिकवर्जपृथ्वीकायिकादिस्पर्शो नारकाणां युक्तस्तेषां तासु विद्यमानत्वात्, तेजस्कायस्पर्शस्तु कथं? बादरतेजसां समयक्षेत्र एव सद्भावात्. सूक्ष्मतेजसां पुनस्तत्र सद्भावेऽपि स्पर्शनेंद्रियाऽविषयत्वादिति, अत्रोच्यते-इह तेजस्कायिकस्येव परमाधार्मिकनिर्मितज्वलनसदृशवस्तुनः स्पर्शस्तेजस्कायिकस्पर्शइति व्याख्येयं, न तु साक्षात्तेजस्कायिकस्यैव; अथवा भवांतरानुभूततेजस्कायिकपर्यायपृथिवीकायिकस्पर्शापेक्षया व्याख्येयं, इति भग० शतक १३ उद्देश ४ वृत्तौ ॥ ❀ स्वर्गादौ धूपघट्यादि । श्रूयते-यत्किलागमे ॥ तत्तुल्याः पुद्गलास्तेऽपि । कृत्रिमाकृत्रिमात्मकाः ॥ ८४ ॥ एतच्चार्थतः प्रायस्तृतीयतुर्योपांगयोरेव, ग्रंथांतरेऽपि-❀ पंचिंदियएगिंदिय । उड्ढेय अहेय तिरियलोए य ॥ विगलिंदियजीवा पुण । तिरियलोए मुणेयव्वा ॥ ८५ ॥ पुढवीआउवणस्सइ । बारसकप्पेसु सत्तपुढवी-

सु ॥ पुढवी जासिद्धिसिला । तेऊनराखित्ततिरिलोए ॥ ७६ ॥ सुरलोअवाविमझे । मझाइ न-
ह्नि-जलयरा जीवा ॥ गेविज्जे नहु वावी । वाविअन्नावे जलं नह्नि ॥ ७७ ॥ इत्यग्निकायस्था-
नं ॥ घनानिलवलयेषु । घनानिलेषु सप्तसु ॥ तनुवातवलयेषु । तनुवातेषु सप्तसु ॥ ७८ ॥
अधोलोके च पाताल—कुंन्नेषु न्नवनेषु च ॥ छिद्रेषु निष्कुटेष्वेवं । स्वस्थानं वायुकायिनां॥७९॥
ऊर्ध्वलोके च कल्पेषु । विमानेषु तदालिषु ॥ विमानप्रस्तटछिद्र—निष्कुटेषु तदुन्नवः ॥ ८० ॥
तिर्यग्लोके दिक्षु विदि—क्ष्वधश्चोर्ध्वं च तज्जनिः ॥ जगत्यादिगवाक्षेषु । लोकनिष्कुटकेषु च ॥
॥८१॥ इति वायुकायस्थानं॥ प्रत्येकः साधारणश्च । द्विविधोऽपि वनस्पतिः ॥ प्रायोऽप्कायसमः
स्थाने—र्जलान्नावे ह्यसौ कुतः ॥ ८२ ॥ इति वनस्पतिस्थानं ॥ उपपातसमुद्घात—निजस्था-
नैर्न्नवंति हि ॥ लोकासंख्यातमे न्नागे । पर्याप्ता बादरा इमे ॥ ८३ ॥

तत्र वायोस्त्वयं विशेषः पंचसंग्रहवृत्तौ—' बायरपवणा असंखे मुत्तुं ? लोकस्य यत्कि-
मपि शुषिरं, तत्र सर्वत्र पर्याप्तबादरवायवः प्रसर्पंति, यत्पुनरतिनिबिमनिचिततया शुषिरहीनं
कनकगिरिमध्यादि, तत्र न, तच्च लोकस्यासंख्येयन्नागमात्रं, तत एकमसंख्येयन्नागं मुक्त्वा

शेषेषु सर्वेष्वप्यसंख्येयेषु भागेषु वायवो वर्त्तंते, इति पर्याप्तबादरवनस्पतय उपपातसमुद्घा-
ताभ्यां सर्वलोकव्यापिनः स्वस्थानतो लोकासंख्येयभागे इति प्रज्ञापनावृत्तौ. ❀ अपर्याप्तास्तु
सर्वे स्व-स्थानैः पर्याप्तसन्निभाः ॥ उपपातसमुद्घातै-स्त्वशेषलोकवर्त्तिनः ॥ ૯૪ ॥ नवरं-
वह्निकायस्त्वपर्याप्त-स्तिर्यग्लोकस्य तद्गके ॥ उपपातेन निर्दिष्टो । द्वयोर्लोककपाटयोः ॥૯૫॥
तच्चैवं—आलोकांतं दीर्घे । सार्धद्वीपांबुधिद्वयविशाले ॥ अथ ऊर्ध्वलोकांत-स्पृशी कपाटे
भवे कल्प्ये ॥ ૯૬ ॥ तयोः कपाटयोस्तिर्यग् । लोकेंत्यांभोधिसीमनि ॥ योजनाष्टादशशत-
बाहल्ये सर्वतोऽपि हि ॥ ૯૭ ॥ अपर्याप्तबादराग्नेः । स्थानं स्यादुपपाततः ॥ तिर्यग्लोकं क-
पाटस्थ-मेव केऽप्यत्र मन्वते ॥ ૯૮ ॥ त्रिधा बादरपर्याप्ता-स्तेजस्कायिकदेहिनः ॥ स्युरेक-
भविका बद्धा-युषश्चाप्युदितायुषः ॥ ૯૯ ॥ तत्र येऽनंतरभवे । उत्पत्स्यंतेऽग्निकायिषु ॥ अ-
पर्याप्तबादरेषु । त एकभविकाः स्मृताः ॥ ૧૦૦ ॥ ये तु पूर्वभवसत्क-तृतीयांशादिषु ध्रुवं ॥
बद्धस्थूलाऽपर्याप्त्याग्न्या-युष्का बद्धायुषश्च ते ॥ ૧ ॥ ये तु पूर्वभवं त्यक्त्वा । साक्षादनुभवं-
ति वै ॥ स्थूलापर्याप्तवह्न्यायु-स्ते भवंत्युदितायुषः ॥ ૨ ॥ तत्रैकभविकाबद्धा-युषश्च द्रव्य-

तः किल ॥ स्थूलाऽपर्याप्तागन्यायुषः स्यु–र्भावतस्तूदितायुषः ॥ ३ ॥ अत्र च—इत्यतो बादराऽपर्या–प्ताग्निभिर्न प्रयोजनं ॥ स्थूलापर्याप्ताग्नयो ये । भावतस्तैः प्रयोजन ॥४॥ ततश्च—

यद्यप्युक्तकपाटाभ्यां । तिर्यग्लोकाच्च ये बहिः ॥ उदितबादराऽपर्याप्ता–ग्न्यायुष्का भवंति हि ॥ ५ ॥ तेऽप्युच्यंते तथात्वेन । ऋजुसूत्रनयाश्रयात् ॥ तथापि व्यवहारस्य। नयस्याश्रयणादिह ॥ ६ ॥ ये स्वस्थानसमश्रेणि–कपाटद्वयसंस्थिताः ॥ स्वस्थानानुगते ये च । तिर्यग्लोकेप्रविष्टकाः ॥ ७ ॥ त एव व्यपदिश्यंते–ऽपर्याप्तबादराग्नयः ॥ शेषाः कपाटांतराल—स्थिता नैव तथोदिताः ॥ ८ ॥ ये नाद्याप्यागतास्तिर्यग्–लोकेऽथवा कपाटयोः ॥ ते प्राक्तनभवावस्था । एव गण्या मनीषिभिः ॥ ९ ॥ उक्तं च प्रज्ञापनावृत्तौ—❀ पणयाललक्खपिहुला । दुन्नि कवाडा य उदिसिं पुठा ॥ लोगंते तेसिंतो । जे तेऊतेऊ घिप्पंति ॥ १० ॥ तत उक्तं–उववाएणं दोसु कवाडेसु तिरियलोए तट्टेय ॥ पृथ्व्यादिषु चतुर्ष्वेक–पर्याप्तनिश्रया मताः ॥ असंख्येया अपर्याप्ता । जीवा वनस्पतेः पुनः ॥ ११ ॥ पर्याप्तस्यैकैकस्या–ऽपर्याप्ता निश्रयास्मृताः ॥ असंख्येयाश्च संख्येया । अनंता अपि कुत्रचित् ॥ १२ ॥ तत्र च—संख्या

संख्यास्तु पर्याप्त—प्रत्येकतरुनिश्रया ॥ अनंता एव पर्याप्त—साधारणवनाश्रिताः ॥ १३ ॥ इ-
ति—बादराणां स्थानानि ॥ पर्याप्तयस्त्रिचतुरा । अपर्याप्तान्यन्नेदतः ॥ प्राणाश्चत्वारोंगबल—श्वा-
सायूंषि त्वगिंड्रियं ॥ १४ ॥ इति पर्याप्तिः ॥ पृथ्व्यंबुवह्निमरुतां । प्रत्येकं परिकीर्त्तिताः ॥ यो-
निलक्षाः सप्त सप्त । सप्तसप्तिसमप्रज्ञैः ॥ १५ ॥ योनीनां दशलक्षाणि । स्युः प्रत्येकमही-
रुहां ॥ साधारणतरूणां च । योनिलक्षाश्चतुर्दश ॥ १६ ॥ इति योनिः ॥ द्वादश सप्त त्रीणि
च । सप्ताष्टाविंशतिश्च लक्षाणि ॥ कुलकोटीनां पृथ्वी—जलाग्न्यनिलन्नूरुहां क्रमतः ॥ १७ ॥
एवं च सप्तपंचाश—ल्लक्षाणि कुलकोटयः ॥ एकेंड्रियाणां जीवानां । संग्रहण्यनुसारतः ॥१८॥
आचारांगवृत्तौ तु—❀ कुलकोडि-सयसहस्सा । बत्तीसछनव य पणवीसा ॥ एगिंदियबिति-
इंदिय—चनरिंदिय हरियकायाणं ॥ १९ ॥ अद्धत्तेरसबारस । दसदसनव चेव कोडिलस्काइं ॥
जलयरपस्किचनपय—नरभुअपरिसप्पजीवाणं ॥ २० ॥ पणवीसं ठवीसं च । सयसहस्साइं
नारयसुराणं ॥ बारस य सयसहस्सा । कुलकोडीणं मणुस्साणं ॥ २१ ॥ एवं द्वींड्रियादिष्व-
पि संग्रहण्यन्निप्रायेण वक्ष्यमाणासु कुलकोटिसंख्यासु मतांतरं अत एवाभ्यूह्यं ॥ तथा—

लक्षाणि कुलकोटीनां । षोडशोक्तानि तात्त्विकैः ॥ केवलं पुष्पजातीनां । तृतीयोपांगदेशिभिः ॥ २२ ॥ तानि चैवं—चतस्रो लक्षकोट्योंभो–रुहाणां जातिभेदतः ॥ कोरिंटकादिजातीनां । चतस्रः स्थलजन्मनां ॥ २३ ॥ चतस्रो गुल्मजातीनां । जात्यादीनां विशेषतः ॥ मधूकादि-महावृक्ष–जानां तत्संख्यकोटयः ॥ २४ ॥ इति कुलानि ॥ मिश्रा सचित्ताचित्ता च । योनि-रेषां भवेत्त्रिधा ॥ नुष्णाशीतोष्णशीतान्यीन् । विना ते ह्युष्णयोनयः ॥ २५ ॥ पंचाप्येते वि-निर्दिष्टा । जिनैः संवृतयोनयः ॥ उत्पत्तिस्थानमेतेषां । स्पष्टं यन्नोपलभ्यते ॥ २६ ॥ इति योनिसंवृतत्वादि ॥

द्वाविंशतिः सहस्राणि । वर्षाणामोघतो भवेत् ॥ पृथ्वीकायस्थितिर्ज्येष्ठा । विशेषस्तत्र दर्श्यते ॥ २७ ॥ एकं वर्षसहस्रं स्यात् । स्थितिर्ज्येष्ठा मृदुक्षितेः ॥ द्वादशाब्दसहस्राणि । कु-मारमृत्तिकास्थितिः ॥ २८ ॥ चतुर्दश सहस्राणि । सिकतायास्तु जीवितं ॥ मनःशिलायाश्चो-त्कृष्टं । षोडशाब्दसहस्रकाः ॥ २९ ॥ अष्टादश सहस्राणि । शर्कराणां गुरुस्थितिः ॥ द्वाविं-शतिः सहस्राणि । स्यात्साश्मादिखरक्षितेः ॥ ३० ॥ सप्तवर्षसहस्राणि । ज्येष्ठा स्यादंभसां

स्थितिः ॥ त्रयो वर्षसहस्राश्च । मरुतां परमा स्थितिः ॥ ३१ ॥ अहोरात्रास्त्रयोऽग्नीनां । दश-वर्षसहस्रकाः ॥ प्रत्येकभूरुहामन्ये-षां तु सांतर्मुहूर्तकं ॥ ३२ ॥ जनितेंतर्मुहूर्ते च । स्वस्वोत्कृष्टस्थितेः खलु ॥ पंचानामप्यमीषां स्या-ज्ज्येष्टा पर्याप्ततास्थितिः ॥ ३३ ॥ अंतर्मुहूर्तं सर्वेषां । यतोऽपर्याप्ततास्थितिः ॥ अंतर्मुहूर्ते क्षिप्तेऽस्मिन् । स्थितयस्ताः स्युरोघतः ॥ ३४ ॥ पंचानामप्यथैतेषां । जघन्यतो भवस्थितिः ॥ अंतर्मुहूर्तमानैव । दृष्टा दृष्टजगत्त्रयैः ॥ ३५ ॥ अपर्याप्तानां पंचाना-मप्येषां स्याद्भवस्थितिः ॥ अंतर्मुहूर्तप्रमिता । जघन्या परमापि च ॥ ॥ ३६ ॥ इति भवस्थितिः ॥ स्थूलक्ष्मादीनां चतुर्णां । स्थूलप्रत्येकवनस्य च ॥ सप्ततिः कोटिकोट्योंऽभो-धीनां कायस्थितिः पृथक् ॥ ३७ ॥ ओघतो बादरत्वे सा । बादरे च वनस्पतौ ॥ उत्सर्पिण्यवसर्पिण्यो । यावत्यस्ता ब्रवीम्यथ ॥ ३८ ॥ अंगुलासंख्यांशमान-नभःस्थाभ्रप्रदेशकैः ॥ प्रतिक्षणं हृतैर्याः स्यु-स्तावतीस्ता विचिंतय ॥ ३९ ॥

निगोदत्वोघतः सूक्ष्म-बादरत्वाविवक्षया ॥ द्वौ पुद्गलपरावर्तौ । सार्द्धौ कायस्थितिर्भवेत् ॥ ४० ॥ पर्याप्तत्वे क्ष्मादीनां । प्रत्येकं कायसंस्थितिः ॥ संख्येयाब्दसहस्रात्मा । वह्नेः संख्य-

दिनात्मिका ॥ ४१ ॥ विशेषश्चात्र—ऽपर्याप्तत्वेवादगयाः । क्षितेः कायस्थितिर्भवेत् ॥ वत्सराणां लक्षमेकं । षट्सप्ततिसहस्रयुक् ॥ ४२ ॥ तथाहि—नवेदष्टभवान् यावत् । ज्येष्ठायुःक्षितिकायिकः ॥ ज्येष्ठायुष्कक्षितित्वेनो—त्पद्यमानः पुनः पुनः ॥ ४३ ॥ यदुक्तं भगवत्यां—❀ भवादेसेणं जहन्नेणं दोभवगाहणाइ, उक्कोसेणं अठ्ठभवगाहणाइं, इति ❀ स्थितिरुत्कर्षतश्चैक—भवे प्रोक्ता क्ष्मांगिनां ॥ द्वाविंशतिसहस्राब्द—लक्षणा परमर्षिभिः ॥ ४४ ॥ अष्टभिर्गुणने चास्या । भवत्येव यथोदितं ॥ षट्सप्ततिवर्षसह—स्राधिकं वर्षलक्षकं ॥ ४५ ॥ षट्पंचाशद्वर्षसह—स्राण्येव जलकायिनां ॥ स्युश्चतुर्विंशतीरात्रि—दिवानि वह्निकायिनां ॥ ४६ ॥ स्युश्चतुर्विंशतिर्वर्ष—सहस्राण्यनिलांगिनां ॥ अशीतिश्च सहस्राणि । वर्षाणां वनकायिनां ॥ ४७ ॥ एषु सर्वेषु परमा । लब्ध्यपर्याप्ततास्थितिः ॥ अंतर्मुहूर्त्तप्रमिता । वच्मि तत्रापि भावनां ॥ ॥ ४८ ॥ क्ष्माद्यन्यतरत्वेनो—त्पद्य यद्यल्पजीवितः ॥ असकृत्कोऽप्यपर्याप्त—एव याति भवांतरं ॥४९॥ भवश्चैताद्दशान् कांश्चित् । कुर्यादंतर्मुहूर्त्तकान ॥ तैर्लघ्वंतर्मुहूर्त्तैश्च । स्याद्गुर्वंतर्मुहूर्त्तकं ॥ ५० ॥ अंतर्मुहूर्त्तमानाश्च । सर्वा एता जघन्यतः ॥ प्ररूपिताः श्रुते काय—स्थितयः पु-

रुषोत्तमैः ॥ ५१ ॥ इतिकायस्थितिः ॥

औदारिकं सतैजस–कार्मणमेतद्वपुस्त्रयं ह्येषां ॥ मरुतां च वैक्रियाद्यं । चतुष्टयं संभवेद्वपुषां ॥ ५२ ॥ इति देहाः ॥ मसूरचंद्रसंस्थानं । बादराणां भुवां वपुः ॥ जलानां स्तिबुकाकारं । सूच्योघाकृति तेजसां ॥ ५३ ॥ मरुतां तद् ध्वजाकारं । द्विधानामपि भूरुहां ॥ स्युः शरीराण्यनियत–संस्थानानीति तद्विदः ॥ ५४ ॥ इतिसंस्थानं ॥ असंख्येयोंगुलस्यांशः । क्ष्मादीनां देहसंमितिः ॥ जघन्यादुत्कर्षतश्च । स एव हि महान् भवेत् ॥ ५५ ॥ जघन्यादुत्कर्षतश्च । वायोर्वैक्रियं वपुः ॥ स्यात्तदप्यंगुलासंख्य–भागमात्रावगाहनं ॥ ५६ ॥ अंगुलासंख्यांशमानं । प्रत्येकद्रोर्जघन्यतः ॥ उत्कर्षतो योजनानां । सहस्रं साधिकं वपुः ॥ ५७ ॥ उत्सेधांगुलनिष्पन्न–सहस्रयोजनोन्मिते ॥ जलाशये यथोक्तांगाः । स्युर्लताकमलादयः ॥ ५८ ॥ प्रमाणांगुलमानेषु । यानि वार्धिहृदादिषु ॥ भौमान्येवाब्जानि तानि । विरोधः स्यान्मिथोऽन्यथा ॥ ५९ ॥ तद्यथा—उत्सेधः क समुद्राणां । प्रमाणांगुलजो महान् ॥ क लघून्यब्जनालानि । मितान्यौत्सेधिकांगुलैः ॥ ६० ॥ किंच–शाल्यादिधान्यजातीनां । स्यान्मूलादिषु सप्तसु ॥

उत्कृष्टैषां बीजपुष्प—फलेषु त्वगवगाहना ॥
धनुःपृथक्त्वप्रमिता । गरीयस्यवगाहना ॥ ६१ ॥ मूले कंदे खंधे । तयाय साले पवालप-
पृथक्त्वमंगुलानां यत् । प्रोक्तं पूर्वमहर्षिभिः ॥ ६२ ॥ इति भगवत्येकविंशशतवृ-
त्ते य ॥ सत्तसु वि धणुपुहत्तं । अंगुलमो पुप्फफलबीए ॥ ६३ ॥ अठ्ठे ते दस
त्तौ तत्सूत्रेऽपि ॥ ❀ सालि कल अयसि वंसे । उक्के दब्भे अ अब्भ तुलसीय ॥ उद्देशका इ-
वग्गा । असीति पुण होंति उद्देसा ॥ ६४ ॥ एकैकस्मिन् वर्गे मूलादयो दशदशोद्देशाका इ-
त्यर्थः ॥ ❀ सर्वेऽमी शालिवज्ज्येष्ठा—मिहापेक्ष्यावगाहनां ॥ शाल्यादयोऽमी सर्वेऽप्युद—पृथ-
क्त्वपरमायुषः ॥ ६५ ॥ किंच—❀ ताले गठ्ठिय बहुबीय—गाय गुच्छाय गुम्म वल्लीय ॥ छद-
सवग्गा एए । सठ्ठिं पुण होंति उद्देसा ॥ ६६ ॥ ❀ तालादीनां ज्येष्ठा—वगाहना मूलकंदकि-
शलेषु ॥ चापपृथक्त्वं पत्रे—ऽप्येवं कुसुमे तु करपृथक्त्वं सा ॥६७॥ स्कंधशाखात्वचासु स्या-
त् । गव्यूतानां पृथक्त्वकं ॥ अंगुलानां पृथक्त्वं च । सा भवेत्फलबीजयोः ॥ ६८ ॥ तालादी-
नां च मूलादि—पंचकस्य स्थितिर्गुरुः ॥ दशवर्षसहस्राणि । लघ्वी चांतर्मुहूर्त्तिकी ॥ ६९ ॥ प्र-
वालादिपंचकस्य । त्वेषामुत्कर्षतः स्थितिः ॥ नववर्षाणि लघ्वी तु । प्रागवदांतर्मुहूर्त्तिकी ॥७०॥

तालाग्यश्च तालेतमाले इत्यादिगाथायुग्मतो ज्ञेयाः ॥ एकास्थिकबहुबीजक-वृक्षाणामाम्रदा
ड़िमादीनां ॥ मूलादेर्दशकस्या-वगाहना तालवत्स्थितिश्चापि ॥ ७१ ॥

गुच्छानां गुल्मानां । स्थितिरुत्कृष्टावगाहना चापि ॥ शाल्यादिवदवसेया । वल्लीनां स्थि-
तिरपि तथैव ॥ ७२ ॥ वल्लीनां च फलस्या-वगाहना स्यात्पृथक्त्वमिह धनुषां ॥ शेषेषु नव-
सु मूला-दिषु तालप्रभृतिवद् ज्ञेया ॥ ७३ ॥ एवं च-अंगुलासंख्यांशमान-मेकाक्षाणां जघ-
न्यतः ॥ उत्कर्षतोंगमधिकं । योजनानां सहस्रकं ॥ ७४ ॥ तत्रापि-देहः सूक्ष्मनिगोदानामं-
गुलासंख्यभागकः ॥ सूक्ष्मानिलाग्न्यंबुभुवा-मसंख्येयगुणः क्रमात् ॥ ७५ ॥ वाय्वादीनां बा-
दराणां । ततोऽसंख्यगुणः क्रमात् ॥ बादराणां निगोदाना-मसंख्येयगुणस्ततः ॥ ७६ ॥ स्व-
स्वस्थाने तु सर्वेषा-मंगुलासंख्यभागता ॥ अंगुलासंख्यभागस्य । वैचित्र्यादुपपद्यते ॥ ७७ ॥
पर्याप्तानां बादराणां । मरुतां यत्तु वैक्रियं ॥ जघन्यादुत्कर्षतश्च । तदप्येतावदेव हि ॥ ७८ ॥
विशेषतश्च-निगोदपवनाग्न्यंबु-भुवः पंचाप्यमी द्विधा ॥ सूक्ष्माश्च बादरास्तेऽपि । पर्याप्ता-
न्यभिदा द्विधा ॥ ७९ ॥ एवं विंशतिरप्येते । जघन्योत्कृष्टभूघनाः ॥ जाताश्चत्वारिंशदेव-म-

श्च प्रत्येकमूरुहः ॥ ૮૦ ॥ पर्याप्तापर्याप्तहीनो–त्कृष्टमूघनभेदतः ॥ चतुर्धैवं चतुश्चत्वा–रिंश-
देकेंद्रियांगिनः ॥ ૮૧ ॥ अथावगाहनास्वेषां । तारतम्यमितीरितं ॥ पंचमांगैकोनविंश–शतो-
द्देशे तृतीयके ॥ ૮૨ ॥ अपर्याप्तनिगोदस्य । स्यात्सूक्ष्मस्यावगाहना ॥ सर्वस्तोका ततोऽष्टा-
ना–मसंख्येयगुणाः क्रमात् ॥ ૮૩ ॥ अपर्याप्तानिलाग्न्यंबु–भुवां सूक्ष्मगरीयसां ॥ ततोऽप-
र्याप्तयोः स्थूला–नंतप्रत्येकभूरुहोः ॥ ૮૪ ॥ असंख्येयगुणे तुल्ये । मिथोऽवगाहने लघू ॥ त-
तः सूक्ष्मनिगोदस्य । पर्याप्तस्यावगाहना ॥ ૮૫ ॥ असंख्येयगुणा लघ्वी–क्रमात्ततोऽधिका-
धिके ॥ अपर्याप्तपर्याप्तस्यो–त्कृष्टे तस्यावगाहने ॥ ૮૬ ॥ ततः सूक्ष्मवायुवह्न्यं–भोभुवां स्यु-
र्यथाक्रमं ॥ पर्याप्तानां जघन्याऽप–र्याप्तानां च गरीयसी ॥ ૮૭ ॥ पर्याप्तानां तथोत्कृष्टा । क्र-
मेणासंख्यसंगुणा ॥ विशेषाभ्यधिका चैव । विशेषाभ्यधिका पुनः ॥ ૮૮ ॥ एवं स्थूलानि-
लाग्न्यंभः–पृथ्वीनिगोदिनामपि ॥ प्रत्येकं त्रितयी भाव्या–ऽवगाहनाभिदां क्रमात् ॥ ૮૯ ॥
इत्येकचत्वारिंशत्स्युः । किलावगाहनाभिदः ॥ पर्याप्तस्थूलनिगोद–ज्येष्ठावगाहनावधि ॥૯૦॥
पर्याप्तप्रत्येकतरो–र्लघ्व्यसंख्यगुणा ततः ॥ तस्याऽपर्याप्तस्य गुर्वी । स्यादसंख्यगुणा त-

तः ॥ ८१ ॥ ततोऽसंख्यगुणा तस्य । पर्याप्तस्यावगाहना ॥ सातिरेकं योजनानां । सहस्रं सा यतो भवेत् ॥ ८२ ॥ ❀ यत्तु श्रीजिनवल्लभसूरिभिः स्वकृतदेहाल्पबहुत्वोद्धारे अपर्याप्तप्रत्येकतरूत्कृष्टावगाहनातः पर्याप्ततरूत्कृष्टावगाहना विशेषाभ्यधिकोक्ता, तच्चिंत्यं; अंगुलासंख्येयभागमानापर्याप्तप्रत्येकतरूत्कृष्टावगाहनातः सातिरेकयोजनसहस्रमानायाः पर्याप्तप्रत्येकतरूत्कृष्टावगाहनाया विशेषाधिकत्वस्याऽसंगतत्वात्, भगवतीसूत्रेण सह विरोधाच्च । तथा च तद्ग्रंथः—पत्तेअसरीरबादरवणस्सईकाईयस्स पज्जत्तगस्स जहन्निआ ओगाहणा असंखेज्जगुणा, तस्स चेव अपज्जत्तगस्स उक्कोसिआ ओगाहणा असंखिज्जगुणा, तस्स चेव पज्जत्तगस्स उक्कोसिया ओगाहणा असंखिज्जगुणा, इति भगवतीशतक ॥ १९ ॥ तृतीयोद्देशके; भावार्थस्तु यंत्रकाद् ज्ञेयः । अत्र जीवभेदाश्चतुश्चत्वारिंशत्, अवगाहनाभेदाश्च त्रिचत्वारिंशदेव, अपर्याप्तबादरनिगोदजघन्यावगाहनाया अपर्याप्तप्रत्येकवनस्पतिजघन्यावगाहनायाश्च मिथस्तुल्यत्वात्. अत एव कोष्टकाश्चतुश्चत्वारिंशत् अंकास्त्रिचत्वारिंशदेव, पंचमैकचत्वारिंशयोः कोष्टयोर्दशकस्यैव सद्भावादिति ध्येयं, ❀ इत्यंगमानं ॥

एषां त्रयः समुद्घाता । आद्याः स्युर्वेदनादयः ॥ क्ष्मादीनां तेऽनिलानां तु । चत्वारः स्युः
सवैक्रियाः ॥ ९२ ॥ इतिसमुद्घातः ॥ बादरक्षितिनीराग्नि । प्रत्येकान्यद्रुमा अपि ॥ मृत्वोत्प-
द्यतेऽखिलेषु । तिर्यक्त्त्रेकेंद्रियादिषु ॥ ९३ ॥ पंचाक्षेष्वपि तिर्यक्षु । गर्भसंमूर्छजन्मसु ॥ नरे-
ष्वपि छिन्नेदेषु । सख्येयायुष्कगालिषु ॥ ९४ ॥ युग्म ॥ गछतो वह्निवायू तु । सर्वेष्वेषु नरा-
न्विना ॥ ततः पूर्वे द्विगतयो–ऽमू त्वेकगतिकौ स्मृतौ ॥ ९५ ॥ इति गतिः ॥ एकाद्वित्रिचतु-
रक्षाः । पंचाक्षाः संख्यजीविनः ॥ तिर्यंचो मनुजाश्चैव । गर्भसंमूर्छनोद्भवाः ॥ ९६ ॥ अपर्या-
प्ताश्च पर्याप्ताः । सर्वेऽप्येते सुरास्तथा ॥ भवनव्यंतरज्योति–ष्काद्यकल्पद्वयोद्भवाः ॥ ९७ ॥
मृत्वा प्रत्येकविटपि–बादरक्षितिवारिषु ॥ आयांति तेषु देवास्तु । पर्याप्तेष्वपरेषु न ॥ ९८ ॥
अपर्याप्तेषु त्रिष्वेषु । निगोदाग्न्यनिलेषु च ॥ उत्पद्यते च पूर्वोक्ताः । प्राणिनो निर्जरान्विना ॥
॥ ९९ ॥ निर्जरोत्पत्तियोग्याना–मुक्तः प्रत्येकभूरुहां ॥ विशेषः पंचमांगस्थै–कविंशादिशतष्ठ-
ये ॥ ३०० ॥ शाल्यादिधान्यजातीनां । पुष्पे बीजे फलेषु च ॥ देव उत्पद्यतेऽन्येषु । न मू-
लादिषु सप्तसु ॥ १ ॥ कोरटकादिगुल्मानां । देवः पुष्पादिषु त्रिषु ॥ उत्पद्यते न मूलादि–स

लके किल शालिवत् ॥ २ ॥ इक्षुवाटिकमुख्यानां । मूलादिनवके सुरः ॥ उत्पद्यते नैव किं-
तु । स्कंधे उत्पद्यते परं ॥ ३ ॥

❀ इक्षुवाटिकादयस्त्वमी पंचमांगे प्रायो रूढिगम्याः पर्वकविशेषाः, अह भंते उक्खु-
वाडियवीरणइक्कडभमाससंवत्तसत्तवन्नतिमिरसेसयचोरगतलाण, एएसिणं जे जीवा मूलत्ता-
ए वक्कमंति, एवं जहेव वंसग्गे तहेव एछवि मूलादीया दसउद्देसगा, नवरं खंधुद्देसए देवो उ-
ववज्जइ चत्तारिलेसाउ ❀ तालप्रभृतिवृक्षाणां । तथैकास्थिकभूरुहां ॥ तथैव बहुबीजानां ।
वल्लीनामप्यनेकधा ॥ ४ ॥ उत्पद्यते प्रवालादि–ष्वेव पंचसु निर्जरः ॥ न मूलादिपंचकेऽत्र ।
भोक्तशेषवनस्पतौ ॥ ५ ॥ तथोक्तं––पत्तपवाले पुप्फे । फले य बीए य होइ उववाउ ॥ रु-
क्खेसु सुरगणाणं । पसच्छरसवणगंधेसु ॥ १ ॥ ❀ इति-भगवतीद्वाविंशशतवृत्तौ ॥ एकसाम-
यिकी संख्यो–त्पत्तौ च मरणेऽपि च ॥ विज्ञेया सूक्ष्मवन्नात्र । विरहोऽत्रापि सूक्ष्मवत् ॥
॥ ६ ॥ इत्यागतिः ॥ विपद्यानंतरभवे । तिर्यक्पंचाक्ष्यतां गताः ॥ सम्यक्त्वं देशविरतिं । ल-
भते भूदकद्रुमाः ॥ ७ ॥ विपद्यानंतरभवे । प्राप्य गर्भजमर्त्यतां ॥ सम्यक्त्वं विरतिं मोक्ष–

मप्याप्नुवंति केचन ॥ ८ ॥ विपद्यानंतरन्नवे । न लन्नंतेऽग्निवायवः ॥ सम्यक्त्वमपि डुष्कर्म–
तिमिरावृतलोचनाः ॥ ए ॥ इत्यनंतराप्तिः ॥ पृथ्व्यंबुकायिका मुक्तिं । यांत्यनंतरजन्मनि ॥
चत्वार एकसमये । षड् वनस्पतिकायिकाः ॥ १० ॥ इति समयेसिद्धिः ॥ पृथ्व्यंबुप्रत्येकतरु–
ष्वाद्यलेश्याचतुष्टयं ॥ आद्यं लेश्यात्रयं साधा–रणडुमाग्निवायुषु ॥११॥ चतुर्थलेश्यासंन्नवस्त्वेवं–
तेजोलेश्यावतां येषु । नाकिनां गतिसंन्नवः ॥ आद्यमंतर्मुहूर्त्तं स्या–त्तेजोलेश्यापि तेषु
वै ॥ १२ ॥ इतिलेश्या ॥ एषां स्थूलक्ष्मादीना–माहारः षड्दिगुन्नवः ॥ स्थूलानिलस्य त्रिच–
तुः–पंचदिक्संन्नवोऽप्यसौ ॥ १३ ॥ इत्याहारदिक् ॥ एकोनविंशतितमा–द्दीन्येकादश सूक्ष्म–
वत् ॥ द्वाराणि स्थूलपृथ्व्यादि–जीवानां जगुरीश्वराः ॥ १४ ॥ आद्यं गुणस्थानमेषु । मतं
सिद्धांतिनां मते ॥ कर्मग्रंथिमते त्वाद्यं । तद्द्वयं न्नूजलडुषु ॥ १५ ॥ स्युस्तथा स्थूलमरुतां ।
योगाः पंच यतोऽधिकौ ॥ एषां वैक्रियतन्मिश्रौ । त्रयोऽन्येषां च पूर्ववत् ॥ १६ ॥ एवं द्वारा–
णि ॥ अंगुलासंख्यांशमाना । यावंतोंशा न्नवंति हि ॥ एकस्मिन् प्रतरे सूची–रूपा लोके घ–
नीकृते ॥ १७ ॥ तावंतः पर्याप्ता । निगोदप्रत्येकतरुधराश्चापः ॥ स्युः किंचिन्न्यूनावलि–घन–

समयमितास्त्वनलजीवाः ॥ १८ ॥ अत्र च–यद्यपि पूर्वार्धोक्ता–श्चत्वारस्तुल्यमानका प्रोक्ताः ॥ तदपि यथोत्तरमधिकाः । प्रत्येतव्या असंख्यगुणाः ॥ १९ ॥ यत्कोंगुलासंख्यभागो । यः सूचीखमकल्पने ॥ तस्यासंख्येयभेदत्वात् । घटते सर्वमप्यदः ॥ २० ॥ घनीकृतस्य लोकस्या—संख्येयभागवर्त्तिषु ॥ असंख्यप्रतरेषु स्यु—र्यावंतोऽभ्रप्रदेशकाः ॥ २१ ॥ तावंतो बादराः पर्या—प्तकाः स्युर्वायुकायिकाः ॥ इदं प्रज्ञापनावृत्ता—वाद्यांगविवृतौ त्विदं ॥ २२ ॥ सुसंवर्त्तितलोकैक–प्रतरासंख्यभागकैः ॥ प्रदेशैः प्रमिताः स्थूला—पर्याप्तक्ष्मांबुवायवः ॥ २३ ॥

क्षेत्रपल्योपमासंख्य–भागप्रदेशसंमिताः ॥ पर्याप्ता बादरहवि–र्भुजः प्रोक्ताः पुरातनैः ॥ ॥ २४ ॥ संवर्त्तितचतुरस्त्री–कृतलोकश्रेण्यसंख्यभागगतैः ॥ वियदंशैः पर्याप्ता–स्तुल्याः प्रत्येकतरुजीवाः ॥ २५ ॥ संवर्त्तितचतुरस्त्री–कृतस्य लोकस्य यः प्रतर एकः ॥ तदसंख्यभागखांश–प्रमिताः पर्याप्तबादरनिगोदाः ॥ २६ ॥ अतःपरं तु ग्रंथद्वयेऽपि तुल्यमेव ॥ बादराः स्थावराः सर्वे–ऽप्येते पर्याप्तकाः पुनः ॥ स्युः प्रत्येकमसंख्येय–लोकाभ्रांशमिताः खलु ॥ २७॥

लोकमानाभ्रखंडाना–मनंतानां प्रदेशकैः ॥ तुल्याः स्थूलानंतकाय—जीवाः प्रोक्ता जिनेश्वरैः ॥ २८ ॥ इतिमानं ॥ पर्याप्ताः बादराः सर्व–स्तोकाः पावककायिकाः ॥ असंख्येयगुणास्तेभ्यः । प्रत्येकधरणीरुहः ॥ २९ ॥ असंख्येयगुणास्तेभ्यः । स्युर्बादरनिगोदकाः ॥ तेभ्यो भूकायिकास्तेभ्य–श्चापस्तेभ्यश्च वायवः ॥ ३० ॥ तेभ्योऽनंतगुणाः स्थूलाः । स्युर्वनस्पतिकायिकाः ॥ सामान्यतो बादराश्चा–धिकाः पर्याप्तकास्ततः ॥ ३१ ॥ स्वस्वजातीयपर्याप्त–केभ्योऽसंख्यगुणाधिकाः ॥ अपर्याप्ताः स्वजातीय–देहिनः परिकीर्त्तिताः ॥ ३२ ॥ यद्बादरस्य पर्याप्त–कस्यैकैकस्य निश्रया ॥ असंख्येया अपर्याप्ता—स्तज्जातीया भवंति हि ॥ ३३ ॥ तथोक्तं–प्रज्ञापनायां–❀ पज्जत्तगनिस्साए अपज्जत्तगा वक्कमंति, जत्थ एगो तत्थ नियमा असंखेज्जा ❀ इत्यल्पबहुत्वं ॥ सर्वस्तोका दक्षिणस्यां । भूकाया दिगपेक्षया ॥ उदक् प्राक् च ततः प्रत्यक् । क्रमाद्विशेषतोऽधिकाः ॥ ३४ ॥ उपपत्तिश्चात्र—

यस्यां दिशि घनं तस्यां । बहवः क्षितिकायिकाः ॥ यस्यां च शुषिरं तस्यां । स्तोका एव भवंत्यमी ॥ ३५ ॥ दक्षिणस्यां च नरक–निवासा भवनानि च ॥ भूयांसि भवनेशानां ।

प्राचुर्यं शुषिरस्य तत् ॥ ३६ ॥ अल्पा उदिच्यां नरका । भवनानीति तत्र ते ॥ घनप्राचुर्यतो-ऽनल्पाः । स्युर्याम्यदिगपेक्षया ॥ ३७ ॥ प्राच्यां रविशशिद्वीप—सद्भावाद्घनन्यूनता ॥ उत्तरा-पेक्षया तत्र । बहवः क्ष्मितिकायिकाः ॥ ३८ ॥ प्राक्प्रतीच्योरविशशि—द्वीपसाम्येऽपि गौतमः ॥ द्वीपोऽधिकः प्रतीच्यां स्या—त्ततस्तेऽत्राधिकाः स्मृताः ॥ ३९ ॥ ननु प्रतिच्यामधिको । द्वी-पो यथास्ति गौतमः ॥ तथात्र संत्यधोग्रामाः । सहस्रयोजनोंडताः ॥ ४० ॥ तत्खातपूरित-न्यायात् । घनस्य शुषिरस्य च ॥ साम्यात्पृथ्वीकायिकानां । प्रत्यक्प्रचूरता कथं ॥ ४१ ॥ अ-त्रोच्यते—यथा प्रत्यगधोग्रामा—स्तथा प्राच्यामपि ध्रुवं ॥ पर्त्तादिसंभवोऽस्त्येव । किंच द्वी-पोऽपि गौतमः ॥ ४२ ॥ वक्ष्यमाणोच्चयायाम—व्यासः प्रो... धिया ॥ यद्यधोग्रामशुषिरे । तदप्येभ्योऽतिरिच्यते ॥ ४३ ॥ एवं च घनबाहुल्यात् । प्रतीच्यां प्रागपेक्षया ॥ पृथ्वीकायिक-बाहुल्यं । युक्तमेव यथोदितं ॥ ४४ ॥ भवंत्यप्कायिकाः स्तोकाः । पश्चिमायां ततः क्रमात् ॥ प्राच्यां याम्यामुदीच्यां च । विशेषेणाधिकाधिकाः ॥ ४५ ॥ उपपत्तिश्चात्र—

प्रतीच्यां गौतमद्वीप—स्थाने वारामभावतः ॥ सर्वस्तोका जिनैरुक्ता । युक्तमेवांबुकायि-

कः ॥ ४६ ॥ पूर्वस्यां गौतमद्वीपा—भावाद्विशेषतोऽधिकाः ॥ दक्षिणस्यां चंद्रसूर्य—द्वीपाभा
वात्ततोऽधिकाः ॥ ४७ ॥ उदिच्यां मानससरः—सद्भावात्सर्वतोऽधिकाः ॥ अस्ति ह्यस्यां तदसं-
ख्य—योजनायतविस्तृतं ॥ ४८ ॥ याम्युदीच्योर्वह्निकायाः । स्तोकाः प्रायो मिथः समाः ॥ अ-
ग्न्यारंभकबाहुल्यात् । प्राच्यां संख्यगुणाधिकाः ॥ ४९ ॥ ततः प्रतीच्यामधिका । वह्न्याद्या-
रंभकारिणां ॥ ग्रामेष्वधोलौकिकेषु । बाहुल्याद्धरणीस्पृशां ॥ ५० ॥ पूर्वस्यां मरुतः स्तोका-
स्ततोऽधिकाधिका मताः ॥ प्रतीच्यामुत्तरस्यां च । दक्षिणस्यां यथाक्रमं ॥ ५१ ॥ यस्यां स्या-
च्छुषिरं भूरि । तस्यां स्युर्भूरयोऽनिलाः ॥ घनप्राचुर्ये च तेऽल्पा—स्तच्च प्रागेव भावितं ॥५२॥
स्युर्यदपि खातपूरित—युक्त्या प्रत्यग्धराधिका तदपि ॥ प्रत्यगधोग्रामभुवां । निम्नत्वाद्वास्तवी
शुषिरबहुता ॥ ५३ ॥ वनानामल्पबहुता । भाव्याप्कायिकवद्बुधैः ॥ तरूणां ह्यल्पबहुता । ज-
लाल्पबहुतानुगा ॥ ५४ ॥ सामान्यतोऽपि जीवाना—मल्पता बहुतापि च ॥ वनाल्पबहुता-
पेक्षा । ह्यनंता एत एव यत् ॥ ५५ ॥ इति दिगपेक्षयाल्पबहुता ॥ कायस्थितिर्या सूक्ष्माणां
। प्रागुक्ता तन्मितं मतं ॥ सामान्यतो बादराणां । बादरत्वे किलांतरं ॥ ५६ ॥ स्थूलक्ष्मां-

ज्ञ

अनंतकालो ज्येष्ठं स्या–ल्लघु चांतर्मुहूर्त्तकं ॥ ५७ ॥ कालं

ज्ञोऽग्निपवन–प्रत्येकद्रुषु चांतरं ॥ स्थित्वा स्थूलक्ष्मादिज्ञावं । पुनः केचिदवाप्नुयुः ॥५८॥

निगोदेषु यत्ते–ऽनंतं चांतर्मुहूर्त्तकं ॥ कालोऽसंख्यः पृथिव्यादि–कायस्थितिमितश्च सः

बादरस्य निगोदस्यां–तरमुत्कर्षतो ज्ञवेत् ॥ जघन्यतस्तु सर्वेषा–मंतर्मुहूर्त्तमेव तत्

॥ ५९ ॥ सामान्यतः स्थूलवन–कायत्वेऽप्येतदंतरं ॥ श्रुतादगाधादिव दु-

॥ ६० ॥ स्वरूपमेकेंद्रियदेहिनां मया । धियाल्पया किंचिदिदं समुध्धृतं ॥ विश्वाश्चर्यदकीर्त्तिकीर्त्तिविजयश्रीवाच-

ग्धवारिधे–र्जलं खचंच्वा शिशुना पतत्रिणा ॥ ६१ ॥ काव्यं यत्किल तत्र निश्चितज-

केंद्रांतिष–द्राजश्रीतनयोऽतनिष्ट विनयः श्रीतेजपालात्मजः ॥ सर्गो निर्गलितार्थसार्थसुज्ञगः पूर्णः सुखं पंचमः ॥ ६२ ॥

गत्तत्वप्रदीपोपमे ।

॥ इति पंचमः सर्गः समाप्तः ॥

॥ षष्ठः सर्गः प्रारभ्यते ॥

स्युर्द्वित्रिचतुरिंद्रियाः

विकलान्यसमग्राणि । स्युर्येषामिंद्रियाणि वै ॥ विकलेंद्रियसंज्ञास्ते । विष्टाद्यमेघजाः की-

॥ १ ॥ तत्र प्रथमज्ञेदाः—अंतर्जाः क्रमशो द्विधा । कुक्षिपायुसमुद्भवाः ॥

टाः । काष्टकीटा घुणान्निधाः ॥ २ ॥ ( गंडोला अलसा वंशी–मुखा मातृवहा अपि ॥ जलौकसः पूतरका । मेहरा जातका अपि ॥ ) नानाशंखाः शंखनकाः । कपर्दशुक्तिचंदनाः ॥ इत्याद्या द्वींडियाः पर्या–साऽपर्यात्ततया द्विधा ॥ ३ ॥ इतिद्वींद्रियन्नेदाः ॥ पीपिलिका बहुविधा । घृतेल्यश्चोपदेहिकाः ॥ लिक्षा मर्कोटका यूका । गर्दन्ना मत्कुणादयः ॥ ४ ॥

इड्गोपेलिका सावा । गुल्मीगोमयकीटकाः ॥ चौरकीटाः धान्यकीटाः । पंचवर्णाश्च कुंथवः ॥ ५ ॥ तृणकाष्टफलाहाराः । पत्रवृंताशना अपि ॥ इत्याद्यास्त्रींडियाः पर्या–प्ताऽपर्याप्ततया द्विधा ॥ ६ ॥ इति–त्रींइियन्नेदाः ॥ वृश्चिका ऊर्णनान्नाश्च । भ्रमर्यो भ्रमरा अपि ॥ कंसार्यो मशकास्तिङ्का । मक्षिका मधुमक्षिकाः ॥ ७ ॥ पतंगा झिल्लिका दंशाः । खद्योता ढिंकणा अपि ॥ रक्तपीतहरित्कृष्ण–चित्रपक्षाश्च कीटकाः ॥ ८ ॥ नंद्यावर्त्ताश्च कपिल–ओलाद्याश्चतुरिंडियाः॥ न्नवंति तेऽपि द्विविधाः । पर्याप्तान्यतयाखिलाः ॥ ९ ॥ इति चतुरिंडियाः ॥ ऊर्ध्वाधोलोकयोरेक–देशन्नागे न्नवंति ते ॥ तिर्यग्लोके नदीकूप–तटाकदीर्घिकादिषु ॥ १० ॥ द्वीपांन्नोधिषु सर्वेषु । तथा नीराश्रयेषु च ॥ षोढापि विकलाक्षाणां । स्थाना-

न्युक्तानि तात्त्विकैः ॥ ११ ॥ उपपातात्समुद्घाता-न्निजस्थानादपि स्फुटं ॥ असंख्येयतमे भागे । ते लोकस्य प्रकीर्त्तिताः ॥ १२ ॥ इति-स्थानं ॥ आहारांगेंद्रियोच्छ्वास-भाषाख्या एषु पंच च ॥ पर्याप्तयस्तथा प्राणाः । षट्सप्ताष्टौ यथाक्रमं ॥ १३ ॥ चत्वारः स्थावरोक्तास्ते । जिह्वावाग्बलवृद्धिनः ॥ षड्द्वींद्रियेष्वथैकैकें-द्रियवृद्धिस्ततो द्वयोः ॥ १४ ॥ इति-पर्याप्तयः ॥ लक्षद्वयं च योनीना-मेषु प्रत्येकमिष्यते ॥ लक्षाणि कुलकोटीनां । सप्ताष्ट नव च क्रमात् ॥ १५ ॥ इति योनिकुलसंख्या ॥ विवृता योनिरेतेषां । त्रिविधा सा प्रकीर्त्तिता ॥ सचित्ता-चित्तमिश्राख्या । भावना तत्र दर्श्यते ॥ १६ ॥

जीवद्गवादिदेहोत्थ-कृम्यादीनां सचित्तका ॥ अचित्तकाष्ठाद्युत्पन्न-घूणादीनामचित्तका ॥ ॥ १७ ॥ सचित्ताचित्तकाष्ठादि-संजातानां तु मिश्रका ॥ उष्णा शीता च शीतोष्णे-त्यपि सा त्रिविधा मता ॥ १८ ॥ इतियोनिस्वरूपं ॥ द्वयक्षाणां द्वादशाब्दानि । भवेज्ज्येष्ठा भव-स्थितिः ॥ त्र्यक्षाणां पुनरेकोन-पंचाशदेव वासराः ॥ १९ ॥ षण्मासाश्चतुरक्षाणां । जघ-न्यांतर्मुहूर्त्तकं ॥ सांतर्मुहूर्त्तोना त्वेषां । स्यात्पर्याप्ततया स्थितिः ॥ २० ॥ इतिभवस्थितिः ॥

जघन्तो विकलाङ्गेषु । कायस्थितिरुरीकृता ॥ संख्येयाब्दसहस्राणि । प्रत्येकं च तथा त्रिषु ॥
॥ २१ ॥ पर्याप्तत्वे तु नवरं । ह्यथक्ककायस्थितिर्मता ॥ संख्येयान्येव वर्षाणि । श्रूयतां तत्र
भावना ॥ २२ ॥ भवस्थितिर्द्वींद्रियाणा—मुत्कृष्टा द्वादशाब्दिकी ॥ तादृग्निरंतरकिय——भवा-
दानादसौ भवेत् ॥ २३ ॥ एवमग्रेऽपि——संख्येयदिनरूपा च । पर्याप्तत्रींद्रियांगिनां ॥ पर्या-
प्तचतुरक्षाणां । संख्येयमासरूपिका ॥ २४ ॥ इतिकायस्थितिः ॥ कार्मणं तैजसं चौदा—रि-
कमेतत्तनुत्रयं ॥ इति-देहाः ॥ केवलं हुंडसंस्थान—मेतेषां परिकीर्त्तितं ॥ २५ ॥ इतिसंस्थानं
॥ योजनानि द्वादशैषां । त्रिगव्यूत्येकयोजनं ॥ क्रमाज्ज्येष्ठा तनुर्लघ्व्यं—गुलासंख्यलवोन्मि-
ता ॥२६॥ आहुश्च——❀ बारसजोअण संखो । तिकोसगुम्मी य जोअणं भमरो ॥ इति ❀ इ-
त्यंगमानं ॥ वेदनोत्थः कषायोत्थो । मरणांतिक इत्यपि ॥ विकलेंद्रियजीवानां । समुद्घाता
अमी त्रयः ॥ २७ ॥ इति-समुद्घाताः ॥ पृथ्व्याद्याः स्थावराः पंच । द्वींद्रियाद्यास्त्रयः पुनः ॥
संख्येयजीविनः पंचें—द्रियतिर्यग्नरा अपि ॥ २८ ॥ स्थानकेषु दशस्वेषु । गच्छंति विकलेंद्रियाः
॥ दशभ्य एवैतेभ्यश्चो—त्पद्यंते विकलेंद्रियाः ॥ २९ ॥ न देवनारकासंख्य—जीवतिर्यग्नरेषु च

|| एषां गमागमौ तस्माद् - द्विगता द्व्यागता इति || ३० || उपपातच्यवनयो–र्विरहो द्वींद्रि-
यादिषु || अंतर्मुहूर्त्तमुत्कृष्टो । जघन्यः समयावधिः || ३१ || उत्पद्यते विपद्यंते । चैकेन स-
मयेन ते || एको द्वौ वा त्रयः संख्या । असंख्या विकलेंद्रियाः || ३२ || इति गतागती || ल-
ब्ध्वा नृत्वादिसामग्रीं । केचिदासादयंत्यमी || यावद्दीक्षां भवे गम्ये । न तु मोक्षं स्वभावतः
|| ३३ || इत्यनंतराप्तिः || एकस्मिन्समयेसिद्धि–र्विकलानां न संभवेत् || ग्रामो नास्ति कुतः
सीमा । मोक्षो नास्तीति सा कुतः || ३४ || इत्येकसमयसिद्धिः || कृष्णा नीला च कापो-
ती–त्येषां लेश्यात्रयं स्मृतं || इतिलेश्या || त्रसनाड्यंतरे सत्त्वा–दाहारः षड्दिगुद्भवः || ३५ ||
इत्याहारदिक् || एषां संहननं चैकं । सेवार्त्तं परिकीर्त्तितं || इति संहननं || मानमायाक्रोध-
लोभाः । कषाया एषु वर्णिताः || ३६ || आहारप्रमुखाः संज्ञा–श्चतस्र एषु दर्शिताः || इति
संज्ञाः || द्व्यक्षाणां स्पर्शनं जीह्वे–त्याख्यातमिंद्रियं द्वयं || ३६ ||
तत् त्र्यक्षचतुरक्षाणां । क्रमाद् घ्राणेक्षणाधिकं || इतींद्रियं || असत्त्वाद्व्यक्तसंज्ञानां ।
ते निर्दिष्टा असंज्ञिनः || ३७ || यद्वा––न दीर्घकालिकी नापि । दृष्टिवादोपदेशिकी || स्या-

हेतुवादिकी ह्येषां । न तया संज्ञिता पुनः ॥ ३८ ॥ इतिसंज्ञिता ॥ केवलं क्लीववेदाश्च । इति-
वेदः । मिथ्यादृष्टय एव ते ॥ सम्यग्दृशो ह्यल्पकालं । विद्युज्ज्योतिर्निदर्शनात् ॥ ३९ ॥ सा-
स्वादनाख्यसम्यक्त्वे । किंचित् शेषे मृतिंगताः ॥ विकलाक्षेषु जायंते । ये केचित्तदपेक्षया ॥
॥ ४० ॥ अपर्याप्तदशायां स्युः । सम्यग्दृशोऽपि केचन ॥ पर्याप्तत्वे तु सर्वेऽपि । मिथ्यादृष्ट-
य एव ते ॥ ४१ ॥ युग्म ॥ इति दृष्टिः ॥ मतिश्रुताभिधं ज्ञान-द्वयं सम्यग्दृशां भवेत् ॥
मत्यज्ञानश्रुताज्ञाने । तेषां मिथ्यात्विनां पुनः ॥ ४२ ॥ इतिज्ञानं ॥ अचक्षुर्दर्शनोपेता । द्वि-
त्र्यक्षाश्चतुरिंद्रियाः ॥ सचक्षुर्दर्शनाचक्षु—र्दर्शनाः कथिता जिनैः ॥ ४३ ॥ इतिदर्शनं ॥ स्युः
साकारोपयोगास्ते । ज्ञानाज्ञानव्यपेक्षया ॥ निराकारोपयोगास्ते । दर्शनापेक्षया पुनः ॥४४॥
इत्युपयोगाः ॥ द्विवक्रस्त्रिक्षणांतश्च । संभवत्येषु विग्रहः ॥ ततस्तत्रैकसमयं । व्यवहारादना-
हृतिः ॥ ४५ ॥ निश्चयात्तु द्विसमया । स्यादनाहारिता किल ॥ विग्रहे विकलाक्षाणा-माहार-
कत्वमन्यदा ॥ ४६ ॥ एते प्रागोजआहारा-स्ततः पर्याप्तभावतः ॥ लोमाहाराः कावलिका-
हारा अपि भवंत्यमी ॥ ४७ ॥ सचित्ताचित्तमिश्राख्य-एषामाहार इष्यते ॥ अंतर्मुहूर्त्तमुत्क्-

ष्ट—माहारस्यांतरं मतं ॥ ४८ ॥ इत्याहारः ॥

पर्याप्तानां गुणस्थान—मेतेषामुक्तमादिमं ॥ अपर्याप्तानां तदाद्यं । द्वितीयमपि जातुचि-
त् ॥ ४९ ॥ इति गुणाः ॥ औदारिकः काययोग—स्तन्मिश्रः कार्मणस्तथा ॥ वागसत्यामृषा
चेति—योगाश्चत्वार एष्वमी ॥ ५० ॥ इति योगाः ॥ एकस्मिन्प्रतरे सूच्यों—गुलसंख्यांशका-
यति ॥ तावंतो द्वित्रिचतुरिं—द्रियाः पर्याप्तकाः पृथक् ॥ ५१ ॥ एकस्मिन्प्रतरे सूच्यों—गुला-
संख्यांशकायति ॥ अपर्याप्ता द्वित्रिचतु—रक्षास्तावंत ईरिताः ॥ ५२ ॥ उक्तं च—❀ पज्ज
त्तापज्जत्ता—बितिचउअसन्निणो अवहरंति ॥ अंगुलसंखासंख—प्पएसभइयं पुढो पयरं ॥ ५३ ॥
❀ इति मानं ॥ सर्वस्तोकाश्चतुरक्षाः । पर्याप्ताः परिकीर्त्तिताः ॥ पर्याप्तद्वींद्रियास्तेभ्यो—ऽ-
धिकास्तेभ्यस्त्रिखास्तथा ॥ ५४ ॥ असंख्येयगुणास्तेभ्यो—ऽपर्याप्तचतुरिंद्रियाः ॥ त्रिद्वींद्रिया
अपर्याप्ता—स्ततोऽधिकाधिकाः क्रमात् ॥ ५५ ॥ इत्यल्पबहुत्वं ॥ इमे प्रतीच्यामत्यल्पाः। प्रा-
च्यां विशेषतोऽधिकाः ॥ दक्षिणस्यामुत्तरस्या—मेभ्योऽधिकाधिकाः क्रमात् ॥ ५६ ॥ अल्प-
तां बहुतां चानु—सरंत्येतेंबुकायिनां ॥ प्रायो जलाशयेष्वेषां । भूम्नोत्पत्तिः प्रतीयते ॥ ५७ ॥

द्यकाः पूतरशंखाद्याः । स्युः प्रायो बहवो जले ॥ शेवालादौ च कुंथ्वाद्या । भृंगाद्याश्चांबु-
जादिषु ॥ ५८ ॥ इति दिगपेक्षयाल्पबहुत्वं ॥ अल्पमंतर्मुहूर्त स्य १ । कालोऽनंतोंतरं महत्
॥ वनस्पत्यादिषु स्थित्वा । पुनर्विकलताजुषां ॥ ५९ ॥ इत्यंतर ॥ तिर्यंचो मनुजा देवा । ना-
रकाश्चेति तात्विकैः ॥ स्मृताः पंचेंद्रिया जीवा–श्चतुर्धा गणधारिभिः ॥ ६० ॥ त्रिधा पंचाक्ष-
तिर्यंचो । जलस्थलखचारिणः ॥ अनेकधा भवंत्येते । प्रतिभेदविवक्षया ॥ ६१ ॥ दृष्टा जल
चरास्तत्र । पंचधा तीर्थपार्थिवैः ॥ मत्स्याश्च कच्छपा ग्राहा । मकरा शिशुमारकाः ॥ ६२ ॥
तत्रानेकविधा मत्स्याः । श्लक्ष्णास्तिमितिमिंगलाः ॥ नक्रास्तंडुलमत्स्याश्च । रोहिताः कणि-
कास्त्रिधाः ॥ ६३ ॥ पीठपाठीनशकुलाः । सहस्रदंष्ट्रसंज्ञकाः ॥ नलमीना नलूपी च । प्रोष्टी
च मद्गुरा अपि ॥ ६४ ॥ चटाश्चटकराश्चापि । पताकातिपताकिकाः ॥ सर्वे ते मत्स्यजाती-
या । ये चान्येऽपि तथाविधाः ॥ ६५ ॥ कच्छपा द्विविधा अस्थि–कच्छपा मांसकच्छपाः ॥ ज्ञेया
संज्ञाभिरेताभि–र्ग्राहाः पंचविधाः पुनः ॥ ६६ ॥ दिली, वेढला, सुद्दला, पुलगा, सीसागारा
इति ॥ द्विविधा मकराः शौंडा । मट्टा इति विभेदतः ॥ एकाकाराः शिशुमाराः । सर्वेऽमी

जलचारिणः ॥ ६७ ॥ इति-जलचराः ॥

चतुष्पदाः परिसर्पा । इति स्थलचरा द्विधा ॥ चतुष्पदाश्चतुर्भेदा-स्तत्र प्रोक्ता विशारदैः ॥ ६८ ॥ केचिदेकखुरा केचिद् । द्विखुरा अपरे पुनः ॥ गंडीपदाश्च सनख-पदा अन्ये प्रकीर्त्तिताः ॥ ६९ ॥ अभिन्नाः स्युः खुरा येषां । ते स्युरेकखुराभिधाः ॥ गर्दभाश्वादयस्ते तु । रोमंथं रचयंति न ॥ ७० ॥ भिन्ना येषां खुरास्ते स्यु-र्द्विखुरा बहुजातयः ॥ महिषा गवया उष्ट्रा । वराहछगलैडकाः ॥ ७१ ॥ रुरवः शरभाश्चापि । चमरा रोहिषा मृगाः ॥ गोकर्णाद्या अमी सर्वे । रोमंथं रचयंति वै ॥ ७२ ॥ स्यात्पद्मकर्णिका गंडी । तद्वद्येषां पदाश्च ते ॥ हस्तिगंडकखड्गाद्या । गंडीपदाः प्रकीर्त्तिताः ॥ ७३ ॥ इत्युत्तराध्ययनवृत्तौ ॥ प्रज्ञापनावृत्तौ तु—✿ गंडी सुवर्णकाराधिकरणस्थानमिति ॥ ✿ येषां पदा नखैर्दीर्घैः । संयुताः स्युः शुनामिव ॥ तीर्थंकरैस्ते सनख-पदा इति निरूपिताः ॥ ७४ ॥ सिंहा व्याघ्रा द्वीपिनश्च । तरक्षा ऋक्षका अपि ॥ शृगालाः शशकाश्चित्राः । श्वानश्चान्ये तथाविधाः ॥ ७५ ॥ इति चतुष्पदाः ॥ भुजोरःपरिसर्पत्वात् । परिसर्पा अपि द्विधा ॥ तत्रोरःपरिसर्पाश्च । चतुर्धा दर्शिता जिनैः ॥

॥ ७६ ॥ अहयोऽजगरा आसा–लिकामहोरगा इति ॥ अहयो द्विविधा दर्वी–करा मुकुलिन
स्तथा ॥ ७७ ॥ दर्वीकराः फणाभृतो । या देहावयवाकृतिः ॥ फणाभावोचिता सा स्यान् ।
मुकुलं तद्युताः परे ॥ ७८ ॥ दर्वीकरा बहुविधा । दृष्टा दृष्टजगत्त्रयैः ॥ आशीविषा दृष्टिविषा
। उग्रभोगनिषा अपि ॥ ७९ ॥ लालाविषास्त्वग्विषाश्च । श्वासोच्छ्वासविषा अपि ॥ कृष्णस-
र्पाः स्वेदसर्पाः । काकोदरादयोऽपि ॥ ८० ॥ तत्र च–आशीर्दंष्ट्रा विषं तस्यां । येषामाशीवि-
षा हि ते ॥ जंबूद्वीपमितं देह । विषसात्कर्त्तुमीश्वराः ॥ ८१ ॥ शक्तेर्विषय एवायं । भूतं भ-
वति भाविनो ॥ तादृक्शरीरासंपत्त्या । पचमांगेऽप्यतो ह्ययः ॥ ८२ ॥ घोणसाद्या मुकुलिन ।
इत्येवमहयो द्विधा ॥ एकाकारा अजगरा । आसालिकानथ ब्रुवे ॥ ८३ ॥ अंतर्मनुष्यक्षेत्रस्य
। केवलं कर्मभूमिषु ॥ काले पुनर्युगलिनां । विदेहेष्वेव पंचसु ॥ ८४ ॥ चक्र्यर्धचक्रिरामाणां
। महानृपमहीभृतां ॥ स्कंधावारनिवेशानां । विनाशे समुपस्थिते ॥ ८५ ॥ एवं च—नगर-
ग्रामनिगम–खेटादीनामुपस्थिते ॥ विनाशे तदधः संमू–र्छंत्यासालिकसंज्ञकाः ॥ ८६ ॥ अं-
गुलासंख्यभागांगाः । प्रथमोत्पन्नका अमी ॥ वर्धमानशरीराश्चो–त्कर्षाद् द्वादशयोजनाः ॥

॥ ८७ ॥ बाहल्यपृथुलत्वाभ्यां । ज्ञेयास्तदनुसारतः ॥ अज्ञानिनोऽसंज्ञिनश्च । ते मिथ्यादृष्टयो मताः ॥ ८८ ॥ उत्पन्ना एव ते नश्यं—त्यंतर्मुहूर्त्तजीविताः ॥ नष्टेषु तेषु तत्स्थाने । गर्त्ता पतति तावती ॥ ८९ ॥

भयंकराश्च सा गर्त्ता । राक्षसीव बुभुक्षिता ॥ क्षिप्रं ग्रसति तत्सर्वं । स्कंधावारपुरादिकं ॥ ९० ॥ उक्तं—जीवसमासे तु । स्युरेते द्वींद्रिया इति ॥ शरीरोत्कर्षसाधर्म्या—च्छेद तत्वं तु केवली ॥ ९१ ॥ महोरगा बहुविधाः । केचिदंगुलदेहकाः ॥ तत्पृथक्त्वांगकाः केचि—द्वितस्तितनवः परे ॥ ९२ ॥ एवं रत्निकुक्षिचापै—र्योजनैस्तच्छतैरपि ॥ पृथक्त्ववृद्ध्या यावत्ते । सहस्रयोजनांगकाः ॥ ९३ ॥ स्थले जलेऽपि विचरं—त्येते स्थलोद्भवा अपि ॥ नरक्षेत्रे न संत्येते । बाह्यद्वीपसमुद्रगाः ॥ ९४ ॥ इत्युरपरिसर्पाः ॥ वक्ष्ये भुजपरिसर्पा—स्ते त्वनेकविधाः स्मृताः ॥ नकुलाः सरटा गोधा । ब्राह्मणीगृहगोलिकाः ॥ ९५ ॥ छुच्छुंदरीमूषकाश्च । हालिनीजाहकादयः ॥ एवं स्थलचरा उक्ता । उच्यंते खचरा अथ ॥ ९६ ॥ ते चतुर्धा लोमचर्म—समुद्गविततच्छदाः ॥ तत्र हंसाः कलहंसाः । कपोतकेकिवायसाः ॥ ९७ ॥ ढंकाः कंकाश्चक्रवाका—श्च-

। कपिंजलाः कुर्कुटाश्च । शुकतित्तिरलावकाः ॥ ९८ ॥ हारीताः कोकिला-
कोरक्रौंचसारसाः ॥ चक्रचातकखंजनाः ॥ शकुनिश्चटकागृध्राः सुगृहश्येनसारिकाः ॥ ९९ ॥ शतपत्रभ-
श्वाषा । बक्रचातकखंजनाः ॥ शकुनिश्चटकागृध्राः सुगृहश्येनसारिकाः ॥ दुर्गकौशिकदात्यूह–प्रमुखा लोमपक्षिणः ॥ १०० ॥ वल्गु-
रघाजाः । कुंभकाराश्च टिट्टिभाः ॥ दुर्गकौशिकदात्यूह–प्रमुखा लोमपक्षिणः ॥ १ ॥
ली चर्मचटिका । आटिभारुंडपक्षिणः ॥ समुद्रवायसा जीवं–जीवाद्याश्चर्मपक्षिणः ॥ परिकीर्त्तिताः ॥
समुद्गवत्संघटितौ । येषामुड्डयनेऽपि हि ॥ पक्षौ स्यातां ते समुद्ग–पक्षिणः परिकीर्त्तिताः ॥ द्वौ बाह्य-
॥ २ ॥ अवस्थानेऽपि यत्पक्षौ । ततौ ते विततछदाः ॥ इमौ स्तः पक्षिणां भेदौ । विना ये गर्भसामग्रीं ।
द्वीपवार्धिषु ॥ ३ ॥ संमूर्छिमा गर्भजाश्चे–त्यमी स्युर्द्विविधाः समे ॥ ये जातास्ते हि गर्भजाः ॥ आसा-
जाताः संमूर्छिमाश्च ते ॥ ४ ॥ तथा गर्भादि सामग्र्या । यत्तु सूत्रकृतांगे आहारपरिज्ञाध्ययने आ-
लिकान्विना संमू–र्छिमा एव हि ते ध्रुवं ॥ ५ ॥ ❀ यत्तु सूत्रकृतांगे आहारपरिज्ञाध्ययने आ-
सालिका गर्भतयोक्तास्ते-तत्सदृशनामानो विजातीया एव संभाव्यंते, अन्यथा प्रज्ञापनादि-
भिः सह विरोधापत्तेः ❀ अपर्याप्ताश्च पर्याप्ताः । प्रत्येकं द्विविधा इमे ॥ एवं पंचाक्षतिर्यंचः
। सर्वेऽपि स्युश्चतुर्विधाः ॥ ६ ॥ इतिभेदाः ॥

विकलाक्षवदुक्तानि । स्थानान्येषां जिनेश्वरैः । तत्तत्स्थानविशेषस्तु । स्वयं ज्ञाप्यो विवेकिभिः ॥ ७ ॥ इति–स्थानानि ॥ पंच पर्याप्तयोऽमीषां । पर्याप्तिं मानसींविना ॥ संमूर्छिमानामन्येषां । पुनरेता भवंति षट् ॥ ८ ॥ असंज्ञिनोऽमनस्का य–त्प्रवर्त्तंतेऽशनादिषु आहारसंज्ञा सा ज्ञेया । पर्याप्तिर्नतु मानसी ॥ ९ ॥ अथवाल्पं मनोऽप्यस्यं । वर्त्ततेऽसंज्ञिनामपि ॥ प्रवर्त्तंते निवर्त्तंते । तेऽपीष्टानिष्टयोस्ततः ॥ १० ॥ संमूर्छिमानां प्राणाः स्यु–र्नवान्येषां च ते दश ॥ इति–पर्याप्तयः ॥ लक्षाश्चतस्रो योनीना–मेषां सामान्यतः स्मृताः ॥ ११ ॥ इति योनिसंख्या ॥ एवं संमूर्छिमगर्भो–भवभेदाविवक्षया ॥ लक्षाणि कुलकोटीना–मेषामित्याहुरीश्वराः ॥ १२ ॥ अर्द्धत्रयोदशानि द्वादशैव । भवंति जलचारिणां ॥ खचराणां द्वादशाथ–चतुष्पदांगिनां दश ॥ १३ ॥ दशैवोरगजीवानां । भुजगानां नवेति च ॥ एषां सार्धत्रिपंचाशल्लक्षाणि कुलकोटयः ॥ १४ ॥ इति कुलसंख्या ॥ विवृता योनिरेतेषां । संमूर्छिमशरीरिणां ॥ गर्भजानां भवत्येषां । योनिर्विवृतसंवृता ॥ १५ ॥ संमूर्छिमानां त्रैधेयं । सचित्ताचित्तमिश्रका ॥ गर्भजानां तु मिश्रैव । यदेषां गर्भसंभवे ॥ १६ ॥ जीवात्मसात्कृतत्वेन । सचित्ते

शुक्रशोणिते ॥ तत्रोपयुज्यमानाः स्यु—रचित्ताः पुद्गलाः परे ॥ १७ ॥ संमूर्छिमानां त्रिविधा । शीतोष्णमिश्रभेदतः ॥ गर्भजानां तिरश्चां तु । भवेन्मिश्रैव केवलं ॥ १८ ॥ इति योनिसंवृतत्वादि ॥

पूर्वकोटिमितोत्कृष्टा । स्थितिः स्याज्जलचारिणां ॥ चतुष्पदानां चतुर—शीतिवर्षसहस्रकाः ॥ १९ ॥ वत्सराणां त्रिपंचाशत् । सहस्राण्युरगांगिनां ॥ भुजगानां द्विचत्वारिं—शत्सहस्राः स्थितिर्मता ॥ १९ ॥ खचराणां सहस्राणि । द्वासप्ततिः स्थितिर्गुरुः ॥ संमूर्छिमानां सर्वेषा—मित्युत्कृष्टा स्थितिर्भवेत् ॥ २० ॥ गर्भजानां पूर्वकोटि—रुत्कृष्टा जलचारिणां ॥ चतुष्पदानामुत्कृष्टा । स्थितिः पल्योपमत्रयं ॥ २१ ॥ भुजोरःपरिसर्पाणां । पूर्वकोटिः स्थितिर्गुरुः ॥ खचराणां च पल्यस्या—संख्येयांशो गुरुः स्थितिः ॥ २२ ॥ गर्भजानां तिरश्चां स्या—दोघेनोत्कर्षतः स्थितिः ॥ पल्यत्रयं समेषाम—प्यवरांतर्मुहूर्त्तकं ॥ २३ ॥ इति भवस्थितिः ॥ सम्मूर्छिमाणां पंचाक्ष—तिरश्चां कायसंस्थितिः ॥ सप्तकं पूर्वकोटीनां । तदेवं परिभाव्यते ।२४। मृत्वा मृत्वाऽसकृत्संमू—र्छिमस्तिर्यग् भवेद्यदि ॥ तदा सप्तभवान्न यावत् । पूर्वकोटीमितस्थि-

तीन् ॥ २५ ॥ यद्यष्टमे भवेऽप्येष । तिर्यग्भवमवाप्नुयात् ॥ तदा संख्यायुष्कतिर्यग्–गर्भजः स्यात्ततः सुरः ॥ २६ ॥ कोटयः सप्त पूर्वाणां । पल्योपमत्रयान्विताः ॥ कायस्थितिर्गर्भजानां । तिरश्चां तत्र भावना ॥ २७ ॥ संख्येयायुर्गर्भजेषु । तिर्यक्षूत्पद्यतेऽसुमान् ॥ उत्कर्षेण सप्तवारान् । पूर्वैककोटिजीविषु ॥ २८ ॥ अष्टम्यां यदि वेलायां । तिर्यग्भवमवाप्नुयात् ॥ असंख्यायुस्तदा स्यात्त–त्स्थितिः पल्यत्रयं गुरुः ॥ २९ ॥ अत एव श्रुतेऽप्युक्तं—❀

पंचिंदियकाइमइगउ । उक्कोसं जीवो उसंवसे ॥ सत्तठ्ठभवग्गहणे । समयं गोयम मा पमायए ॥ ३० ॥ अत्र संख्यातायुर्भवापेक्षया सप्त, भवापेक्षया त्वष्टाविति ॥ ❀ पूर्वकोट्यधिकायुस्तु । तिर्यक् सोऽसंख्यजीवितः ॥ तस्य देवगतित्वेन । मृत्वा तिर्यक्षु नोद्भवः ॥ ३१ ॥ अष्टसंवत्सरोत्कृष्टा । जघन्यांतर्मुहूर्त्तिकी ॥ गर्भस्थितिस्तिरश्चां स्यात् । प्रसवो वा ततो मृतिः ॥ ३२ ॥ संख्याताब्दाधिकं वार्धि–सहस्रमोघतो भवेत् ॥ पंचेंद्रियतया काय–स्थितिरुत्कर्षतः किल ॥ ३३ ॥ पर्याप्तपंचाक्षतया । कायस्थितिर्गरीयसी ॥ शतपृथक्त्वमब्धीनां । जघन्यांतर्मुहूर्त्तकं ॥ ३४ ॥ इतिकायस्थितिः ॥ देहास्त्रयस्तैजसश्च । कार्मणौदारिकाविति ॥ सांमूर्छानां

युग्मिनां च । नेऽन्येषां वैक्रियांचिताः ॥ ३५ ॥ इति–देहाः ॥ संमूर्छिमानां संस्थानं । हुंमके-
कं प्रकीर्त्तितं ॥ गर्भजानां यथायोगं । भवंति निखिलान्यपि ॥ ३६ ॥ इतिसंस्थानं ॥ संमू-
र्छिमानामुत्कृष्टं । शरीरं जलचारिणां ॥ सहस्रयोजनान्येत–न्मत्स्यादीनामपेक्षया ॥ ३७ ॥
चतुष्पदानां गव्यूत–पृथक्त्वं परिकीर्त्तितं ॥ भुजगानां खगानां च । कोदंडानां पृथक्त्वकं ।३८।
योजनानां पृथक्त्वं चो–रगाणां स्याद्वपुर्गुरु ॥ गर्भजानां वाश्चराणां । संमूर्छिमांबुचारिवत् ॥
॥ ३९ ॥ चतुष्पदानां गव्यूत–षट्कं भुजगदेहिनां ॥ गव्यूतानां पृथक्त्वं स्या–दुत्कृष्टं खलु
नूघनं ॥ ४० ॥ तथोरःपरिसर्पाणां । सहस्रयोजनं वपुः ॥ यतोऽनेकविधा उक्ता । एतज्जातौ
महोरगाः ॥ ४१ ॥ अंगुलेन मिताः केचि–त्तत्पृथक्त्वांगकाः परे ॥ केचित्क्रमाद्वर्धमानाः । स-
हस्रयोजनोन्मिताः ॥ ४२ ॥ गर्भजानां खचराणां । धनुःपृथक्त्वमेव तत् ॥ अंगुलासंख्यांश-
मानं । सर्वेषां तज्जघन्यतः ॥ ४३ ॥ वैक्रियं योजनशत–पृथक्त्वप्रमितं गुरु ॥ आरंभेंगुलसं-
ख्यांश–मानं तत्स्याज्जघन्यतः ॥ ४४ ॥ इत्यंगमानं ॥ आद्यास्त्रयः समुद्घाताः । संमूर्छिमश-
रीरिणां ॥ गर्भजानां तु पंचैते । केवल्याहारकौविना ॥ ४५ ॥ इतिसमुद्घाताः ॥

यांति संमूर्छिमा नूनं । सर्वास्वपि गतिष्वमी ॥ तत्रापि नरके यांतो । यांत्याद्यनरकावधि ॥ ४६ ॥ एकेंद्रियेषु सर्वेषु । तथैव विकलेष्वपि ॥ संख्यासंख्यायुर्युतेषु । तिर्यक्षु मनुजेषु च ॥ ४७ ॥ असंख्यायुर्नृतिर्यक्षू–त्पद्यमानास्त्वसंज्ञिनः ॥ उत्कर्षाद्यांति तिर्यंचः । पल्यासंख्यांशजीविषु ॥ ४८ ॥ असंज्ञिनो हि तिर्यंचः । पल्यासंख्यांशलक्षणं ॥ आयुश्चतुर्विधमपि । बध्नत्युत्कर्षतः खलु ॥ ४९ ॥ अंतर्मुहूर्त्तमानं च । नृतिरश्चोर्जघन्यतः ॥ देवनारकयोर्वर्ष–सहस्रदशकोन्मितं ॥ ५० ॥ तत्रापि देवायुर्ह्रस्व–पल्यासंख्यांशसंमितं ॥ नृतिर्यग्नारकायूंष्य–ऽसंख्यभागानि यथाक्रमं ॥ ५१ ॥ इदमर्थतो भगवतीशतक १ द्वितीयोद्देशके ॥ देवेषूत्पद्यमानाः स्यु–र्भवनव्यंतरावधि ॥ एतद्योग्यायुषोऽभावा–न्न ज्योतिष्कादिनाकिषु ॥ ५२ ॥ यांति गर्भजतिर्यंचो–ऽप्येवं गतिचतुष्टये ॥ विशेषस्तत्र नरक–गतावेष निरूपितः ॥ ५३ ॥ सप्तस्वपि क्ष्मासु यांति । मत्स्याद्या जलचारिणः ॥ रौद्रध्यानार्जितमहा–पाप्मानो हिंसकाभिधः ॥ ५४ ॥ चतुष्पदाश्च सिंहाद्या–श्चतसृष्वाद्यभूमिषु ॥ पंचसूरःपरिसर्पा–स्तिसृष्वाद्यासु पक्षिणः ॥ ५५ ॥ भुजप्रसर्पा गच्छंति । प्रथमद्विक्ष्मावधि ॥ देवेषु गच्छतामेषां । सर्वेषां स-

मता गतौ ॥ ५६ ॥ भवनेशव्यंतरेषु । ज्योतिष्केषु च यांत्यमी ॥ वैमानिकेषु चोत्कर्षा—द-
ष्टमत्रिदिवावधि ॥ ५७ ॥ सुरेषु यांति सर्वेऽपि । तिर्यंचोऽसंख्यजीविनः ॥ निजायुःसमही-
नेषु । नाधिकस्थितिषु क्वचित् ॥ ५८ ॥ असंख्यजीविखचरा । अंतरद्वीपजा अपि ॥ तिर्य-
क्पंचेंद्रिया यांति । भवनव्यंतरावधि ॥ ५९ ॥ ततः परं यतो नास्ति । पल्यासंख्यांशिका
स्थितिः ॥ न चैवमीशानादग्रे । यांति केऽप्यमितायुषः ॥ ६० ॥ इति गतिः ॥ एकाक्षा वि-
कलाक्षाश्च । तिर्यंचः संख्यसंज्ञिनः ॥ संमूर्छिमेषु तिर्यक्त्वा—यांति नो देवनारकाः ॥ ६१ ॥
एकद्वित्रिचतुरक्षाः । पंचाक्षाः संख्यसंज्ञिनः ॥ भवनव्यंतरज्योतिः—सहस्रारांतनिर्जराः ॥६२॥
संमूर्छिमा गर्भजाश्च । मनुष्याः सर्वनारकाः ॥ गर्भोद्भवेषु तिर्यक्षु । जायते कर्मयंत्रिताः ॥६३॥
अंतर्मुहूर्त्तमुत्कृष्ट—मुत्पत्तिमरणांतरं ॥ सांमूर्छानां गर्भजानां । द्वादशांतर्मुहूर्त्तकाः ॥ ६४ ॥
समयप्रमितं ज्ञेयं । जघन्यं तद् द्वयोरपि ॥ एकसामयिकी संख्या । ज्ञेयैषां विकलाक्षवत् ॥
॥ ६५ ॥ इत्यागतिः ॥

लभंतेऽनंतरभवे । सम्यक्त्वादि शिवावधि ॥ ते चैकस्मिन् क्षणे मुक्तिं । यांतो यांति द-

शैव हि ॥ ६५ ॥ इत्यनंतराशिः, समयेसिद्धिश्च ॥ लेश्यात्रितयमाद्यं स्यात् । संमूर्छिमशरीरिणां ॥ गर्भजानां यथायोगं । लेश्याः षमपि कीर्त्तिताः ॥ ६६ ॥ इतिलेश्याः ॥ षडप्याहारककुभो । द्व्यानामंत्यमेव च ॥ सांमूर्छानां संहनन–मन्येषामखिलान्यपि ॥ ६७ ॥ ❀ अत्र च श्रीजीव भिगमाभिप्रायेण संमूर्छिमपंचाक्षतिरश्चामेवैकं संहननं संस्थानं च स्यात्, षष्ठकर्मग्रंथाभिप्रायेण तु षडपि तानि स्युः, इत्यर्थतः संग्रहणीबृहद्वृत्तौ. ❀ ॥ इत्याहारदिक्, संहननं च ॥ सर्वे कषायाः संज्ञाश्च । निखिलानींद्रियाणि च ॥ द्व्यानां संमूर्छिमाः स्यु–रसंज्ञिनः परेऽन्यथा ॥ ६८ ॥ इति कषायसंज्ञेंद्रियसंज्ञिताः ॥ संमूर्छिमेषु तिर्यक्षु । स्त्री पुमांश्च न संभवेत् ॥ केवलं क्लीववेदास्ते । केवलज्ञानिभिर्मताः ॥ ६९ ॥ स्त्रियःपुमांसः क्लीवाश्च । तिर्यंचो गर्भजास्त्रिधा ॥ पुंभ्यः स्त्रिय–स्त्रिभीरूपै–रधिकास्त्रिगुणास्तथा ॥ ७० ॥ इति वेदाः ॥ विकलेंद्रियवद् दृष्टि–द्वयं संमूर्छिमांगिनां ॥ तिस्रोऽपि दृष्टयोऽन्येषां । तत्र सम्यग्दृशो द्विधा ॥ ७१ ॥ केचिद्देशेन विरताः । परे त्वविरताश्रयाः ॥ अभावः सर्वविरते–स्तेषां भवस्वभावतः ॥ ७२ ॥ इति दृष्टिः ॥ संमूर्छिमाः स्युर्द्व्यज्ञाना । द्विज्ञाना अपि केचन ॥ द्वित्रा-

ज्ञाना गर्भजा स्त्रि—त्रज्ञाना अपि केचन ॥ ७३ ॥ इति ज्ञानं ॥ दर्शनद्वयमाद्यं स्या—द्विन्नये-
षामपि स्फुटं ॥ अवधिज्ञानभाजां तु । गर्भजानां त्रिदर्शन ॥ ७४ ॥ इति दर्शनं ॥ संमूर्छि-
मानां चत्वार । उपयोगाः प्रकीर्त्तिताः ॥ गर्भजानां तु चत्वारः । षट् पंचोघान्नवापि ते ॥
॥ ७४ ॥ येऽमीषां केवलज्ञानं । मुक्त्वा केवलदर्शनं ॥ ज्ञानं मनःपर्यव च । सर्वेऽन्ये सम्भवति
ते ॥ ७५ ॥ इत्युपयोगाः ॥ स्यादनाहारिता त्वेषा—मेकद्विसमयावधिः ॥ उजप्रादिस्त्रिधाहारः
। सचित्तादिरपि त्रिधा ॥ ७६ ॥ प्रथमं त्वोज आहारो । लोमकावलिकौ ततः ॥ अंतर द्वौ
दिनौ ज्येष्टं । लघु चांतर्मुहूर्त्तकं ॥ ७७ ॥ ज्येष्टं चैतत्कावलिका—हारस्य स्मृतमंतरं ॥ स्वा-
भाविक त्रिपल्यायु—र्युक्ततिर्यगपेक्षया ॥ ७८ ॥ इत्याहारः ॥ गुणस्थानद्वयं संमू—र्छिमानां
विकलाक्षवत् ॥ गर्भजानां पंच तानि । प्रथमानि भवंति हि ॥ ७९ ॥ इतिगुणाः ॥ संमूर्छि-
मानां चत्वारो । योगाः स्युर्विकलाक्षवत् ॥ आहारकद्वयं मुक्त्वा । गर्भजानां त्रयोदश ।८०।
इति योगाः ॥ प्रतरासंख्यभागस्था—ऽसंख्येयश्रेणिवर्त्तिभिः ॥ नभःप्रदेशैः प्रमिता—स्तिर्यंचः
खचराः स्मृताः ॥ ८१ ॥ एवमेव स्थलचरा—स्तथा जलचरा अपि ॥ भवति किंतु संख्येय—

गुणाधिकाः क्रमादिमे ॥ ७२ ॥ यदसौ प्रतरासंख्य–जागः प्रागुदितः खलु ॥ यथाक्रमं श्रुते प्रोक्तो । बृहत्तरबृहत्तमः ॥ ७३ ॥ षट्पंचाशांगुलशत–द्वयमानानि निश्चितं ॥ यावंति सूचिखंडानि । स्युरेकत्रतरे स्फुटं ॥ ७४ ॥ तावज्ज्योतिष्कदेवेभ्यः । स्युः संख्येयगुणाः क्रमात् ॥ तिर्यक्पंचेंद्रियाः षंढा । नजःस्थलांबुचारिणः ॥ ७५ ॥ एतत्संमूर्छिमगर्जो–त्थानां समुदितं खलु ॥ क्लीबानां मानमाम्नाव्यं । श्रुते पृथगनुक्तितः ॥ ७६ ॥ इतिमानं ॥

एष्वल्पाः खचरास्तेभ्यः । संख्यघ्नाः खचरस्त्रियः ॥ ताभ्यः स्थलचरास्तेभ्यः । संख्यघ्नाःस्युस्तदंगनाः ॥ ७७ ॥ ताभ्यो जलचरास्तेभ्यो । जलचर्यस्ततः क्रमात् ॥ नपुंसकाः संख्यगुणाः । नजःस्थलांबुचारिणः ॥ ७८ ॥ एते च संमूर्छिमयुक्ता इति ज्ञेयं ॥ इति लघ्व्यल्पबहुता ॥ स्तोकाः पंचाक्षतिर्यंचः । प्रतीच्यां स्युस्ततः क्रमात् ॥ प्राच्यां याम्यामुदीच्यां च । विशेषतोऽधिकाधिकाः ॥ ७९ ॥ इति दिगपेक्षयाल्पबहुता ॥ तिर्यक्पंचेंद्रियाणां स्या–दंतर्मुहूर्त्तसंमितं ॥ जघन्यमंतरं ज्येष्टं । त्वनंतकालसंमितं ॥ ८० ॥ एतद्वनस्पतेः काय–स्थितिं भुक्त्वा गरीयसीं ॥ पुनः पंचाक्षतिर्यक्त्वं । लजमानस्य संजवेत् ॥ ८१ ॥ द्व्यक्षादितिर्यक्नुभूत्स्वरूप–

एवं मयोक्तं किल लेशमात्रं ॥ विशेषविस्तारसार्थिना तु । सिद्धांतवारांनिधयोऽवगाह्याः ॥
॥ ९२ ॥ विश्वाश्चर्यदकीर्त्तिकीर्त्तिविजयश्रीवाचकेंद्रांतिष–द्राजश्रीतनयोऽतनिष्ट विनयः श्रीते-
जपालात्मजः ॥ काव्यं यत्किल तत्र निश्चितजगत्तत्वप्रदीपोपमे । सर्गो निर्गलितार्थसार्थसु-
भगः षष्ठः समाप्तः सुखं ॥ ९३ ॥

॥ इति श्रीलोकप्रकाशे षष्ठः सर्गः समाप्तः ॥

॥ सप्तमः सर्गः प्रारभ्यते ॥

संमूर्छिमा गर्भजाश्च । द्विविधा मनुजा अपि ॥ वक्ष्ये संक्षेपतस्तत्र । प्रथमं प्रथमानिह
॥ १ ॥ अंतर्द्वीपेषु षट्पंचा–शत्यथो कर्मभूमिषु ॥ पंचाधिकासु दशसु । त्रिंशत्यकर्मभूमिषु
॥ २ ॥ पुरीषे च प्रश्रवणे । श्लेष्मासिंघाणयोरपि ॥ वांते पित्ते शोणिते च । शुक्रे मृतकलेव-
रे ॥ ३ ॥ पूये स्त्रीपुंससंयोगे । शुक्रपुद्गलविच्युतौ ॥ पुरनिर्द्धमने सर्वे–ष्वपवित्रस्थलेषु च
॥ ४ ॥ स्युर्गर्भजमनुष्याणां । संबंधिष्वेषु वस्तुषु ॥ संमूर्छिमनराः सैक–शतं ते क्षेत्रभेदतः
॥ ५ ॥ इति भेदाः ॥ स्थानमेषां द्विपाथोधि–सार्धद्वीपद्वयावधि ॥ स्थानोत्पादसमुद्घातै–र्लो-

कासंख्यांशगा अमी ॥ ६ ॥ इति स्थानं ॥ आरभ्य पंच पर्याप्ती-स्ते म्रियंतेऽसमाप्य ताः ॥ प्राणा भवंति सप्ताष्टा-वेषां वाङ्मनसेविना ॥ ७ ॥ ❀ नव-प्राणा-इति तु संग्रहण्यवचूर्णौ ❀ इति पर्याप्तिः ॥ संख्या योनिकुलानां च । नैषां गर्भजतः पृथक् ॥ योनिस्वरूपं त्वेतेषां । विज्ञेयं विकलाक्षवत् ॥ ८ ॥ इति-द्वारत्रयं ॥ जघन्योत्कर्षयोरंत-मुर्हूर्त्तं स्याद्भवस्थितिः ॥ पृथक्त्वं च मुहूर्त्तांना-मेषां कायस्थितिर्मता ॥ ए ॥ इति भवस्थितिकायस्थिती ॥ आद्या त्रिदेही संस्थानं । हुंडं देहोंगुलस्य च ॥ असंख्यांशमितः पूर्वे । समुद्घातास्त्रयो मताः ॥ ११ ॥ इति-द्वारचतुष्टयं ॥ एषां गतिर्विकलव-त्तथैवागतिरप्यहो ॥ किंत्वमी वहिवायुभ्यां । नागच्छंति नरत्वतः ॥ १२ ॥

अष्टचत्वारिंशदेषां । नाड्यो जन्मात्ययांतरं ॥ एकसामयिकी संख्या । विज्ञेया विकलाक्षवत् ॥ १३ ॥ इति-गत्यागती ॥ अनंतराप्तिः समये-सिद्ध्यतां गणनापि च ॥ पृथग् न लक्ष्यते ह्येषां । सा विज्ञेया बहुश्रुतात् ॥ १४ ॥ इति-द्वारद्वयं ॥ द्वाराणि लेश्यादीन्यष्टा-वेतेषां विकलाक्षवत् ॥ चक्षूंषि किंत्विंद्रियाणि । पंचैतेषां श्रुतानुगैः ॥ १५ ॥ मिथ्यादृशोऽमी

एतेषा–माद्याज्ञानद्वयं तथा ॥ आद्ये द्वे दर्शने तस्मा–दुपयोगचतुष्टयं ॥ १६ ॥ साकारा–न्योपयोगाश्चा–ज्ञानदर्शनवत्तया ॥ विकलाकृवदाहार–कृतः कावलिकंविना ॥ १७ ॥ आद्यं गुणस्थानमेवा–मिद योगत्रयं पुनः ॥ औदारिकस्तन्मिश्रश्च । कार्मणश्चेति कीर्त्तितं ॥ १८ ॥ अंगुलप्रमितक्षेत्र–प्रदेशराशिवर्त्तिनि ॥ तृतीयवर्गमूलघ्ने । वर्गमूले किलादिमे ॥ १९ ॥ यावान् प्रदेशराशिः स्यात् । खंडास्तावत्प्रदेशकाः ॥ यावत एकस्यामेक–प्रादेशिक्यां स्युरावलौ ॥ २० ॥ तावंतः सम्मूर्छिमा हि । मनुजा मनुजोत्तमैः ॥ निर्दिष्टा दृष्टविस्पष्ट–सचराचरविष्टपैः ॥ २१ ॥ इति सम्मूर्छिममानवाः ॥ द्वाराण्यशेषशेषाणि । पंचैतेषांमनीषिभिः ॥ व्याख्यानीह वक्ष्यमाण–गर्भोद्भवमनुष्यवत् ॥ २२ ॥ कर्माकर्मधरांत–र्द्वीपजन्मा गर्भजा नरास्त्रिविधाः ॥ स्युः पंचदशत्रिंशत् । षट्पंचाशद्विधाः क्रमतः ॥ २३ ॥ म्लेच्छा आर्या इति–द्वेधा । मनुजाः कर्मभूमिजाः ॥ म्लेच्छाः स्युः शकयवन–सुरुंडशबरादयः ॥ २४ ॥ आर्याः पुनर्द्विधा प्रोक्ता । ऋद्धिप्राप्तास्तथापरे ॥ ऋद्धिप्राप्तास्तत्र षोढा । प्रज्ञप्ताः परमेश्वरैः ॥ २५ ॥

अर्हंतः सार्वभौमाश्च । महैश्वर्यसमोद्गगः ॥ बलदेवा वासुदेवाः । स्युर्विद्याधरचारणाः ॥

॥ २६ ॥ अनृद्ध्यो—नवविधाः । क्षेत्रजातिकुलार्यकाः ॥ कर्मशिल्पज्ञानभाषा—चारित्रदर्शना-
र्यकाः ॥ २७ ॥ तत्र च—क्षेत्रार्या आर्यदेशोद्भवा—स्ते सार्धपंचविंशतिः ॥ अंगा वंगा कलिंगा-
श्च । मगधाः कुरुकोशलाः ॥ २८ ॥ काश्यः कुशार्त्ताः पंचाला । विदेहा मलयास्तथा ॥ व-
त्साः सुराष्ट्राः शांडिल्या । वराटावरणास्तथा ॥ २९ ॥ दशार्णा जंगला चेद्यः । सिंधुसौवीर-
का अपि ॥ भंग्यो वृत्ताः सूरसेनाः । कुणाला लाटसंज्ञकाः ॥ ३० ॥ केकयार्द्धमिमे सार्द्ध—पं
चविंशतिरीरिताः ॥ नामानि राजधानीनां । ब्रवीम्येषु क्रमादथ ॥ ३१ ॥ चंपा तथा ताम्रलि-
प्ती । स्यात्कांचनपुरं पुरं ॥ राजगृहं गजपुरं । साकेतं च वराणसी ॥ ३२ ॥ शौर्यपुरं च कां-
पिल्यं । मिथिला भद्दिलं पुरं ॥ कौशांबी च द्वारवती । नंदिवच्छाभिधे पुरे ॥ ३३ ॥ अछापु-
रं मृत्तिकाव—त्यहिछत्राभिधा पुरी ॥ शुक्तिमती वीतभयं । पापामाषपुरं पुरं ॥ ३४ ॥ म-
थुरानगरी चैव । श्रावस्तीनगरी वरा ॥ कोटीवर्षं श्वेतंबिका । राजधान्यः क्रमादिमाः ॥३५॥
एष्वेवार्हच्चक्रिराम—वासुदेवोद्भवो भवेत् ॥ आर्यास्तत इमेऽन्ये च । तदभावादनार्यकाः ।३६।
सूत्रकृतांगवृत्तौ चानार्यलक्षणमेवमुक्तं—॥ धम्मेत्तिअक्खराइं—।—जेसुवि सुमिणे न सुव्वंति ॥

विज्ञेयास्तत्र जात्यार्या । ये प्रशस्तेभ्यजातयः ॥ उग्रभोगादिकुलजाः । कुलार्यास्ते प्र-
कीर्त्तिताः ॥ ३६ ॥

कर्मार्या वास्त्रिकाः सौत्रि–काद्याः कार्पासिकादयः ॥ शिल्पार्यास्तुन्नकारा–स्तंतुवायाद-
योऽपि च ॥ ३७ ॥ भाषार्या येऽर्द्धमागध्या । भाषंते भाषयात्र ते ॥ ज्ञानदर्शनचारित्रा–र्या-
स्तु ज्ञानादिभिर्युताः ॥ ३८ ॥ अत्र भूयान् विस्तरोऽस्ति । स तु प्रज्ञापनादितः ॥ विज्ञेयो
विबुधैर्नेह । प्रोच्यते विस्तृतेर्भयात् ॥ ३९ ॥ इति भेदाः ॥ एषां तिर्यग्नरक्षेत्रा–वधि जन्मा-
त्ययादिक ॥ योजनानां दशशती–मधो न परतः पुनः ॥ ४० ॥ इति स्थानं ॥ एषां पर्याप्त-
यः सर्वाः । पर्याप्तानां प्रकीर्त्तिताः ॥ यथासंभवमन्येषां । प्राणाश्च निखिला अपि ॥ ४१ ॥
इति पर्याप्तयः ॥ चतुर्दशयोनिलक्षा । एषां संमूर्छिमैः सह ॥ द्वादश स्युः कुलकोट्यो । यो-
निर्विवृतसंवृता ॥ ४२ ॥ मिश्रा सचित्ताचित्तत्वात् । शीतोष्णत्वाच्च सा भवेत् ॥ वंशीपत्रा
तथा शंखा–वर्त्ता कूर्मोन्नतापि च ॥ ४३ ॥ पल्योपमानां त्रितय–मुत्कृष्टैषां भवस्थितिः ॥
सा युग्मिनां परेषां तु । पूर्वकोटिः प्रकीर्त्तिता ॥ ४४ ॥ जघन्या नरगर्भस्य । स्थितिरांतर्मुहू-

र्त्तिकी ॥ उत्कृष्टा द्वादशाब्दानि । विज्ञेया मध्यमाऽपरा ॥ ४५ ॥ पित्तादिदूषितः पापी । कार्मणादिवशोऽथवा ॥ द्वादशाब्दानि गर्भांत–स्तिष्ठेत् सिद्धनृपादिवत् ॥ ४६ ॥ चतुर्विंशतिवर्षा च । गर्भकायस्थितिर्नृणां ॥ उत्कृष्टस्थितिगर्भस्य । मृत्वोत्पन्नस्य तत्र सा ॥ ४७ ॥ स्थित्वा द्वादशवर्षाणि । गर्भे कश्चिन्महापवान् ॥ विपद्योत्पद्य तत्रैव । तावत्तिष्ठत्यसौ यतः ॥ ४८ ॥

इति–भवस्थितिः ॥

इत्यर्थतो–भगवतीशतक २ पंचमोद्देशके ॥ पूर्वाणां कोटयः सप्त । तथा पल्योपमत्रयं ॥ भाव्या गर्भजतिर्यग्न–देशां कायस्थितिर्गुरुः ॥ ४९ ॥ इति–कायस्थितिः ॥ संख्येयजीविनां देहाः । पंचासंख्येयजीविनां ॥ भवेद्देहत्रयमेव । विनाहारकवैक्रिये ॥ ५० ॥ इति–देहाः ॥ संख्येयजीविनां नृणां । संस्थानान्यखिलान्यपि ॥ चतुरस्रं भवेदेत–दसंख्येयायुषां पुनः ।५१। इति–संस्थानं ॥ शतानि पंच धनुषां । वपुः संख्येयजीविनां ॥ गव्यूतत्रयमन्येषा–मुत्कर्षेण प्रकीर्तितं ॥ ५२ ॥ जघन्यतोंगुलासंख्य–भागमानमिदं भवेत् ॥ सर्वेषां तदारंभ–काल एवास्य संभवः ॥ ५३ ॥ संख्यायुषां वैक्रियं सा–धिकैकलक्षयोजनं ॥ उत्कर्षेण जघन्याच्चां–

गुलसंख्यांशसंमितं ॥ ५४ ॥ आहारकशरीरं यत् । स्यादेषां लब्धिशालिनां ॥ श्रुतकेवलिना तत्तु । मानतो हस्तसंमितं ॥ ५५ ॥ इत्यगमानं ॥ स्युः सप्तापि समुद्घाता । नृणां संख्येयजीविनां ॥ असंख्येयायुषामाद्या—स्त्रय एव भवंति ते ॥ ५६ ॥ इति समुद्घाताः ॥ यांति सर्वे सुरेष्वेव । नरा असंख्यजीविनः ॥ निजायुःसमहीनेषु । नाधिकस्थितिषु क्वचित् ॥ ॥ ५७ ॥ ततोंतर्द्वीपजाता । भवनव्यंतरावधि ॥ यांतीशानदिवं यावत् । हरिवर्षादिजास्तु ते ॥५८॥ सौधर्मांतं हैमवन—हैरण्यवतजा इमे ॥ जघन्यापि यदीशाने—ऽधिकपल्योपमा स्थितिः ॥ ५९ ॥ सर्वसंसारिगतिषु । नराः संख्येयजीविनः ॥ गच्छंति कर्मविगमा—देति मुक्तिगतावपि ॥ ६० ॥ तत्र च—तीव्ररोषास्तपोमत्ता—स्तथा बालतपस्विनः ॥ द्वैपायनादिवद्वैर—परा यांत्यसुरेष्वमी ॥ ६१ ॥ जलाग्निझंपासंपात—गलपाशविषाशनैः॥ तृट्क्षुदाद्यैर्मृतास्ते स्यु—र्व्यंतराः शुभभावतः ॥ ६२ ॥ अविराद्धचारित्राणां । जघन्यादाद्यताविषः ॥ उत्कर्षेण च सर्वार्थसिद्धः स्याद्विषयो गतेः ॥ ६३ ॥ विराद्धसंयमानां तु । भवनेशाद्यताविषौ ॥ क्रमाज्जघन्योत्कर्षाभ्या—मेवमग्रेऽपि भाव्यतां ॥ ६४ ॥ आराद्धदेशविरतेः । सौधर्माच्युतताविषौ ॥ विराद्धदे-

शभिरते—भवनज्योतिरालयौ ॥ ६५ ॥ तापसानामपि तथा । तावेव गतिगोचरौ ॥ कांदर्पिकाणां भवना—धिपसौधर्मताविषौ ॥ ६६ ॥ चरकाणां परिव्राजां । भवनब्रह्मताविषौ ॥ सौधर्मलांतकौ कल्पौ । ख्यातौ किल्बिषिकांगिनां ॥ ६७ ॥ विमानेषूत्पद्यमाना—पेक्षयेदं यतोऽन्यथा ॥ संति किल्बिषिका देवा । भवनाधिपतिष्वपि ॥ ६८ ॥ आजीविकाभियोगानां । भवनाच्युतताविषौ ॥ निह्नवानां च भवने—शांत्यग्रैवेयकौ किल ॥ ६९ ॥ भव्यानामप्यभव्यानां । साधुवेषगुणस्पृशां ॥ अपि मिथ्यादृशामेष । विषयः सत्क्रियाबलात् ॥ ७० ॥ निर्ग्रंथगुणत्वेऽपि । ते स्युर्मिथ्यादृशो यतः ॥ अश्रद्दधत्पदमपि । मिथ्यात्वी सूत्रभाषितं ॥ ७१ ॥ सूत्रलक्षणं चैवमाहुः—❀ सुत्तं गणहररइयं । तहेव पत्तेअबुद्धरइअं च ॥ सुअकेवलिणा रइअं । अभिन्नदसपुव्विणा रइअं ॥ ७२ ॥ ❀ देवेषु गच्छतामेषां । स्यादुक्तो गतिगोचरः ॥ नत्वेषां गतिरप्येवे—त्याशंक्यं मतिशालिभिः ॥ ७३ ॥ कांदर्पिकादिलक्षणं चैवं—कंदर्पः परिहासोऽस्ति । यस्य कांदर्पिकश्च सः ॥ कंदर्पविकथाशंसी—तत्प्रशंसोपदेशकृत् ॥ ७४ ॥ नानाहासकलाः कुर्वन् । मुखतुर्यांगचेष्टितैः ॥ अहसन् हासयंश्चान्या—न्नानाजीवरुतादिभिः ॥

भ

॥ ७५ ॥ युग्मं ॥

किल्बिषं पापमस्यास्ति । स किल्बिषिक उच्यते ॥ मायावी ज्ञानसद्धर्मा—चार्यसाध्वादिनिंदकः ॥ ७६ ॥ वर्त्तयेद्यस्तु नटवत् । वेषमाजीविकाकृते ॥ बाह्योपचारचतुरः । स आजीविक उच्यते ॥ ७७ ॥ अभियोगः कार्मणादि—स्तत्प्रयोक्ताभियोगिकः ॥ द्रव्यानुयोगमंत्रादिः । स द्विधा द्रव्यभावतः ॥ ७८ ॥ तथोक्तं—❀ दुविहो खलु अभियोगो । दव्वे भावे य होइ नायव्वो ॥ दव्वंमि होइ जोगा । विज्जामंता य भावंमि ॥ ७९ ॥ ❀ इति भग० वृ० प्रथमशतद्वितीयोद्देशके ॥ व्यवहारेण चारित्र—वंतोऽप्येतेऽचरित्रिणः ॥ लभंत ईदृशीः संज्ञा । दोषैरेतैर्यथोदितैः ॥ ८० ॥ प्रयांति नरकेष्वेव । नियमादर्धचक्रिणः ॥ तथैव च गतिर्ज्ञेया । प्रत्यर्धचक्रिणामपि ॥ ८१ ॥ चक्रिणो येऽत्यक्तराज्याः । प्रयांति नरकेषु ते ॥ सप्तस्वपि यथाकर्मोत्कृष्टायुष्कतया परं ॥ ८२ ॥ तथोक्तं भगवती शतक १२ नवमोद्देशकवृत्तौ चक्रवर्त्तित्वांतरनिरूपणाधिकारे—❀ ' जहन्नेणं सातिरेगं सागरोवमंति '—कथमपरित्यक्तसंगाश्चक्रवर्त्तिनो नरकपृथिवीषूत्पद्यते, तासु च यथास्थमुत्कृष्टस्थितयो भवंति, ततश्च नरदेवो मृतः प्रथमपृथिव्या

मुत्पन्नस्तत्र चोत्कृष्टां स्थितिं सागरोपमप्रमाणामनुभूय—नरदेवो जायत इत्येवं सागरोपमं,
सातिरेकत्वं च नरदेवभवे चक्ररत्नोत्पत्तेरर्वाचीनकालेन द्रष्टव्यमिति । श्रीहरिभद्रसूरिकृतदश-
वैकालिकवृत्तौ हैमवीरचरित्रे नवपदप्रकारणवृत्तौ च चक्रिणः सप्तम्यामेवाऽत्यक्तराज्या यांती
त्युक्तमिति ज्ञेयं ❀

त्यक्तराज्यास्तु ये सार्व—भौमास्ते यांति ताविषं ॥ मुक्तिं वाथ सीरिणोऽपि । ध्रुवं स्व-
र्मुक्तिगामिनः ॥ ८३ ॥ इति गतिः ॥ असंख्यायुर्नृतिरश्चः । सप्तमक्षितिनारकान् ॥ वाय्वग्नी
च विना सर्वे—ऽप्युत्पद्यंते नृजन्मसु ॥ ८४ ॥ अर्हंतो वासुदेवाश्च । बलदेवाश्च चक्रिणः ॥ सु-
रनैरयिकेभ्यः स्यु—र्नृतिर्यग्भ्यो न कर्हिचित् ॥ ८५ ॥ तत्रापि—प्रथमादेव नरका—ज्जायंते
चक्रवर्त्तिनः ॥ द्वाभ्यामेव हरिबला—स्त्रिभ्य एव च तीर्थपाः ॥ ८६ ॥ चतुर्विधाः सुराश्च्यु-
त्वा । भवंति बलचक्रिणः ॥ जिना वैमानिका एव । हरयोऽप्यननुत्तराः ॥ ८७ ॥ एवं मनु-
ष्यरत्नानि । यानि स्युः पंच चक्रिणां ॥ तान्यागत्या विज्ञाव्यानि । सामान्येन मनुष्यवत् ॥
॥ ८८ ॥ वैमानिकेभ्यश्च यदि । भवंति तानि तर्हि च ॥ अनुत्तरसुरान्मुक्त्वा—न्येभ्यः स्युर्वा-

सुदेववत् ॥ ८९ ॥ मुहूर्त्ता द्वादशोत्कृष्टं । समयो लघु चांतरं ॥ तिर्यग्भवेदेकसमय–संख्या सं-
मूर्छिमैः सह ॥ ९० ॥ ❀ नानांगिनामपर्याप्त–नृत्वेनोत्पत्तिरीरिता ॥ उत्कर्षतोऽविच्छेदेन । प-
ल्यासंख्यलवावधि ॥ १ ॥ अपर्याप्तनरत्वेनो–त्पत्तिरेकस्य चांगिनः ॥ उत्कर्षतो जघन्याच्चां-
तर्मुहूर्तं निरंतर ॥ २ ॥ इत्यर्थतः पंचसंग्रहे ॥ ❀ इत्यागतिः ॥ सम्यक्त्वं देशविरतिं । चा-
रित्रं मुक्तिमप्यमी ॥ लभंतेऽनंतरभवे । लब्ध्वा नरभवादिकं ॥ ९१ ॥ अनंतरभवे चैते । न
लभंते कदाचन ॥ अर्हत्त्व चक्रवर्त्तित्वं । बलत्वं वासुदेवतां ॥ ९२ ॥ लब्धयोऽष्टाविंशतौ या ।
येषामिह नृजन्मनि ॥ संभवंति प्रसंगेन । दर्श्यंते ता यथागमं ॥ ९३ ॥ कफविप्रुण्मलामर्श
–सर्वौषधिमहर्द्धयः ॥ संभिन्नश्रोतोलब्धिश्च । विपुलर्जुधियावपि ॥ ९४ ॥ चारणाशीविषाव-
धि–सार्वज्ञ्यगणधारिताः ॥ चक्रित्वार्हत्त्वबलता–विष्णुत्वं पूर्वधारिता ॥ ९५ ॥ क्षीरमध्वा-
ज्याश्रवाश्च । बीजकोष्ठधियौ तथा ॥ पदानुसारिता तेजो–लेश्याहारकवैक्रिये ॥ ९६ ॥ शी-
तलेश्याक्षीणमहा–नसी पुलाकसंज्ञिता ॥ इत्यष्टाविंशतिर्भव्य–पुंसां सल्लब्धयो मताः ॥९७॥
चक्रयर्हद्विष्णुबलसं–भिन्नश्रोतस्त्वपूर्विताः ॥ गणभृत्त्वं चारणत्वं । पुलाकाहारके अपि ॥९८॥

विना दशामूः स्त्रीष्वन्याः । स्युरष्टादशलब्धयः ॥ आस्वार्हत्यं कदाचिद्य–त्त्वाश्चर्यतयोदितं ॥ ९९ ॥ दशैताः केवलित्वं च । विपुलर्जुधियावपि ॥ अभव्यपुंसां नैवैताः । संभवंति त्रयोदश ॥ १०० ॥ अभव्ययोषितामेताः । क्षीराद्याश्रवसंयुताः ॥ न स्युश्चतुर्दशैतासां । ततो ज्ञेयाश्चतुर्दश ॥ १ ॥ इत्यनंतरशाप्तिः ॥ ❀ अनंतरभवे चैते । प्राप्य मानुष्यकादिकं ॥ सिध्यंत्येकत्रसमये । विंशतिर्नाधिकाः पुनः ॥ १ ॥ तत्रापि पुंमनुष्येभ्यो । जाताः सिध्यंति ते दश ॥ नारीभ्योऽनंतरं जाताः । क्षणे ह्येकत्र विंशतिः ॥ १ ॥ ❀ इतिसमयेसिद्धिः ॥ लेश्याहारादिशः सर्वा । एषां संहननान्यपि ॥ सर्वे कषायाः स्युः संज्ञा–श्चेंद्रियाण्यखिलान्यपि ॥ २ ॥ लेश्याश्चतस्रः कृष्णाद्या । भवत्यसंख्यजीविनां ॥ एषामाद्यं संहनन–मेकमेव प्रकीर्त्तितं ॥ ३ ॥ इतिद्वारषट्कं ॥ सज्ञावाद्ययक्तमंज्ञाना–मेते संज्ञितया मताः ॥ दीर्घकालिक्यादिकाना–मपि सत्त्वात्तथैव ते ॥ ४ ॥ इति संज्ञिता ॥ एतेषु भवतः पुंस्त्री–वेदावसंख्यजीविषु ॥ पुंभिस्तुल्याः स्त्रियश्चैषु । स्युर्युग्मित्वेन सर्वदा ॥ ५ ॥ पुंस्त्रीक्लीवास्त्रिधान्ये स्यु–स्तत्र पुंभ्यः स्त्रियो स्मृताः ॥ सप्तविंशत्यतिरिक्ताः । सप्तविंशतिसंगुणाः ॥ ६ ॥ गर्भजाः क्लीवा-

स्तु पुमाकारस्त्राजः पुंसु, स्त्र्याकारस्त्राजस्तु स्त्रीषु गएयते इतिवृद्धवादः ॥ इतिवेदः ॥ तिस्रो दृशो ज्ञानाज्ञान–दर्शनान्यखिलान्यपि ॥ द्वादशोत्युपयोगाः स्यु–स्त्रिधौजःप्रमुखाहृतिः ॥ ॥ ७ ॥ आहारस्य कावलिक–स्यांतरं स्यात्स्वसावज ॥ ज्येष्टं दिनत्रयं प्राग्व–दनाहारकता-पि च ॥ ८ ॥ द्विक्षणाविग्रहगतौ । समुद्घाते तु सप्तमे ॥ भवत्यनाहारकता । तृतीयादिक्ष-णत्रये ॥ ए ॥ अयोगित्वे पुनः सा स्या–दसंख्यसमयात्मिका ॥ गुणस्थानानि निखिला–न्ये-षु योगास्तथाखिलाः ॥ १० ॥ इतिद्वारसप्तकं ॥ गर्जजानां मनुष्याणा–मथ मानं निरूप्य ते ॥ एकोनत्रिंशतांकैस्ते । सिता जघन्यतोऽपि हि ॥ ११ ॥ ते चामी–❀ छतिति ख पण नव तिग चउ । पण तिग नव पंच सगति तिग चउरो ॥ छ छ चउ इग पण छ छ इग । अडछ छ नव सग जहन्ननरा ॥ १२ ॥

इति पर्यंतवर्त्तिनोंकस्थानादारज्यांकस्थानसंग्रहः ॥ ७ए२२८१६२५१४२६४३३७५ए३५४-३ए५०३३६ ॥ एकं, दस, रायं, सहस्सं, दससहस्सं, लक्खं, दहलक्ख, कोडिं, दहकोडिं, को-डिसयं, कोडिसहस्सं, दसकोडिसहस्सं, कोडिलक्ख, दहकोडिलक्ख. कोडाकोडी, दहकोडाको-

डि, कोडाकोडिसयं, कोडाकोडिसहस्सं, दहकोडाकोडिसहस्सं, कोडाकोडिलरकं, दहकोडाकोडिलरकं, कोडाकोडिकोडी, दहकोडाकोडिकोडी, कोडाकोडिकोडिसयं, कोडाकोडिकोडिसहस्सं, दहकोडाकोडिकोडिसहस्सं, कोडाकोडिकोडिलरकं, दहकोडाकोडिकोडिलरकं, कोडाकोडिकोडिकोडि, इत्याद्यंकवाचनप्रकारः ॥ एतेषामेव एकोनत्रिंशतांकस्थानानां पूर्वपुरुषैः पूर्वपूर्वांगैः परिसंख्यानं कृतं तदुपदर्श्यते, तत्र चतुरशीतिर्लक्षाणि पूर्वांगं, चतुरशीतिलक्षाश्चतुरशीतिलक्षैर्गुण्यंते, ततः पूर्वं भवति, तस्य परिमाणं सप्ततिः कोटिलक्षाणि, षट्पंचाशत्सहस्राणि ( ७०५६०००००००००० ) एतेन पूर्वोक्तांकराशेर्भागो ह्रियते, तत इदमागतं—मणुआण जहन्नपदे । एकारस पूव्वकोडिकोडिउ ॥ बावीसकोडिलरका । कोडिसहस्सा य चुलसीइ ॥ १ ॥ अठेव य कोडिसया । पुव्वाण दसुत्तरा तउ हुंति ॥ एक्कासीइ लरका । पंचाणउइ सहस्सा य ॥ २ ॥ उप्पन्नातिन्नि सया । पुव्वाणं पुव्ववासिआ असे ॥ एत्तो पुव्वगाइं । इमाइं अहियाइं असाइं ॥ ३ ॥ लरकाइं एगवीसं । पुव्वंगाण सयरीसहस्साइं ॥ छच्चेवेगूणठा । पुव्वंगाणं सया होंति ॥ ४ ॥ ते सीइ सयसहस्सा । पन्नासं खलु भवे सहस्सा य ॥ तिन्निस-

या बत्तीसा । एवइया अविगला मणुया ॥ ५ ॥

उत्कर्षेण समुदिता । गर्भसंमूर्छजा नराः ॥ असंख्येयकालचक्र—समयैः प्रमिता मताः ॥ ६ ॥ मनुष्या ह्युत्कृष्टपदेऽपि श्रेण्यसंख्येयभागगतप्रदेशराशिप्रमाणा लभ्यंते, इति तु प्रज्ञापनावृत्तौ. ❀ ॥ इतिमानं ॥ गर्भजाः पुरुषाः स्तोका—स्ततः संख्यगुणाः स्त्रियः । ततोऽसंख्यगुणाः षढ—नराः संमूर्छिमैर्युताः ॥ १३ ॥ इति लध्व्यल्पबहुता ॥ दक्षिणोत्तरयोः स्तोकाः । स्युर्मनुष्या मिथः समाः ॥ प्राच्यां ततः संख्यगुणाः । प्रतीच्यां च ततोऽधिकाः ॥ १४ ॥ भरतैरवतादीनि । क्षेत्राण्यल्पान्यपागुदग् ॥ ततः संख्यगुणानि स्युः । पूर्वपश्चिमयोर्दिशोः ॥१५॥ किंत्वधोलौकिकग्रामे—ष्वनल्पाः स्युर्नरा यतः ॥ ततः प्रतीच्यामधिका । मनुष्याः प्राच्यपेक्षया ॥ १६ ॥ इति दिगपेक्षयाल्पबहुता ॥ अंतर्मुहूर्त्तमल्पिष्ट । मनुष्याणां महांतरं ॥ कालोऽनंतः स चोत्कृष्टा । कायस्थितिर्वनस्पतेः ॥ १७ ॥ चक्रित्वे चांतरं प्रोक्तं । साधिकाब्धिमितं लघु ॥ ज्येष्टं च पुद्गलपरा—वर्त्तार्धं पंचमांगके ॥ १८ ॥ नृणामिति व्यतिकरा विवृता मयैवं । सम्यग् विविच्य समयात्स्वगुरुप्रसत्त्या ॥ पूर्णापणादिव कणाः कलमौक्तिकानां । दीपत्विषात्सवणिजा मणिजा-

तिवेत्रा ॥ १९ ॥ विश्वाश्चर्यदकीर्त्तिकीर्त्तिविजयश्रीवाचकेंद्रांतिष–द्राजश्रीतनयोऽतनिष्ट विनयः श्रीतेजपालात्मजः ॥ काव्यं यत्किल तत्र निश्चितजगत्तत्त्वप्रदीपोपमे । सर्गो निगलितार्थसार्थसुभगः पूर्णः सुखं सप्तमः ॥ २० ॥

। इति श्रीलोकप्रकाशे मनुष्याधिकाररूपः सप्तमः सर्गः समाप्तः ॥

॥ अष्टमः सर्गः प्रारभ्यते ॥

सुराश्चतुर्धा भवन–व्यंतरज्योतिषा अपि ॥ वैमानिका इति प्रोक्ता–स्तान्प्रभेदैरथ ब्रुवे ॥ १ ॥ दशधा भवनेशाख्या–सुरनागसुपर्णकाः ॥ विद्युदग्निद्वीपवार्द्धि–दिग्वायुस्तनिता इति ॥ २ ॥ एते च सर्वे कुमारोपपदा इति ज्ञेयं ॥ परमाधार्मिकाः पंच–दशधा परिकीर्त्तिताः ॥ यथार्थैर्नामभिः ख्याता । अंबमभूतयश्च ते ॥ ३ ॥ अंबांबरीषशबल–श्यामरौद्रोपरुद्रकाः ॥ असिपत्रधनुःकुंभाः । महाकालश्च कालकः ॥ ४ ॥ वैतरणी वालुकश्च । महाघोषः खरस्वरः ॥ एतेऽसुरनिकायांत–र्गताः पंचदशोदिताः ॥ ५ ॥ नीत्वोर्ध्वं पातयत्याद्यो । नारकान् खंमशः परः ॥ करोति भ्राष्ट्रपाकार्हान् । तृतीयोंत्रहृदादिभित् ॥ ६ ॥ शातनादिकरस्ते-

षां । तुरीयः पंचमः पुनः ॥ कुंतादौ प्रोतकस्तेषां । षष्ठोंगोपांगभंगकृत् ॥ ७ ॥ अस्याकार-
पत्रयुक्तं । वनं सृजति सप्तमः ॥ धनुर्मुक्तार्धचन्द्रादि-बाणैर्विध्यति चाष्टमः ॥ ८ ॥ नवमः
पाकस्तेषां । कुंभादौ दशमःपुनः ॥ खण्डयित्वासकृत् श्लक्ष्ण-मांसखंडानि खादति ॥ ९ ॥
तान् कंदूवादौ पचत्येका-दशश्च द्वादशः सृजेत् ॥ नदीं वैतरणीं तप्त-रक्तपूयादिपुरितां ॥
॥ १० ॥ कदंबपुष्पाद्याकार-वालुकासु पचेत्परः ॥ नश्यतस्तान् महाशब्दो । निरुणद्धि च-
तुर्दशः ॥ ११ ॥ आरोप्य शाल्मलीवृक्षं । वज्रकंटकभीषणं ॥ खरस्वरः पंचदशः । समाक-
र्षति नारकान् ॥ १२ ॥ परमाधार्मिकास्ते च । संचितानंतपातकाः ॥ मृत्वांडगोलिकतयो-
त्पद्यंतेऽत्यन्तदुःखिताः ॥ १३ ॥
यत्र सिंधुः प्रविशति । नदी लवणवारिधिं ॥ योजनैर्दिशि याम्यायां । पंचपंचाशता त-
तः ॥ १४ ॥ अस्ति स्थल वेदिकांतः । प्रतिसंतापदायकं ॥ प्रमाणतो योजनानि । सार्धानि
द्वादशैव तत् ॥ १५ ॥ योजनानि त्रीणि सार्धा-न्युद्वेधोऽत्र महोदधेः ॥ सप्तचत्वारिंशदत्र ।
गुहाः संत्यतितामसाः ॥ १६ ॥ आद्यसंहननास्तासु । वसंत्युरुपराक्रमाः ॥ नरा जलचरा म-

द्य—मांसस्त्रीभोगलोलुपाः ॥ १७ ॥ दुर्वर्णाः कठिनस्पर्शाः । भीषणा घोरदृष्टयः ॥ अद्ध्यर्ध-द्वादशकर—देहाः संख्येयजीविताः ॥ १८ ॥ तत्र रत्नद्वीपमस्ति । स्थलात्संतापदायकात् ॥ वारिधौ योजनैरेक—त्रिंशता भूरिमानवं ॥ १९ ॥ घरट्टान् वाज्रिकांस्तेऽथ । मनुष्यास्तन्निवासिनः ॥ लिंपंति मद्यैर्मांसैश्च । तेषु तानि क्षिपंति च ॥ २० ॥ मद्यमांसालाबुपात्रैः । प्रपूर्य वहनानि ते ॥ गच्छंति जलधौ मद्य—मांसैस्तान् लोभयंति च ॥ २१ ॥ मद्यमांसास्वादलुब्धा—स्ततस्तदनुपातिनः ॥ निपतंति घरट्टेषु । क्रमात्ते जलमानुषाः ॥ २२ ॥ मांसानि वह्निपक्वानि । जीर्णमद्यानि ते नराः ॥ यावद्दिनानि छित्राणि । भुंजानाः सुखमासते ॥ २३ ॥ तावद्भटाः सुसन्नद्धा । रत्नद्वीपनिवासिनः ॥ संयोजितान् घरट्टांस्तान् । वेष्टयंति समंततः ॥ ॥ २४ ॥ वर्षं यावद्वाहयंति । घरट्टानतिदुःसहान् ॥ तथापि तेषामस्थीनि । न स्फुटंति मनागपि ॥ २५ ॥ ते दारुणानि दुःखानि । सहमाना दुराशयाः ॥ प्रपीड्यमाना वर्षेण । म्रियंतेऽत्यंतदुर्मराः ॥ २६ ॥ अथांडगोलकांस्तेषां । जनास्ते रत्नकांक्षिणः ॥ चमरीपुच्छवालाग्रे—गुंफित्वा कर्णयोर्द्वयोः ॥ २७ ॥ निबद्ध्य प्रविशंत्यब्धौ । तानन्ये जलचारिणः ॥ कुलीरतंतु-

महानिशीथचतुर्थाध्ययनेऽन्तः ॥

मीनाद्याः । प्रभवंति न बाधितुं ॥ २८ ॥ इति गंधर्वा-व्यंतरा

पिशाचा-भूतयक्षाश्च । राक्षसाः किन्नरा अपि ॥ किंपुरुषा महोरगा ॥ गंधर्वा-व्यंतरा

पिशाचा-भूतयक्षाश्च । राक्षसाः किन्नरा अपि ॥ रत्नाभरणवद्ग्रीवा-हस्ताः चो-

इमे ॥ २९ ॥ पिशाचास्तत्र सहज-सुरूपाः सौम्यदर्शनाः ॥ अह्निकाः कालका अपि ॥ देह-

षोडशधा मताः ॥ ३० ॥ कुष्मांडाः पटका जोषाः । तूष्णीकास्तालमुखर-पिशाचा भूतो-

काऽचोक्षमहाकाला-स्तथा वनपिशाचकाः ॥ ३१ ॥ सुरूपप्रतिरूपाति-रूपा भूतो-

संज्ञकाः ॥ विदेहाश्च महादेहा-स्तथाधस्तारका इति ॥ ३२ ॥ आकाशकाः प्रतिछ्ना ।

त्तमा इति ॥ स्कंदिकाख्या महावेगा । महास्कंदिकसंज्ञकाः ॥ ३३ ॥ मानोन्मान-

भूता नवविधा अमी ॥ सौम्याननाः सुरूपाश्च । नानाभक्तिविलेपनाः ॥ ३४ ॥ किरीटधा-

प्रमाणोप-पन्नदेहा विशेषतः ॥ रक्तपाणिपादतल-तालुजिह्वौष्ठपाणिजाः ॥ ३५ ॥ पू-

रिणो नाना-रत्नात्मकविभूषणाः ॥ यक्षास्त्रयोदशविधा । गंभीराः प्रियदर्शनाः ॥ ३६ ॥ स्मृ-

र्ण माणि श्वेत हरि-सुमनो व्यतिपाकतः ॥ भद्राः स्युः सर्वतो भद्राः । सुभद्रा अष्टमाः स्मृ-

ताः ।३७। यक्षोत्तमा रूपयक्षा । धनाहाराधनाधिपाः ॥ मनुष्ययक्षा इत्येवं । सर्वेऽप्येते त्रयोदश

॥ ३८ ॥ करालरक्तलंबोष्ठा—स्तपनीयविभूषणाः ॥ राक्षसाः सप्तधा प्रोक्ता—स्तेऽमी भीषणदर्शनाः ॥ ३९ ॥ विघ्ना भीममहाभीमा—स्तथा राक्षसराक्षसाः ॥ परे विनायका ब्रह्म—राक्षसा जलराक्षसाः ॥ ४० सुरूपेष्वधिकरूपाढ्याः । किन्नरा दीप्रमौलयः ॥ दशधाः किन्नरा रूप—शालिनो हृदयंगमाः ॥ ४१ ॥ रतिप्रिया रतिश्रेष्ठाः । किंपुरुषा मनोरमाः ॥ अनिंदिताः किंपुरुषो—त्तमाश्च किन्नरोत्तमाः ॥ ४२ ॥ मुखोरुबाहूद्यद्रूपा—श्चित्रस्रगनुलेपनाः ॥ दश किंपुरुषास्ते स—त्पुरुषा पुरुषोत्तमाः ॥ ४३ ॥ यशस्वंतो महादेवा । मरुन्मेरुप्रभा इति ॥ महातिपुरुषाः किंच । पुरुषाः पुरुषर्षभाः ॥ ४४ ॥

महोरगा दशविधा । भुजगाभोगशालिनः ॥ महाकाया अतिकाया । भास्वंतः स्कंधशालिनः ॥ ४५ ॥ महेश्वक्षा मेरुकांता । महावेगा मनोरमाः ॥ सर्वेऽप्यमी महावेगा । महांगाश्चित्रभूषणाः ॥ ४६ ॥ गंधर्वा द्वादशविधाः । सुस्वराः प्रियदर्शनाः ॥ सुरूपा मौलिमुकुट—धरा हारविभूषणाः ॥ ४७ ॥ हाहाहूहूतुंबरवो । नारदा ऋषिवादिकाः ॥ भुतवादिककादंबा । महाकदंबरैवताः ॥ ४८ ॥ विश्वावसुगीतरति—सद्गीतयशसस्तथा ॥ सप्ताशीतिरि-

मे सर्वे । तृतीयांशेऽष्ट ते त्वमी ॥ ४९ ॥ ❀ अणपन्नी पणपन्नी । इसिवाइअभूअवाइए चेव ॥
कंदी-अ महाकंदी । कोहंडे चेव पयए य ॥ ५० ॥ तथा अन्नपानवस्त्रवेश्म-शय्यापुष्पफलो-
द्भवे ॥ येऽल्पानल्पत्वसरस-विरसत्वादिकारकाः ॥ ५१ ॥ अन्नादिजृंभकास्तेऽष्टौ । स्युर्विद्या-
जृंभकाः परे ॥ ये त्वन्नाद्यविभागेन । जृंभंतेऽव्यक्तजृंभकाः ॥ ५२ ॥ विचित्रचित्रयमक-वैता-
ढ्यकांचनादिषु ॥ वसंति शैलेषु दशा-प्यमी पल्योपमायुषः ॥ ५३ ॥ नित्यं प्रमुदिताः क्री-
डा-—पराः सुरतसेविनः ॥ स्वच्छंदचारित्वादेते । जृंभंत इति जृंभकाः ॥ ५४ ॥ क्रुद्धानेतांश्च
यः पश्येत् । सोऽयशोऽनर्थमाप्नुयात् ॥ तुष्टान् पश्यन् यशोविद्यां । वित्ते वज्रमुनीन्द्रवत् ॥
॥ ५५ ॥ शापानुग्रहशीलत्व-मेषां शक्तिश्च तादृशी ॥ अयमर्थः पंचमांगे । शते-चोक्तश्चतु-
र्दशे ॥ ५६ ॥ शतं पचोत्तर भेद-भिन्नैर्व्यंतरामराः ॥ भवंति नानाक्रीडाभिः । क्रीडंतः का-
ननादिषु ॥ ५७ ॥ ज्योतिष्काः पंच चंद्रार्क-ग्रहनक्षत्रतारकाः ॥ द्विधा स्थिराश्चराश्चेति । द-
श भेदा भवंति ते ॥ ५८ ॥ वैमानिका द्विधा कल्पा-तीतकल्पोपपन्नकाः ॥ कल्पोत्पन्ना
द्वादशधा । ते त्वमी देवलोकजाः ॥ ५९ ॥ सौधर्मेशानसनत् । कुमारमाहेंद्रब्रह्मलांतकजाः

॥ शुक्रसहस्रारानत । प्राणतजा आरणाच्युतजाः ॥ ६० ॥

आद्यकल्पद्वयाधःस्था–स्तृतीयाधस्तना अपि ॥ लांतकत्रिदिवाधस्था–स्त्रिधा किल्बिषिका अमी ॥ ६१ ॥ कल्पातीता द्विधा ग्रैवे–यकानुत्तरसंज्ञकाः ॥ स्वामिसेवकभावादि–कल्पेन रहिता इमे ॥ ६२ ॥ अधस्तनाधस्तनं च । स्यादधस्तनमध्यमं ॥ अधस्तनोपरितनं । मध्यमाधस्तनं ततः ॥ ६३ ॥ मध्यमध्यममध्यं च । मध्योपरितनं ततः ॥ उपरिस्थाधस्तनं चो–परिस्थमध्यमं पुनः ॥ ६४ ॥ उपरिस्थोपरितनं । तज्ज्ञा ग्रैवेयकाः सुराः ॥ विजयादिविमानोद्भाः । पंचधानुत्तरामराः ॥ ६५ ॥ सारस्वतादित्यवह्नि–वरुणा गर्दतोयकाः ॥ तुषिताऽव्याबाधाग्नेय–रिष्टा लोकांतिका अमी ॥ ६६ ॥ पर्याप्तापरभेदेन । सर्वेऽपि द्विविधा अमी ॥ जाताः षट्पंचाशमेवं । सुरभेदाः शतत्रयं ॥ ६७ ॥ पंचधांगे तु–द्रव्यदेवा नरदेवा । धर्मदेवास्तथा परे ॥ देवाधिदेवा ये भाव–देवास्ते पंचधा मताः ॥ ६८ ॥ तत्र च—पंचेंद्रियो नरस्तिर्यक् । संपादितशुभायतिः ॥ उत्पत्स्यते यो देवत्वे । द्रव्यदेवः स उच्यते ॥ ६९ ॥ नरदेवाः सार्वभौमा । धर्मदेवास्तु साधवः ॥ देवाधिदेवा अर्हंतो । भावदेवाः सुरा इमे ॥ ७० ॥ इह

भावदेवैरधिकारः ॥ इतिभेदाः ॥ त्रैलोक्येऽपि स्थानमेषां। क्षेत्रलोके प्रवक्ष्यते ॥ स्थानोत्पादस-
मुद्घातै–र्लोकाऽसंख्यांशगा अमी ॥ ७१ ॥ इतिस्थानं ॥ पर्याप्तयः षडप्येषां । पंचाप्येकवि-
कलया ॥ वाक्चेतसोर्दश प्राणा । एतेषां परिकीर्त्तिताः ॥ ७२ ॥ इतिपर्याप्तिः ॥ चतस्रो यो-
निलक्षाः स्युः । लक्षाश्च कुलकोटिजाः ॥ द्वादशैषामचित्ता स्या–द्योनिः शीतोष्णसंवृत्ताः ।७३।
इति-द्वारत्रयं ॥ पयोधयस्त्रयस्त्रिंश–दुत्कर्षेण भवस्थितिः ॥ सहस्राणि दशाब्दानां । स्यादे-
षां सा जघन्यतः ॥ ७४ ॥ इतिभवस्थितिः ॥ कायस्थितिस्त्वेषां भवस्थितिरेव ॥ देहास्त्रयस्तै-
जसं च । कार्मणं वैक्रियं तथा ॥ संस्थानं चतुरस्रं स्या–द्रम्यं पुण्यानुसारतः ॥ ७५ ॥ इति
द्वारद्वयं ॥ उत्कर्षतः सप्तहस्ताः । वपुर्जघन्यतः पुनः ॥ अंगुलासंख्यभागः स्या–दादौ स्वा-
भाविकं ह्यदः ॥ ७६ ॥ तत्कृत्रिमं वैक्रियं स्या–धिकैकलक्षयोजनं ॥ ज्येष्ठमंगुलसंख्यांश–मा-
रभादौ च तल्लघु ॥ ७७ ॥ इत्यंगमानं ॥ आद्याः पंच समुद्घाताः । पंचस्वेतेषु यांत्यमी ॥
पर्याप्तगर्भजनर–तिर्यक्षु संख्यजीविषु ॥ ७८ ॥ पर्याप्तबादरक्ष्मांबु–प्रत्येकक्षितिजेषु च ॥ ग-
र्भजा मनुजाः पंचें–द्रियास्तिर्यंच एव च ॥ ७९ ॥

संमूर्छिमा गर्भजाश्चा—गर्भंत्यमृतन्नोजिषु ॥ विशेषस्त्वत्रोदितः प्राक् । क्षेत्रलोकेऽपि वक्ष्यते ॥ ८० ॥ मुहूर्त्तानि द्वादशैषा—मुत्पत्तिच्यवनांतरं ॥ सामान्यतः स्यादुत्कृष्टं । जघन्यं समयावधि ॥ ८१ ॥ उत्पद्यते च्यवंतेऽमी । एकस्मिन्समये पुनः ॥ एको द्वित्राश्च संख्येया । असंख्येयाश्च कर्हिचित् ॥ ८२ ॥ इतिद्वारत्रयं ॥ सम्यक्त्वं देशविरतिं । चारित्रं मुक्तिमप्यमी ॥ लभते लघुकर्माणो । विपद्यानंतरे भवे ॥ ८३ ॥-इत्यनंतरासिः ॥ सिद्ध्यंत्यनंतरभवे । एकस्मिन्समये त्वमी ॥ उत्कर्षतः साष्टशतं । विशेषस्त्वेव तत्र च ॥ ८४ ॥ भवनेशा व्यंतराश्च । सर्वे दशदशैव हि ॥ तद्देव्यः पंचपंचैव । दश ज्योतिष्कनिर्जराः ॥ ८५ ॥ ज्योतिष्कदेव्यश्चैकस्मिन् । क्षणे सिद्ध्यंति विंशतिः ॥ वैमानिकाः साष्टशतं । तद्देव्यो विंशतिः पुनः ॥ ॥ ८६ ॥ इति समयेसिद्धिः ॥ लेश्याहारदिशां षट्कं । न संहननसंभवः ॥ कषायसंज्ञेंद्रियाणि । सर्वाण्येषां भवंति च ॥ ८७ ॥ इति द्वारषट्कं ॥ सर्वेऽप्येते संज्ञिनः स्युः । पुंस्त्रीवेदयुजः परं ॥ देव्यः सुरेभ्यो द्वात्रिंश—द्गुणा द्वात्रिंशताधिकाः ॥ ८८ ॥ इति द्वारद्वयं ॥ एषां स्युर्दृष्टयस्तिस्र । आद्यं ज्ञानत्रयं भवेत् ॥ सम्यग्दृशां परेषां तु । स्यादज्ञानत्रयं ध्रुवं ॥ ८९ ॥

इति द्वारद्वयं ॥ दर्शनत्रयमाद्यं स्या–देषां सम्यक्त्वशालिनां ॥ दर्शनद्वयमन्येषा–मुपयोगो
द्विधा ततः ॥ ५० ॥ उपयोगा षडेतेषां । ज्ञानदर्शनयोस्त्रयं ॥ सम्यग्दृशां परेषां तु । त्र्यज्ञा-
नी द्वे च दर्शने ॥ ५१ ॥ एतेषामोजआहारो । लोमाहारोऽपि संभवेत् ॥ न स्यात्कावलि-
कः स्यात्तु । मनोभक्षणलक्षणः ॥ ५२ ॥ अंतरं पुनरेतस्य । चतुर्थं भक्तसंमितं ॥ जघन्य-
मन्यस्त्वब्दानां । त्रयस्त्रिंशत्सहस्रकाः ॥ ५३ ॥ गुणस्थानानि चत्वारि । योगाश्चैकादशोदिताः
॥ औदारिकाहारकाख्य–तन्मिश्रांश्च विनाखिलाः ॥ ५४ ॥

प्रतरासंख्यभागस्था–संख्येयश्रेणिवर्त्तिभिः ॥ नभःप्रदेशैः प्रमिताः । प्रोक्ताः सामान्य-
तः सुराः ॥ ५५ ॥ क्षेत्रपल्योपमासंख्य–भागस्थांशसंमिताः ॥ देवा अनुत्तरोत्पन्नाः । सं-
ख्येयास्तत्र पंचमे ॥ ५६ ॥ बृहत्तरक्षेत्रपल्या–संख्यांशाभ्रांशसंमिताः ॥ भवंत्यथोपरितन–
ग्रैवेयकत्रिकामराः ॥ ५७ ॥ मध्यमेऽधस्तनेऽप्येवं । त्रिके कल्पेऽच्युतेऽपि च ॥ आरणे प्रा-
णते चैवा–नतेऽपीयंत एव ते ॥ ५८ ॥ किंतु पल्यासंख्यभागो । बृहत्तरो यथोत्तरं ॥ एक-
मानमितेष्वेवं । स्यात्परेष्वपि भावना ॥ ५९ ॥ सहस्रारमहाशुक्र–लांतकब्रह्मवासिनः ॥

माहेंद्रसनत्कुमार—देवाः प्रत्येकमीरिताः ॥ १०० ॥ घनीकृतस्य लोकस्य । श्रेण्यसंख्यांशव-
र्त्तिभिः ॥ नभःप्रदेशैः प्रमिता । विशेषोऽत्रापि पूर्ववत् ॥ १ ॥ अंगुलप्रमितक्षेत्र—प्रदेशरा-
शिसंगते ॥ तृतीयवर्गमूलघ्ने । द्वितीयवर्गमूलके ॥ २ ॥ यावान् प्रदेशराशिः स्या—देकप्रादे-
शिकीष्वथ ॥ श्रेणीषु तावन्मानासु । लोकस्यास्य घनात्मनः ॥ ३ ॥ नभःप्रदेशा यावंत—
स्तावानीशाननाकगः ॥ देवदेवीसमुदायो । निर्दिष्टः श्रुतपारगैः ॥ ४ ॥ त्रयस्त्रिंशत्तमोंशोऽस्य
। किंचिदूनश्च यो भवेत् ॥ ईशानदेवास्तावंतः । केवलाः कथिताः श्रुते ॥ ५ ॥ एवं च—
सौधर्मभवनाधीश—व्यंतरज्योतिषामपि ॥ भाव्या स्वस्वसमुदय—त्रयस्त्रिंशांशमानता ॥ ६ ॥
केवलं देवदेवीसमुदाय एव वक्ष्यते ॥ ईशानतश्च सौधर्मे । स्यात्संख्येयगुणाधिकः ॥ देवदे-
वीसमुदायो । भवनेशानथ ब्रुवे ॥ ७ ॥ अंगुलप्रमितक्षेत्र—प्रदेशराशिवर्त्तिनि ॥ द्वितीयवर्ग-
मूलघ्ने । वर्गमूले किलादिमे ॥ ८ ॥ यावान् प्रदेशराशिः स्या—त्तावन्मानासु पंक्तिषु ॥ घनी-
कृतस्य लोकस्या—थैकप्रादेशिकीषु वै ॥ ९ ॥ नभःप्रदेशा यावंत—स्तावान् पुरुषपुंगवैः ॥
देवदेवीसमुदायः । ख्यातो भवनवासिनां ॥ १० ॥ यावंति संख्ययोजन—कोटीमानानि दैर्घ्य-

तः ॥ सूचिरूपाणि खंडानि । स्युरेकप्रतरे किल ॥ ११ ॥ व्यंतराणां देवदेवी—समुदायो भवे-दियान् ॥ ज्योतिष्कदेवदेवीनां । प्रमाणमथ कीर्त्यते ॥ १२ ॥ षट्पंचाशांगुलशत—द्वयमाना हि दैर्घ्यतः ॥ यावंत एकप्रतरे । सूचिरूपाः स्युरंशकाः ॥ १३ ॥ ज्योतिष्कदेवदेवीनां । तावान् समुदयो भवेत् ॥ उक्त प्रमाणमित्येव—मथाल्पबहुतां ब्रुवे ॥ १४ ॥ इति मानं ॥

स्तोकाः सर्वार्थसिद्धस्था । असंख्येयगुणास्ततः ॥ शेषा अनुत्तरा देवा—स्ततः संख्यगुणाः क्रमात् ॥ १५ ॥ ऊर्ध्वमध्याधःस्थिते स्यु—र्ग्रैवेयकत्रिकत्रये ॥ अच्युते चारणे चैव । प्राणते चानतेऽपिच ॥ १६ ॥ अधोऽधोग्रैवेयकादा—दनुत्तराद्यपेक्षया ॥ भाव्या विमानबाहुल्या—द्देवाः संख्यगुणाः क्रमात् ॥ १७ ॥ समश्रेणिस्थयोर्यद्य—प्यारणाच्युतकल्पयोः ॥ विमानसंख्या तुल्यैव । तथापि कृष्णपाक्षिकाः ॥ १८ ॥ उत्पद्यंते स्वभावेन । दक्षिणस्यां हि भूरयः ॥ शुक्लपाक्षिकजीवेभ्यो । बहवश्च भवंति ते ॥ १९ ॥ ततोऽच्युतापेक्षया स्यु—र्निर्जरा आरणेऽधिकाः ॥ समश्रेणिस्थितावेव—मन्येष्वपि विभाव्यतां ॥ २० ॥ शुक्लपाक्षिककृष्णपाक्षिकलक्षणं चैवं—बहुपापोदयाः क्रूरकर्माणः कृष्णपाक्षिकाः ॥ स्युर्दीर्घतरसंसारा । भूयांसोऽन्यथ्य-

पेक्षया ॥ २१ ॥ तथा स्वभावात्ते भव्या । अपि प्रायः सुरादिषु ॥ उत्पद्यंते दक्षिणस्यां । प्राचुर्येणान्यदिक्षु न ॥ २२ ॥ तथाहुः—❀पायमिह कूरकम्मा । भवसिद्धिया वि दाहिणिल्लेसु ॥ नेरइयतिरियमणुआ । सुराइठाणेसु गच्छंति ॥ २३ ॥ जेसिमवड्ढो पुग्गल—परियट्टो सेसउ उ संसारो ॥ ते सुक्कपक्खिया खलु । अहिए पुण कण्हपक्खीउ ॥ २४ ॥ ❀ इति प्रज्ञापनावृत्तौ ॥ आनतेभ्योऽसंख्यगुणाः । सहस्रारसुराः स्मृताः ॥ महाशुक्रे लांतके च । ब्रह्ममाहेंद्रयोः क्रमात् ॥ २५ ॥ सनत्कुमार ईशानेऽ—प्यसंख्यघ्ना यथोत्तरं ॥ ऐशानेभ्यश्च सौधर्म—देवाः संख्यगुणाधिकाः ॥ २६ ॥ ननु—कृष्णपाक्षिकबाहुल्या—द्यथा माहेंद्रनाकिनः ॥ असंख्येयगुणाः प्रोक्ताः । सनत्कुमारनाकिनः ॥ २७ ॥ विमानानां कृष्णपाक्षि—काणां चाधिक्यतस्तथा ॥ ते सौधर्मेऽप्यसंख्यघ्नाः । कथं नेशाननाकिनः ॥ २८ ॥ अत्रोच्यते हि वचन—प्रमाण्यादुच्यते तथा ॥ विचारगोचरो नास्मा—दृशामेतादिदं वचः ॥ २९ ॥ तथोक्तं प्रज्ञापनावृत्तौ—❀ नन्वियं युक्तिर्माहेंद्रसनत्कुमारयोरप्युक्ता, परं तत्र माहेंद्रकल्पापेक्षया सनत्कुमारकल्पे देवा असंख्येयगुणा उक्ताः, इह तु सौधर्मे कल्पे संख्येयगुणा उक्तास्तदेतत्कथं? उच्यते, वचनप्रा-

ख्यात्, न चात्र पाठक्रमो, यतोऽन्यत्राप्युक्तं—' ईसाणे सव्वत्थ वि । बत्तीसगुणा—उ होंति
देवीउ ॥ संखेज्जा सोहम्मे । तउ असंखा भवणवासी ' इति. ❀
असंख्यघ्नाश्च सौधर्म—देवेभ्यो भवनाधिपाः ॥ भवंति भवनेशेभ्यो—ऽसंख्यघ्ना व्यंतराः
सुराः ॥ ३० ॥ ज्योतिष्काणां देवदेवी—वृंदः संख्यगुणस्ततः ॥ स्वस्वदेवेभ्यश्च देव्यः । सर्वाः
संख्यगुणा स्मृताः ॥ ३१ ॥ इतिलब्ध्यल्पबहुता ॥ पूर्वस्यां च प्रतीच्यां च । स्तोका भवन-
वासिनः॥ उत्तरस्यां दक्षिणस्या—मसंख्येयगुणाः क्रमात् ॥ ३२ ॥ प्राक्प्रतीच्योर्हि भवना—ल्प-
त्वात्स्तोका अमी किल ॥ दक्षिणोत्तरयोस्तेषां । क्रमाधिक्यादिमेऽधिकाः ॥ ३३ ॥ पूर्वस्यां व्यं-
तराः स्तोका । विशेषेणाधिकाधिकाः॥ अपरस्यामुत्तरस्यां । दक्षिणस्यां यथाक्रमं ॥३४॥ व्यं-
तराः शुषिरे भूम्ना । प्रचरंति ततोऽधिकाः ॥ साधोग्रामायां प्रतीच्या—ममी स्युः प्राच्यपेक्ष-
या ॥ ३५ ॥ उदीच्यां दक्षिणस्यां च । युक्तमेवाधिकाधिकाः ॥ स्वस्थाननगरावास—बाहुल्य-
तो यथाक्रमं ॥ ३६ ॥ पूर्वस्यां पश्चिमायां च । स्तोका ज्योतिष्कनाकिनः ॥ दक्षिणस्यामुदी-
च्यां च । स्युः क्रमेणाधिकाधिकाः ॥३७॥ प्राक्प्रतीच्योश्चंद्रसूर्य—द्वीपेषूद्यानदेशवत् ॥ क्रीडा-

स्पदेषु ज्योतिष्काः । स्वल्पाः प्रायेण सत्तया ॥ ३८ ॥ तेभ्योऽधिका दक्षिणस्यां । विमानानां बहुत्वतः ॥ तथा कृष्णपाक्षिकाणां । बाहुल्येनोपपाततः ॥ ३९ ॥ उदीच्यां मानससर-स्येते क्रीडापरायणाः ॥ आसते नित्यमेवं स्यु-र्दक्षिणापेक्षयाधिकाः ॥ १४० ॥ किंच——मानसाख्ये सरस्यस्मिन् । मत्स्याद्या येंबुचारिणः ॥ ते समीपस्थितज्योति-र्विमानादिनिरीक्षणात् ॥ ४१ ॥ उत्पन्नजातिस्मरणाः । किंचिदाचर्य च व्रतं ॥ विहितानशनाः कृत्वा । निदानं सुखलिप्सया ॥४२॥ मृत्वा ज्योतिर्विमानेषू-त्पद्यतेंतिकवर्त्तिषु ततः स्युर्दाक्षिणात्येभ्य । उत्तराहा इमेऽधिकाः ॥ ४३ ॥ स्युः सौधर्मप्रभृतिषु । ताविषेषु चतुर्ष्वपि ॥ पूर्वस्यां पश्चिमायां च । स्तोका एव सुधाभुजः ॥ ४४ ॥

ततश्चासंख्येयगुणा । उत्तरस्यां ततोऽधिकाः ॥ दक्षिणस्याममी प्रोक्ताः । श्रूयतां तत्र भावना ॥ ४५ ॥ तुल्या दिक्षु चतसृषु । विमानाः पंक्तिवर्त्तिनः ॥ असंख्ययोजनतताः । पुष्पावकीर्णकाः पुनः ॥ ४६ ॥ याम्योदीच्योरेव भूम्ना । स्युः पूर्वापरयोस्तु न ॥ उदक् ततोऽसंख्यगुणाः । प्राचीप्रतीच्यपेक्षया ॥ ४७ ॥ भूम्ना कृष्णपाक्षिकाणां । दक्षिणस्यां समुद्भवात्

॥ दक्षिणस्यां समधिका । उत्तरापेक्षया ततः ॥ ४८ ॥ तथाहुः प्रज्ञापनायां—❀ दिसाणुवाएणं सव्वत्थोवा देवा सोहम्मे कप्पे पुरच्छिमपच्चच्छिमेणं, उत्तरेणं असंखेज्जगुणा, दाहिणेणं विसेसाहिया; अत्र यद्यपि ' विविहा पुप्फवकिन्ना तयंतरे मुत्तु पुव्वदिसिं ' इति वचनात् प्राच्यां पुष्पावकीर्णकाभावात्प्रतीच्यां च तन्निषेधाभावात्प्राच्यपेक्षया प्रतीच्यां देवा अधिका वक्तव्याः स्युस्तथाप्यत्र सूत्रे पूर्वपश्चिमावल्योरुत्तयतः सर्वापि दक्षिणोत्तरतयैव दिग्विवक्षितेति संभाव्यत इति वृद्धाः । यथा दक्षिणोत्तरार्धलोकाधिपती सौधर्मेशानेन्द्रौ, इन्यत्र पूर्वपश्चिमे अपि दक्षिणोत्तरतयैव विवक्षिते, इति ॥ ❀ पूर्वोत्तरपश्चिमासु । ब्रह्मलोकेऽल्पकाः सुराः ॥ ततश्चासंख्येयगुणा । दक्षिणस्यां दिशि स्मृताः ॥ ४९ ॥ याम्यां हि बहवः प्राय–स्तिर्यंचः कृष्णपाक्षिकाः ॥ उत्पद्यंतेऽन्यासु शुक्ल–पाक्षिकास्ते किलाल्पकाः ॥ ५० ॥ एवं च लांतके शुक्रे । सहस्रारेऽपि नाकिनः ॥ भूयांसो दक्षिणस्यां स्यु–स्तिसृष्वन्यासु चाल्पकाः ॥ ५१ ॥ आनतादिषु कल्पेषु । ततश्चानुत्तरावधि ॥ प्रायश्चतुर्दिशमपि । समाना एव नाकिनः ॥ ५२ ॥ तथाहुः प्रज्ञापनायां—❀ ' तेण परं बहुसमोववण्णगा समणाउसो इति ' ॥ इति दिगपेक्षया-

ल्पबहुता ॥ जघन्यतोंतर्मुहूर्त्तं । कालोऽनंतोंतरं गुरुः ॥ ज्येष्टकायस्थितिरूपः । स च कालो वनस्पतेः ॥ ५३ ॥ इत्यंतरं ॥ इति यदिह मयोक्तं निर्जराणां स्वरूपं । तदुरुसमयवाचां वर्णिकामात्रमेव ॥ तदुपहितविशेषान् कोह्यशेषान् विवेक्तुं । प्रभुरिव नृपकोष्टागारजाग्रत्कणौघान् ॥ ५४ ॥ विश्वाश्चर्यदकीर्त्तिकीर्त्तिविजयश्रीवाचकेंद्रांतिष–द्राजश्रीतनयोऽतनिष्ट विनयः श्रीतेजपालात्मजः ॥ काव्यं यत्किल तत्र निश्चितजगत्तत्वप्रदीपोपमे । सर्गो निर्गलितार्थसार्थसुभगः सौख्येन पूर्णोऽष्टमः ॥ ५५ ॥

॥ इति श्रीलोकप्रकाशे देवाधिकाररूपोऽष्टमः सर्गः समाप्तः ॥

॥ नवमः सर्गः प्रारभ्यते ॥

अथ नारकाः–रत्नशर्करा वालुका–पंकधूमतमःप्रभाः ॥ महातमःप्रभैतज्जाः । सप्तधा नारका मताः ॥ १ ॥ पर्याप्तापरभेदेन । चतुर्दश भवंति ते ॥ स्थानोत्पातसमुद्घातै–र्लोकासंख्यांशवर्त्तिनः ॥ २ ॥ स्वस्थानतस्त्वधोलोक–स्यैकदेशे भवंत्यमी ॥ विशेषस्थानयोगस्तु । क्षेत्रलोके प्रवक्ष्यते ॥ ३ ॥ इतिभेदाः स्थानानि च ॥ पर्याप्तयः षडप्येषां । चतस्रो योनिल-

द्रकाः ॥ लक्षाणि कुलकोटीना–मुक्तानि पंचविंशतिः ॥ ४ ॥ इति द्वारत्रयं ॥ स्युः शीत-
योनयः केचित् केचित्तथोष्णयोनयः ॥ जिनैरुक्ता नैरयिकाः । संवृताचित्तयोनयः ॥५॥ इति योनि-
संवृतत्वादि ॥ दशवर्षसहस्राणि । जघन्यैषां भवस्थितिः ॥ उत्कृष्टा तु त्रयस्त्रिंश–त्सागरोप-
मसंमिता ॥ ६ ॥ इति भवस्थितिः ॥

कायस्थितिस्त्वेषां भवस्थितिरेव ॥ कायस्थितिस्त्रसत्वे स्या–ज्जघन्यांतर्मुहूर्त्तिकी ॥ द्वौ
सागरसहस्रौ च । कियद्वर्षाधिकौ गुरुः ॥ ७ ॥ देहास्त्रयस्तैजसं च । कार्मणं वैक्रियं तथा
॥ स्वाभाविककृतिमयो–र्हुंडं संस्थानमंगयोः ॥ ८ ॥ इति देहाः संस्थानं च ॥ शतानि पंच
धनुषां । ज्येष्ठा स्वाभाविकी तनुः ॥ लघ्व्यंगुलासंख्यभाग–मानारंभक्षणे मता ॥९॥ स्वस्व-
स्वाभाविकतनो–र्द्विगुणोत्तरवैक्रिया ॥ गुर्वी लघ्व्यंगुलसंख्य–भागमाना भवेदसौ ॥ १० ॥ इ-
त्यंगमानं ॥ स्युश्चत्वारः समुद्घाता । आद्या एषां गतिः पुनः ॥ पर्याप्तगर्भजनर–तिरश्चोः
संख्यजीविनोः ॥ ११ ॥ इतिगतिः ॥ नरपंचाक्षतिर्यंचः । पर्याप्ताः संख्यजीविनः ॥ नारकेषु
यांति संख्या । सामयिक्येषु देववत् ॥ १२ ॥ एषूत्पत्तिच्यवनयो–र्मुहूर्त्ता द्वादशांतरं ॥ उत्क-

षतो जघन्याच्च । प्रज्ञमं समयात्मकं ॥ १३ ॥ इत्यागतिः ॥ सामान्यतो नैरयिका । लज्नंतेऽ-
नंतरे ज्नवे ॥ सम्यक्त्वं देशविरतिं । चारित्र मुक्तिमप्यमी ॥ १४ ॥ विशेषतस्तु क्षेत्रलोके वक्ष्य-
ते ॥ इत्यनंतराप्तिः ॥

ज्रध्धृत्योघान्नारकेज्यो । लब्ध्वा नरज्नवादिकं ॥ यद्येकसमये यांति । शिवं तर्हि दश ध्रु-
वं ॥ १५ ॥ प्रत्येकमाद्यनरक–त्रयोध्धृता अमी पुनः ॥ सिद्धिं यांति दश दश । तुर्योध्धृतास्तु
पंच ते ॥ १६ ॥ इति समये सिद्धिः ॥ लेश्यास्तिस्रो ज्नवंत्याद्याः । षम्राहारदिशोऽपि च ॥
व–संहननसद्भावः । कषाया निखिला अपि ॥ १७ ॥ संज्ञाः सर्वाश्चेंद्रियाणि । सर्वाण्येषां च
संज्ञिता ॥ दीर्घकालिक्यादिमत्वा–द्व्यक्तसंज्ञतयापि च ॥ १८ ॥ एषां वेदः क्लीव एव । दृ-
ष्टिज्ञानं च दर्शनं ॥ ज्रपयोगा इति द्वार–चतुष्कं सुरवन्मतं ॥ १९ ॥ ज्रजोलोमाज्निधावेषा-
–माहारावशुज्नौ ज्नृशं ॥ गुणस्थानानि योगाश्च । ज्नवंत्यमृतज्नोजिवत् ॥ २० ॥ लोमाहारो
द्विधा ज्नोगा–दनाज्नोगाच्च तत्र च ॥ स्यादादिमोंतर्मुहूर्त्ताद् द्वितीयश्च प्रतिक्षणं ॥ २१ ॥ इति
लेश्यादीनि योगांतानि पंचदशद्वाराणि ॥ अंगुलप्रमितक्षेत्र–प्रदेशराशिवर्त्तिनि ॥ तृतीये वर्ग-

मूलघ्ने । प्रथमे वर्गमूलके ॥ २२ ॥ यावान् प्रदेशराशिः स्या–त्तावतीषु च पंक्तिषु ॥ एकप्रा-
देशिकीषु स्यु–र्यावंतः खप्रदेशकाः ॥ २३ ॥ तावंतो नारकाः प्रोक्ताः । सामान्येन जिनेश्वरैः
॥ विशेषतो मानमेषा–मथ किंचिद्वितन्यते ॥ २४ ॥ अंगुलप्रमितक्षेत्र–प्रदेशराशिसंगते ॥ तृ-
तीयवर्गमूलघ्ने । प्रथमे वर्गमूलके ॥ २५ ॥ यावान् प्रदेशनिकर–स्तत्प्रमाणासु पंक्तिषु ॥ ए-
कप्रादेशिकीषु स्यु–र्यावंतः खप्रदेशकाः ॥ २६ ॥ तावंतो मानतः प्रोक्ता । नारकाः प्रथम-
क्षितौ ॥ शेषासु षट्सु च क्ष्मासु । ख्याता नैरयिकांगिनः ॥ २७ ॥ घनीकृतस्य लोकस्य ।
श्रेण्यसंख्यांशवर्तिभिः ॥ नभःप्रदेशैः प्रमिता । विशेष एष तत्र च ॥ २८ ॥ आरभ्य सप्तम-
क्ष्माया । द्वितीयवसुधावधि ॥ असंख्येयगुणत्वेन । यथोत्तराधिकाधिकाः ॥ २९ ॥ इतिमानं ॥
सर्वाल्पाः सप्तमक्ष्माया–मसंख्येयगुणास्ततः ॥ भवंति नारकाः क्ष्मासु । षष्ठ्यादिषु यथा-
क्रमं ॥ ३० ॥ संज्ञिपंचेंद्रियतिर्यग्–मनुष्याः सप्तमक्षितौ ॥ सर्वोत्कृष्टपापकृत । उत्पद्यंतेऽ-
ल्पकाश्च ते ॥ ३१ ॥ किंचिद्धीनहीनतर–पाप्मानः प्रोद्भवंति च ॥ षष्ठ्यादिषु ते च भूरि–भू-
रयः स्युर्यथोत्तरं ॥ ३२ ॥ इतिलघ्व्यल्पबहुता ॥ सर्वासु नारकाः स्तोकाः । पूर्वोत्तरापरोद्भवाः

॥ असंख्येयगुणास्तेभ्यो । दक्षिणाशासमुद्भवाः ॥ ३३ ॥ पुष्पावकीर्णनरका—वासा ह्य-
ल्पा दिशां त्रये ॥ ये संति तेऽपि प्रायेण । संख्ययोजनविस्तृताः ॥ ३४ ॥ दक्षिणस्यां च पु-
ष्पाव—कीर्णका बहवः स्मृताः ॥ प्रायस्ते संत्यसंख्येय—योजनायतविस्तृताः ॥ ३५ । किंच—
भूम्ना कृष्णपाक्षिकाणां । दक्षिणस्यां यदुद्भवः ॥ दिक्त्रयापेक्षयैतस्यां । भूयांसो नार-
कास्ततः ॥ ३६ ॥ इति दिगपेक्षयाल्पबहुता ॥ वनस्पतिज्येष्ठकाय—स्थितिमानं किलांतरं ॥
एषां गरीयो विज्ञेयं । लघु चांतर्मुहूर्त्तकं ॥ ३७ ॥ इत्यंतरं ॥ नारकलोकनिरूपणमेवं । क्लृ-
प्तमशेषविशेषविमुक्तं ॥ शेषमधोजगदुक्त्यधिकारे । किंचिदिहैव विशिष्य च वक्ष्ये ॥ ३८ ॥
विश्वाश्चर्यदकीर्त्तिकीर्त्तिविजयश्रीवाचकेंद्रांतिष—द्राजश्रीतनयोऽतनिष्ट विनयः श्रीतेजपालात्म
जः ॥ काव्यं यत्किल तत्र निश्चितजगत्तत्त्वप्रदीपोपमे । संपूर्णोऽनवमः सुखेन नवमः सर्गो
निसर्गोज्ज्वलः ॥ ३९ ॥

॥ इति श्रीलोकप्रकाशे नवमः सर्गः समाप्तः ॥

॥ दशमः सर्गः प्रारभ्यते ॥

इदानीं भवसंवेधः । प्रागुद्दिष्टो निरूप्यते ॥ तत्र ज्येष्ठकनिष्ठायु–श्चतुर्भंगी प्रपंच्यते ॥१॥
आद्यः प्राच्यागूभवयो–र्ज्येष्ठमायुर्यदा भवेत् ॥ भंगोऽन्यः प्राग्भवे ज्येष्ठ–मल्पिष्ठं स्यात्परे
भवे ॥ २ ॥ तृतीयः प्राग्भवेऽल्पीयो । ज्येष्ठमायुर्भवे परे ॥ आयुर्लघु द्वयोस्तुर्यो । भंगेष्वे-
षु चतुर्ष्वथ ॥ ३ ॥ संज्ञी नरोऽथवा तिर्यक् । षष्ठ्याद्यनरकेषु वै ॥ पृथक्पृथक् भवानष्टा-
वुत्कर्षेण प्रपूरयेत् ॥ ४ ॥ यथा संज्ञी नरस्तिर्य–गुत्पन्नो नरके क्वचित् ॥ ततो मृतो मनु-
ष्ये वा । तिरश्चि वा ततः पुनः ॥ ५ ॥ तत्रैव नरके भूयो । मर्त्ये तिरश्चि वेति सः ॥ भवा-
नष्टौ समापूर्य । नवमे च भवे ततः ॥ ६ ॥ अवश्यमन्यपर्यायं । नरस्तिर्यगवाप्नुयात् ॥ व-
क्ष्यमाणेष्वपि बुधैः । कार्यैवं भावना स्वयं ॥ ७ ॥ तथैव भवनेशेषु । ज्योतिष्कव्यंतरेष्वपि
॥ तिर्यग्नरौ किलाष्टासु । सौधर्मप्रभृतिद्युषु ॥ ८ ॥ भवानष्टौ पूरयतो । भवौ द्वौ च जघ-
न्यतः ॥ इमौ पूरयतः प्रोक्त–नारकेषु सुरेषु च ॥ ९ ॥ जघन्यायुष्टया माघ–वत्यामुत्पद्य-
मानकः ॥ तिर्यग् ज्येष्ठायुरन्योवा । भवान् सप्तैव पूरयेत् ॥ १० ॥ तथाहि—

संज्ञी पंचेंद्रियस्तिर्यक् । पूर्वकोट्यायुरन्वितः ॥ जघन्यायुष्टयोत्पन्नः । सप्तम्यां नरकावनौ ॥ ११ ॥ ततश्चोध्धृत्य तिर्यक्षु । सप्तम्यां च ततः पुनः ॥ तिर्यक्षु च ततः क्ष्मायां । सप्तम्यां च ततः पुनः । १२ ॥ तिर्यक्ष्वेव ततश्चासौ । नोद्भवेत्सप्तमक्षितौ ॥ एवं सप्त भवान् कृत्वा–ष्टमेऽन्यं भवमाप्नुयात् ॥ १३ ॥ तिर्यग् ज्येष्टायुर्जघन्या–युष्कोऽथोत्कृष्टजीवितां ॥ अवाप्नुवन्माघवत्यां । भवान्पंचैव पूरयेत् ॥ १४ ॥ उत्पद्यते द्विर्नरके । तत्र तिर्यक्षु च त्रिशः ॥ ततश्चासौ षष्ठभवे । नोद्भवेत्सप्तमक्षितौ ॥ १५ ॥ उत्कृष्टायुष्टयाल्पायु–ष्टया वा सप्तमक्षितौ ॥ तिर्यक् ज्येष्टायुरन्यो वा । त्रिभवः स्याज्जघन्यतः ॥ १६ ॥ तत्र तिर्यग्भवौ तु द्वा–वेकः स्यात्सप्तमक्षितौ ॥ माघवत्या नारकाणां । तिर्यक्ष्वेव गतिर्यतः ॥ १७ ॥ चतुर्भंग्या नरः संज्ञी । सप्तमं नरकं व्रजन् ॥ जघन्यादुत्कर्षतोऽपि । संपूरयेद्भवद्वयं ॥ १८ ॥ आनतादिचतुःकल्प्यां । सर्वग्रैवेयकेषु च ॥ चतुर्भंग्योद्भवन् मर्त्यः । सप्तोत्कर्षाद्भवान् सृजेत् ॥ १९ ॥ त्रिर्देवेषु चतुस्तत्र । समुत्पद्य नरेष्वसौ ॥ अवश्यमन्यपर्याय–मवाप्नोत्यष्टमे भवे ॥ २० ॥ विजयादिचतुष्के च । भवान् पंचैव पूरयेत् ॥ त्रीन् भवान्नृषु मध्यौ च । द्वौ भवौ विजयादिषु ॥२१॥

जघन्यतस्त्वानतादि–ष्वेतेषु निखिलेष्वपि ॥ भवांस्त्रीन्मनुजः संज्ञी । समर्थयेत्समुद्भवन् ॥
॥ २२ ॥ यदानतादिदेवानां । नृभ्य एवाप्तजन्मनां ॥ नरेष्वेवोत्पत्तिरिति । जघन्येन भवास्त्र-
यः ॥ २३ ॥ जघन्याच्चोत्कर्षतोऽपि । पंचमेऽनुत्तरे नरः ॥ त्रीन् भवान्पूरयेन्मोक्ष–मवश्यं या-
त्यसौ ततः ॥ २४ ॥ भवनव्यंतरज्योति–ष्काद्यकल्पद्वयावधि ॥ युग्मिनो नरतिर्यंचः । पूरयं-
ति भवद्वयं ॥ २५ ॥ जघन्याच्चोत्कर्षतोऽपि । युग्मिनां यत्सुधाशिषु ॥ उत्पन्नानां पुनरपि ।
स्यादुत्पत्तिर्न युग्मिषु ॥ २६ ॥ रत्नप्रभायां भवना–धिपतिव्यंतरेष्वपि ॥ असंज्ञी पर्याप्ततिर्य-
ग् । भवयुग्म समर्थयेत् ॥ २७ ॥ यदस्य नरके स्वर्गे । चोत्पन्नस्य ततः पुनः ॥ असंज्ञितिर्य-
गुत्पत्ति–र्भवे नानंतरे भवेत् ॥ २८ ॥ भवनव्यंतरज्योतिः–सहस्रारांतनाकिनः ॥ आद्यषड्न-
रकोत्पन्न–नारकाश्च समेऽप्यमी ॥ २९ ॥ उत्पद्यमानाः पर्याप्त–संज्ञितिर्यग्नरेषु वै ॥ पूरयंति
भवानष्ट । प्रत्येकं तत्र भावना ॥ ३० ॥ कश्चिद्भवनपत्यादि–श्च्युत्वैकांतरमुद्भवन् ॥ चतुर्वारं
हि पर्याप्त–संज्ञी तिर्यग्नरो भवेत् ॥ ३१ ॥ ततः स तिर्यग्मर्त्यो वा । नाप्नुयान्नवमे भवे ॥
पूर्वोक्तभवनेशादि–भावं तादृक् स्वभावतः ॥ ३२ ॥ संज्ञिपर्याप्ततिर्यक्षु । सप्तमक्षितिनार-

काः ॥ पूरयंति भवान् षड् ये-ऽनुत्कृष्टस्थितिशालिनः ॥ ३३ ॥ उत्कृष्टस्थितियुक्तास्तु । सप्तमक्षितिनारकाः ॥ तेपूत्कर्षाज्जायमानाः । स्युश्चतुर्भवपूरकाः ॥ ३४ ॥ आनतादिस्वश्चतुष्क-सनैग्रैवेयकामराः ॥ उत्पद्यमाना उत्कर्षा-न्नृषु पञ्चभवपूरकाः ॥ ३५ ॥

मनुष्येपूत्पद्यमाना । विजयादिविमानगाः ॥ भवांश्चतुर उत्कर्षात् । पूरयंति निरंतरं ॥ ॥ ३५ ॥ जघन्यतस्त्वानतादि-देवा द्विभवपूरकाः ॥ यतश्च्युतानामेतेषां । नोत्पत्तिर्मनुजान्विना ॥ ३६ ॥ उत्कर्षतो जघन्याच्च । सुराः सर्वार्थसिद्धिजाः ॥ मनुष्येषु समुत्पद्य । पूरयंति भवद्वयं ॥ ३७ ॥ भवनव्यंतरज्योतिः-सौधर्मेशाननाकिनः ॥ पृथ्व्यप्तरुषूत्पद्य-माना द्विभवपूरकाः ॥ ३८ ॥ जघन्यादुत्कर्षतोऽपि । भूयोऽप्युत्पत्त्यसंभवात् ॥ तेषां निर्गत्य पृथ्व्यादि-भवनेशादिनाकिषु ॥ ३९ ॥ वायुतेजःकाययोस्तु । देवानां गत्यसंभवात् ॥ तदीयो भवसंवेधो । नात्र प्रोक्तो जिनेश्वरैः ॥ ४० ॥ असंज्ञिसंज्ञितिर्यंचो । नराः संज्ञिन एव च ॥ असंख्यायुर्नृतिर्यक्षु । पूरयंति भवद्वयं ॥ ४१ ॥ युग्मिनां नृतिरश्चां य-द्विपश्चानंतरे भवे ॥ गतिर्देवगतावेव । भगवद्भिर्निरूपिता ॥ ४२ ॥

भूकायिकोंभोऽग्निवायु–ष्वेकांतरे परिभ्रमन् ॥ भवानसंख्यान् प्रत्येक–मनुत्कृष्टस्थितिः
सृजेत् ॥ ४३ ॥ एवमंबुकायिकोऽपि । प्रत्येकं क्ष्माग्निवायुषु ॥ उत्पद्यमानोऽसंख्येयान् । भ-
वानुत्कर्षतः सृजेत् ॥ ४४ ॥ वह्निकायोऽपि पृथ्व्यंबु–कायिष्वेकांतरं भवान् ॥ कुर्यादसंख्या-
ननिलोऽ–प्येवं पृथ्व्यंबुवह्निषु ॥ ४५ ॥ तथा क्ष्मांभोऽग्निमरुतः । प्रत्येकं च वनस्पतौ ॥ भवा-
नसंख्यान् कुर्वंति । जायमाना निरंतरं ॥ ४६ ॥ एवं वनस्पतिरपि । पृथिव्यादिचतुष्टये ॥ प्र-
त्येकमुत्पद्यमानः । कुर्यादसंख्यकान् भवान् ॥ ४७ ॥ वनस्पतिकायिकेषू–त्पद्यमानो वन-
स्पतिः ॥ भवाननंतान् कुर्वीत । निरंतरं परिभ्रमन् ॥ ४८ ॥ प्रत्येकमुत्पद्यमानाः । पृथिव्या-
दिषु पंचसु ॥ भवान् संख्यान् विदधति । प्रत्येकं विकलेंद्रियाः ॥ ४९ ॥ प्रत्येकं विकलेष्वेवं
। पंच भूकायिकादयः ॥ प्रत्येकमुत्पद्यमानाः । संख्येयभवपूरकाः ॥ ५० ॥ विकलाक्षेषु सं-
ख्येयान् । सर्वेऽपि विकलेंद्रियाः ॥ भवान् विदध्युः प्रत्येकं । जायमानाः परस्परं ॥ ५१ ॥
पूर्वोक्तायुश्चतुर्भंग्यां । ज्येष्ठायुरुपलक्षिते ॥ भंगत्रये भवानष्टौ । कुर्युः सर्वे क्ष्मादयः ॥५२॥
तथाहि—पृथ्वीकायिक उत्कृष्टा–युष्क उत्कृष्टजीविषु ॥ अप्कायिकेषूत्कर्षेणो–भवद्वारचतुष्ट-

यं ॥ ५३ ॥ एवमेकांतरं वारा–नुत्पद्य चतुरस्ततः ॥ अवश्यमन्यपर्यायं । लभते नवमे भवे
॥ ५४ ॥ उत्कृष्टायुर्भूमिकायो–ऽनुत्कृष्टायुष्कवारिषु ॥ उत्पद्यमानोऽप्युत्कर्षा–द्भवानष्टैव पूर-
येत् ॥ ५५ ॥ एवं भूकायिकोऽनुत्कृ–ष्टायुरुत्कृष्टजीविषु ॥ उभवन्नंबुभूत्कर्षात् । स्यादष्टभवपू-
रकः ॥ ५६ ॥ अप्कायादीनामपीदं । विकलानां च भाव्यतां ॥ भवाष्टकात्मा संवेधो । ज्ये-
ष्टायुर्भंगकत्रये ॥ ५७ ॥ अनुत्कृष्टायुषां त्वेषां । स्यादनुत्कृष्टजीविषु ॥ संवेधः प्रागुक्त एवा-
संख्यसंख्यभवात्मकः ॥ ५८ ॥ पृथ्व्यादीनामसंख्यभवात्मको विकलानां संख्यभवात्मक इ-
ति ॥ क्ष्मादयो विकलाकाश्च । जघन्यतो भवद्वयं ॥ कुर्युर्ज्येष्टकनिष्ठायू–रूपे भंगचतुष्टये ॥
॥ ५९ ॥ युग्मिवर्जाश्च मनुजा–स्तिर्यंचः संज्ञ्यसंज्ञिनः ॥ प्रत्येकं जायमानाः । स्युर्मिथोऽष्ट-
भवपूरकाः ॥ ६० ॥ जघन्योत्कृष्टायुरुद्व–चतुर्भंग्यामपि स्फुटं ॥ भवान् कृत्वाष्ट नवमे । त-
ऽन्यं पर्यायमाप्नुयुः ॥ ६१ ॥ तथैत एव पृथ्व्यादि–पंचके विकलत्रये ॥ जायमानाश्चतुर्भंग्यां
। कुर्युः प्रत्येकमष्ट तान् ॥ ६२ ॥ तथा क्ष्माद्याः सविकला–स्तिर्यक्षु संज्ञ्यसंज्ञिषु ॥ नृष्वयु-
ग्मिषु चोत्पद्य–माना भंगचतुष्टये ॥ ६३ ॥ पूरयंति भवानष्टौ । स च पृथ्व्यादिकोऽसुमान् ॥

नरतिर्यग्भवात्तस्मा–न्न पृथ्व्यादित्वमाप्नुयात् ॥६४॥ जघन्यादुत्कर्षतोऽपि। मनुष्याः पवनाग्निषु ॥ उत्पद्यमाना ह्यावेव। पूरयंति भवौ खलु ॥ ६५ ॥ यतो हि पवनाग्निभ्य। उद्भूतानां शरीरिणां ॥ अनंतरभवे नैव। नरेषूत्पत्तिसंभवः ॥ ६६ ॥ यथोक्तानामथ भव–संवेधानां यथागमं ॥ कालमान विनिश्चेतु–माम्नायोऽयं वितन्यते ॥ ६७ ॥

जघन्यादांतर्मुहूर्ता–मुत्कर्षात्पूर्वकोटिकां ॥ स्थितिं बिभ्रदातिर्यङ् । नरकेष्वखिलेष्वपि ॥ ६८ ॥ तावदायुर्युतेष्वेति। तेभ्यो मृत्वापि नारकः ॥ सहस्रारांतदेवेष्व–प्यसौ तादृक्स्थितिर्व्रजेत् ॥ ६९ ॥ देवास्तेऽपीदृशायुष्के–ष्वेष्वायांति ततश्च्युताः ॥ असंख्यजीवी तिर्यक्तु। यातीशानांतनाकिषु ॥ ७० ॥ नरो मासपृथक्त्वायु–र्घर्मां याति जघन्यतः ॥ वंशादिषु क्ष्मासु षट्सु। वर्षपृथक्त्वजीवितः ॥ ७१ ॥ उत्कर्षात्पूर्वकोट्यायु–र्यात्यसौ क्ष्मासु सप्तसु ॥ आयांत्युक्तस्थितिष्वेव। नृषूक्तनारका अपि ॥ ७२ ॥ ना जघन्यान्मासपृथ–क्त्वायुरास्वर्गद्वयं व्रजेत् ॥ ऊर्ध्वं त्ववब्दपृथक्त्वायु–र्याति यावदनुत्तरान् ॥ ७३ ॥ उत्कर्षात्तु त्रिपल्यायुः। स्वर्द्वयं यावदेति ना ॥ ऊर्ध्वं ततः पूर्वकोट्या–युष्क एव स गच्छति ॥ ७४ ॥ तिर्यक् युग्मिनृति-

र्येषु । त्वंतर्मुहूर्तजीवितः ॥ गर्भजन्यतो मान—पृथक्त्वायुर्नरः पुनः ॥ ७५ ॥ उत्कर्षतः पूर्वकोटि—मानायुष्कावुभावपि ॥ असंख्यायुर्नृतिर्यञ्च—स्पद्येते नाधिकायुषौ ॥ ७६ ॥ उत्कृष्टाणां तु पूर्वा—परयोर्भवयोः स्थितिः ॥ गुरुर्लघुश्च ज्ञेया त—ज्ज्येष्ठान्यायुरपेक्षया ॥ ७७ ॥ एवं च—विवक्षितभवप्राप्य—भवयोः परमां स्थितिं ॥ लघ्वीं वा भवसंख्यां च । जघन्यां वा गरीयसीं ॥ ७८ ॥ स्वयं विभाव्य निष्टंकयं । विवक्षितशरीरिणां ॥ भवसंवेधकालस्य । मानं ज्येष्ठमथावरं ॥ ७९ ॥

यथा गरिष्ठायुष्कस्य । मनुष्यस्यादिगक्षितौ ॥ उत्कृष्टायुर्नारकत्वं । लभमानस्य चासकृत् ॥ ८० ॥ उत्कृष्टो भवसंवेध—कालः संकलितो भवेत् ॥ चतुःपूर्वकोटियुक्त—चतुःसागरसंमितः ॥ ८१ ॥ द्वयोरुत्कृष्टायुषोस्तु । संवेधः स्याज्जघन्यतः ॥ पूर्वकोटिसमधिक—सागरोपमसंमितः ॥ ८२ ॥ उत्कृष्टायुर्नरलघु—स्थितिनारकयोर्गुरुः ॥ सोऽब्दायुतचतुष्काढ्यं । पूर्वकोटिचतुष्टयं ॥ ८३ ॥ उत्कृष्टायुर्नरलघु—स्थितिनारकयोर्लघुः ॥ संवेधोऽब्दायुतयुत—पूर्वकोटिमितो मतः ॥ ८४ ॥ जघन्यायुर्नरोत्कृष्ट—स्थितिनारकयोर्गुरुः ॥ चतुर्मासपृथक्त्वाढ्यं । स स्या-

एकमासपृथक्त्वाद्य—ग्राधि-
द्वार्धिचतुष्टयं ॥ ७५ ॥ जघन्यायुर्नरोत्कृष्ट—जीविनारकयोर्लघुः ॥ चतुर्मासपृथक्त्वाढ्यं ।
मानो भवत्यसौ ॥ ७६ ॥ उत्कृष्टो भवसंवेधो । जघन्यजीविनोर्द्वयोः ॥ एकमासपृथक्त्वाढ्या ।
वर्षायुतचतुष्टयं ॥ ७७ ॥ जघन्यो भवसंवेधो । जघन्यजीविनोर्द्वयोः ॥ जघन्यायु-
दशवर्षसहस्रकाः ॥ ७८ ॥ यथा वा—ज्येष्ठायुषस्तिरश्चः प्रो—भवतः सप्तमक्षितौ ॥ अ-
दृष्टोत्कृष्टा । भवसंवेधसस्थितिः ॥ ७९ ॥ चतुःपूर्वकोटियुक्ताः । स्युः षट्षष्टिः पयोधयः ॥
ल्पायुर्योतर्मुहूर्त—चतुष्टययुजोऽत्यते ॥ ८० ॥ यथा वा—ज्येष्ठायुषां नृणां ज्येष्ठा—युष्टया स-
प्तमक्षितौ ॥ ज्येष्ठः कालः पूर्वकोट्या—द्यास्त्रयस्त्रिंशदब्धयः ॥ ८१ ॥ जघन्यायुर्नृणामल्पा—यु
ष्टया सप्तमक्षितौ ॥ जघन्योऽब्दपृथक्त्वाद्या । द्वाविंशतिपयोधयः ॥ ८२ ॥ एवं सर्वेषु भं-
गेषु । सर्वेषामपि देहिनां ॥ विज्ञाव्यो भवसंवेध—कालो गुरुर्लघुः स्वयं ॥ ८३ ॥ स्याद्भूया
न् विस्तर इति । नेह व्यक्तया विविच्यते ॥ पंचमांगे चतुर्विंश—शतं भाव्यं तदर्थिभिः ॥८४॥
अथाष्टानवतेर्जीव—भेदानामुच्यते क्रमात् ॥ क्रमप्राप्ताल्पबहुता । महाल्पबहुतात्रिधा
॥ ८५ ॥ गर्भजा मनुजाः स्तोका । नार्यः संख्यगुणास्ततः ॥ तान्यश्च स्थूलपर्याप्ता—ग्रयो-

ऽनुत्तरनाकिनः ॥ ९६ ॥ क्रमादसंख्यघ्नास्तेभ्य—श्चोर्ध्वग्रैवेयकत्रये ॥ मध्यत्रयेऽवस्त्रये चा—च्यु
ते चैवारणेऽपिच ॥ ९७ ॥ प्राणतेऽप्यानते स्वर्गे । समुत्पन्नाः सुधाशिनः ॥ क्रमेण संख्येयगु-
णाः । सप्ताप्येते निरूपिताः ॥ ९८ ॥ ततो माघवतीजाता । मघाजाताश्च नारकाः ॥ सह-
स्रारसुरास्तेभ्यो । महाशुक्रसुरास्ततः ॥ ९९ ॥ तेभ्योऽरिष्टा नैरयिका—स्तेभ्यो लांतकना-
किनः ॥ तेभ्योंजनानारकाश्च । ब्रह्मलोकसुरास्ततः ॥ १०० ॥ तेभ्यः शैलानैरयिका । माहें-
द्रत्रिदशास्ततः ॥ तेभ्यः सनत्कुमारस्था । वंशानैरयिकास्ततः ॥ १ ॥ तेभ्यः संमूर्छिमनरा
—स्तेभ्यश्चेशाननाकिनः ॥ क्रमादसंख्येयगुणा—श्चतुर्दशाप्यमी स्मृताः ॥ २ ॥ ईशानस्थसुरे-
भ्यस्त—द्देव्यः संख्यगुणास्ततः ॥ सौधर्मदेवास्तद्देव्य—स्तेभ्यः संख्यगुणाः स्मृताः ॥ ३ ॥ अ-
संख्येयगुणास्तेभ्यो—भवनाधिपनाकिनः ॥ भवनाधिपदेव्यश्च—तेभ्यः संख्यगुणाधिकाः ॥ ४ ॥
ताभ्योऽसंख्यगुणाः प्रोक्ताः । प्रथमक्षितिनारकाः ॥ तेभ्योऽप्यसंख्येयगुणाः । पुमांसः पक्षि-
णः स्मृताः ॥ ५ ॥ पक्षिण्योऽथ स्थलचरा—स्तत्स्त्रियोंबुचरा अपि ॥ अंबुचर्यो व्यंतराश्च ।
व्यंतर्यो ज्योतिषामराः ॥ ६ ॥ ज्योतिष्कदेव्यः खचर—क्लीवाः स्थलपयश्चराः ॥ नपुंसका एव

ततः । पर्याप्ताश्चतुरिंद्रियाः ॥ ७ ॥ क्रमेण संख्येयगुणाः । पक्षिण्याद्यास्त्रयोदश ॥ ततः पर्याप्तपंचाक्षा । अधिकाः संज्ञ्यसंज्ञिनः ॥ ८ ॥ तेभ्यः पर्याप्तका द्व्यक्षाः । पर्याप्तास्त्रींद्रियास्ततः क्रमाद्विशेषाभ्यधिकाः । प्रज्ञप्ताः परमेश्वरैः ॥ ९ ॥ तेभ्योऽपर्याप्तपंचाक्षा । असंख्येयगुणास्ततः ॥ अपर्याप्ताश्चतुस्त्रिद्वीं—द्रियाः स्युरधिकाधिकाः ॥ १० ॥ तेभ्यः प्रत्येकपर्याप्ता । द्रुमाः पर्याप्तकास्ततः ॥ निगोदा बादराः स्थूल—पृथ्व्यंबुमरुतोऽपि च ॥ ११ ॥ स्थूलापर्याप्तका अग्नि—प्रत्येकद्रुनिगोदकाः ॥ पृथ्वीवह्निवायवश्च । सूक्ष्माऽपर्याप्तवह्नयः ॥ १२ ॥ पर्याप्तप्रत्येकद्रुमा—दयो द्वादशाप्यसंख्यगुणाः ॥ क्रमतस्ततश्च सूक्ष्माः । पर्याप्ताः क्ष्मांबुवायवोऽभ्यधिकाः ॥ १३ ॥ ततश्च संख्येयगुणाः । पर्याप्तसूक्ष्मवह्नयः ॥ ततः पर्याप्तसूक्ष्मक्ष्मां—भोऽनिला अधिकाधिकाः ॥ १४ ॥ असंख्यघ्नास्ततोऽपर्या—प्तकसूक्ष्मनिगोदकाः ॥ ततः संख्यगुणाः पर्या—प्तकाः सूक्ष्मनिगोदकाः ॥ १५ ॥

क्रमात्ततोऽनंतगुणा—श्चत्वारोऽमी अजघन्यकाः ॥ भ्रष्टसम्यक्त्वाश्च सिद्धाः । स्थूलपर्याप्तभूरुहः ॥ १६ ॥ तेभ्यश्च बादराः पर्या—प्तकाः स्युरोघतोऽधिकाः ॥ स्थूलापर्याप्ततरव—स्ततोऽसं-

ख्यगुणाः स्मृताः ॥ १७ ॥ अपर्याप्ता बादराः स्यु–स्तेभ्यो विशेषतोऽधिकाः ॥ सामान्यतो
बादराश्च । विशेषाभ्यधिकास्ततः ॥ १८ ॥ असंख्येयगुणास्तेभ्यः । सूक्ष्माऽपर्याप्तभूरुहः ॥
ततः सामान्यतः सूक्ष्मा–ऽपर्याप्तकाः किलाधिकाः ॥ १९ ॥ स्युःसंख्येयगुणास्तेभ्यः । सू-
क्ष्मपर्याप्तभूरुहः ॥ इतोऽधिकाधिका ज्ञेया । वक्ष्यमाणाश्चतुर्दश ॥ २० ॥ सूक्ष्माः पर्याप्त-
का ओघात् । सूक्ष्माः सामान्यतोऽपि च ॥ भव्या निगोदिनश्चौघा–दोघाच्च वनकायिकाः ॥
॥ २१ ॥ ओघादेकेंद्रिया ओघा–त्तिर्यंचश्च ततः पुनः ॥ मिथ्यादृशश्चाविरताः । सकषायास्ततो-
ऽपि च ॥ २२ ॥ छद्मस्थाश्च सयोगाश्च । संसारिणस्तथौघतः ॥ सर्वजीवाश्चेति सार्वै–र्महाल्प-
बहुतोदिता ॥ २३ ॥ एवं जीवास्तिकायो यो । धीरैः प्रोक्तः पुरोदितैः ॥ द्रव्यक्षेत्रकालभाव
–गुणैः स पंचधा भवेत् ॥२४॥ अनंतजीवद्रव्यात्मा । द्रव्यतोऽसावुदीरितः ॥ क्षेत्रतो लोकमा-
त्रोऽसौ । सत्त्वात्तेषां जगत्त्रये ॥ २५ ॥ कालतः शाश्वतो वर्णा–दिभिः शून्यश्च भावतः ॥ उ-
पयोगगुणश्चासौ । गुणतः परिकीर्त्तितः ॥ २६ ॥ निरंतरं बध्यमानैः । स च कर्मकदंबकैः ॥
विसंस्थुलो भवांभोधौ । बहुधा वेष्टतेगभाक् ॥ २७ ॥

पुद्गलैर्निचिते लोकें—जनपूर्णमुद्गवत् ॥ मिथ्यात्वप्रमुखैर्भूरि—हेतुभिः कर्मपुद्गलान् ॥
॥ २८ ॥ करोति जीवः संबद्धान् । स्वेन क्षीरेण नीरवत् ॥ लोहेन वह्निवद्धा यत् । तत्कर्मे-
त्युच्यते जिनैः ॥ २९ ॥ तच्च कर्म पौद्गलिकं । शुभाशुभरसांचितं ॥ नत्वन्यतीर्थिकाभीष्टा
—दृष्टादिवदमूर्त्तकं ॥ ३० ॥ व्योमादिवदमूर्त्तत्वे—त्वस्य विश्वांगिसाक्षिकौ ॥ नैतत्कृतानुग्रहोप
—घातौ संभवतः खलु ॥ ३१ ॥ हेतवः कर्मबंधे च । चत्वारो मूलभेदतः ॥ सप्तपंचाशदेते
च । स्युस्तदुत्तरभेदतः ॥ ३२ ॥ मिथ्यात्वाविरतिकषा—ययोगसंज्ञाश्च मूलभेदाः स्युः ॥ तत्र
च पचविध स्या—न्मिथ्यात्वं तच्च कथितं प्राक् ॥ ३३ ॥ असंयतात्मनां स्याद्वा—दशधाऽवि-
रतिः खलु ॥ षट्कायारंभपचाक्ष—चित्तासवरलक्षणा ॥ ३४ ॥ कषाया नोकषायाश्च । प्राक्
षोडश नवोदिताः ॥ योगास्तथा पंचदश । सप्तपंचाशदित्यमी ॥ ३५ ॥ कर्मबंधः प्रकृत्या-
त्मा । स्थितिरूपो रसात्मकः ॥ प्रदेशबंध इत्येव । चतुर्भेदः प्रकीर्त्तितः ॥ ३६ ॥ प्रकृतिस्तु
स्वभावः स्याद् । ज्ञानावृत्यादिकर्मणां ॥ यथाज्ञानाच्छादनादिः । स्थितिः कालविनिश्चयः ॥
॥ ३७ ॥ बद्ध विवक्षितं कर्म । कर्मत्वेन हि तिष्ठति ॥ यावत्कालं स्थितिः सा स्यात् । त्य-

जेत्तत्तां ततः परं ॥ ३८ ॥ रसो मधुरकटूवादिः । सदसत्कर्मणां मतः ॥ ज्नवेत्प्रदेशबंधस्तु । दलिकोपचयात्मकः ॥ ३ए ॥ यथाहि मोदकः कश्चित् । प्रकृत्या वातहृद्भवेत् ॥ शुंठ्यादिजन्मा कश्चित्तु । पित्तनुज्जीरकादिजः ॥ ४० ॥ कश्चित्पक्षस्थितिः कश्चि—न्मासप्रभृतिकास्थितिः ॥ स्यात्कश्चिन्मधुरः कश्चि—त्तिक्तः कश्चित्कटुस्तथा ॥ ४१ ॥ कश्चित्सेरदलः कश्चिद् । ध्यादिसेरदलात्मकः ॥ कार्यैवं ज्नावना विज्ञैः । प्रकृत्यादिषु कर्मणां ॥ ४२ ॥ मूलप्रकृतिज्नेदेन । तच्च कर्माष्टधा मतं ॥ स्याद् ज्ञानावरणीयाख्यं । दर्शनावरणीयकं ॥ ४३ ॥ वेदनीयं मोहनीय—मायुर्गोत्रं च नाम च ॥ अंतरायं चैत्यष्टैषा—मुत्तरप्रकृतीर्ब्रुवे ॥ ४४ ॥

ज्ञानानि पंचोक्तानि प्राक् । यच्च तेषां स्वज्नावतः ॥ आच्छादकं पट इव । दशां तत्पंचधा मतं ॥ ४५ ॥ मतिश्रुतावधिज्ञाना—वरणानि पृथक् पृथक् ॥ मनःपर्यायावरणं । केवलावरणं तथा ॥ ४६ ॥ आवृतिश्चक्षुरादीनां । दर्शनानां चतुर्विधा ॥ निद्राः पंचेति नवधा । दर्शनावरणं मतं ॥ ४७ ॥ सुखप्रबोधा निद्रा स्यात् । सा च दुःखप्रबोधका ॥ निद्रानिद्रा प्रचला च । स्थितस्योर्ध्वस्थितस्य वा ॥ ४८ ॥ गच्छतोऽपि जनस्य स्या—त्प्रचलाप्रचलाज्निधा ॥ स्त्या-

नार्द्धवासुदेवार्ध—बलाहश्चिंतितार्थकृत् ॥ ४९ ॥ ❀ स्त्याना संघातीभूता गृद्धिर्दिनचिंतितार्थ-
विषयातिकांक्षा यस्यां सा स्त्यानगृद्धिरिति तु कर्मग्रंथावचूर्णौ ❀ आद्यसंहननापेक्ष—मिदम-
स्या बलं मतं ॥ अन्यथा तु वर्त्तमान—युवभ्योऽष्टगुणं भवेत् ॥ ५० ॥ अयं कर्मग्रंथवृत्त्याद्यभि-
प्रायः, जीतकल्पवृत्तौ तु यदुदयेऽतिसंक्लिष्टपरिणामाद्दिनदृष्टमर्थमुत्थाय प्रसाधयति, केशवार्ध-
बलश्च जायते; तदनुदयेऽपि च स शेषपुरुषेभ्यस्त्रिचतुर्गुणो भवति; इयं च प्रथमसंहनिन ए-
व भवतीतिज्ञेयं ❀ दर्शनानां हंति लब्धिं । मूलादाद्यं चतुष्टयं । लब्धां दर्शनलब्धिं प्राग् ।
निद्रा निघ्नति पंच च ॥ ५१ ॥ वेदनीय द्विधा साता—ऽसातरूपं प्रकीर्त्तितं ॥ स्यादिदं मधु-
दिग्धासि—धारालेहनसंनिभं ॥५२॥ यद्वेद्यते प्रियतया । स्रगादियोगाद्भवेत्तदिह सातं ॥ यत्कं-
टकादितोऽप्रिय—रूपतया वेद्यते त्वसातं तत् ॥ ५३ ॥ यन्मद्यवन्मोहयति । जीवं तन्मोह-
नीयकं ॥ द्विधा दर्शनचारित्र—मोहभेदात्तदीरितं ॥ ५४ ॥ मिथ्यात्वमिश्रसम्यक्त्व—भेदात्त-
त्रादिमं त्रिधा ॥ चारित्रमोहनीयं तु । पंचविंशतिधा भवेत् ॥ ५५ ॥ कषायाः षोमश नव ।
नोकषायाः पुरोदिताः ॥ इत्यष्टाविंशतिविधं । मोहनीयमुदीरितं ॥ ५६ ॥ एति गत्यंतरं जी-

वो । येनायुस्तच्चतुर्विधं ॥ देवायुश्च नरायुश्च । तिर्यङ्नैरयिकायुषी ॥ ५७ ॥ इदं निगडतुल्यं
स्या–दसमाप्येदमंगभाक् ॥ जीवः परभवं गंतुं । न शक्नोति कदापि यत् ॥ ५८ ॥
गूयते शब्द्यते शब्दै–र्यस्माडुच्चावचैर्जनैः ॥ तद्गोत्रकर्म स्यादेतद् । द्विधोच्चनीचभेदतः
॥ ५९ ॥ इदं कुलालतुल्यं स्यात् । कुलालो हि तथा सृजेत् ॥ किंचित्कुंभादिभांडं तत् । यथा लोकैः प्रशस्यते ॥ ६० ॥ किंचिच्च कुत्सिताकारं । तथा कुर्यादसौ यथा ॥ अक्षिप्तमद्या-द्यपि तत् । भांडं लोकेन निंद्यते ॥ ६१ ॥ कर्मणापि तथानेन । धनरूपोज्झितोऽपि हि ॥ उ-च्चैर्गोत्रतया कश्चित् । प्रशस्यः क्रियतेऽसुमान् ॥ ६२ ॥ कश्चिच्च नीचैर्गोत्रत्वात् । धनरूपादि-मानपि ॥ क्रियते कर्मणानेन । निंद्यो नंदनृपादिवत् ॥ ६३ ॥ गतिजात्यादिपर्याया–नुभवं प्र-तिदेहिनः ॥ नमयति प्रह्वयति । यत्तन्नामेति कीर्त्तितं ॥ ६४ ॥ चित्रकृत्सदृशं चैतत् । विचि-त्राणि सृजेद्यथा ॥ चित्राण्येप मिथोऽतुल्या–न्येवं नामापि देहिनः ॥ ६५ ॥ द्विचत्वारिंश-द्विधं तत् । स्थूलभेदविवक्षया ॥ स्याद्वा त्रिनवतिविधं । त्रियुक्शतविधं तु वा ॥६६॥ सप्त-षष्टिविधं वा स्या–द्यथाक्रममथोच्यते ॥ विकल्पानां चतुर्णाम–प्येषां विस्तृतिरागमात् ॥६७॥

गतिर्जातिर्वपुश्चैवो–पांगं बंधनमेव च ॥ संघातनं संहननं । संस्थानं वर्ण एव च ॥ ६८ ॥ गंधो रसश्च स्पर्शश्चा–नुपूर्वी च नन्नोगतिः ॥ चतुर्दशैता निर्दिष्टाः । पिंडप्रकृतयो जिनैः ॥ ॥६९॥ स्युः प्रत्येकप्रकृतयो–ऽष्टाविंशतिरिमाः पुनः ॥ त्रसस्थावरदशके । पराघातादि चाष्टक ॥ ७० ॥ त्रसबादरपर्याप्त––प्रत्येकास्थिरशुन्नानि सुन्नगं च ॥ सुस्वरमादेययशो । नाम्नी चेत्याद्यदशकं स्यात् ॥ ७१ ॥

स्थावरसूक्ष्मापर्याप्त–कानि साधारणास्थिरे अशुन्नं ॥ दुःस्वरदुर्न्नगनाम्नी । न्नवत्यनादेयमयशश्च ॥ ७२ ॥ द्वितीयं दशकं चैतत् । पराघाताष्टकं त्विदं ॥ पराघातं तथोच्छ्वासा–तपोद्योतान्निधानि च ॥ ७३ ॥ न्नवत्यगुरुलघ्वाख्यं । तीर्थकृन्नामकर्म च ॥ निर्माणमुपघातं च । द्विचत्वारिंशदित्यमी ॥ ७४ ॥ चतुर्दशोक्ता गत्याद्याः । पिंडप्रकृतयोऽत्र याः ॥ पंचषष्टिः स्युरेवं ताः । प्रतिन्नेदविवक्षया ॥ ७५ ॥ गतिश्चतुर्धा नरक–तिर्यङ्नरसुरा इति ॥ एकद्वित्रिचतुःपंचें–द्रियाः पंचेति जातयः ॥ ७६ ॥ देहान्यौदारिकादीनि । पंच प्रागुदितानि वै ॥ त्रिधांगोपांगानि तेषां । विना तैजसकार्मणे ॥ ७७ ॥ तत्रांगानि बाहुपृष्टो–रूरोमूर्धादिकानि

वै ॥ अंगुल्यादीन्युपांगानि । भेदोंगोपांगयोरयं ॥ ७८ ॥ नखांगुलीपर्व रेखा—प्रमुखान्यपराणि
च ॥ अंगोपांगानि निर्दिष्टा—न्युत्कृष्टज्ञानशालिभिः ॥ ७९ ॥ औदारिकाद्यंगसक्त—पुद्गलानां
परस्परं ॥ निबद्धबध्यमानानां । संबंधघटकं हि यत् ॥ ८० ॥ तद्बंधनं स्वस्वदेह—तुल्याख्यं
पंचधोदितं ॥ दार्वादिसंधिघटक—जत्वादिसदृशं हृदः ॥ ८१ ॥ औदारिकाद्यंगयोग्यान् । सं-
घातयति पुद्गलान् ॥ यत्तत्संघातनं पंच—विधं बंधनवद्भवेत् ॥ ८२ ॥ यद्वा पंचदशविध—मेवं
भवति बंधनं ॥ औदारिकौदारिकाख्यं । बधनं प्रथमं भवेत् ॥ ८३ ॥ औदारिकतैजसाख्यं ।
तथौदारिककार्मणं ॥ स्याद्वैक्रियवैक्रियाख्यं । तथा वैक्रियतैजसं ॥ ८४ ॥ वैक्रियकार्मणाख्यं
चा—हारकाहारकं तथा ॥ आहारकतैजसं च । तथाहारककार्मणं ॥ ८५ ॥ औदारिकतैजस-
का—र्मणं बंधनमीरितं ॥ वैक्रियतैजसकार्म—णबंधनमथापरं ॥ ८६ ॥ आहारकतैजसका—र्म-
णबंधनमेव च ॥ तैजसतैजसबंध—नं च तैजसकार्मणं ॥ ८७ ॥ कार्मणकार्मणं चेति । स्युः
पंचदश तानि हि ॥ तत्पूर्वसंगृहीतै—र्यदौदारिकपुद्गलैः ॥ ८८ ॥ गृह्यमाणौदारिकांग—पुद्गला-
नां परस्परं ॥ संबंधकृत्तदौदारि—कौदारिकाख्यबंधनं ॥ ८९ ॥ एवंच—

औदारिकपुद्गलानां । सह तैजसपुद्गलैः ॥ संबंधघटकं त्वौदा–रिकतैजसबंधनं ॥ ९० ॥ औदारिकपुद्गलानां । सहकार्मणपुद्गलैः ॥ संबंधकृद्भवत्यौदा–रिककार्मणबंधनं ॥ ९१ ॥ भावनैवं वैक्रियवै–क्रियादिबंधनेष्वपि ॥ स्वयं विचक्षणैः कार्या । दिङ्मात्रं तु प्रदर्शितं ॥ ९२ ॥ षट्कं संहनननानां सं–स्थानानां षट्कमेव च ॥ वर्णाः पंच रसाः पंचा–ष्टौ स्पर्शा गंधयोर्द्वयं ॥ ९३ ॥ तत्र वर्णौ नीलकृष्णौ । कटुतिक्ताभिधौ रसौ ॥ गुरुः खरो रुक्षशीता–विति स्पर्शचतुष्टयं ॥ ९४ ॥ दुर्गंधश्चेतिनवक–मशुभं परिकीर्त्तितं ॥ वर्णगंधरसस्पर्शाः । शेषास्त्वेकादशोत्तमाः ॥ ९५ ॥ आनुपूर्व्यश्चतस्रः स्यु–श्चतुर्गतिसमाभिधाः ॥ द्विधा विहायोगतिः स्यात्प्रशस्तेतरभेदतः ॥ ९६ ॥ एवं भेदाः पंचषष्टिः । पिंडप्रकृतिजाः स्मृता ॥ पंचानामौदारिकादि–बंधनानां विवक्षया ॥ ९७ ॥ सा पंचषष्टिरष्टा–विंशत्या प्रकृतिभिः पुरोक्ताभिः ॥ प्रत्येकाभिर्युक्ताः । स्युर्नाम्नस्त्रिनवतिर्भेदाः ॥ ९८ ॥ बंधनानां पंचदश–भेदत्वे च विवक्षिते ॥ स्युर्नामकर्मणो भेदा–स्त्रिभिः समधिकं शतं ॥ ९९ ॥ बंधनसंघातनना–म्नामिह पंचदशपंचसंख्यानां । सह बंधसजातीय–त्वाभ्यां न स्वांगतः पृथग्गणनं ॥ १०० ॥

कृष्णादिभेदभिन्नाया । वर्णादिविंशतेः पदे ॥ सामान्येनैव वर्णादि–चतुष्कमिह गृह्यते
॥ १ ॥ पूर्वोक्तत्र्युत्तरशता–देषां षट्त्रिंशतस्ततः ॥ कृतेऽपसारणे सप्त–षष्टिर्भेदा भवंति ते
॥ २ ॥ बंधे तथोदये नाम्नः । सप्तषष्टिरियं मता ॥ षट्त्रिंशतिश्च मोहस्य । बंधे प्रकृतयः
स्मृताः ॥ ३ ॥ सम्यक्त्वमिश्रमोहौ य–न्नातु नो बंधमर्हतः ॥ एतौ हि शुद्धार्धशुद्ध–मिथ्यात्व-
पुद्गलात्मकौ ॥ ४ ॥ त्रिपंचाशत्प्रकृतय––स्तदेवं शेषकर्मणां ॥ नाम्नश्च सप्तषष्टिः स्युः । श-
तांविंशं च मीलिताः ॥ ५ ॥ अधिक्रियंते बंधे ता । उदयोदीरणे पुनः ॥ सम्यक्त्वमिश्रसहिता
–स्ता द्वाविंशशतं खलु ॥६॥ नाम्नस्त्र्याढ्यं शतं पंच–पंचाशत् शेषकर्मणां ॥ सत्तायामष्टपं-
चाढ्य–मेवं प्रकृतयः शतं ॥ ७ ॥ चेद्बंधनानि पंचैव । विवक्ष्यंते तदा पुनः ॥ अष्टचत्वारिंश-
शतं । सत्तायां कर्मणां भिदः ॥ ८ ॥ नामकर्मप्रकृतीना–मथैतासां निरूप्यते ॥ प्रयोजनं गु-
रूपांते । समीक्ष्य समयोदधिं ॥ ९ ॥ चतुर्भ्यो गतिनामभ्यः । प्राप्तिः स्वस्वगतेर्भवेत् ॥
पंचभ्यो जातिनामभ्यो–ऽप्येकद्व्याद्यक्षता भवेत् ॥ १० ॥ पंचानां वपुषां हेतुः । स्याद्वपुर्ना-
म पंचधा ॥ औदारिकवैक्रियाद्या–रकांगोपांगसाधनं ॥ ११ ॥ त्रिधांगोपांगनाम स्या–द्बंधना-

नि च पंचधा ॥ स्युः पंचदश वांगानां। मिथः संबंधहेतवः ॥ १२ ॥ असत्सु बंधनेष्वेषु।
संघातनामकर्मणा ॥ संहतानां पुद्गलानां। बंधो न घटते मिथः ॥ १३ ॥ सक्तूनां संगृही-
लानां। यथा पत्रकरादिना ॥ घृतादि श्लेषणाढ्यं। विना बंधो मिथो न हि ॥ १३ ॥ औदा-
रिकादियोग्यानां। स्यात्संघाननाम तु ॥ संग्राहकं पुद्गलानां। दंतालीव तृणावलेः ॥ १४ ॥
षसां संहननानां च। संस्थानानां च तावतां ॥ तत्तद्विशेषकारीणि। स्युर्नामानि तदाख्यया
॥ १५ ॥ तत्तद्वर्णगंधरस-स्पर्शनिष्पत्तिहेतवः ॥ वर्णादिनामकर्माणि। विंशतिः स्युः शरीरि-
णां ॥ १६ ॥ द्वित्रिचतुःसमयेन। प्रसर्पतां विग्रहेण परलोकं ॥ कूर्परलांगलगोमू-त्रिकादिव-
क्रमनरूपायां ॥ १७ ॥ स्यादुदय आनुपूर्व्या। वक्रगतौ वृषभरज्जुकल्पायाः ॥ स्वस्वगतिस-
माभिख्या-श्चतुर्विधास्ताश्च गतिभेदात् ॥ १८ ॥ गतिर्वृषभवच्छ्रेष्ठा। सद्विहायोगतिर्भवेत् ॥
खरादिवत्सा दुष्टा स्या-दसत्खगतिनामतः ॥ १९ ॥ त्रसा द्वित्रिचतुःपंचे-न्द्रियाः स्युस्त्रस-
नामतः ॥ स्युर्बादरा बादराख्यात्। स्थूलपृथ्व्यादयोगिनः ॥ २० ॥ लब्धिकरणपर्याप्ताः। प-
र्याप्तनामकर्मतः ॥ प्रत्येकतनवो जीवाः। स्युः प्रत्येकाख्यकर्मणा ॥ २१ ॥ स्थिरनामोदया-

ना

दंता–स्थ्यादिस्यात् स्थिरमंगिनां ॥ नाभेरूर्ध्वं च मूर्द्धादि । शुभनामोदयाच्छुभं ॥ २२ ॥
स्पृष्टो मूर्द्धादिना ह्यन्यः । शुभत्वादेव मोदते ॥ अशुभत्वादेव परः । स्पृष्टः क्रुध्येत्पदादिना ।२३।

स्यात्प्रियोऽनुपकर्त्तापि । लोकानां सुभगोदयात् ॥ मनोरमस्वरः प्राणी । भवेत्सुस्वर-
नामतः ॥ २४ ॥ अयुक्तवाद्यप्यादेय–वाक् स्यादादेयनामतः ॥ यशोनाम्नो यशःकीर्त्ति–र्व्या-
प्नोति भुवि देहिनां ॥ २५ ॥ तत्र च––पराक्रमतपस्त्यागा–द्युद्भूतयशसा हि यत् ॥ कीर्त्तनं
श्लाघनं ज्ञेया । सा यशःकीर्त्तिरुत्तमैः ॥ २६ ॥ यद्वा दानादिजा कीर्त्तिः । पराक्रमकृतं यशः
॥ एकदिग्गामिनी कीर्त्तिः । सर्वदिग्गामुकं यशः ॥ २७ ॥ स्थावरः स्यात्स्थावराख्ययात् ।
सूक्ष्मः स्यात्सूक्ष्मनामतः ॥ अपर्याप्तोंगी म्रियेता–ऽपर्याप्तनामकर्मतः ॥ २८ ॥ साधारणां-
गः स्यात्साधा–रणाख्यनामकर्मतः ॥ अस्थिरास्थिदंतजिह्वा–कर्णादिरस्थिरोदयात् ॥ २९ ॥
नाभेरधोऽशुभं पादा–दिकं चाशुभनामतः ॥ उपकर्त्ताप्यनिष्टः स्या–ल्लोकानां दुर्भगोदयात्
॥ ३० ॥ उक्तं च प्रज्ञापनावृत्तौ––❀ अणुवकए वि बहूणं । जो हु पिओ तस्स सुभगनामु-
दओ ॥ उवगारकारगो विहु । न रुच्चए दुभगस्सुदए ॥३१॥ सुभगुदए वि हु कोई । किंची-

आसज्ज दुन्नगो जइवि ॥ जायइ तद्दोसाउ । जहा अन्नवाण तित्थयरो ॥ ३२ ॥ ❀ दुष्टानिष्टस्वरो जंतु–र्भवेद्दुःस्वरनामतः ॥ युक्तवाग्प्यनादेय–वाक्योऽनादेयनामतः ॥ ३३ ॥ अयशोऽकीर्त्तिभाग् जीवो–ऽयशोनामोदयाद्भवेत् ॥ त्रसस्थावरदशके । एवमुक्ते स्वरूपतः ॥३४॥

पराघातोदयात्प्राणी । परेषां बलिनामपि ॥ स्याद् दुर्द्धर्षः सदुच्छ्वास–लब्धिश्चोच्छ्वासनामतः ॥ ३५ ॥ यतः स्वयमनुष्णोऽपि । भवत्युष्णप्रकाशकृत् ॥ तदातपनामकर्म । रविबिंबमिवांगिनां ॥ ३६ ॥ उष्णस्पर्शोदयादुष्ण–स्याग्नेर्या तु प्रकाशिता ॥ नह्यातपात्सा किंतु स्या–त्तादृग्लोहितवर्णतः ॥ ३७ ॥ तदुद्योतनामकर्म । यतोऽनुष्णप्रकाशकृत् ॥ भवति प्राणिनामंगं । खद्योतज्योतिरादिवत् ॥ ३८ ॥ रत्नौषध्यादयोऽप्येव–मुद्योतनामकर्मणा ॥ द्योतंते मुनिदेवाश्च । विहितोत्तरवैक्रियाः ॥ ३९ ॥ यतो वपुर्नातिगुरु । नातिलघ्वंगिनां भवेत् ॥ नामकर्मागुरुलघु । तदुक्तं युक्तिकोविदैः ॥ ४० ॥ तद्भवेत्तीर्थकृन्नाम । यतस्त्रिजगतोऽपि हि ॥ अर्चनीयो भवत्यंगी । प्रातिहार्याद्यलंकृतः ॥ ४१ ॥ तद्विंशतेः स्थानकाना–माराधनाद्भिकाध्यते ॥ भवे तृतीये नृगता–वेव सम्यक्त्वशालिना ॥ ४२ ॥ उदयश्च भवत्यस्य । केवलोत्पत्त्यनं-

तरं ॥ वेद्यते चैतदग्लान्या । धर्मोपदेशनादिभिः ॥ ४३ ॥ यथास्थाने नियमनं । कुर्यान्निर्माणनाम तु ॥ अंगोपांगानां गृहादि—काष्टानामिव वार्धकिः ॥ ४४ ॥ प्रतिजिह्वादिना स्वीयावयवेनोपहन्यते ॥ यतः शरीरी तदुप—घातनाम प्रकीर्त्तितं ॥ ४५ ॥ भवेद्दानलाभभोगो—पभोगवीर्यविघ्नकृत् ॥ अतरायं पंचविधं । कोशाध्यक्षसमं ह्यदः ॥ ४६ ॥

यथा दित्सावपि नृपे । न प्राप्नोति धनं जनः ॥ प्रातिकूल्यं गते कोशा—ध्यक्षे केनापि हेतुना ॥ ४७ ॥ अपि जानन् दानफलं । वित्ते पात्रे च सत्यपि ॥ तथा दातुं न शक्नोति । दानांतरायविघ्नितः ॥ ४८ ॥ तथैवोपायविज्ञोऽपि । कृतयत्नोऽपि नासुमान् ॥ हेतोः कुतोऽपि प्राप्नोति । लाभं लाभांतरायतः ॥ ४९ ॥ भोगोपभोगौ प्राप्ताव—प्यंगी भोक्तुं न शक्नुयात् ॥ भोगोपभोगांतराय—विघ्नितो मम्मणादिवत् ॥ ५० ॥ इष्टानिष्टवस्तुलब्धि—परिहारादिषूद्यमं ॥ शक्तोऽपि कर्त्तुं तं कर्त्तुं । नेष्टे वीर्यांतरायतः ॥ ५१ ॥ ज्ञानानां च ज्ञानिनां च । गुर्वादीनां तथैव च ॥ ज्ञानोपकरणानां चा—शातनाद्वेषमत्सरैः ॥ ५२ ॥ निंदोपघातांतरायैः । प्रत्यनीकत्वनिह्नवैः ॥ बध्नात्यावरणं कर्म । ज्ञानदर्शनयोर्भवी ॥ ५३ ॥ गुर्वादिभक्तिकरुणा—क-

पायविजयादिभिः ॥ बध्नाति कर्म साताख्यं । दाता सद्धर्मदार्ढ्ययुक् ॥ ५४ ॥ गुर्वादिभक्ति-विकलः । कषायकलुषाशयः ॥ असातावेदनीयं च । बध्नाति कृपणोऽसुमान् ॥ ५५ ॥ उ-न्मार्गदेशको मार्ग–पलापी साधुनिंदकः ॥ बध्नाति दर्शनमोहं । देवादिद्रव्यभक्षकः ॥५६॥ कषायहास्यविषया–दिभिर्बध्नाति देहभृत् ॥ कषायनोकषायाख्यं । कर्म चारित्रमोहकं ॥ ५७ ॥ निबध्नाति नारकायु–र्महारंभपरिग्रहः ॥ तिर्यगायुः शल्ययुक्तो । धूर्तश्च जनवंच-कः ॥ ५८ ॥ नरायुर्मध्यमगुणः । प्रकृत्याल्पकषायकः ॥ दानादौ रुचिमान् जीवो । बध्नाति सरलाशयः ॥ ५९ ॥

चतुर्थादि गुणस्थान–वर्त्तिनोऽकामनिर्जराः ॥ जीवा बध्नंति देवायु–स्तथा बालतप-स्विनः ॥ ६० ॥ गुणप्रेक्षी त्यक्तमदो–ऽध्ययनाध्यापनोद्यतः ॥ उच्चं गोत्रमर्हदादि–भक्तो नी-चमतोऽन्यथा ॥ ६१ ॥ अगौरवश्च सरलः । शुभं नामान्यथाऽशुभं ॥ बध्नाति हिंसको वि-घ्न–मर्हत्पूजादिविघ्नकृत् ॥ ६२ ॥ स्थितिरुत्कर्षतो ज्ञान–दर्शनावरणीययोः ॥ वेदनीयस्य च त्रिंश–दंतरायस्य कोटिकोटयः ॥ ६३ ॥ मोहनीयस्य चाब्धीनां । सप्ततिः कोटिकोटयः ॥ आ-

युषः स्थितिरुत्कर्षा—त्रयस्त्रिंशत्पयोधयः ॥ ६४ ॥ अबाधाकालरहिता । प्रोक्तैवायुर्गुरुस्थितिः ॥ तद्युक्तेयं पूर्वकोटी—तार्त्तीयीकभवाधिका ॥ ६५ ॥ गोत्रनाम्नोः सांबुधानां । विंशतिः कोटिकोटयः ॥ स्थितिर्ज्येष्टांतरायस्य । स्याद् ज्ञानावरणीयवत् ॥ ६६ ॥ स्थितिर्जघन्यतो ज्ञान—दर्शनावरणीययोः ॥ अंतर्मुहूर्त्तप्रमिता । तत्वविज्ञैर्निरूपिता ॥ ६७ ॥ कषायप्रत्ययं बंधमाश्रित्याल्पीयसी स्थितिः ॥ स्याद् द्वादशमुहूर्त्तात्मा । वेदनीयस्य कर्मणः ॥ ६८ ॥ उपशांतक्षीणमोहा—दिकानां त्वकषायिणां ॥ योगैकहेतुबद्धस्य । वेद्यस्य द्वौ क्षणौ स्थितिः ॥ ॥ ६९ ॥ स्थितिर्लघ्व्यंतर्मुहूर्त्तं । मोहनीयस्य कर्मणः ॥ आयुषः क्षुल्लकभव—प्रमिता सा प्रकीर्त्तिता ॥ ७० ॥

अष्टाष्टौ च मुहूर्त्तानि । गोत्रनाम्नोर्लघुः स्थितिः ॥ अंतर्मुहूर्त्तप्रमिता । सांतरायस्य कर्मणः ॥ ७१ ॥ यावत्कालमनुदयो । बद्धस्य यस्य कर्मणः ॥ तावानबाधाकालोऽस्य । स जघन्येतरो द्विधा ॥ ७२ ॥ अबाधाकाल उत्कृष्ट—स्त्रयोऽब्दानां सहस्रकाः ॥ आद्यकर्मत्रये सुष्टु । निर्दिष्टो दृष्टविष्टपैः ॥ ७३ ॥ सप्तवर्षसहस्राणि । मोहनीयस्य कर्मणः ॥ पूर्वकोट्यास्तृतीयों-

शः । स नवत्यायुषो गुरुः ॥ ७४ ॥ गोत्रनाम्नोः कर्मणोस्तु । द्वे द्वे सोऽब्दसहस्रके ॥ त्री-
ण्येवाब्दसहस्राणि । सोंतरायस्य कर्मणः ॥ ७५ ॥ जघन्यतस्त्वबाधाद्धा । सर्वेषामपि कर्म-
णां ॥ अंतर्मुहूर्तं प्रमिता । कथिता तत्ववेदिभिः ॥ ७६ ॥ अबाधाकालहीनायां । यथास्वक-
र्मणां स्थितौ ॥ भवेत्कर्मनिषेकस्तत् । परिभोगाय देहिनां ॥ ७७ ॥ कर्मणां दलिकं यत्र ।
प्रथमे समये बहु ॥ द्वितीयसमये हीनं । ततो हीनतरं क्रमात् ॥ ७८ ॥ एवं या कर्मदलि-
क-रचना क्रियतेंगिभिः ॥ वेदनार्थमसौ कर्म-निषेक इति कीर्त्यते ॥ ७९ ॥ कर्माण्यमूनि
प्रत्येकं । प्राणिनामखिलान्यपि ॥ भवेऽनादौ तिष्ठतां स्यु-रनादीनि प्रवाहतः ॥ ८० ॥ स्व-
भावतोऽकर्मकाणां । जीवानां प्रथमं यदि ॥ संयोगः कर्मणामंगी-क्रियते समये क्वचित् ॥
॥ ८१ ॥ तदा कर्मक्षयं कृत्वा । सिद्धानामपि देहिनां ॥ पुनः कदाचित्समये । कर्मयोगः प्र-
सज्यते ॥ ८२ ॥ विश्लेषस्तु भवेज्जीवा-दनादित्वेऽपि कर्मणां ॥ ज्ञानादिभिः पावकाद्यै-रुप-
लस्येव कांचनात् ॥८३॥ नन्वेवमंतरायाणां । पंचानां मूलतः क्षये ॥ संजाते किं ददात्यर्हन्न ।
मततं लभते च किं ॥ ८४ ॥ भुंक्ते किमुपभुंक्ते वा । वीर्यं किं वा प्रवर्त्तयेत् ॥ न चेत्किंचि-

त्तदा तेषां । विघ्नानां किं क्षये फलं ॥ ७५ ॥

अत्रोच्यतेऽर्हतः क्षीण–निःशेषघातिकर्मणः ॥ गुणाः प्राडुर्भवत्येषां–तरायाणां क्षये यतः ॥ ७६ ॥ ददतो लभमानस्य । भुंजतो वोपभुंजतः ॥ वीर्यं प्रयुंजतो वास्य । नांतरायो भवेत् क्वचित् ॥ ७७ ॥ दानलाभादिकं त्वस्य । न संभवति सर्वदा ॥ तत्तत्कारणसामग्र्यां । सत्यां भवति नान्यथा ॥ ७८ ॥ नृदेवगत्यानुपूर्व्यौ । जातिः पंचेंद्रियस्य च ॥ उच्चैर्गोत्रं सातवेद्यं । देहाः पंच पुरोदिताः ॥ ७९ ॥ अंगोपांगत्रयं संह–ननं संस्थानमादिमं ॥ वर्णगंधरसस्पर्शाः । श्रेष्ठा अगुरुलघ्वपि ॥ ८० ॥ पराघातमथोच्छ्वास–मातपोद्योतनामनी ॥ नृदेवतिर्यगायूंषि । निर्माणं सद्विहायोगतिः ॥ ८१ ॥ तथैव त्रसदशकं । तीर्थकृन्नामकर्म च ॥ द्विचत्वारिंशदित्येवं । पुण्यप्रकृतयो मताः ॥ ८२ ॥ भेदाः पंच नव ज्ञान–दर्शनावरणीययोः ॥ नीचैर्गोत्रं च मिथ्यात्व–मसातवेदनीयकं ॥ ८३ ॥ नरकस्यानुपूर्वी च । गतिरायुरिति त्रयं ॥ तिर्यग्गत्यानुपूर्व्यौ च । कषायाः पंचविंशतिः ॥ ८४ ॥ एकद्वित्रिचतुरक्ष–जातयोऽसद्विहायोगतिः ॥ अप्रशस्ताश्च वर्णाद्या–स्तथोपघातनाम च ॥ ८५ ॥ अनाद्यानि पंच संस्था–नानि संहनना-

नि च ॥ तथा स्थावरदशक-मंतरायाणि पंच च ॥ ९६ ॥ उक्ता द्व्यशीतिरित्येताः । पापप्रकृतयो जिनैः ॥ न ब्रूयान्न विस्तरश्चात्र । क्रियते विस्तृतेर्भिया ॥ ९७ ॥ एतेषु कर्मस्वष्टासु । भवत्याद्यं चतुष्टयं ॥ घातिसंज्ञं जीवसक्त-ज्ञानादिगुणघातकृत् ॥ ९८ ॥ अन्त्यं चतुष्टय च स्या-द्भवोपग्राहिसंज्ञक ॥ छद्मस्थानां तथा सर्व-विदामप्येतदान्भवं ॥ ९९ ॥ पारावारानुकारादितिजिनसमयाद् भूरिसारादपारा-दुच्चित्योच्चित्य मुक्ता इव नवसुषमायुक्तिपंक्तीरनेकाः ॥ क्लृप्ता जीवस्वरूपप्रकरणरचना योरुमुक्तावलीव । सोत्कंठं कण्ठपीठे कुरुत कृतधियस्तां चिद्बोधसिध्यै ॥ १०० ॥ विश्वाश्चर्यदकीर्त्तिकीर्त्तिविजयश्रीवाचकेंद्रांतिष-द्राजश्रीतनयोऽतनिष्ट विनयः श्रीतेजपालात्मजः ॥ काव्यं यत्किल तत्र निश्चितजगत्तत्वप्रदीपोपमे । सर्गोऽयं दशमः सुधारससमः पूर्णः सुखेनासमः ॥ १ ॥

॥ इति श्रीलोकप्रकाशे दशमः सर्गः संपूर्णः ॥

॥ एकादशमः सर्गः प्रारभ्यते ॥

पुद्गलानामस्तिकाय-मथ किंचित्तनोम्यहं ॥ गुरुश्रीकीर्त्तिविजय-प्रसादप्राप्तधीधनः ॥

॥ १ ॥ द्रव्यक्षेत्रकालभाव–गुणैरेषोऽपि पंचधा ॥ अनंतद्रव्यरूपोऽसौ । द्रव्यतस्तत्र वर्णितः ॥
॥ २ ॥ लोक एवास्य सद्भावात् । क्षेत्रतो लोकसंमितः ॥ कालतः शाश्वतो वर्णा–दिभिर्युक्त-
श्च भावतः ॥ ३ ॥ गुणतो ग्रहणगुणो । यतो द्रव्येषु षट्स्वपि ॥ भवेद् ग्रहणमस्यैव । न प-
रेषां कदाचन ॥ ४ ॥ भेदाश्चत्वार एतस्य । प्रज्ञप्ताः परमेश्वरैः ॥ स्कंधा देशाः प्रदेशाश्च । प-
रमाणव एव च ॥ ५ ॥ अनंतभेदाः स्कंधाः स्युः । केचन द्विप्रदेशकाः ॥ त्रिप्रदेशादयः सं-
ख्या–ऽसंख्यानंतप्रदेशकाः ॥ ६ ॥ सूक्ष्मस्थूलपरीणामाः । स्युः प्रत्येकमनंतकाः ॥ एकक्ष-
णाद्यसंख्येय–कालांतस्थितिशालिनः ॥ ७ ॥ द्विप्रदेशादिकोऽनंत–प्रदेशांतो विवक्षितः ॥ स्कं-
धसंबद्धो विभागः । स भवेद्देशसंज्ञकः ॥ ८ ॥ निर्विभाज्यो विभागो यः । स्कंधसंबद्ध एव हि
॥ परमाणुप्रमाणोऽसौ । प्रदेश इति कीर्त्तितः ॥ ९ ॥ कार्यकारणरूपाः स्यु–र्द्विप्रदेशादयो
यथा ॥ द्विप्रदेशो द्वयोरण्वोः । कार्यं त्र्यणुककारणं ॥ १० ॥ परमाणुस्त्वप्रदेशः । प्रत्यक्षो
ज्ञानचक्षुषां ॥ कार्यानुमेयोऽकार्यश्च । भवेत्कारणमेव सः ॥ ११ ॥ यदाहुः——कारणमेव त-
दंत्यं । सूक्ष्मो नित्यश्च भवति परमाणुः ॥ एकरसवर्णगंधो । द्विस्पर्शः कार्यलिंगश्च ॥ १२ ॥

तत्रापि—शीतोष्णस्निग्धरूक्षेषु । द्वौ चतुर्ष्वविरोधिनौ ॥ स्पर्शौ स्यातां परमाणु—ष्वपरे न कथंचन ॥ १३ ॥ तथाहुः—❀ परमाण्वादीनामसंख्यातप्रदेशकस्कंधपर्यंतानां केषांचिदनंतप्रादेशिकानामपि स्कंधानां, तथा एकप्रदेशावगाढानां यावत्संख्यातप्रदेशावगाढानां शीतोष्णस्निग्धरूक्षरूपाश्चत्वार एव स्पर्शा इति प्रज्ञापनावृत्तौ. ❀ द्रव्यक्षेत्रकालभावैः । परमाणुश्चतुर्विधः ॥ द्रव्यतोऽणुः पुद्गलाणु—श्चतुर्लक्षण एव सः ॥ १४ ॥ अवाह्योऽग्राह्य एवासा—वभेद्योऽछेद्य एव च ॥ क्षेत्राणुस्त्वभ्रप्रदेश—श्चतुर्लक्षण एन सः ॥ १५ ॥ अप्रदेशोऽविभागश्चा—मध्योऽनर्ध इति स्मृतः ॥ कालाणुः समयाख्यः स्या—च्चतुर्लक्षण एव सः ॥ १६ ॥

वर्णगंधरसस्पर्शै—रहितश्चाथ भावतः ॥ द्व्याणुरेव वर्णादि—भावप्राधान्यतो मतः ॥१७॥ भावाणुरथवा सर्व—जघन्यश्यामतादिकं ॥ इह प्रयोजनं द्रव्य—परमाणुभिरेव हि ॥ १८ ॥ इति भग० श० २० उ० ५ ॥ स नित्यानित्यरूपः स्यात् । द्रव्यपर्यायभेदतः ॥ तत्र च द्रव्यतो नित्यः । परमाणोरनाशतः ॥ ॥ १९ ॥ पर्यायतस्त्वनित्योऽसौ । यतो वर्णादिपर्यवाः ॥ नश्यंत्येके भवत्यन्ये । विस्रसादिप्रभावतः ॥२०॥ अस्य शाश्वतभावेन । केचित्पर्य वनित्यतां ॥

मन्यंते तदलद्यस्मात् । पंचमांगे स्फुटं श्रुतं ॥ २१ ॥ ❀ परमाणुपुग्गलेणं न्नते, सासए असासए? गो० सिअ सासए, सिअ असासए, से केणठेणं न्नते एवं वुच्चति? गो० दव्वठयाए सासए, पज्जवठयाए असासए; इति. ❀ पुद्गलानां दशविधः । परिणामोऽथ कथ्यते ॥ बंधनाख्यो गतिनामा । संस्थानाख्यस्तथापरः ॥ २२ ॥ न्नेदाख्यः परिणामः स्याद् । वर्णगंधरसान्निधाः ॥ स्पर्शोऽगुरुलघुः शव्दः । परिणामा दशेत्यमी ॥ २३ ॥ स्याद्विस्रसाप्रयोगाभ्यां । बंधः पौद्गलिको द्विधा ॥ तत्र यो विस्रसाबंधः । सोऽपि त्रिविध इष्यते ॥ २४ ॥ बंधनप्रत्ययः पात्र—प्रत्ययः परिणामजः ॥ बंधनप्रत्ययस्तत्र । स्कंधेषु द्व्यणुकादिषु ॥ २५ ॥ न्नवेद्धि द्व्यणुकादीनां । विमात्रस्नैग्ध्यरौक्ष्यतः ॥ मिथोबंधोऽसंख्यकाल—मुत्कर्षात्समयोऽन्यथा ॥ २६ ॥ यदाहुः—❀ समनिद्धयाए बंधो । न होइ समलुरकयाए वि न होइ ॥ वेमायनिद्धलुरक—त्तणेण बंधा न खंधाणं ॥ २७ ॥

❀ विषममात्रानिरूपणार्थं चोच्यते—❀ निद्धस्स निद्धेण दुयाहिएण । लुरकस्स लुरकेण डुयाहिएण ॥ निद्धस्स लुरकेण न्नवति बंधो । जहन्नवज्जो विसमो समो वा ॥ २८ ॥

जीर्णमद्यगुडादीनां । भाजने स्त्यानता तु या ॥ स पात्रप्रत्ययः संख्य—कालो वांतर्मुहूर्त्तिकः ॥ २९ ॥ परिणामप्रत्ययस्तु । सोऽभ्रादीनामनेकधा ॥ जघन्यश्चैकसमयं । षण्मासान्
परमः पुनः ॥ ३० ॥ इति विस्रसाबंधः—अथ प्रयोगबंधो यः । स चैषां स्याच्चतुर्विधः ॥
आलापनश्चालीनश्च । शरीरतत्प्रयोगकौ ॥ ३१ ॥ तृणकाष्ठादिभाराणां । रज्जुवेत्रलतादिभिः
॥ संख्यकालांतर्मुहूर्त्तौ । बंध आलापनाभिधः ॥ ३२ ॥ चतुर्धालीनबंधस्तु । प्रथमः श्लेषणा-
भिधः ॥ समुच्चयोच्चयौ बंधौ । तुर्यः संहननाभिधः ॥ ३३ ॥ यः कुड्यकुट्टिमस्तंभ—घटकाष्ठा-
दिवस्तुषु ॥ सुधामृत्पकलाक्षाद्यै—र्बंधः सः श्लेषणाभिधः ॥ ३४ ॥ तटाकदीर्घिकावप्र—स्तूपदे-
वकुलादिषु ॥ बंधः सुधादिभिर्यः स्यात् । बहूनां स समुच्चयः ॥ ३५ ॥ तृणावकरकाष्ठानां ।
तुषगोमयभस्मनां ॥ उच्चत्वेन च यो बंधः । स स्यादुच्चयसंज्ञकः ॥ ३६ ॥ द्विधा संहनना-
ख्यस्तु । देशसर्वविभेदतः ॥ तत्राद्यः शकटांगादौ । परः क्षीरोदकादिषु ॥ ३७ ॥ आरभ्याला-
पनादेषा । जघन्योत्कर्षतः स्थितिः ॥ अंतर्मुहूर्त्तसंख्यात—कालौ ज्ञेया विचक्षणैः ॥ ३८ ॥
द्विधा शरीरबंधः स्या—देकः पूर्वप्रयोगजः ॥ प्रत्युत्पन्नप्रयोगोत्थः । परः सोऽभूतपूर्वकः ॥३९॥

तत्राद्योऽन्यसमुद्घाते । क्षिप्तानां देहतो बहिः ॥ तैजसकार्मणाणूनां । पुनः संकोचने भवेत् ॥ ४० ॥ समुद्घातान्निवृत्तस्य । परः केवलिनोऽष्टसु ॥ स्यात्पंचमे क्षणे तेजः–कार्मणाणुसमाहृतौ ॥ ४१ ॥ आत्मप्रदेशविस्तारे । तेजःकार्मणयोरपि ॥ विस्तारः संहृतौ तेषां । संघातः स्यात्तयोरपि ॥ ४२ ॥ देहप्रयोगबंधस्तु । बहुधौदारिकादिकः ॥ स पंचमांगे शतके–ऽष्टमे ज्ञेयः सविस्तरः ॥ ४३ ॥ इतिबंधपरिणामः ॥ गतेः परिणतिर्द्वेधा । संस्पृशंत्यस्पृशंत्यपि ॥ द्वयोरयं विशेषस्तु । वर्णितस्तत्त्वपारगैः ॥ ४४ ॥ पुद्गलस्यांतरा वस्त्वं–तरं संस्पृशतो गतिः ॥ यासौ भवेत्संस्पृशंती । द्वितीया स्यात्ततोऽन्यथा ॥ ४५ ॥ अथवा—द्विधा गतिपरीणामो । दीर्घान्यगतिभेदतः ॥ दीर्घदेशांतरप्राप्ति–हेतुराद्योऽन्यथापरः ॥ ४६ ॥ एकेन समयेनैव । पुद्गलः किल गच्छति ॥ लोकांतादन्यलोकांतं । गतेः परिणतेर्बलात् ॥ ४७ ॥ तथाहुः—

❀ परमाणुपुग्गलेणं भंते, लोगस्स पुरच्छिमिल्लाओ चरिमंताओ पच्चच्छिमिल्लं चरिमंतं एकसमएणं गच्छति, दाहिणिल्लाओ चरिमंताओ उत्तरिल्लं चरिमंतं, उत्तरिल्लाओ चरिमंताओ दाहिणिल्लं चरिमंतं, उवरिल्लाओ चरिमंताओ हेठिल्लं चरिमंतं, हेठिल्लाओ चरिमंताओ उवरिल्लं चरिमंतं?

एगेणं समएणं गच्छति हंता गोयमा जाव गच्छति. ॥ इति भगवतीसूत्रे शत० १६ उ० ८ ॥

❀ परिमंडलं च वृत्तं । त्र्यस्त्रं च चतुरस्त्रकं ॥ आयतं च रूप्यजीव–संस्थानं पंचधा मतं ॥ ॥ ४८ ॥ मंडलावस्थिताणवोघं । बहिःशुषिरमंतरे ॥ वलयस्येव तज्ज्ञेयं । संस्थानं परिमंडलं ॥ ४९ ॥ अंतःपूर्णं तदेव स्या–द्वृत्तं कुलालचक्रवत् ॥ त्र्यस्त्रं शृंगाटवत्कुंभि–कादिवच्चतुरस्त्र-कं ॥ ५० ॥ आयतं दंडवद्दीर्घं । घनप्रतरभेदतः ॥ चत्वारि स्युर्द्विधा संस्था–नानि प्रत्येक-मादितः ॥ ५१ ॥

आयतं तु त्रिधा श्रेणि–घनप्रतरभेदतः ॥ ओजयुग्मप्रदेशानि । द्विधामूनि विनादिमं ॥ ॥ ५२ ॥ ओजःप्रदेशं प्रतर–वृत्तं पंचाणुसंभवं ॥ पंचाकाशप्रदेशाव–गाढं च परिकीर्तितं ॥ ॥ ५३ ॥ यत्र प्रदेशाश्चत्वार–श्चतुर्दिशं प्रतिष्ठिताः ॥ एकः प्रदेशोंतर्वृत्त–प्रतरं तद्यथोदितं ॥ ॥ ५४ ॥ युग्मप्रदेशं प्रतर–वृत्तं च द्वादशाणुकं ॥ तावदभ्रांशावगाढं । तच्चैवमिह जायते ॥ ॥ ५५ ॥ चतुर्ष्वभ्रप्रदेशेषु । चत्वारोंशा निरंतरं ॥ स्थाप्यंते रुचकाकारा–स्तत्परिक्षेपतस्ततः ॥ ५६ ॥ द्वौ द्वौ चतुर्दिशं स्थाप्यौ । प्रदेशौ जायते ततः ॥ युग्मप्रदेशं प्रतर–वृत्तमुक्तं पुरा-

तनैः ॥ ५७ ॥ सप्ताणुकं सप्तखांशा–वगाढं च भवेदिह ॥ भोजःप्रदेशनिष्पन्नं । घनवृत्तं हि तद्यथा ॥ ५८ ॥ पंचप्रदेशे प्रतर–वृत्ते किल पुरोदिते ॥ अथ ऊर्ध्वं च मध्याणो–रेकैकोऽणुर्निवेश्यते ॥ ५९ ॥ द्वात्रिंशदणुसंपन्नं । तावत्खांशावगाढकं ॥ युग्मप्रदेशं हि घन–वृत्तं भवति तद्यथा ॥ ६० ॥ भुक्तप्रतरवृत्तस्य । द्वादशांशात्मकस्य वै ॥ उपरिष्टाद् द्वादशान्ये । स्थाप्यंते परमाणवः ॥ ६१ ॥ ततः पुनर्मध्यमाणु–चतुष्कस्याप्युपर्यधः ॥ स्थाप्यंते किल चत्वार–श्चत्वारः परमाणवः ॥ ६२ ॥ भोजःप्रदेशं प्रतर–त्र्यस्रं तु त्रिप्रदेशकं ॥ त्रिप्रदेशावगाढं च । तदेवं जायते यथा ॥ ६३ ॥ स्थाप्येते द्वावणू पंक्त्या । एकस्याधस्ततः परं ॥ एकोऽणुः स्थाप्यत इति । निर्दिष्टं शिष्टदृष्टिभिः ॥ ६४ ॥ युग्मप्रदेशं प्रतर–त्र्यस्रं तु षट्प्रदेशकं ॥ षट्प्रदेशावगाढं च । तदेवं किल जायते ॥ ६५ ॥ त्रयः प्रदेशाः स्थाप्यंते । पंक्त्याणुद्वितयं ततः ॥ आद्यस्याधो द्वितीयस्य । त्वध एको निवेश्यते ॥ ६६ ॥ भोजाणुकं घनत्र्यस्रं । पंचत्रिंशत्प्रदेशकं ॥ पंचत्रिंशत्खप्रदेशा–वगाढं च भवेद्यथा ॥ ६७ ॥ तिर्यङ्निरंतराः पंच । स्थाप्यते परमाणवः ॥ तानधोऽधः क्रमेणैवं । स्थाप्यंते परमाणवः ॥ ६८ ॥ तिर्यगेवहि चत्वार–

स्त्रयो द्वावेक एव च ॥ जातोऽयं प्रतरः पंच–दशांशः पंचपंक्तिकः ॥ ६९ ॥ ततश्चास्योपरि सर्व–पंक्तिष्वंत्यांत्यमंशक ॥ विमुच्यांशा दश स्थाप्या–स्तस्याप्युपरि षट् तथा ॥ ७० ॥ इ-त्थमेव तदुपरि । त्रय एकस्ततः पुनः ॥ नपर्यस्यापीति पंच–त्रिंशत्स्युः परमाणवः ॥ ७१ ॥ युग्मप्रदेशं तु घन–त्र्यस्त्रं चतुःप्रदेशकं ॥ चतुर्व्योमांशावगाढं । तदप्येवं भवेदिह ॥ ७२ ॥ पूर्वोक्ते प्रतरत्र्यस्त्रे । त्रिप्रदेशात्मके किल ॥ अणोरेकस्योर्ध्वमेकः । स्थाप्यते परमाणुकः ॥७३॥ ओजःप्रदेशं प्रतर–चतुरस्त्रं नवांशकं ॥ नवाकाशांशावगाढ–मिदं तदपि जायते ॥ ७४ ॥ ति-र्यग् निरंतरं तिस्त्रः । पंक्तयस्त्रिप्रदेशिकाः ॥ स्थाप्यंते तर्हि जायेत । चतुरस्त्रमयुग्मजं ॥७५॥ युग्मप्रदेशं प्रतर–चतुरस्त्रं तु तद्भवेत् ॥ चतुरभ्रांशावगाढं । चतुःप्रदेशसंभवं ॥ ७६ ॥

द्विद्विप्रदेशे द्वे पंक्ती । स्थाप्येते तत्र जायते ॥ युग्मप्रदेशं प्रतर–चतुरस्त्र यथोदितं ॥ ॥ ७७ ॥ सप्तविंशत्यणुजातं । तावदभ्रांशसंस्थितं ॥ ओजःप्रदेशं हि घन–चतुरस्त्रं भवेदिह ॥ ७८ ॥ नवप्रदेशप्रतर–चतुरस्त्रस्य तस्य वै ॥ नपर्यधो नवनव । स्थाप्यते परमाणवः ॥ ॥ ७९ ॥ अष्टव्योमांशावगाढ । स्पष्टमष्टप्रदेशकं ॥ युग्मप्रदेशं तु घन–चतुरस्त्रं भवेद्यथा ॥

॥ ८० ॥ चतुःप्रदेशप्रतर—चतुरस्रस्य चोपरि ॥ चतुःप्रादेशिकोऽन्योऽपि । प्रतरः स्थाप्यते किल ॥ ८१ ॥ ओजःप्रदेशजं श्रेण्या—यतं स्यात्त्रिप्रदेशजं ॥ त्र्यंशावगाढमणुषु । त्रिषु न्यस्तेषु संततं ॥ ८२ ॥ निरंतरं स्थापिताभ्या—मणुभ्यां द्विप्रदेशज ॥ युग्मप्रदेशजं श्रेण्या—यतं द्व्यभ्रांशसंस्थितं ॥ ८३ ॥ ओजःप्रदेशं प्रतरा—यतं पंचदशांककं ॥ तावद् व्योमांशावगाढ—मिद्धं तदपि जायते ॥ ८४ ॥ पंक्तित्रयेऽपि स्थाप्यंते । पंचपंचाणवस्तदा ॥ ओजःप्रदेशजनितं । भवति प्रतरायतं ॥ ८५ ॥ षट्खांशस्थं षट्प्रदेशं । स्याद्युग्मप्रतरायतं ॥ त्रिषु त्रिषु द्वयोः पंक्त्यो—र्न्यस्तेषु परमाणुषु ॥ ८६ ॥ पंचचत्वारिंशदंश—मोजाणुकं घनायतं ॥ पंचचत्वारिंशदभ्र—प्रदेशेषु प्रतिष्ठितं ॥ ८७ ॥ तत्रच—पूर्वमुक्ते पंचदश—प्रदेशप्रतरायते ॥ पंचदश पंचदशा—णवः स्थाप्या उपर्यधः ॥ ८८ ॥ द्वादशांशं द्वादशाभ्रां—शावगाढं घनायतं ॥ युग्मप्रदेशजं ज्ञेय—मिद्धं तदपि जायते ॥ ८९ ॥ षडंकस्य च प्रतरा—यतस्योपरि विन्यसेत् ॥ षट्प्रदेशांस्ततो युग्म—प्रदेशं स्याद्घनायतं ॥ ९० ॥

विंशत्यभ्रांशावगाढं । विंशत्यंशात्मकं भवेत् ॥ युग्मप्रदेशं प्रतर—परिमंडलनामकं ॥

॥ ए१ ॥ चतुर्दिशं तु चत्वार—श्चत्वारः परमाणवः ॥ विदिक्षु स्थाप्य एकैको । भवेदेवं कृते सति ॥ ए२ ॥ अणूनां विंशतेरेषा—मुपर्यणुषु विंशतौ ॥ स्थापितेषु युग्मजातं । स्याद् घनं परिमंमलं ॥ ए३ ॥ एतच्चत्वारिंशदंशं । तावत्खांशप्रतिष्ठितं ॥ ओजःप्रदेशजनितौ । त्वत्र भेदौ न संमतौ ॥ ए४ ॥ एकप्रदेशन्यूनत्वे । संभवंति न निश्चितं ॥ संस्थानानि यथोक्तानि । तत इत्थं प्ररूपणा ॥ ए५ ॥ यथा पूर्वोक्ततः पंचा—णुकप्रतरवृत्ततः ॥ एकत्रांशे कर्षिते स्यात् । समांशं चतुरस्रकं ॥ ए६ ॥ एतान्यतींद्रियत्वेन । नैवातिशयवर्जितैः ॥ ज्ञेयान्यतः स्थापनाभिः । प्रदर्श्यंते इमास्तु ताः ॥ ए७ ॥ जघन्यानि किलैतानि । सर्वाण्युत्कर्षतः पुनः ॥ अनंताणुस्वरूपाणि । मध्यमान्यपराणि तु ॥ ए८ ॥ तथोक्तमुत्तराध्ययननिर्युक्तौ——❀ परिमंमलेयवट्टे । तं से चउरंस आयए चेव ॥ घणपयरपढमवज्जं । ओजपएसेय जुम्मेय ॥ एए॥ पंचगबारसगं खलु । सत्तगबत्तीसगं च वट्टंमि ॥ तिअ छक्कगपणतीसा । चत्तारिय होंति तंसंमि ॥ १०० ॥ नव चेव तहा चउरो । सत्तावीसा य अठचउरंसे ॥ तिगदुगपन्नरसेवय । छच्चेव य आयए होंति ॥ १ ॥ पणयालाबारसगं । तह चेवय आययंमिसंठाणे ॥ वीसा चत्ता-

वीसा ॥ परिमंडल एव संठाणे ॥ २ ॥ ❀ पंचमांगे त्वनित्थंस्थं । षष्ठं संस्थानमीरितं ॥
पंचभ्योऽपि व्यतिरिक्तं । द्व्यादिसंयोगसंभवं ॥ ३ ॥ संस्थानयोर्द्वयोर्येद्य–प्येकद्रव्ये न संभ-
वः ॥ तथापि भिन्नभिन्नांशे । ते स्यातां दर्विकादिवत् ॥ ४ ॥ एषु चाल्पाल्पप्रदेशा–वगाही-
नि स्वभावतः ॥ भूयांस्यल्पानि भूयिष्ट–खांशस्थायीनि तानि च ॥ ५ ॥ संस्थानमायतं
षोढा । द्विविधं परिमंडलं ॥ चतुर्विधानि शेषाणि । संस्थानानीति विंशतिः ॥ ६ ॥
भेदाख्यः पुद्गलपरी–णामो भवति पंचधा ॥ खंडप्रतरभेदौ द्वौ । चूर्णिकाभेद इत्यपि
॥ ७ ॥ भेदोऽनुतटिकाभिख्यो । भेद उत्करिकाभिधः ॥ स्वरूपमप्यथैतेषां । यथाश्रुत-
मथोच्यते ॥ ८ ॥ लोहखंडादिवत्खंड–भेदो भवति निश्चितं ॥ भूर्जपत्राभ्रपटला–दिवत्प्रतर-
संज्ञितः ॥ ९ ॥ स भवेच्चूर्णिकाभेदः । क्षिप्तमृत्पिंडवत्किल ॥ इक्षुत्वगादिवदनु–तटिका-
भेद इष्यते ॥ १० ॥ उत्कीर्यमाणे प्रस्थादौ । स स्यादुत्करिकाभिधः ॥ तटाकावटवाप्यादि
–ष्वप्येवं भाव्यतामयं ॥ ११ ॥ द्रव्याणि भिद्यमानानि । स्तोकान्युत्करिकाभिदा ॥ पश्चानु-
पूर्व्या शेषाणि । स्युरनंतगुणानि च ॥ १२ ॥ वर्णैः परिणतानां तु । भेदाः पंच प्ररूपिताः ॥

नीला नीलया-
कृष्णनीलारुणपीत—शुक्ला इति विभेदतः ॥ १२ ॥ स्युः कज्जलादिवत्कृष्णा । नीला नीलया-
दिवन्मताः ॥ स्युर्हिंगुलादिवद्रक्ताः । पीताश्च कांचनादिवत् ॥ १४ ॥ शुक्लाः शंखादिवद्गंध-
परिणत्या तु ते द्विधा ॥ पुष्पादिवत्सुरभयो । दुर्गंधा लशुनादिवत् ॥ १५ ॥ रसैः परिणता-
स्ते तु । प्रकारैः पंचभिर्मताः ॥ तिक्तकटुकषायाम्ल—मधुरा इति भेदतः ॥ १६ ॥ कोशात-
क्यादिवत्तिक्ताः । कटवो नागरादिवत् ॥ प्रोक्ता आमकपित्थादि—वत्कषायरसांचिताः ॥ १७ ॥
आम्लकादिवदम्लाः स्यु—र्मधुराः शर्करादिवत् ॥ स्पर्शैः परिणता येऽपि । तेषामष्टौवि-
धाः पुनः ॥ १८ ॥ उष्णशीतौ मृदुखरौ । स्निग्धरूक्षौ गुरुर्लघुः ॥ उष्णस्पर्शास्तत्र वह्न्या-
दिवत् शीता हिमादिवत् ॥१९॥ बर्हादिवच्च मृदवः ॥ खराश्च प्रस्तरादिवत् ॥ स्निग्धा घृतादि-
वद्ज्ञेया । रूक्षा भस्मादिवन्मताः ॥ २० ॥ गुरुस्पर्शपरिणता । वज्रादिवत्प्रकीर्त्तिताः ॥ लघु-
स्पर्शपरिणता । अर्कतूलादिवन्मताः ॥२१॥ अगुरुलघुपरिणामव्यवस्था चैवं—धूमो लघुरुपलो
गुरु—रूर्ध्वाधोगमनशीलतो ज्ञेयौ ॥ गुरुलघुरनिलास्तिर्य—ग्गमनादाकाशमगुरुलघु ॥ २२ ॥
व्यवहारतश्चतुर्धा । भवंति वस्तूनि बादराण्येव ॥ निश्चयतश्चागुरुलघु । गुरुलघु चेति द्विभेद-

व ॥ २३ ॥ तत्रापि—बादरमष्टस्पर्शं । इत्यं रूप्येव नवति गुरुलघुकं ॥ अगुरुलघु चतुःस्पर्शं। सूक्ष्मं वियदाद्यमूर्त्तमपि ॥ २४ ॥ वैक्रियमौदारिकमपि । तैजसमाहारकं च गुरु लघुकं ॥ कार्मणमनोवचांसि—सोच्छ्वासान्यगुरुलघुकानि ॥ २५ ॥ तथोक्तं—❀ निच्छयन सवगुरुं । सव्वलहुं वा न विज्जए दव्वं ॥ ववहारन न जुज्जइ । बायरखंधेसु नसेसु ॥ २६ ॥ अगुरु लहुच-नफासा । अरूविदव्वा य होंनि नायव्वा ॥ सेसा न अठ्ठफासा । गुरुलहुआ निच्छयनयस्स ।२७। नरालिय वेनव्विय । आहारगतेयगगुरुलहूदवा ॥ कम्मगमणनासाई । एयाइं अगुरुलहुआइं ॥ ॥ २८ ॥ इति नगवतीवृत्तौ ॥ ❀

वर्णगंधरसस्पर्श—संस्थानैर्मुख्यनावतः ॥ प्रत्येकं चिंतितैर्नेदाः । स्युर्नूयांसोऽत्र ते त्वमी ॥ २९ ॥ एकस्योज्ज्वलवर्णस्य । द्वौ नेदौ गंधनेदतः ॥ संस्थानैश्च रसैश्चापि । पंच पंच निदो मताः ॥ ३० ॥ स्पर्शैस्तथाष्ट नेदाः स्यु—रेवमेकस्य विंशतिः ॥ इतीह पंचनिर्वर्णै—र्नेदानां शतमाप्यते ॥ ३१ ॥ संस्थानानां रसानां च । प्राधान्येनैवमिष्यते ॥ शतं शतं विनेदानां । ततो जातं शतत्रयं ॥ ३२ ॥ सुगंधीनां पंच पंच । नेदा वर्णैरसैस्तथा ॥ संस्थानै-

श्चाष्ट तु स्पर्शैः । स्युस्त्रयोविंशतिस्ततः ॥ ३३ ॥ दुर्गंधानामपीब्वं स्यु–स्त्रयोविंशतिरेव हि ॥
षट् चत्वारिंशदुन्नय–योगे स्युर्गंधजा इति ॥ ३४ ॥ शीतस्पर्शस्यापि न्नेदौ । द्वौ मतौ गंध-
न्नेदतः ॥ संस्थानरसवर्णैश्च । पंच पंच न्निदस्तथा ॥ ३५ ॥ शीतस्याधिकृतत्वेन । तत्रोष्ण-
स्य त्वसंन्नवात् ॥ न्निदोऽस्य शेषैः स्पर्शैः षट् । स्युस्त्रयोविंशतिस्ततः ॥ ३६ ॥ स्पर्शानामे-
वमष्टानां । प्रत्येक गंधयोरपि ॥ त्रयोविंशतिन्नेदत्वाद् । द्विशती त्रिंशदुत्तरा ॥ ३७ ॥ एवमे-
ते पुद्गलानां । न्नेदाः सर्वे प्रकीर्त्तिताः ॥ शतानि पंच सत्रिंशा–न्येवमजीवरूपिणां ॥ ३८ ॥
योऽसौ शब्दपरीणामो । द्विधा सोऽपि शुन्नोऽशुन्नः ॥ पुद्गलानां परीणामा । दशाप्येवं निरू-
पिताः ॥ ३९ ॥ गंधद्रव्यादिवद्घाता–नुकूल्येन प्रसर्पणात् ॥ तादृशद्रव्यवच्छ्रोत्रो–पघातकत-
यापि च ॥ ४० ॥ ध्वनेः पौद्गलिकत्वं स्या–द्यौक्तिकं यत्तु केचन ॥ मन्यंते व्योमगुणतां । त-
स्य तन्नोपयुज्यते ॥ ४१ ॥

अस्य व्योमगुणत्वे तु । दूरासन्नस्थशब्दयोः ॥ श्रवणे न विशेषः स्यात् । सर्वगं खलु
यन्नन्नः ॥ ४२ ॥ यथा शब्दस्तथा छाया–तपोद्योततमांस्यपि ॥ संति पौद्गलिकान्येवे—त्या-

हुः श्रीजगदीश्वराः ॥ ४३ ॥ यदादर्शादौ मुखादेः । प्रतिबिंबं निरीक्ष्यते ॥ सोऽपि छायापुद्ग
लानां । परिणामो न तु भ्रमः ॥ ४४ ॥ भ्रमो ज्ञानांतरबाह्यः । स्यान्नैतत्तु तथेक्ष्यते ॥ न च
भ्रमः स्यात्सर्वेषां । युगपत्पटुचक्षुषां ॥ ४५ ॥ सर्वस्थूलपदार्थानां । ते छायापुद्गलाः पुनः ॥
साक्षादेव प्रतीयंते । छायादर्शनतः स्फुटाः ॥ ४६ ॥ सर्वं ह्यैंद्रियकं वस्तु । चयापचयधर्मकं ॥
रश्मिवच्च रश्मयस्तु । छायापुद्गलसंहतिः ॥ ४७ ॥ तथोक्तं प्रज्ञापनावृत्तौ—❀ सर्वमैंद्रियकं
वस्तु स्थूलं चयापचयधर्मकं रश्मिवच्चेति, ❀ अवाप्य तादृक् सामग्रीं । ते छायापुद्गलाः पु-
नः ॥ विचित्रपरिणामाः स्युः । स्वभावेन तथोच्यते ॥ ४८ ॥ यदातपादियुक्ते ते । गता व-
स्तुन्यभास्वरे ॥ तदा स्वसंबंधिवस्त्वा—काराः स्युः श्यामरूपकाः ॥ ४९ ॥ दृश्यते ह्यातप-
ज्योत्स्ना दीपालोकादियोगतः ॥ स्थूलद्रव्याकृतिश्छाया । भूम्यादौ श्यामरूपिका ॥ ५० ॥ य-
दा तु खड्गादर्शादि—भास्वरद्रव्यसंगताः ॥ तदा स्युस्ते स्वसंबंधि—द्रव्यवर्णाकृतिस्पृशः ॥५१॥
आदर्शादौ प्रतिच्छाया । यत्प्रत्यक्षेण दृश्यते ॥ मूलवस्तुसदृग्वर्णा—कारादिभिः समन्विता ॥
॥ ५२ ॥ एवां स्वरूपवैचित्र्यं । न चैतन्नोपपद्यते ॥ सामग्रीसहकारेण । नानावस्था हि पु-

द्गलाः ॥ ५३ ॥ यथा दीपादिसामग्र्या । तामसा अपि पुद्गलाः ॥ प्रकाशरूपाः स्युर्दीपा–प-
गमे तादृशाः पुनः ॥ ५४ ॥ आतपोद्योतयोः पौद्गलिकत्वं तु निर्विवादं ॥ पुद्गलत्वं तु तमसां
। शीतस्पर्शतया स्फुट ॥ नीलं चलत्यंधकार–मित्यादिप्रत्ययादपि ॥ ५५ ॥ याश्चाप्रतीघाति-
ताद्याः । परोक्ताः प्रतियुक्तयः ॥ तास्तु दीपप्रकाशादि–प्रतिबंदिपराहताः ॥ ५६ ॥ इत्युपर-
म्यते, विस्तरात्तदर्थिना रत्नावतारिकादयो विलोक्याः ॥ इति पुद्गलतत्वमागमे । गदितं यत्
किल तत्वदर्शिभिः ॥ तदनूदितमत्र मद्गिरा । गुहयेव प्रतिशब्दितस्पृशा ॥ ५७ ॥ विश्वाश्चर्य-
दकीर्त्तिकीर्त्तिविजयश्रीवाचकेंद्रांतिष–द्राजश्रीतनयोऽतनिष्ट विनयः श्रीतेजपालात्मजः ॥ का-
व्यं यत्किल तत्र निश्चितजगत्तत्वप्रदीपोपमे । सर्गो निर्गलितार्थसार्थसुभगः पूर्णोऽयमेकादशः
॥ ५८ ॥ इति श्रीलोकप्रकाशे एकादशमः सर्गः संपूर्णः ॥ आ ' द्रव्यलोकप्रकाश ' पंडित
श्रावक हीरालाल हंसराजे स्वपरना श्रेयमाटे पोताना ' श्रीजैनभास्करोदय ' छापखानामां
छापी प्रसिद्ध कर्यो छे. गुरुश्रीमच्चारित्रविजयसुप्रसादात् ॥ श्रीरस्तु ॥

॥ इति श्रीद्रव्यलोकप्रकाशः समाप्तः ॥

॥ श्रीजिनाय नमः ॥

## ॥ अथ श्रीक्षेत्रलोकप्रकाशः प्रारभ्यते ॥

( कर्त्ता—श्रीविनयविजयजी उपाध्यायजी )

छपावी प्रसिद्ध करनार—पंडित श्रावक हीरालाल हंसराज ( जामनगरवाळा )

॥ अथ द्वादशमः सर्गः प्रारभ्यते ॥

जयत्यन्निनवः कोऽपि । शंखेश्वरदिनेश्वरः ॥ त्रिविष्टपोद्योतहेतु–र्नरक्षेत्रस्थितोऽपि यः ॥ ॥ १ ॥ स्वरूपं क्षेत्रलोकस्य । यथाश्रुतमथोच्यते ॥ गुरुश्रीकीर्त्तिविजय–प्रसादाप्तधिया मया ॥ २ ॥ नरं वैशाखसंस्थान–स्थितपादं कटीतटे ॥ न्यस्तहस्तद्वयं सर्व–दिक्षु लोकोऽनुगच्छति ॥ ३ ॥ चिरमूर्ध्वंदमतया । चिरंतनतयापि[1] च ॥ असौ लोकनरः श्रांत । इव कट्यां न्यधात्करौ ॥ ४ ॥ अथवाधोमुखस्थायि–महाशरावपृष्टगं ॥ एष लोकोऽनुकुरुते । शरावसंपुटं लघु ॥

१ ' चिंतनयापि ' इति द्वितीय पुस्तकपाठः ।

॥ ५ ॥ धृतः कृतो न केनापि । स्वयं सिद्धो निराश्रयः ॥ निरालंबः शाश्वतश्च । विहायसि परं स्थितः ॥ ६ ॥ उत्पत्तिविलयध्रौव्य—गुणषड्द्रव्यपूरितः ॥ मौलिस्थसिद्धमुदितो । नृत्यायेवाततक्रमः ॥ ७ ॥

अस्य सर्वस्य लोकस्य । कल्प्या भागाश्चतुर्दश ॥ एकैकश्च विभागोऽय—मेकैकरज्जुसंमितः ॥ ८ ॥ सर्वाधस्तनलोकांता—दारभ्योपरिगं तलं ॥ यावत्सप्तममेदिन्या । एका रज्जुरियं भवेत् ॥ ९ ॥ प्रत्येकमेवं सप्तानां । भुवामुपरिवर्त्तिषु ॥ तलेषु रज्जुरेकैका । स्युरेवं सप्त रज्जवः ॥ १० ॥ रत्नप्रभोपरितला—दारभ्यादिमताविषे ॥ पर्याप्तेषु विमानेषु । स्यादेषा रज्जुरष्टमी ॥ ११ ॥ तत आरभ्य नवमी । महेंद्रांते प्रकीर्त्तिता ॥ अतःपरं तु दशमी । लांतकांते समाप्यते ॥ १२ ॥ भवेदेकादशी पूर्णा । सहस्रारांतसीमनि ॥ स्याद् द्वादश्यच्युतस्यांते । क्रमादेवं त्रयोदशी ॥ १३ ॥ भवेद्ग्रैवेयकस्यांते । लोकांते च चतुर्दशी ॥ घर्मोर्ध्वभागादूर्ध्वाधः । सप्तसप्तेति रज्जवः ॥ १४ ॥

अयं चावश्यकनिर्युक्तिचूर्णिसंग्रहण्याद्यभिप्रायः, भगवत्यादौ च घर्माया अधोऽसंख्ययो-

जनैर्लोकमध्यमुक्तं, तदनुसारेण तत्र सप्तरज्जवः समाप्यंते, परं तदिह स्वल्पत्वान्न विवक्षितमिति संभाव्यते. योगशास्त्रवृत्तौ तु तत्र धरणीतलात्समभागात् सौधर्मेशानौ यावत्सार्धरज्जुः, सनत्कुमारमाहेंद्रौ यावत्सार्धरज्जुद्वयं, ब्रह्मलोकेऽर्धतृतीयरज्जवः,[1] अच्युतं यावत्पंच रज्जवः, ग्रैवेयक यावत् षट्, लोकांतं यावत्सप्त रज्जवः, इत्युक्तमिति ज्ञेयं. जीवाभिगमवृत्तावपि बहुसमरमणिज्जाओभूमि भागाओ उढ्ढं चंदिमसूरियगहगणणक्खत्ततारारूवाणं बहुइओ जोयणकोमीओ यावत् दूरं उढ्ढं उप्पइत्ता एछणं सोहम्मीसाणेत्यादिसूत्रव्याख्याने. अत्र बह्वीर्योजनकोटी[2]रूर्ध्वंदूरमुत्पलुत्य गत्वा, एतच्च सार्धरज्जूपलक्षणमित्युक्तमिति. ॥

लोकनालिस्तवेऽपि—सोहम्मंमि दिवढ्ढा । अढ्ढाइज्जायरज्जुमाहिंदे ॥ चत्तारि सहस्सारे । पणच्चुए सत्तलोगते ॥ १ ॥ इत्युक्तमिति. रज्ज्वाश्चतुर्थो भागो य—स्तत्खंडुकमिति स्मृतं ॥ विष्कंभायामपिंडैस्त—त्समानं घनहस्तवत् ॥ १५ ॥ षट्पंचाशत्खंडुकोच्चा । सचतुःखंडुकायता ॥ त्रसनाडीभवेदत्र । त्रसजीवाश्रयावधिः ॥ १६ ॥ रेखाः पंचोर्ध्वगाः सप्त—पंचा-

---

१ ‘ अर्धचतुर्था रज्जवः ’ इति द्वितीयपुस्तकपाठः २ ‘ कोटाकोटीः ’ इति द्वितीयपुस्तकपाठः

स्तिर्यगायताः ॥ आलिख्य क्वापि पट्टादौ । ज्ञावनीया तदाकृतिः ॥ १७ ॥ सा चतुर्दशरज्जूच्चा
। तथैकरज्जुविस्तृता ॥ सर्वलोकस्यार्धमानं । वक्ष्ये खंडुकसंख्यया ॥ १८ ॥ रज्ज्वाः सर्वा-
धःस्थितायाः । खंडुकेषु चतुर्ष्वपि ॥ स्युरष्टाविंशतिस्तिर्यक्-खंडुकानीति तद्विदः ॥ १९ ॥
तत्रोह्य त्रसनाडीस्थं । खंडुकानां चतुष्टयं ॥ द्वादश द्वादश ततः । परितः पार्श्वयोर्द्वयोः ॥
॥ २० ॥ एवं सर्वत्रापि. षड्विंशतिर्द्वितीयस्या । रज्ज्वाः खंडचतुष्टये ॥ तृतीयस्याः खंडुकेषु
। चतुर्षु जिनसंख्यया ॥ २१ ॥ नखसंख्यानि तुर्याया । रज्ज्वास्तेषु चतुर्ष्वपि ॥ पंचम्याः
षोडश दश । षष्ठ्याः खंडचतुष्टये ॥ २२ ॥ सप्तम्या अपि खंडेषु । चतुर्षु तच्चतुष्टयं ॥ अष्ट-
म्याः प्राक् खंडुके द्वे । चतुःखंडुकविस्तृते ॥ २३ ॥ अपरे द्वे खंडुके च । षट्खंडुकसमातते ॥
अष्टखंडुकविस्तारं । नवम्या आद्यखंडुकं ॥ २४ ॥ दशखंडुकविस्तारं । द्वितीयं द्वे ततः परे ॥ द्वा-
दशखंडुकव्यासे । स्युरिति नवरज्जवः ॥ २५ ॥ दशम्याः प्राच्यमर्द्धं च । षोडशखंडुकातत ॥ परमर्द्ध
तथैतस्या । नखखंडुकविस्तृतं ॥ २६ ॥ एकादश्याः पूर्वमर्द्ध-मपि तावत्समाततं ॥ द्वितीय-
मर्द्धमस्याश्च । षोडशखंडुकाततं ॥ २७ ॥ द्वादश्याः प्राक्तनं त्वर्द्धं । प्रोक्तं द्वादशखंडुकं ॥ द-

शखंडुकविस्तार–मंत्यमर्द्धमुदीरितं ॥ २८ ॥ आद्यं खंडं त्रयोदश्या । निर्दिष्टं तावदाततं ॥ अष्टखंडुकविस्तीर्ण–मग्रिमं[1] खंडुकत्रयं ॥ २९ ॥ चतुर्दश्याः प्राक्तनेऽर्द्धे । खंडुकानि दशायतिः ॥ चत्वारि खंडुकान्यस्या । विस्तृतिः पश्चिमेऽर्द्धके ॥ ३० ॥ प्रत्येकमेषामंकानां । स्वस्ववर्गविधानतः ॥ भवेद्वर्गितलोकस्य । मितिः खंडुकसंख्यया ॥ ३१ ॥ भवेत्स तद्गुणो वर्ग । इति वर्गस्य लक्षणं ॥ यथाष्टाविंशतेः सप्त–शती चतुरशीतियुक् ॥ ३२ ॥ एवं सर्वत्र स्थापना विलोक्या,

खंडुकानां शतान्यष्टा–वधिकानि च षोडश ॥ दृष्टलोके दृष्टलोके–रुक्तानि सर्वसंख्यया ॥ ३३ ॥ प्रोक्तं वर्गितलोके च । सर्वाग्रं खंडुकोद्भवं ॥ सहस्राणि पंचदश । द्वे शते नवतिश्च षट् ॥ ३४ ॥ लोकस्य वर्गकरणे । ज्ञेयमेतत्प्रयोजनं ॥ प्रमाणं सर्वतोऽनेन । लोकस्य भवति ध्रुवं ॥ ३५ ॥ दशहस्तपृथोर्यद्व–त्तावद्दीर्घस्य वेश्मनः ॥ दशानां वर्गकरणे । सर्वं क्षेत्रफलं भवेत् ॥३६॥ षट्पंचाशत्खड्डकोच्च–पथोक्तपृथुलस्य च ॥ लोकस्यास्य त्रयो भेदा । म-

१ 'मध्यमं' इति हि० पु० पाठः ।

ध्याधऊर्ध्वविभेदतः ॥ ३७ ॥ ऊर्ध्वमध्याधःस्थितत्वा–द्व्यपदिश्यंत इत्यमी ॥ यथोत्कृष्टमध्य-
हीन–परिणामात्तथोदिताः ॥ ३८ ॥ यदुक्तं भगवतीवृत्तौ स्थानांगवृत्तौ च—आहचहो प-
रिणामो । खेत्तणुभावेण जेण उस्सन्नं ॥ असुहो अहोत्ति भणिउ । दव्वाणं तेणहो लोउ ॥
॥ ३९ ॥ उड्ढं उवरिं जंठिअ । सुहखित्तं खित्तउ अदव्वगुणा ॥ उप्पज्जंति सुभावा । जेण तउ
उड्ढलोउत्ति ॥ ४० ॥ मझणुभावं खित्तं । जं तंतिवयण पज्जुवउ ॥ भन्नइ तिरिअविसालं ।
अओअंतिं तिरियलोगोत्ति ॥ ४१ ॥ रत्नप्रभाया उपरि । क्षुल्लकप्रतरद्वये ॥ मेर्वतः कंदोर्ध्व-
भागे । रुचकोऽष्टप्रदेशकः ॥ ४२ ॥

तत्रोपरिस्थे प्रतरे । खप्रदेशचतुष्टयं ॥ विद्यते गोस्तनाकारं । तथैवाधस्तनेऽपि तत्र ॥
॥ ४३ ॥ खप्रदेशाष्टकं तच्चो–पर्यधो भावतः स्थितं ॥ चतुरैश्चतुरस्रात्म । प्रोच्यते रुचकाख्य-
या ॥ ४४ ॥ तस्मान्नवशतान्यूर्ध्व–मधो नवशतानि च ॥ एतावान्मध्यलोकः स्या–दाकृत्या
झल्लरीनिभः ॥४५॥ योजनानां नवशता–न्यतीत्य रुचकादितः ॥ आलोकांतमधोलोक–स्त-
दाकृतिरुदाहृतः ॥ ४६ ॥ गत्वा नवशतान्येव । रुचकाद्योजनान्यथ ॥ ऊर्ध्वीकृतमृदंगाभ–ऊ-

ध्र्वलोकः प्रकीर्त्तितः ॥ ४७ ॥ सातिरेकसप्तरज्जु–मानोऽधोलोक इष्यते ॥ ऊर्ध्वलोकः किंचिदून–सप्तरज्जुमितः स्मृतः ॥ ४८ ॥ घर्माघनोदधिघन–तनुवातान् विहायसः ॥ असंख्यभागं चातीत्य । मध्यं लोकस्य कीर्त्तितं ॥ ४९ ॥ अस्मादूर्ध्वमधश्चैव । संपूर्णाः सप्तरज्जवः ॥ अथ त्रयाणां लोकानां । प्रत्येकं मध्यमुच्यते ॥ ५० ॥ घर्मायां सर्वतः क्षुल्ल–मत्रास्ति प्रतरद्वयं ॥ मेचकाकारमेकैकं । खप्रदेशात्मकं च तत् ॥ ५१ ॥ रुचकेऽत्र प्रदेशानां । यच्चतुष्कद्वयं स्थितं ॥ तत्सम श्रेणिकं तच्च । विज्ञेयं प्रतरद्वयं ॥ ५२ ॥ लोकवृद्धिरूर्ध्वमुखी । तयोरुपरि संस्थितात् ॥ अधःस्थितात्पुनस्तस्मा—ल्लोकवृद्धिरधोमुखी ॥ ५३ ॥

तस्मिंश्च लोकपुरुष–कटीतटपटीयसि ॥ मध्यभागे समभूमि–ज्ञापको रुचकोऽस्ति यः ॥ ५४ ॥ स एव मध्यलोकस्य । मध्यमुक्तं महात्मभिः ॥ दिग्विदिग्निर्गमश्चास्मा–द्भानोरिव शरोद्गमः ॥ ५५ ॥ तथाहुः—अठ्ठपएसो रुअगो । तिरिअलोगस्स मझयारंमि ॥ एस पभवो दिसाणं । एसेव भवे अणुदिसाणं ॥ ५६ ॥ पूर्वापूर्वदक्षिणा च । दक्षिणादक्षिणा परा ॥ पश्चिमापश्चिमोदीची–चोत्तरोत्तरपूर्विका ॥ ५७ ॥ ऊर्ध्वा तथाधस्तनी च । दशैवं गदिता दि

शः ॥ दिशः षट् तत्र शुद्धाख्या–श्चतस्रो विदिशोऽपराः ॥ ५८ ॥ विजयद्वारदिक्प्राची । प्रादक्षिण्यात्ततः पराः ॥ एतासां देवतायोगा–न्नामान्यूचुः पराण्यपि ॥ ५९ ॥ ऐंद्र्याग्नेयी तथा याम्या । नैर्ऋती किंच वारुणी ॥ वायव्येतः परा सौम्ये–शानी च विमला तमा ॥ ६० ॥ रुचकानतरं दिक्षु । द्वौ द्वौ व्योम्नः प्रदेशकौ ॥ विदिक्षु पुनरेकैक । एषाद्या पंक्तिराहिता ॥६१॥ द्वितीयस्यां पुनः पंक्तौ । चत्वारो दिक्प्रदेशकाः ॥ एवं द्वौ द्वौ विवर्द्धेते । प्रतिपंक्तिप्रदेशकौ ॥ ६२ ॥ एवं च—

असंख्येयतमा पंक्ति–रसंख्येयप्रदेशिका ॥ लोकांतं स्पृशति ह्यान्या–मंताऽन्यां नृशमायता ॥ ६३ ॥ ततो लोकस्य वृत्तत्वा–त्प्रातिपंक्तिप्रदेशकौ ॥ हीयेते तेन लोकांते । पंक्तिश्चतुःप्रदेशिका ॥ ६४ ॥ एकतो द्विप्रदेशत्वं । चतुःप्रदेशतान्यतः ॥ ततो हि मुरजाकारो । भवेल्लोकदिशामिह ॥ ६५ ॥ एकतो यस्य संकीर्णं । मुखं पृथुलमन्यतः ॥ स मृदंगविशेषः स्या–न्मुरजेति प्रसिद्धिभाक् ॥ ६६ ॥ यथैकस्मिन् खप्रतरे । भाविता मुरजाकृतिः ॥ सर्वेष्वपि प्रतरेषु । तथा भाव्या दिगाकृतौ ॥६७॥ शकटोर्ध्वीस्थिताः किंचा–लोकव्यपेक्षया दिशः ॥ तुंग तु शक-

टस्यास्य । रुचकोपरि भाव्यतां ॥ ६८ ॥ रुचकस्योपरितनं । यत्प्रदेशचतुष्टयं ॥ विमलाया दिशस्तच्च । प्रोक्तमादितया जिनैः ॥ ६९ ॥ तत्समश्रेणिकैस्ताव-न्मितैर्जाता प्रदेशकैः ॥ ऊर्ध्वलोकालोकगता । विमला दिगुदीरिता ॥ ७० ॥ रुचकस्याधस्तनं य-त्प्रदेशानां चतुष्टयं ॥ तत्तमायादिशः प्रोक्तं । जिनैरादितया श्रुते ॥ ७१ ॥ तन्मूला विमला तुल्या । किंत्वधोगामिनी तमा ॥ तदिमे रुचकाकारे । चतुःप्रदेशविस्तृते ॥ ७२ ॥

द्वयोर्द्वयोर्दिशोरंत-श्छिन्नमुक्तावलीसमाः ॥ एकप्रदेशा विदिशो । लोकालोकांतसीमया ॥ ॥ ७३ ॥ दिशः स्युर्द्विप्रदेशाद्या । द्व्युत्तरा रुचकोद्भवाः ॥ विदिशोऽनुत्तरा एक-प्रदेशा रुचकोद्भवाः ॥ ७४ ॥ दिशोऽप्येता असंख्येय-प्रदेशालोकसीमया ॥ अलोकापेक्षया सर्वाः । स्युरनंतप्रदेशिकाः ॥ ७५ ॥ प्रत्येकमासां सर्वासां । दिशां सर्वे प्रदेशकाः ॥ कृतयुग्ममिताः संति । सिद्धांतपरिभाषया ॥ ७६ ॥ तदुक्तमाचारांगनिर्युक्तौ—'सव्वा य हवंति कडजुम्मेत्ति' कृतयुग्मादिस्वरूपं चैवं—चतुष्केण ह्रियमाण-श्चतुःशेषो हि यो भवेत् ॥ अभावाद्भागशेषस्य । संख्यातः कृतयुग्मकः ॥ १ ॥ तदुक्तं भगवत्यष्टादशशतकचतुर्थोद्देशकवृत्तौ—कृतं सि-

ढं पूर्णं ततः परस्य राशिसंज्ञान्तरस्याभावेन, न त्वोजःप्रभृतिवदपूर्णं यद् युग्मं समराशिवि-
शेषस्तत्कृतयुग्ममिति. चतुष्केण ह्रियमाण–स्त्रिशेषस्त्र्योज उच्यते ॥ द्विशेषो द्वापरयुग्मः ।
कल्योजश्चैकशेषकः ॥ २ ॥ तथा च भगवतीसूत्रे—जेणं रासीचउक्कगेणं अवहारेणं अव-
हीरमाणे अवहीरमाणे चउपज्जवसिए सेणं कडजुम्मे. एवं तिपज्जवसिए तेओए, दुपज्जवसिए
दावरजुम्मे, एगपज्जवसिए कलिओगे इति. यो मूलतोऽपि राशिः स्या–च्चतुस्त्रिद्व्येकरूपकः ॥
सोऽपि ज्ञेयः कृतयुग्म–त्र्योजादिनामधेयभाक् ॥ ३ ॥ तदुक्तं भगवतीवृत्तौ—

त्रिभिरादित एव कृतयुग्माद्युपरिवर्त्तिभिरोजो विषमराशिविशेषस्त्र्योज इति द्वाभ्या-
मादित एव कृतयुग्माद्युपरिवर्त्तिभ्यां यदपरं युग्मादन्यसमनिपातनविधिर्द्वापरयुग्मं, कल्येन
एकेन आदित एव कृतयुग्माद्युपरिवर्त्तिना ओजो विषमराशिविशेषः कल्योज इति. कर्मप्र-
कृतिवृत्तौ त्वेतेषां निरुक्तिरेवं दृश्यते—इह कश्चिद्विवक्षितो राशिः स्थाप्यते, तस्य कलिद्वाप-
रत्रेताकृतयुगसंज्ञैश्चतुर्भिर्भागो ह्रियते. भागे च हृते सति यद्येकः शेषो भवति, तर्हि स रा-
शिः कल्योज उच्यते, यथा त्रयोदश. अथ द्वौ शेषौ तर्हि द्वापरयुग्मो, यथा चतुर्दश. अ-

घ त्रयः शेषास्ततस्त्रेतौजो, यथा पंचदश. यदा तु न किंचिदवतिष्ठते, किंतु सर्वात्मना निर्ले-
प एव भवति, तदा स कृतयुगो, यथा षोडशेत्यादि. लोकमाश्रित्य साधंता । एताः सर्वा अ-
पि स्फुटं ॥ साद्यनंता विनिर्दिष्टा । अलोकापेक्षया पुनः ॥ ७६ ॥

दिशामन्येऽपि भेदाः स्यु-र्नामदिक् (१) स्थापनाख्यदिक् २ द्रव्य ३ क्षेत्र ४ ताप ५ भाव ६ । प्रज्ञापका (७) भिधा दिशः ॥७७॥ यद्द्रव्यस्य सचित्तादे-र्दिगित्येवं कृताभिधा ॥ सा नामदिग् वि-
निर्दिष्टा । शिष्टैर्दृष्टजगत्त्रयैः ॥ ७८ ॥ पट्टादौ चित्रितस्याथ । जंबूद्वीपादिकस्य यत् ॥ दिग्वि-
दिक्स्थापनं सोक्ता । स्थापनाशा विशारदैः ॥ ७९ ॥ स्याद् द्रव्यदिगागमतो । नो आगमत
इत्यपि ॥ दिक्पदार्थबुधस्तत्रा-नुपयुक्तः किलादिमा ॥ ८० ॥ त्रिधा च नोआगमतः । प्रज्ञ-
प्ता द्रव्यतो दिशः ॥ तत्राद्या दिक्पदार्थज्ञ-शरीरं जीववर्जितं ॥ ८१ ॥ द्वितीया च दिक्प-
दार्थं । ज्ञास्यन् बालादिरुच्यते ॥ ज्ञशरीरभव्यदेह-व्यतिरिक्ताप्यथोच्यते ॥ ८२ ॥ या प्रवृ-
त्ता समाश्रित्य । द्रव्यं त्रयोदशाणुकं ॥ तावद्व्योमांशावगाढं । द्रव्यदिक् सा निवेदिता ॥८३॥
इतो न्यूनाणुजाते तु । दिग्विदिक्परिकल्पनं ॥ न स्याद् द्रव्ये ततश्चैत-ज्जघन्यं दिगपेक्षया

॥ ८४ ॥ त्रिबाहुकं नवप्रादे–शिकं समभिलिख्य च ॥ कार्यैकैकगृहवृद्धि–र्ध्रुवं दिक्षु चतसृ
षु ॥ ८५ ॥ क्षेत्राशास्त्वधुनैवोक्ता–स्तापाशाः पुनराहिताः ॥ सूर्योदयापेक्षयैव । पूर्वाद्यास्ता
यथाक्रमं ॥ ८६ ॥ यत्र यस्योदेति भानुः । सा पूर्वानुक्रमात्पराः ॥ विसंवदंत एताश्च । क्षे-
त्रदिग्भिर्यथातथ्यं ॥ ८७ ॥ तथाहि–रुचकापेक्षया या स्या–द्दक्षिणा क्षेत्रलक्षणा ॥ तापाशापे-
क्षया सा स्या–दस्माकं ध्रुवमुत्तरा ॥ ८८ ॥ अष्टादशविधाभाव–दिशस्तु जगदीश्वरैः ॥ प्रो-
क्ता मनुष्यादिभेद–भिन्ना एवं भवति ताः ॥ ८९ ॥ कर्माकर्मभूमिजांत–र्द्वीपसंमूर्छजा नराः
॥ तथा द्वित्रिचतुःपंचें–द्रियास्तिर्यंच आहिताः ॥ ९० ॥ कायाश्चतुर्धा पृथिवी–जलतेजोऽनि-
ला इति ॥ स्युर्वनस्पतयो मूल–स्कंधाग्रपर्वसंभवाः ॥ ९१ ॥ षोडशैता दिशो देव–नारकांगि-
समन्विताः ॥ भवंत्यष्टादश भाव–दिशस्तीर्थंकरोदिताः ॥ ९२ ॥ यत्र क्वचिदपि स्थित्वा ।
प्रज्ञापको दिशां बलात् ॥ निमित्तं वक्ति धर्मं वा । गुरुः प्रज्ञापकाख्यदिक् ॥ ९३ ॥ यस्या
दिशः संमुखस्थः । प्रज्ञापकः प्ररूपयेत् ॥ धर्मं निमित्तादिकं वा । सा पूर्वानुक्रमात्पराः ॥
॥ ९४ ॥ एताश्चाष्टादशविधाः । स्युस्तिर्यक् तत्र षोडश ॥ तिस्रस्तिस्रः प्रतिविदिक्–दिक्षुवे-

कैकेति कल्पनात् ॥ ९५ ॥ शकटोर्ध्वोर्ध्वस्थिताः प्रज्ञा–पकोपांतेति संकटाः ॥ विस्तीर्णा बहिरूर्ध्वा–ऽ । युक्ताश्चाष्टादश स्मृताः ॥ ९६ ॥ अथ प्रकृतं–

पृथिव्योस्तुर्यपंचम्यो–र्मध्ये यच्चियदंतरं ॥ तदर्द्धेऽधस्तने न्यूने–ऽधोलोकमध्यमीरितं ॥ ॥ ९७ ॥ अधस्ताद्ब्रह्मलोकस्य । रिष्टाख्यप्रस्तटे स्फुटं ॥ मध्यं तत्रोर्ध्वलोकस्य । लोकनाथैर्विलोकितं ॥ ९८ ॥ तथा—पूर्वैकरज्जुपृथुलात् । क्षुल्लकप्रतरादितः ॥ ऊर्ध्वं गतेंगुलासंख्य–भागे तिर्यग्विवर्द्धते ॥ ९९ ॥ अंगुलस्यासंख्यभागः । परमत्रेति भाव्यतां ॥ ऊर्ध्वंगादंगुलस्यांशा–दंशस्तिर्यग्गतो लघुः ॥ १०० ॥ एवमधोऽपि. एवं चार्ध्वलोकमध्यं । पृथुत्वं पंचरज्जवः ॥ हीयतेऽतस्तथैवोर्ध्वं । रज्जुरेकावशिष्यते ॥ १ ॥ किंच—रज्जुमानाद् द्वितीयस्मात् । क्षुल्लकप्रतराच्चितिः ॥ अधोमुखी च तिर्यक् चां–गुलासंख्यांशमात्रिका ॥ २ ॥ एवं चाधोलोकमूले । पृथुत्वं सप्तरज्जवः ॥ अथात्र सूची रज्ज्वादि–मानं किंचिन्निगद्यते ॥ ३ ॥ इदं च संग्रहणीवृत्त्यनुसारेण, लोकनालीस्तवे तु प्रदेशवृद्धिहानी दृश्येते, लोकतिर्यग्वृद्धौ ॥ चतुर्भिः खडुकैः सूची । रज्जुः श्रेण्या व्यवस्थितैः ॥ ताभिश्चतुर्भिः प्रतर–रज्जुः षोडशखं-

डुका ॥ ४ ॥ चतसृन्निश्च प्रतर–रज्जुर्न्निर्जायते किल ॥ घनरज्जुश्चतुःषष्टिः । खंडुकाः सर्वतः समाः ॥ ५ ॥

अष्टाविंशं शतमथ । ऊर्ध्वं षट्सप्ततिर्मता ॥ सर्वाश्चतुर्भिरधिके । द्वे शते सूचिरज्जवः ॥ ॥ ६ ॥ इतैर्मिता अधोलोके । ऊर्ध्वमेकोनविंशतिः ॥ एकपंचाशदाख्याताः । सर्वाः प्रतररज्जवः ॥ ७ ॥ अधोऽष्टावूर्ध्वलोके च । निर्दिष्टा घनरज्जवः ॥ पादोनाः पंच सर्वाग्रे । स्युः पादोनास्त्रयोदश ॥ ८ ॥ इदं दृष्टलोकमानं, वर्णितस्य च लोकस्या–धोलोके घनरज्जवः ॥ सार्ध्या पंचनवत्या–ऽधिकमेकं शतं मतं ॥ ए ॥ ऊर्ध्वलोके भवेत्सार्धा । त्रिषष्टिः सर्वसंख्यया ॥ ध्रुवमेकोनया चत्वा–रिंशताढ्य शतद्वयं ॥ १० ॥ आसां चतुर्गुणत्वे च । सर्वाः प्रतररज्जवः ॥ शतानि नव षट्पंचा–शता युक्तानि तत्र च ॥ ११ ॥ शतानि सप्तद्व्यधिका–न्यधोलोके प्रकीर्त्तिताः ॥ ऊर्ध्वलोके द्वे शते च । चतुःपंचाशताधिके ॥ १२ ॥ चतुर्गुणत्वे चैतासां । भवति सूचिरज्जवः ॥ चतुर्विंशत्युपेतानि । त्वष्टात्रिंशच्छतानि वै ॥ १३ ॥ तत्रापि–अधोलोके शतान्यष्टा–विंशतिः स्फुटमष्ट च ॥ ऊर्ध्वलोके पुनस्तासां । सहस्रंषोमशाधिक ॥

॥ १४ ॥ इति वर्णितलोकमानं ॥ घनीकृतो भवेल्लोकः । सप्तरज्जुमितोऽभितः ॥ विष्कंभा-
यामबाहल्यैः । सद्बुद्ध्यैवं विधीयते ॥ १५ ॥ एकरज्जुविस्तृताया–स्त्रसनाड्यास्तु दक्षिणं ॥ अ-
धोलोकवर्त्तिखंड–मूनरज्जुत्रयाततं ॥ १६ ॥ सर्वाधस्ताद्धीयमान–विस्तारत्वाडुपर्यथ ॥ र-
ज्ज्वसंख्येयभागोरु–सप्तरज्जूच्छ्रयं च तत् ॥ १७ ॥ गृहीत्वोत्तरदिग्भागे । त्रसनाड्याः प्रक-
ल्प्यते ॥ विरचय्याधस्तनांश–मुपर्युपरिगं त्वधः ॥ १८ ॥ ततोऽधस्तनलोकार्द्धं । किंचिदूनच-
तुष्टयं ॥ रज्जूनामाततं साति–रेकं सप्तकमुच्छ्रितं ॥ १९ ॥ क्वचित्किंचिदूनसप्त–रज्जुबाह-
ल्यमप्यथः ॥ अपरत्र त्वनियतं । बाहल्यमिदमास्थितं ॥ २० ॥ किंच—
ऊर्ध्वलोके त्रसनाड्या । दक्षिणभागवर्त्तिनी ॥ द्वे खंडे ये कटीन्यस्त–हस्तकूर्परसंस्थि-
ते ॥ २१ ॥ ब्रह्मलोकमध्यदेशा–दधस्तनं तथोर्ध्वगं ॥ ते प्रत्येकं ब्रह्मलोके । मध्ये द्विरज्जु-
विस्तृते ॥ २२ ॥ किंचिदूनार्द्धार्द्धरज्जु–त्रयोच्छ्रिते च ते उभे ॥ त्रसनाड्या वामपार्श्वे । वैप-
रीत्येन कल्पयेत् ॥ २३ ॥ ततश्च रज्ज्वाततया । त्रसनाड्या समन्वितं ॥ यादृक्षमूर्ध्वलोका-
र्द्धं । जातं तदभिधीयते ॥ २४ ॥ अंगुलसहस्रांशाभ्यां । द्वाभ्यां रज्जुलयं युतं ॥ विष्कंभतः

बाहल्यतो ब्रह्मलोक–मध्ये तत्पंचरज्जुकं ॥
किंचिदूना । रज्जवः सप्त चोच्छ्रयात् ॥ २५ ॥ गृहीत्वार्द्धं निवेशयेत् ॥
अन्यस्थाने त्वनियत–बाहल्यमिदमास्थितं ॥ २६ ॥ तदंतदुपरितनं । लोकखण्डोच्छ्रयेऽस्ति
अवस्तनं संवर्त्तित–लोकार्द्धस्योत्तरांतिके ॥ २७ ॥ एवं संयोजने चाधो–लोकार्द्धबाहल्य–पूर्त्यै चो-
यत् ॥ अतिरिक्तमुपरितना–त्तत्खण्डात्तिन्निगृह्य च ॥ २८ ॥ ऊर्ध्वलोकार्द्धबाहल्य–पूर्त्यै चो- तत्रास्त्यधोलोकखंडं ।
र्ध्वायतं न्यसेत् ॥ एवमस्य सातिरेका । बाहल्यं पंच रज्जवः ॥ २९ ॥ ततश्चाधस्तने खण्डे ।
देशोनसप्तरज्जुकं ॥ बाहल्येनोपरितनं । त्वधिकपंचरज्जुक ॥ ३० ॥ सर्वस्यास्य
न्यूनं रज्जुद्वयं किल ॥ अतिरिक्तमतोऽस्यार्द्धं । द्वितीयस्मिन्निवेशयेत् ॥ ३१ ॥
चतुरस्री–कृतस्य भवति क्वचिन् ॥ रज्ज्वसंख्येयभागाद्या । बाहल्यं रज्जवो हि षट् ॥३२॥
तथापि व्यवहारेण । बाहल्यं सप्त रज्जवः ॥ मन्यते व्यवहारो हि । वस्तुन्यूनेऽपि पूर्णतां ॥
॥ ३३ ॥ विष्कंभायामतोऽप्येवं । देशोनाः सप्त रज्जवः ॥ व्यवहारेण विज्ञेयाः । संपूर्णाः स-
प्त रज्जवः ॥ ३४ ॥ एवमेष सप्तरज्जु–मानो लोको घनीकृतः ॥ यत्र क्वाप्यागमेऽत्रांश—
श्रेणिरुक्तास्य सा ध्रुवं ॥ ३५ ॥ अस्मिन् घनीकृते लोके । प्रज्ञप्ता घनरज्जवः ॥ त्रिचत्वारिं-

शताढ्यानि । शतानि त्रीणि तात्विकैः ॥ ३६ ॥ तच्चैवं—

आयामरज्जवः सप्त । सप्तभिर्व्यासरज्जुभिः ॥ हता एकोनपंचाश—द्भवंति घनरज्जवः ॥ ॥ ३७ ॥ सप्तभिर्गुणिता एता । बाहल्यसत्करज्जुभिः ॥ यथोक्तमानाः पूर्वोक्ता । भवंति घनरज्जवः ॥ ३८ ॥ चतुर्गुणत्वे चासां स्युः । सर्वाः प्रतररज्जवः ॥ अधिकानि द्विसप्ततया । शतान्येव त्रयोदश ॥ ३९ ॥ आसामपि चतुर्घ्नत्वे । भवंति सूचिरज्जवः ॥ चतुःपंचाशच्छतानि । ह्यष्टाशीत्यधिकानि च ॥ ४० ॥ चतुर्भिर्गुणने त्वासां । खंडुकान्येकविंशतिः ॥ सहस्राणि नवशती । द्विपंचाशत्समन्विता ॥ ४१ ॥ इति घनीकृतलोकमानं ॥ असंख्याभिर्योजनानां । कोटाकोटीभिरुन्मितः ॥ नायं लोको गणनया । वक्तुं केनापि शक्यते ॥ ४२ ॥ ततो दृष्टांततः स्पष्टं । निर्दिष्टो ज्ञानदृष्टिभिः ॥ स चायमुदितः पंच—मांगस्यैकादशे शते ॥ ४३ ॥ तथाहि—जंबूद्वीपाभिधे द्वीपे । परितो मेरुचूलिकां ॥ षड्निर्जराः स्थिताः किंच । चतस्रो दिक्कुमारिकाः ॥ ४४ ॥ बलिपिंडान् समादाय । बाह्याभिमुख्यतः स्थिताः ॥ जंबूद्वीपस्य पर्यंत—देशे दिक्षु चतसृषु ॥ ४५ ॥ क्षिपंति बलिपिंडांस्ताः । स्वस्वदिक्षु बहिर्मुखान् ॥ तेषामथै-

कक्षः कश्चित् । त्रसां मध्यात्सुधाभुजां ॥ ४६ ॥

कक्षः कश्चित् । त्रसां मध्यात्सुधाभुजां ॥ जंबूद्वीपस्य परितो । भ्राम्यन् गत्या
पृथ्वीपीठमसंप्राप्तान् । सर्वानप्याददीत तान् ॥ आशासु षट्सु युगपत् ।
यथा द्रुत ॥ ४७ ॥ तया गत्याथ ते देवा । लोकांतस्य दिदृक्षया ॥ पुत्रो वर्ष-
प्रस्थित : पथिका इव ॥ ४८ ॥ इतश्च तस्मिन् समये । कस्यचिद्व्यवहारिणः ॥
सहस्रायु—र्जातोऽसौ वर्द्धते क्रमात् ॥ ४९ ॥ क्रमादथास्य पितरौ । विपन्नावायुषः क्षयात् ॥
स्वायुः समापयामास । तत एषोऽप्यनुक्रमात् ॥ ५० ॥ कालेन कियता चास्य । अस्थिम-
ज्जाः क्षय गताः ॥ लोकांतं न च ते देवाः । प्रापुः श्रांता इवाश्रयं ॥ ५१ ॥ अस्य वंशः स-
प्तमोऽपि । क्रमेणैवं क्षयं गतः ॥ कालेन तस्य नामादि । समस्तमस्तमीयिवत् ॥ ५२ ॥
अथास्मिन् समये कश्चित् । सर्वज्ञं यदि पृच्छति ॥ क्षेत्र तेषां किमगतं । गतं वा बहुलं प्र-
ज्ञो ॥ ५३ ॥ तदादिशेज्जिनस्तेषां । गतं बह्वगतं मितं ॥ गतादन्यदसंख्येयंशे । संख्यघ्नमगता-
च्च तत् ॥ ५४ ॥ संवर्त्तितचतुरस्त्री—कृतस्य लोकस्य मानमेतदिति ॥ संभवति यथावस्थित
—लोके तु तस्य वैषम्यात् ॥ ५५ ॥ इति भगवतीशतक ११ उद्देशे १०

वसंति तत्राधोलोके । भवनाधिपनारकाः ॥ तिर्यक् च व्यंतरनरा–द्विद्वीपज्योतिषादयः ॥ ५६ ॥ वैमानिकासुराः सिद्धा । ऊर्ध्वलोके वसंति च ॥ इति सामान्यतो लोक–स्वरूपमिह वर्णितं ॥ ५७ ॥ अथ त्रयाणां लोकानां । प्रत्येकं तन्निरूप्यते ॥ तत्रादौ कथ्यते किंचि–दधोलोको विशेषतः ॥ ५८ ॥ पृथिव्यस्तत्र निर्दिष्टाः । सप्त सप्तभयापहैः ॥ गोत्रतो नामतश्चैवं । गोत्रभित्प्रणतकमैः ॥५९॥ आद्या रत्नप्रभापृथ्वी । द्वितीया शर्कराप्रभा ॥ ततः परा च पृथिवी । तृतीया वालुकाप्रभा ॥ ६० ॥ पंकप्रभा चतुर्थी स्या–द्धूमप्रभा च पंचमी ॥ षष्ठी तमःप्रभा सप्त–मी स्यात्तमस्तमःप्रभा ॥ ६१ ॥ अन्वर्थजानि सप्तानां । गोत्राण्याहुरमूनि वै ॥ रत्नादीनां प्रभायोगा–त्प्रथितानि तथा तथा ॥ ६२ ॥ घर्मा १ वंशा २ तथा शैलां ३ । जना ४ रिष्टा ५ मघा ६ तथा ॥ माघवती ७ ति नामानि । निरन्वर्थान्यमूनि यत् ॥ ६३ ॥ अधो महत्तमं छत्रं । तस्योपरि ततो लघु ॥ छत्राणामिति सप्तानां । स्थापितानां समा इमाः ॥ ६४ ॥ स्यातासायामविष्कंभौ। सप्तम्याः सप्तरज्जवः ॥ षष्ठ्याः षट् पंच पंचम्या–स्ताश्चतस्रोंजनाभुवः ॥ ६५ ॥

रज्जुत्रयं तृतीयाया । द्वितीयायास्तु तद्द्वयं ॥ स्यातामायामविष्कंभौ । रज्जुरेकादि-
मक्षितेः ॥ ६६ ॥ रत्नप्रभाया बाहल्यं । योजनानां प्रकीर्त्तितं ॥ एकं लक्षं सहस्राणा–मशी-
त्या साधिकं किल ॥ ६७ ॥ तच्चैवं—सहस्राणि षोडशाद्यं । खरकांड द्वितीयक ॥ सहस्राः
पंकबहुलं । चतुरशीतिरीरितं ॥ ६८ ॥ तृतीयं जलबहुलं । स्यादशीतिसहस्रकं ॥ ततोऽशी-
तिसहस्राढ्यं । लक्षं पिंडोऽग्रिमक्षितेः ॥ ६९ ॥ खरकांडं च कांडानि । षोडशोक्तानि ता-
त्त्विकैः ॥ प्रत्येकमेषां बाहल्यं । योजनानां सहस्रकं ॥ ७० ॥ तत्रादिमं रत्नकांडं १ । वज्र-
कांडं २ द्वितीयकं ॥ वैडूर्यं ३ लोहिताख्यं ४ च । मसारगल्ल ५ संज्ञकं ॥ ७१ ॥ हंसगर्भ
६ च पुलकं ७ । सौगंधिकाभिधं ८ परं ॥ ज्योतीरस ९ मंजनं १० चां–जनपुलक ११ सं-
ज्ञकं ॥ ७२ ॥ रजतं १२ जातरूपं १३ च । अंकं १४ स्फटिकसंज्ञकं १५ ॥ रिष्टकांडं चेत्य-
मूनि । यथार्थाख्यान्यनुक्रमात् ॥ ७३ ॥ एतेषु तत्तज्जातीय–रत्नबाहुल्ययोगतः ॥ रत्नप्रभे-
ति गोत्रेण । पृथ्वीयं परिकीर्त्यते ॥ ७४ ॥ तिर्यग्लोके भवंत्यस्या । योजनानां शता नव ॥
कुर्ध्वगाः शेषपिंडस्तु । स्यादधोलोकसंस्थितः ॥ ७६ ॥ चतुर्भिश्च किलाधारै–र्भूमिरेषा प्रति-

ष्ठिता ॥ घनोदधिघनवात—तनुवातमरुत्पथैः ॥ ७७ ॥ त्रिभिश्च वलयैरेषा । परितः परिवेष्टि-
ता ॥ घनोदधिघनवात—तनुवातात्मकैः क्रमात् ॥ ७८ ॥ तत्र प्रतिष्ठिता भूमि—राधारेण घ-
नोदधेः ॥ महाकटाहविन्यस्त—स्त्यानाज्यघनपिंमवत् ॥ ७९ ॥ योजनानां सहस्राणि । विं-
शतिः परिकीर्त्तितं ॥ घनोदधेर्मध्यभागे । बाहल्यं क्रमतस्ततः ॥ ८० ॥ प्रदेशहान्यासौ ही-
य—मानोऽत्यंततनूभवन् ॥ पृथ्वीं वलयाकारेण । स्वयमावृत्य तिष्ठति ॥ ८१ ॥ युग्मं ॥

वलयस्यास्य विष्कंभः । प्रज्ञप्तो योजनानि षट् ॥ उच्चत्वं तु वसुमती—बाहल्यस्यानुसा-
रतः ॥८२॥ असौ घनोदधिरपि । घनवाते प्रतिष्ठितः ॥ असंख्यानि योजनानि । मध्ये तस्या-
पि पुष्टता ॥ ८३ ॥ प्रदेशहान्या तनुतां । भजमानो घनोदधेः ॥ आवृत्य वलयं तस्थौ । व-
लयाकृतिनात्मना ॥ ८४ ॥ अस्यापि वलयस्यैवं । मानमाद्यैरुदीरितं ॥ चतुष्टयी योजनानां
। सार्द्धोच्चत्वं तु पूर्ववत् ॥ ८५ ॥ घनवातोऽपि सततं । तनुवाते प्रतिष्ठितः ॥ अस्यापि मध्ये
बाहल्य—मसंख्यघ्न घनानिलात् ॥ ८६ ॥ ततस्तनूभवन्नेष । घनवातस्य सर्वतः ॥ आवृत्य
वलयं तस्थौ । वलयाकृतिनात्मना ॥ ८७ ॥ तनुवातस्य वलये । विष्कंभः परिकीर्त्तितः ॥ ए-

॥

कं योजनमध्यर्द्ध–मुच्चत्वं पुनरुक्तवत् ॥ ८८ ॥ तनुवातोऽप्यसौ तस्था–वाधारेण विहायसः
॥ तच्च प्रतिष्ठितं स्वस्मि–न्नसंख्ययोजनोन्मितं ॥ ८९ ॥ सप्तस्वपि महीष्वेवं । घनोदध्यादयो
मताः ॥ वलयानां तु विष्कंभो । यथास्थानं प्रवक्ष्यते ॥ ९० ॥ भाति भूः स्वसमश्रेणि
–स्थायिभिर्वलयैस्त्रिभिः ॥ पूर्णेंदुवत्परिधिभिः । सुधाकुंडमिवोरगैः ॥ ९१ ॥ भवत्येवमलो-
कश्च । घर्मापर्यंतभागतः ॥ योजनैर्दशभिर्द्वाभ्या–मतिरिक्तैः समंततः ॥ ९२ ॥ अथैतस्यां
रत्नकांड–स्याधस्तनं तथोर्ध्वगं ॥ विमुच्य शतमेकैकं । मध्येऽष्टशतयोजने ॥ ९३ ॥
असंख्येयानि भौमेय–नगराण्यासते सदा ॥ बहिर्विभागे वृत्तानि । चतुरस्राणि चांतरे
॥ ९४ ॥ अधोभागेऽनुकुर्वंति । चारुपुष्करकर्णिकां ॥ गंभीरखातपरिखा–प्राकारालंकृतानि च
॥ ९५ ॥ शतघ्न्यादिमहायंत्र–जटिलानि समंततः ॥ दुःप्रवेश्यान्ययोध्यानि। गुप्तानि श्रीभृ-
तानि च ॥ ९६ ॥ भल्लासिपूर्णकलश–तोरणद्वारवंति च ॥ अनारतं रक्षितानि । दंडिभिः
किंकरामरैः ॥ ९७ ॥ परिष्कृतानि कुसुमैः । पंचवर्णैः सुगंधिभिः ॥ काकतुंडतुरुष्कादि–धूप-
सौरभ्यवंति च ॥ ९८ ॥ जंबूद्वीपोपमानानि । विष्कंभायाममानतः ॥ उत्कृष्टानि विदेहानु-

कारीणि मध्यमान्यपि ॥ ९९ ॥ अपि यान्यल्पमानानि । निरूपितानि तान्यपि ॥ भरतक्षे-
त्रसदृशा–न्येतेषु च वसंत्यमी ॥ २०० ॥ अष्टधा व्यंतरा देवा । महासमृद्धिशालिनः ॥ पिशा-
चा भूतयक्षाख्या । राक्षसाः किन्नरा अपि ॥ १ ॥ किंपुरुषा महोरगा । गंधर्वाश्च तथा परे
॥ सर्वेऽप्येते दाक्षिणात्यो–दीच्यभेदात्स्मृता द्विधा ॥२॥ सर्वेऽप्येतेऽतिसुभगाः । सुरूपाः सौ-
म्यदर्शनाः ॥ हस्तग्रीवादिषु रत्न–मयभूषणभूषिताः ॥ ३ ॥ गांधर्वगीतरतयः । कौतुकाक्षि-
प्तचेतसः ॥ प्रियक्रीडाहास्यलास्या । अनवस्थितचेतसः ॥ ४ ॥ विकुर्वितस्फारवन–मालामु-
कुटकुंडलाः ॥ स्वैरोल्लापाः स्वैररूप–धारिणः स्वैरचारिणः ॥ ५ ॥ नानावर्णवस्त्रनाना–देश-
नेपथ्यधारिणः ॥ मुद्गरासिकुंतशक्ति–चापादिव्यग्रपाणयः ॥ ६ ॥

तत्र यक्षाः पिशाचाश्च । गंधर्वाश्च महोरगाः ॥ किंचित्कृष्णाः किंपुरुषा । राक्षसाश्च
सितत्विषः ॥ ७ ॥ किन्नराः श्यामभासोऽपि । किंचिन्नीलत्विषो मताः ॥ भूताः पुनः काल-
वर्णाः । कज्जलैर्घटिता इव ॥ ८ ॥ कदंबः सुलसश्चैव । वटः खट्वांगमेव च ॥ अशोकश्चंप-
को नाग–स्तुंबरुश्च यथाक्रमं ॥ ९ ॥ भवंति चिह्नान्यष्टानां । पिशाचादिसुधाभुजां ॥ ध्वजे-

॥ १० ॥ खट्वांगं तूपकरणं । तापसानामुदीरितं
षु तत्र खट्वांगं । विना सर्वेऽपि पादपाः ॥ ११ ॥ चैत्यवृक्षास्तथैवैषा—मष्टानां क्रमतो
॥ प्रायः क्रीडाविनोदार्थं । नरलोके चरन्त्यमी ॥ १२ ॥ एएसिणं अट्ठविहाणं वाणमं-
मताः ॥ कदंबाद्यास्तथा चोक्तं । तृतीयांगे गणाधिपैः ॥ १७ ॥ एएसिणं अट्ठविहाणं वाणमं-
तरदेवाण अट्ठ चेति तरुस्का पसत्ता, तं जहा—कलंबो उ पिसायाणं । वडो जरकाण चेति तं
॥ तुलसी नूयाण नवे । रक्कसाणं च कंडउ ॥ १३ ॥ असोउ किन्नराणं च । किंपुरिसाण य
चंपउ ॥ णागरुक्को भुअंगाणं । गंधव्वाण य तेंडुउ ॥ १४ ॥

चैत्यवृक्षा मणिपीठिकानामुपरिवर्त्तिनः सर्वरत्नमया उपरि छत्रध्वजादिभिरलंकृताः सु-
धर्मादिसभानामग्रतो ये श्रूयते, त एत इति संज्ञाप्यते. ये तु ' विंधाइं कलंबकए ' इत्यादि,
ते चिह्नभूता एतेभ्योऽन्य एवेति. स्था० ८ सूत्रवृत्त्योः. प्रायः । शैलकंदरादौ, यच्चरंति व-
नांतरे ॥ ततः पृषोदरादित्वा—देते स्युर्वानमंतराः ॥ १५ ॥ नृत्यवच्चक्रवर्त्याद्या—राधनादिकृत-
स्ततः ॥ व्यंतरा वाभिधीयते । नरेभ्यो विगतांतराः ॥ १६ ॥ एकैकस्मिन्निकायेऽथ । द्वौ द्वा-
विंद्रावुदाहृतौ ॥ दक्षिणोत्तरभेदेन । कालाद्यास्ते च षोडश ॥ १७ ॥ कालश्चैव महाकालः ।

पिशाचचक्रवर्त्तिनौ ॥ सुरूपः प्रतिरूपश्च । भूतेंद्रौ दक्षिणोत्तरौ ॥ १८ ॥ पूर्णभद्रमाणिभद्रौ । यक्षाणामधिपावुभौ ॥ भीमश्चैव महाभीमो । राक्षसानामधीश्वरौ ॥ १९ ॥ किन्नरश्च किंपुरुषः । किन्नराणां महीक्षितौ ॥ इंद्रौ किंपुरुषाणां च । सन्महापुरुषौ स्मृतौ ॥ २० ॥ अतिकायमहाकायौ । महोरगधराधिपौ ॥ गंधर्वाधिपती गीत–रतिर्गीतयशा इति ॥ २१ ॥

सुरेंद्राः षोडशाप्येते । महाबला महाश्रियः ॥ महासौख्या महोत्साहाः । स्युरनुत्तरशक्तयः ॥ २२ ॥ कमला चैव कमल–प्रभोत्पला सुदर्शना ॥ प्रत्येकमेतन्नाम्न्यः स्युः । प्रियाः पिशाचराजयोः ॥ २३ ॥ रूपवती बहुरूपा । सुरूपा सुभगापि च ॥ भूताधिराजयोरग्र–महिष्यः कथिता जिनैः ॥ २४ ॥ पूर्णा बहुपुत्रिकाचो–त्तमा तथा च तारका ॥ पूर्णभद्रमाणिभद्र–देवयोर्दयिता इमाः ॥ २५ ॥ वतंसिकाकेतुमती । रतिसेना रतिप्रिया ॥ गदिता दयिता एताः । किन्नराणामधीशयोः ॥ २६ ॥ रोहिणी च नवमिका । हीनाम्नी पुष्पवत्यपि ॥ प्राणप्रिया इमाः प्रोक्ता । जिनैः किं पुरुषेंद्रयोः ॥ २७ ॥ भुजगा भुजगवती । महाकच्छा स्फुटाभिधा ॥ चतस्रो जीवितेश्वर्यो । महोरगाधिराजयोः ॥ २८ ॥ सुघोषा विमला चैव । सुस्वरा च

सरस्वती ॥ चतस्रः प्राणदयिता । गंधर्वाणामधीशयोः ॥ २९ ॥ सांप्रतीनास्तु–कालादीनां
दाक्षिणात्यें–द्राणां याः कमलादयः ॥ ता नागपुरवास्तव्या । द्वात्रिंशत्पूर्वजन्मनि ॥ ३० ॥
महाकालाद्यौत्तरात्यें–द्राणां याः कमलादयः ॥ साकेतपुरवास्तव्या–स्ता द्वात्रिंशदपि स्मृताः
॥ ३१ ॥ एवं चतुष्षष्टिरपि । महेभ्यवृद्धकन्यकाः ॥ स्वस्वनामप्रतिरूप–जननीजनकाभिधाः
॥ ३२ ॥ पुष्पचूलार्यिकाशिष्याः । श्रीपार्श्वार्पितसंयमाः ॥ शबलीकृतचारित्रा । मासार्द्धान-
शनस्पृशः ॥ ३३ ॥ अतिचाराननालोच्या–ऽप्रतिक्रम्य मृतास्ततः ॥ कालादिव्यंतरेंद्राणां । ब-
भूवुः प्राणवल्लभाः ॥ ३४ ॥ पंचभिः कुलकं ॥
प्रत्येकमासां साहस्रः । परिवारो भवेदथ ॥ एकैकेयं च देवीनां । सहस्रं रचितुं क्षमाः
॥ ३५ ॥ प्रत्येकमेषामिंद्राणां । चतुःसहस्रसंमिताः ॥ अवरोधे भवत्येवं । देव्यो लावण्यबं-
धुराः ॥ ३६ ॥ प्रत्येकमेषां सर्वेषां । तिस्रो भवंति पर्षदः ॥ ईषा तथा च त्रुटिता । सप्ता द-
ढरथाभिधा ॥ ३७ ॥ सहस्राण्यष्टदेवानां । तत्राभ्यंतरपर्षदि ॥ मध्यायां दश बाह्यायां । द्वा-
दशेति यथाक्रमं ॥ ३८ ॥ देवीनां शतमेकैकं । पर्षत्सु स्यात्तिसृष्वपि ॥ देवदेवीनामथात्र ।

स्थितिः क्रमान्निरूप्यते ॥ ३९ ॥ पूर्णं पल्योपमस्यार्द्धं । तद्देशोनं तथाधिकं ॥ पल्योपमस्य तुर्यांशो । देवानां क्रमतः स्थितिः ॥ ४० ॥ साधिकः पल्यतुर्यांशः । पूर्णः स एव च स्थितिः ॥ स एव देशेन न्यूनो । देवीनां क्रमतः स्मृता ॥ ४१ ॥ एवं च—

सामानिकानामेतेषां । तथाग्रयोषितामपि ॥ पर्षदस्तिस्त्र ईषा तु—टिता दृढरथास्त्रिधा ॥ ४२ ॥ चतुर्भिरेवं सर्वेऽमी । सामानिकसहस्रकैः ॥ प्रेयसीभिश्चतसृभिः । स्वपरिच्छदचारुभिः ॥ ४३ ॥ पार्षदैस्त्रिविधैर्देवैः । सप्तभिः सैन्यनायकैः ॥ गंधर्वनटहस्त्यश्व—रथपादात्यकामरैः ॥ ४४ ॥ अमीभिः सप्तभिः सैन्यै—श्चतुर्भिश्चात्मरक्षिणां ॥ स्थितैः प्रत्याशं सहस्रै—रन्वहं सेवितांह्रयः ॥ ४५ ॥ स्वस्वनैमेयनगर—लक्षाणां चक्रवर्त्तिनां ॥ असंख्येयानामजस्रं । प्रत्येकं बिभ्रतोऽद्भुतां ॥ ४६ ॥ व्यंतराणां व्यंतरीणां । स्वस्वनिकायजन्मनां ॥ स्वस्वदिग्वर्त्तिनां स्वैरं । साम्राज्यमुपभुंजते ॥ ४७ ॥ पंचभिः कुलकं ॥ दिव्यस्त्रीसंप्रयुक्तेषु । नाट्येषु व्यापृतेंद्रियाः ॥ न जानते गतमपि । कालं पल्योपमायुषः ॥ ४८ ॥ तथोक्तं—ताहिं देवा वंतरिया । वरतरुणीगीयवाइयरवेणं ॥ निच्चं सुहिया पमुइया । गयंपि कालं न याणंति ॥ १ ॥

व्यंतराणाममी अष्टौ । मूलभेदाः प्रकीर्त्तिताः ॥ अष्टावांतरभेदाः स्यु–रणपर्णीमुखाः परे ॥ ॥ ४ए ॥ तथाहि—

अणपन्नी पणपन्नी । इसीवाईभूयवाइए चेव ॥ कंदीयमहाकंदी । कोहंडे चेव पयए य ॥ ५० ॥ प्राग्वत्प्रतिनिकायेऽत्र । द्वौ द्वाविंद्रावुदीरितौ ॥ तत्रयो रुचकाद्याम्यौ–त्तराहयोरधीश्वरौ ॥ ५१ ॥ इंद्रौ सन्निहितः सामा–निकश्चाद्यनिकाययोः ॥ धाता विधातेत्यधिपौ । निकाये च द्वितीयके ॥ ५२ ॥ तार्त्तीयीकनिकायेंद्रौ । ऋषिश्च ऋषिपालिनः ॥ चतुर्थस्य निकायस्य । तावीश्वरमहेश्वरौ ॥ ५३ ॥ सुवत्सश्च विशालश्च । निकाये पंचमेऽधिपौ ॥ षष्टे निकाये नेतारौ । हास्यहास्यरती इति ॥ ५४ ॥ श्वेतोमहाश्वेयांसौ च । निकाये सप्तमेऽधिपौ ॥ पदगः पदगपति–र्निकायस्याष्टमस्य तौ ॥ ५५ ॥ तथाहुः स्थानांगे–' दो अणपन्निंदा पन्नत्ता ' इत्यादि. एतेऽपि रत्नकांडस्य । शतं शतमुपर्यधः ॥ परित्यज्य वसंत्यष्ट–शतयोजनमध्यतः ॥ ॥ ५६ ॥ तथाहुः प्रज्ञापनायां–' कहिणं भंते वाणमंतराणं देवाणं भोमेज्जा नगरा पण्णत्ता, कहिण भंते वाणमंतरादेवा परिवसंति? गोयमा से रयणप्पभाए पुढवीए रयणामयस्स कं-

भस्स जोअणसहस्स बाहलस्स उवरि एगं जोअणसयं उगाहेत्ता, हेठावि एगं जोअणसयं व-ज्जेता, मज्झे अठसु जोअणसएसु एछणं वाणमंतराणं तिरिय मसंखेज्जा भोमेज्जा नगरावास-सयसहस्सा भवंतीति मक्खाया, तेणं इत्यादि—तछणं बहवे वाणमंतरा देवा परिवसंति, तं जहा—पिसाया भूया जक्खा यावत् अणपन्निय पणपन्निय इत्यादि. संग्रहण्यां तु—इय पढमजो अणसए । रयणाए अठवंतरा अवरे ॥ तेसिं इह सोलसिंदा । रुअगअहो दाहिणुत्तरउ ॥ १ ॥ योगशास्त्रचतुर्थप्रकाशवृत्तौ त्वेवं—रत्नप्रभायामेव प्रथमस्य शतस्याध उपरि च दशदश योज-नानि मुक्त्वा मध्येऽशीतियोजनेषु अणपन्नियप्रभृतय इति. एषां वक्तव्यता सर्वा । विज्ञेया प्राक्तनेंऽवत् ॥ जाता द्वात्रिंशदित्येवं । व्यंतरामरनायकाः ॥ ५७ ॥ भौमेयनगरेष्वेषु । व्यंत-राः प्रायशः खलु ॥ उत्पद्यंते प्राच्यभवा—ऽनुष्टिताज्ञानकष्टतः ॥ ५८ ॥ मृताः पाशविषाहा-र—जलाग्निक्षुत्तृडादिभिः ॥ भृगुपातादिभिश्च स्यु—र्व्यंतराः शुभभावतः ॥ ५९ ॥ स्थितिरु-त्कर्षतोऽमीषां । पल्यमर्द्धं च योषितां ॥ सहस्राणि दशाब्दाना—मुभयेषां जघन्यतः ॥६०॥ स्वाभाविकं सप्तहस्त—मानमुत्कर्षतो वपुः ॥ अंगुलासंख्यांशमानं । जघन्यं प्रथमक्षणे ॥

॥ ६१ ॥ लक्षयोजनमानं चो-त्कृष्टमुत्तरवैक्रिय ॥ प्रक्रमेंगुलसंख्येय-भागमानं जघन्यतः ॥
॥ ६२ ॥ एषां लेश्याश्चतस्रः स्युः । पद्मां शुक्लां विना पराः ॥ उच्छ्वसंति सप्तभिस्ते । स्तो-
कैर्जघन्यजीविनः ॥ ६३ ॥ बुभुक्षवश्चैकदिनां-तरेऽथोत्कृष्टजीविनः ॥ समुच्छ्वसंत्याहरंति ।
मुहूर्त्ताहःपृथक्त्वकैः ॥ ६४ ॥ आहारे चित्तसंकल्पो-पस्थिताः सारपुद्गलाः ॥ सर्वांगेषु परिण-
मं-त्येषां कावलिकस्तु न ॥ ६५ ॥ ये तु हिंस्राः सुरा वीर-चंडिकाकालिकादयः ॥ मद्यमां-
साद्याहुतिभि-स्तुष्यति तर्पिता इव ॥ ६६ ॥

तेऽपि पूर्वभवाभ्यासा-त्पापा मिथ्यात्वमोहिताः ॥ मद्यमांसादि वीक्ष्यैव । तुष्यंति न तु
भुंजते ॥ ६७ ॥ संमूर्छिमा गर्भजाश्च । तिर्यंचो गर्भजा नराः ॥ उत्पद्यते षड्भिरपि । युताः
संहननैरिह ॥ ६८ ॥ च्युत्वोत्पद्यंत एते नृ-तिरश्चोर्गर्भजन्मनोः ॥ पर्याप्तबादरक्ष्मांभः-प्रत्ये-
कभूरुहेषु च ॥ ६९ ॥ एकेन समयेनैका-द्योऽसंख्यावसानकाः ॥ उत्पद्यंते च्यवतेऽमी ।
उत्कृष्टमेषु चांतरं ॥ ७० ॥ ज्ञेयं मुहूर्त्तानि चतु-र्विंशतिस्तज्जघन्यतः ॥ एकसामयिकं नूनं ।
च्यवनोत्पत्तिगोचर ॥ ७१ ॥ पश्यत्यवधिना पंच-विंशतियोजनान्यमी ॥ जघन्यजीविनोऽन्ये

च ! संख्येययोजनावधि ॥ ७२ ॥ तिर्यग्लोकवासिनोऽपि । व्यंतरा यदिहोदिताः ॥ तद्दै रत्न-
प्रज्ञापृथ्वी—वक्तव्यताप्रसंगतः ॥ ७३ ॥

इति व्यंतराणां सुराणां पुराणां । पुराणोपदिष्टा व्यवस्थान्यरूपि ॥ तृतीयाच्चतुर्थादुपां-
गाच्च शेषं । विशेषं विदंतु प्रबुद्धाः समेधाः ॥ ७४ ॥ विश्वाश्चर्यदकीर्त्तिकीर्त्तिविजयश्रीवाचकें-
द्रांतिष—द्राजश्रीतनयोऽतनिष्ट विनयः श्रीतेजपालात्मजः ॥ काव्यं यत्किल तत्र निश्चितजग
त्तत्वप्रदीपोपमे । सर्गो निर्गलितार्थसार्थसुन्नगः पूर्णः सुखं द्वादशः ॥ ७५ ॥

॥ इति श्रीलोकप्रकाशे द्वादशः सर्गः समाप्तः ॥ श्रीरस्तु ॥

॥ अथ त्रयोदशः सर्गः प्रारभ्यते ॥

योजनानां सहस्रं च । मुक्त्वैकैकमुपर्यधः ॥ मध्येऽष्टसप्ततिसह—स्राढ्ये लक्षे क्षिताविह
॥ १ ॥ वसंति भवनाधीश—निकाया असुरादयः ॥ दशैतेऽपि द्विधा प्राग्व—द्दक्षिणोत्तरभेदतः
॥ २ ॥ तेषु प्रत्येकमिंद्रौ द्वौ । भवतो दक्षिणोत्तरौ ॥ भवनेंद्रा विंशतिः स्यु—रित्येवं चमरा-
दयः ॥ ३ ॥ तथोक्तं—असुरा नागसुवन्ना । विज्जुअग्गीयदीवउदहीय ॥ दिसिपवणथणिय—द-

सविह ज्ञवणवइ ते सु ङुङुइंदा ॥ ४ ॥ अन्ये त्वाहुः—नवतियोजनसहस्राणामधस्ताद्भवनानि, अन्यत्र चोपरितनमधस्तनं च योजनसहस्रं मुक्त्वा सर्वत्रापि यथासंभवमावासा इति. आवासा नाम कायमानसन्निज्ञा महामंमपा इति लघुसंग्रहणीवृत्तौ तत्वार्थज्ञाष्येऽपि. तत्र ज्ञवनानि रत्नप्रज्ञायां बाहल्यार्द्धमवगाह्य मध्ये ज्ञवंतीत्युक्तमिति ज्ञेयं. चतुस्त्रिंशत्क्रमात्रिंश—ल्लक्षाः स्युर्दक्षिणोत्तराः ॥ ज्ञवना असुराणां ते । चतुःषष्टिश्च मीलिताः ॥ ५ ॥ लक्षाश्चतुश्चत्वारिंश—च्चत्वारिंशद् घ्योर्दिशोः ॥ नागालयानां चतुर—शीतिर्लक्षाश्च मीलिताः ॥ ६ ॥ अष्टात्रिंशच्चतुस्त्रिंश—ल्लक्षाः क्रमाद् घ्योर्दिशोः ॥ सर्वाग्रेण सुपर्णानां । गृहलक्षा द्विसप्ततिः ॥ ७ ॥ चत्वारिंशच्च षट्त्रिंश—द्दक्षिणोत्तरयोः क्रमात् ॥ वैद्युतावासलक्षाः स्युः । षट्सप्ततिश्च मीलिताः एवमग्निकुमाराणां । द्वीपवार्द्धिदिशां तथा ॥ विद्युत्कुमारवत्संख्या । ज्ञवनानां प्रकीर्त्तिता ॥ ए ॥ पंचाशदथ षट्चत्वा—रिंशद्दिशोर्द्वयोः क्रमात् ॥ लक्षा वायुसुरावासाः । सर्वे षण्णवतिश्चताः ॥ १० ॥

चत्वारिंशत्तथा षट्त्रिं—शदुक्ता दिग्द्वये क्रमात् ॥ स्तनितानां गृहाः सर्वे । लक्षाः षट्-

सप्ततिः किल ॥ ११ ॥ चतस्रः कोटयो लक्षाः । षट् गृहा दक्षिणाश्रिताः ॥ उत्तराहास्तु षट्षष्टि–र्लक्षास्तिस्रश्च कोटयः ॥ १२ ॥ द्वयोर्दिशोश्च सर्वाग्रं । भवनानामुदाहृतं ॥ कोटयः सप्तलक्षाणां । द्वासप्तत्या समन्विताः ॥ १३ ॥ आकारेण सुषमया । प्राकारपरिखादिभिः ॥ व्यंतराणां नगरवत् । प्रायो ज्ञेयान्यमून्यपि ॥ १४ ॥ गुरूणि तान्यसंख्येयै–र्मितानि खलु योजनैः ॥ मध्यानि संख्येयैर्जंबू–द्वीपाभानि लघून्यपि ॥ १५ ॥ तत्रासुरनिकायस्य । दाक्षिणास्यां दिशि प्रभुः ॥ चमरेंद्रः शरच्चंद्र–चंद्रिकाविलसद्यशाः ॥ १६ ॥ तथाहि—विद्यते दक्षिणदिशि । तिर्यग्मेरोः सुदर्शनात् ॥ असंख्यद्वीपाब्धिपरो । द्वीपोऽरुणवराभिधः ॥ १७ ॥ तस्य बाह्यवेदिकांता–न्मध्येऽरुणवरांबुधेः ॥ योजनानां द्विचत्वारिं–शत्सहस्राण्यतीत्य वै ॥ ॥ १८ ॥ चमरस्यासुरेंद्रस्य । महानुत्पातपर्वतः ॥ तिगिंछिकूटनामास्ति । प्रशस्तश्रीभरोद्धुरः ॥ १९ ॥ योजनानां सप्तदश । शतान्यथैकविंशतिः ॥ स उच्छ्रितस्तस्य तुर्यांशो ( ४३० ) । निमग्नो वसुधांतरे ॥ २० ॥ मूले सहस्रं द्वाविंशं । योजनानां स विस्तृतः ॥ मध्ये शतानि चत्वारि । चतुर्विंशानि विस्तृतः ॥ २१ ॥

शतानि सप्त विस्तीर्ण–स्त्रयोविंशानि चोपरि ॥ ऊर्ध्वाधो विस्तृतो मध्ये । क्षामो महा-
मुकुंदवत् ॥ २२ ॥ मुकुंदो वाद्यविशेष इति ॥ सर्वरत्नमयस्यास्य । वेदिका वनशालिनः ॥
शिरस्तले मध्यदेशे । स्यात्प्रासादावतंसकः ॥ २३ ॥ सार्द्धे द्वे योजनशते । तुंगः सपंचविंश-
तिः ॥ ततः शतं योजनानि । रम्योल्लोकमहीतलः ॥ २४ ॥ अष्टयोजनमानाथ । तत्रास्ति
मणिपीठिका ॥ चमरेंद्रस्यात्र सिंहा–सनं सहपरिछदं ॥ २५ ॥ तिर्यग्लोकं जिगमिषु–र्जिन-
जन्मोत्सवादिषु ॥ प्रथमं चमरेंद्रोऽस्मि–न्नुपैति स्वाश्रयाद्गिरौ ॥ २६ ॥ ततो यथेप्सितं स्था-
न–मुत्पतत्यविलंबतः ॥ तेनायं चमरेंद्रस्य । ख्यात उत्पातपर्वतः ॥ २७ ॥ षट् शतान्यथ को-
टीनां । पचपंचाशदेव च ॥ कोट्यो लक्षाण्यथ पच–त्रिंशल्लक्षार्द्धमेव च ॥ २८ ॥ योजनानि
तिर्यगस्मा–त्तिगिंछिकूटपर्वतात् ॥ अतिक्रम्य दक्षिणस्यां । मध्येऽरुणवरोदधेः ॥ २९ ॥ यो
देशस्तदधोभागे । मध्ये रत्नप्रभाक्षितेः ॥ चत्वारिंशद्योजनानां । सहस्राण्यवगाह्य च ॥ ३० ॥
राजधान्यस्ति चमर–चंचा चंचन्मणीमयी ॥ व्यासायामपरिक्षेपै–र्जंबूद्वीपसधर्मिणी ॥ ३१ ॥
वप्रश्चास्या योजनाना–मध्यर्द्धं शतमुन्नतः ॥ पंचाशद्विस्तृतो मूले । मौलौ द्वादश सार्द्धकाः

आयतैर्योजनस्यार्द्धे । न्यूनार्द्धयोजनोच्छ्रितैः ॥ क्रोशं विस्तीर्णैश्च रम्या । रत्नजैः कपिशीर्षकैः ॥ ३३ ॥ एकैकस्यां सबाहायां । पंचद्वारशतांचितः ॥ सार्द्धे द्वे योजनशते । द्वारं चैकैकमुच्छ्रितं ॥ ३४ ॥ सपादशतविस्तीर्ण–तोरणाद्युपशोभितं ॥ मध्येऽथ वप्रस्यैतस्य । पीठबंधो विराजते ॥ ३५ ॥ योजनानां षोडशैव । सहस्राण्विस्तृतायतः ॥ पद्मवरवेदिकया । परीतः काननेन च ॥ ३६ ॥ तस्य मध्ये रम्यभूमा–वस्ति प्रासादशेखरः ॥ सार्द्धे द्वे योजनशते । तुंगस्तदर्द्धविस्तृतः ॥ ३७ ॥ चतुर्भिरेष प्रासादै–श्चतुर्दिशमलंकृतः ॥ शतं सपादमुत्तुंगैः । सार्द्धद्विषष्टिविस्तृतैः ॥ ३८ ॥ प्रत्येकमेतेऽपि चतु–र्दिशं चतुर्भिराश्रिताः ॥ सार्द्धे द्विषष्टिमुत्तुंगै–स्तदर्द्धविस्तृतैस्तथा ॥ ३९ ॥ सपादैकत्रिंशदुच्चै–स्तदर्द्धविस्तृतैर्वृताः ॥ प्रासादास्तेऽपि प्रत्येकं । पुनस्तेऽपि चतुर्दिशं ॥ ४० ॥ ससार्द्धद्विक्रोशपंच–दशयोजनतुंगकैः ॥ तदर्द्धविस्तृतैरेवं । चतुर्दिशमलंकृताः ॥ ४१ ॥ एवं समूलप्रासादाः । प्रासादाः सर्वसंख्यया ॥ चमरस्य भवंत्येक–चत्वारिंशं शतत्रयं ॥ ४२ ॥ प्रासादास्ते रत्नमया । मरुच्चंचलकेतवः ॥ मृदुस्पर्शाश्चारुगंधा । दृश्याः सुवर्णवालुकाः ॥ ४३ ॥

अथ प्रासादेभ्य एभ्य । ऐशान्यां स्युर्यथाक्रमं ॥ सभा सुधर्मा सिद्धाय-तनं सभोपपा-
तकृत् ॥ ४४ ॥ ह्रदोऽभिषेकालंकार-व्यवसायसभाः क्रमात् ॥ सर्वेऽप्यमी सुधर्माद्याः । षट्-
त्रिंशद्योजनोच्छ्रिताः ॥ ४५ ॥ दीर्घाः पंचाशतं पंच-विंशतिविस्तृता इह ॥ वैमानिकसभा-
दिभ्यो । मानतोऽर्धमिता इति ॥ ४६ ॥ इत्यर्थतो भगवतीद्वितीयशताष्टमोद्देशके ॥ अत्रायं
विशेषः-चमरस्स णं सभासुहम्मा एकावन्नखंभसयसन्निविट्ठायं, एवं बलीयस्सवि, इति तु-
र्यांगे, अथैतस्यामुपपात-सभायां सुकृती जनः ॥ देवदुष्यच्छन्नशय्यो-त्संग उत्पद्यते क्षणात्
॥ ४७ ॥ चमरेंद्रतयाथासा-वुत्थाय शयनीयतः ॥ गत्वा ह्रदे कृतस्नान-स्ततोऽभिषेकपर्षदि
॥ ४८ ॥ कृताभिषेकः सोत्साहै-रसुरैः समहोत्सवं ॥ अलंकारसभायां च । गत्वालंकृतभूष-
णः ॥ ४९ ॥ व्यवसायसभां गत्वा । पुस्तकावसितस्थितिः ॥ स्नात्वा नंदापुष्करिण्यां । भ-
क्त्या कृतजिनार्चनः ॥ ५० ॥ समागत्य सुधर्मायां । सभायां सपरिच्छदः ॥ दिव्यान् सिंहास-
नासीनो । भोगान् भुंक्ते यथारुचिः ॥ ५१ ॥ पंचभिः कुलकं ॥

कामकेलिलालसस्तु । जिनस्याशातनाभयात् ॥ गत्वा बहिः सुधर्माया । रमते रुचि-

तास्पदे ॥ ५२ ॥ कदाचिच्चैव चमर–चंचावासे मनोरमे ॥ सकांतः क्रीडितुं याति । क्रीमो-
द्याने नृपादिवत् ॥ ५३ ॥ स चैवं—अस्याश्चमरचंचाया–नैरुत्यां ककुभि ध्रुवं ॥ षट्कोटीनां
शतान्पंच–पंचाशत्कोटिसंयुतान् ॥ ५४ ॥ पंचत्रिंशच्च लक्षाणि । पंचाशच्च सहस्रकान् ॥ यो-
जनानामतिक्रम्य । तस्मिन्नेवारुणोदधौ ॥ ५५ ॥ आवासो भाति चमर–चंचश्चंचच्छ्रियां नि-
धिः ॥ कम्रः क्रीमारतिस्थानं । चमरस्यासुरेशितुः ॥ ५६ ॥ सहस्राण्येष चतुर–शीतिमायत
विस्तृतः ॥ समंततः परिक्षिप्तः । प्राकारेण महीयसा ॥ ५७ ॥ सर्वं चमरचंचात–प्रासादादि
भवेदिह ॥ न विद्यंते परं पंच । सुधर्माद्याः सभाः शुभाः ॥ ५८ ॥ स एष सांप्रतीनस्तु ।
जंबूद्वीपेऽत्र भारते ॥ बेभेलाख्ये सन्निवेशे । विंध्याचलसमीपगे ॥ ५९ ॥

आसीद्गृहपतिश्रेष्ठः । पूरणाख्यो महर्द्धिकः ॥ जाग्रत्कुटुंबजागर्यां । निशि संवेगमाप
सः ॥ ६० ॥ प्रातर्निमंत्र्य स्वजनान् । भोज्यवस्त्रादिभिर्भृशं ॥ संतोष्य ज्येष्ठपुत्राय । कुटुंब-
भारमार्पयत् ॥ ६१ ॥ पतद्ग्रहं दारुमयं । कारयित्वा चतुःपुटं ॥ दीक्षां लात्वा दानमयीं ।
चक्रे सातापनं तपः ॥ ६२ ॥ षष्ठस्यैव पारणाया–मुत्तीर्यातापनास्थलात् ॥ भिक्षार्थमाटीद्दे-

भेले । करे धृत्वा पतद्ग्रहं ॥ ६३ ॥ भिक्षां ददानः पांथेभ्यः । पतितां प्रथमे पुटे ॥ काक-शालावृकादीनां । द्वितीयपुटसंगतां ॥ ६४ ॥ तां मत्स्यकच्छपादीनां । तृतीयपुटगां ददत् ॥ पतितां च पुटे तुर्ये । भिक्षामादत्स्वयं मितां ॥ ६५ ॥ एवं द्वादशवर्षाणि । तपः कृत्वातिदुष्करं ॥ स पादपोपगमन-मंगीकृत्यैकमासिकं ॥ ६६ ॥

मृत्वामुष्यां राजधान्यां । चमरेंद्रतयाभवत् ॥ सर्वपर्याप्तिपर्याप्त-स्तत्कालोत्पन्न एव सः ॥ ६७ ॥ ऊर्ध्वमालोकयामास । स्वभावाद् ज्ञानचक्षुषा ॥ आसौधर्मं देवलोकं । तत्र दृष्ट्वा सुरेश्वरं ॥ ६८ ॥ शक्रसिंहासनासीनं । पीनतेजःसुखश्रियं ॥ अचिंतयन्मुमुर्षुः कः । क्रीडत्येष ममोपरि ॥ ६९ ॥ युग्मं ॥ ततः सामानिकान् देवान् । स आहूयेति पृष्टवान् ॥ भो भोः क एष योऽस्माक-मपि मूर्द्धनि तिष्टति ॥ ७० ॥ तेऽपि व्यजिज्ञपन्नत्वा । स्वामिन्नेष सुधर्मराट् ॥ नित्यास्थानव्यवस्थेयं । सौधर्मेंद्रासुरेंद्रयोः ॥ ७१ ॥ हंत तेऽन्ये येऽसुरेंद्रा । एनमित्थं शिरःस्थितं ॥ सेहिरे न सहेऽहं तु । पातयिष्याम्यधः क्षणात् ॥ ७२ ॥ निश्चित्येति पुनश्चित्ते । व्यमृशत्सोऽपि वज्रभृत् ॥ यद्यनेनाभिहन्येऽहं । शरणं मम कस्तदा ॥ ७३ ॥

विचिंत्येत्यवधिज्ञानो—पयोगाच्चमराधिपः ॥ सुसुमारपुरोद्याने—ऽपश्यद्वीरजिनेश्वरं ॥७४॥
दध्यौ चायं जिनो वीरः । प्रतिमामेकरात्रिकीं ॥ प्रतिपद्याष्टमतपा । एकपुद्गलदत्तदृक् ॥७५॥
निर्निमेषो निष्प्रकंपः । कायोत्सर्गेऽस्त्यवस्थितः ॥ एकादशाब्दपर्यायं । शरण्योऽस्तु स एव
मे ॥ ७६ ॥ इति ध्यात्वावश्यकार्यं । त्यक्त्वार्हदर्चनादिकं ॥ तल्पायोत्पादशय्याया—स्तद्देवदूष्य-
संवृतः ॥ ७७ ॥ तपादाय प्रहरण—रत्नं परिघमुद्धतः ॥ तिगिंछिकूटमुत्पात—गिरिमागत्य स-
त्वरं ॥ ७८ ॥ नव्यं वपुर्विधायैत्य । सुसुमारपुराद्बहिः ॥ अशोककाननेऽशोक—तरोर्मूले शिलो-
परि ॥ ७९ ॥ नमस्कृत्य जिनं युष्म—न्निश्रया याम्यहं युधे ॥ यूयं मे त्राणमित्युक्त्वा ।
भूयोऽप्युत्तरवैक्रियं ॥ ८० ॥ वपुर्भीष्मं मापराशि—कुहूरात्रिसहोदरं ॥ कृत्वा योजनलक्षोच्च—
मुत्पपात नभस्तलं ॥ ८१ ॥ कुर्वन् क्वचित्सिंहनादं । क्वचिच्च गजगर्जितं ॥ हयहेषारवं क्वा-
पि । क्वचित्कलकलध्वनिं ॥ ८२ ॥ क्षोभयन्निव पातालं । कंपयन्निव मेदिनीं ॥ तिर्यग्लोकं
व्याकुलयन् । स्फोटयिष्यन्निवांबरं ॥ ८३ ॥ विद्युद्वृष्टिगर्जितानि । रजस्तमांसि चोत्किरन् ॥
त्रासयन् व्यंतरान् देवान् । कुर्वन् ज्योतिषिकान् द्विधा ॥ ८४ ॥ विमानस्याथ सौधर्मा—व-

तंसकस्य वेदिकां ॥ आक्रम्यैकेनापरेण । सुधर्मासंसदं पदा ॥ ८५ ॥ जघान परिघेणेंद्र–की-
लकं त्रिस्ततोऽवदत् ॥ क्व रे शक्रः क्व रे सामा–निकाः क्व रे सुराः परे ॥ ८६ ॥ पातया-
मि घातयामि । शातयाम्यधुनाखिलान् ॥ करोम्यप्सरसः सर्वाः । स्वायत्ताः सह वैभवैः ॥
॥ ८७ ॥ फल मदाशातनायाः । शक्रोऽनुभवतादिति ॥ गिरः श्रुत्वाऽश्रुतपूर्वा । भ्रुकुटीभीष-
णो हरिः ॥ ८८ ॥ सक्रोधहासमित्याह । किं रे चमर दुर्दशं ॥ नवोत्पन्नोऽसि रे मूढ । मुमू-
र्षस्यधुनैव किं ॥ ८९ ॥ यद्वा तवेयानुत्साहो–ऽनर्थायैव न संशयः ॥ पक्षौ पिपीलिकानां हि
। जायेते मृत्युहेतवे ॥ ९० ॥ इमां गृहाणानिश्रेयीं । मदवज्ञाफलं मनाक् ॥ मुमोच वज्र-
मित्युक्त्वा । ज्वलज्ज्वालाकरालितं ॥ ९१ ॥ तद् दृष्ट्वा चकितोऽत्यंतं । नश्यन् संकोच्य भूघ-
नं ॥ प्रविष्टो रक्ष रक्षेति । वदन् वीरक्रमांतरे ॥ ९२ ॥

तत: शक्रोऽपि विज्ञाय । वीरं तच्छरणीकृतं ॥ चतुरंगुलमप्राप्त–मादाय पविमित्यवक् ॥
॥ ९३ ॥ कंपसे किमदानीं भोः । पशुः सिंहेक्षणादिव ॥ वीरप्रसादान्मुक्तोऽसि । न ते मत्तो-
ऽधुना भयं ॥ ९४ ॥ इत्युक्त्वा वामपादेन । त्रिःप्रहत्य वसुंधरां ॥ क्षमयित्वा जिनेंद्रं च ।

सुरेंद्रः स्वास्पदं ययौ ॥ ९५ ॥ ततो वज्रभयान्मुक्त–श्चमरेंद्रो निजाश्रयं ॥ गत्वा सामानिकादीना–मुवाचोदंतमादितः ॥ ९६ ॥ भद्रं स्तात्त्रैशलेयाय । तस्मै त्रैलोक्यबंधवे ॥ येन त्रातोऽस्मि मरणा–द्वत वज्राग्निदुस्सहात् ॥ ९७ ॥ उपकारमिति प्राज्ञ–स्तं स्मरन् सपरिच्छदः ॥ गत्वा पुनर्महावीर–मभ्यर्च्य तांडवादिभिः ॥ ९८ ॥ आगत्य स्वास्पदं प्रीतो । विस्मृतेऽपराभवः ॥ धर्मकर्मस्थितिं सर्वा–माराध्य सुखभागभूत् ॥ ९९ ॥ अयं च चमरोऽयासी–द्यत्सौधर्मावतंसकं ॥ आश्चर्यमेतद्विज्ञेय–मनंतकालसंभवि ॥ १०० ॥ चतुःषष्टिसहस्राणि । सामानिकसुधाभुजः ॥ अस्य त्रयस्त्रिंशकाश्च । त्रयस्त्रिंशत्सुधाशिनः ॥ १ ॥ एते च जंबूद्वीपेऽत्र । क्षेत्रे भारतनामनि ॥ काकंद्यां पुर्यवर्त्तंत । त्रयस्त्रिंशन्महर्द्धिकाः ॥ २ ॥ श्रद्धालवो ज्ञाततत्वाः । सहायाश्च परस्परं ॥ पूर्वं ते भावितात्मानो–ऽभूवन्नुग्रक्रियाश्रयाः ॥ ३ ॥ पश्चाच्च कर्मवशतो । जाता धर्मे श्लथाशयाः ॥ पार्श्वस्था अवसन्नाश्च । कुशीलाः स्वैरचारिणः ॥४॥

एवं च भूरिवर्षाणि । श्रमणोपासकक्रियां ॥ आराध्यार्द्धमासिकीं ते । कृत्वा संलेखनामपि ॥ ५ ॥ अनालोच्याऽप्रतिक्रम्या–तिचारांस्तान्पुराकृतान् ॥ मृत्वा त्रायस्त्रिंशकत्वं । ले-

भिरे चमरेशितुः ॥ ६ ॥ त्रायस्त्रिंशकरूढिस्तु । नैतेऽन्य एव किंतु ते ॥ उत्पद्यंते च्यवंते च । स्वस्वस्थित्या परापराः ॥ ७ ॥ तिस्रोऽस्य पर्षदस्तत्रा–भ्यंतरा समिताभिधा ॥ मध्या चंडाभिधा ज्ञेया । बाह्या जाताह्वया पुनः ॥ ८ ॥ स्युश्चतुर्विंशतिर्देव–सहस्राण्याद्यपर्षदि ॥ सार्द्धपल्योपमद्वंद्व–स्थितीन्यथात्र पर्षदि ॥ ९ ॥ शतान्यर्द्धतृतीयानि । सार्द्धपल्योपमायुषां ॥ देवीनां मध्यमायां चा–ष्टाविंशतिः सहस्रकाः ॥ १० ॥ द्विपल्यायुर्निर्जराणां । देवीनां त्विह पर्षदि ॥ शतानि त्रीण्येकपल्या–युषामथांत्यपर्षदि ॥ ११ ॥ स्युर्द्वात्रिंशत्सहस्राणि । सार्द्धपल्यायुषः सुराः ॥ शतान्य–र्द्धचतुर्थानि । देव्योऽर्द्धपाल्यजीविताः ॥ १२ ॥ यथैवं पर्षदस्तिस्रो । वर्णिताश्चमरेशितुः ॥ एवं सामानिकत्राय–स्त्रिंशकानां तदाह्वयाः ॥ १३ ॥ महिषीलोकपालानां । पुनस्तिस्रो भवंति ताः ॥ तपाथ त्रुटिता पर्वा । इत्येतैर्नामभिर्युताः ॥ १४ ॥ इदमर्थतः स्थानांगसूत्रे.

काली राजी च रत्नी च । विद्युन्मेघाभिधा परा ॥ पंचास्याग्रमहिष्यः स्यू–रूपलावण्यबंधुराः ॥ १५ ॥ कालीयं प्राग्भवे जंबू–द्वीपे दक्षिणभारते ॥ पुर्यामामलकल्पायां । का-

॥ १

लाख्यस्य गृहेशितुः ॥ १६ ॥ कालश्रीतनुसंभूता । कालीनामाभवत्सुता ॥ बृहत्कुमारी श्री-
पार्श्व-पुष्पचूलार्पितव्रता ॥ १७ ॥ पश्चाद्दंडीभूय दोषा-नप्रतिक्रम्य पाक्षिकीं ॥ कृत्वा संलेख
नां मृत्वा । चमरेंद्रप्रियाभवत् ॥ १८ ॥ त्रिभिर्विशेषकं ॥ कालावतंसे भवने । काले सिंहा-
सनं भवेत् ॥ काल्या देव्याः परासाम-प्येवं स्वाख्यानुरूप्यतः ॥ १९ ॥ स्वस्वनामसदृग्भा-
म-जननी जनका इति ॥ ज्ञेयाः शेषाश्चतस्रोऽपि । तथैव मलिनव्रताः ॥ २० ॥ स्वाख्याव-
तंसे भवने । स्वाख्ये सिंहासनेऽभवन् ॥ चमरेंद्रप्रिया एताः । सार्द्धपल्यद्वयायुषः ॥ २१ ॥
बलीन्द्रदयितानाम-प्यैतिह्यमनया दिशा ॥ श्रावस्त्यासां पुरी सार्द्ध-मायुः पल्यत्रयं पुनः ॥
॥ २२ ॥ एकैकाग्रमहिष्यष्ट-सहस्रपरिवारयुक् ॥ सहस्राण्यष्टदेवीनां । भव्यानां रचितुं क्षमा
॥२३॥ चत्वारिंशत्सहस्राणि । स्युर्देव्यः सर्वसंख्यया ॥ भुंक्तेऽसुरेंद्रश्चैताभिः । कृतैतावत्तनुः सु-
खं ॥ २४ ॥ सोमो यमश्च वरुण-स्तथा वैश्रमणाभिधः ॥ चत्वारोऽस्य लोकपाला-श्चतुर्दि-
गधिकारिणः ॥ २५ ॥ चतुर्णामप्यथैतेषां । चतस्रः प्राणवल्लभाः ॥ कनका कनकलता । चि-
त्रगुप्ता वसुंधरा ॥ २६ ॥ एकैकेयं च साहस्र-परिवारविराजिता ॥ देवी सहस्रमेकैकं । भव्यं

विकुर्वंतु क्रमा ॥ २७ ॥ स्वस्वनामराजधान्यां । स्वस्वसिंहासने स्थिताः ॥ चत्वारोऽमी लोकपाला । भुंजते दिव्यसंपदं ॥ २८ ॥ तथास्य चमरेंद्रस्य । सप्त सैन्यानि तत्र च ॥ पादात्याश्वेभमहिष–रथसंज्ञानि पंच वै ॥ २९ ॥ एते सुरा अपि स्वामि–शासनात्कार्यहेतवे ॥ ताद्रूप्यं प्रतिपद्यंते । नायकोक्तेर्नटा इव ॥ ३० ॥ एतानि पंच सैन्यानि । युद्धमज्ञान्यहर्निशं ॥ गंधर्वनटसैन्ये ये । ते त्वोगायेति सप्तकं ॥ ३१ ॥ सप्तसेनान्योऽप्यमीषां । सर्वदा वशवर्तिनः ॥ सेवंतेऽसुरनेतारं । चमरं विनयानताः ॥ ३२ ॥ द्रुमः १ सौदासश्च २ कुंथु ३–र्लोहिताक्षश्च ४ किन्नरः ५ ॥ रिष्टो ६ गीतरतिश्चेति ७ । सेनान्यामभिधाः क्रमात् ॥ ३३ ॥ द्रुमस्य तत्र पादात्या–धिपस्य चमरेशितुः ॥ स्युः सप्त कक्षा कक्षा च । स्ववशो नाकिनां गणः ॥ ॥ ३४ ॥ आद्यकक्षायां सुराणां । चतुष्षष्टिः सहस्रकाः ॥ ततो यथोत्तरं कक्षाः । षडपि द्विगुणाः क्रमात् ॥ ३५ ॥ इंद्राणामपरेषाम–प्येवं पत्तिचमूपतेः ॥ वाच्याः सप्त सप्त कक्षाः । स्थानद्विगुणिता मिथः ॥ ३६ ॥ चतुःषष्टिः सहस्राणि । प्रत्याशमात्मरक्षकाः ॥ लक्षद्वयं षट्पंचाश–त्सहस्राणीति तेऽखिलाः ॥ ३७ ॥

एवमुक्तपरीवार—सुरैराराधितक्रमः ॥ घनश्यामस्निग्धवर्णः । किंचिदारक्तलोचनः ॥३८॥
विद्रुमोष्टः श्वेतदंतः । सरलोत्तुंगनासिकः ॥ दीप्ररक्तांबरो मेघ । इव संध्याभ्रसंभृतः ॥ ३९ ॥
मुकुटेनांकितो मौलौ । सच्चूडामणिलक्ष्मणा ॥ पूर्वाद्रिरिव तिग्मांशु—बिंबेनोदित्वरश्रिया ॥
॥ ४० ॥ चतुस्त्रिंशल्लक्षमान—भवनानामधीश्वरः ॥ सर्वेषां दाक्षिणात्याना—मसुराणां सयोषि-
तां ॥ ४१ ॥ साम्राज्यं शास्ति दिव्यस्त्री—नाटकादिषु दत्तदृक् ॥ एकार्णवायुश्च्युत्वेतो । भव
भाविनि सेत्स्यति ॥ ४२ ॥ च्युते चास्मिन्नस्य पदे । पुनरुत्पत्स्यतेऽपरः ॥ एवमव्युच्छितिन-
या—न्नित्य एवैष भण्यते ॥ ४३ ॥ पूर्णं जंबूद्वीपमेक—मेष पूरयितुं क्षमः ॥ असुरैरसुरीभिश्च
। निजशक्त्या विकुर्वितैः ॥ ४४ ॥ तिर्यक् पुनरसंख्येयान् । द्वी
पपाथोनिधींस्तथा ॥ एवं सामानिकास्त्राय—स्त्रिंशाश्चास्य प्रभूष्णवः ॥ ४५ ॥ अस्यैवं लोकपा-
लाग्र—महिष्योऽप्यथ किंतु ते ॥ शक्ताः पूरयितुं तिर्यक्—संख्येयद्वीपवारिधीन् ॥ ४६ ॥ इ-
त्यर्थतो भगवत्यां. देवेंद्रस्तवे तु—जाव य जंबूद्दीवो । जाव य चमरस्स चमरचंचाउ ॥ असु-
रेहिं असुरकन्नाहिं । अछिविसउ भरेउजे ॥ ४७ ॥ अथान्योऽसुरदेवेंद्रो । बली नामा नि-

रूप्यते ॥ उत्तरस्यां दिशि विभु-र्योऽसौ सौभाग्यसेवधिः ॥ ४८ ॥ तथाहि दिशि कौबेर्यां । जंबूद्वीपस्थमेरुतः ॥ असंख्यद्वीपाब्धिपरो । द्वीपोऽरुणवराभिधः ॥ ४९ ॥ तस्य बाह्यवेदि-कांता-त्तस्मिन्नेव पयोनिधौ ॥ द्विचत्वारिंशत्सहस्र-योजनानां व्यतिक्रमे ॥ ५० ॥ रुचकेंद्रा-भिधोऽस्त्यत्र । बलेरुत्पातपर्वतः ॥ तिर्यग्लोके जिगमिषो-र्बलेरुत्पतनास्पद ॥ ५१ ॥ तिगिं-छिकूटतुल्योऽसौ । प्रमाणादिस्वरूपतः ॥ बलेः प्रासादोऽस्ति तत्र । प्राग्वत् सिंहासनांचितः ॥ ५२ ॥ कोटयः पंचपंचाशत् । षट् कोटीनां शतानि च ॥ पंचत्रिंशच्च लक्षाणि । पंचाशच्च सहस्रकाः ॥ ५३ ॥ योजनानि व्यतिक्रम्यां-भोधावुत्पातपर्वतात् ॥ गत्वे रत्नप्रभापृथ्व्या । गत्वाधो योजनानि च ॥ ५४ ॥ चत्वारिंशत्सहस्राणि । वर्त्तते तत्र मंजुला ॥ बलिचंचा रा-जधानी । स्त्यानोद्भूता इव त्विषः ॥ ५५ ॥ अस्याश्चरमचंचावत् । स्वरूपमखिलं भवेत् ॥ वप्रप्रासादादि तेषां । प्रमाणानुक्रमादि च ॥ ५६ ॥ अत्रोपपादसदसि । देवदूष्यपरिष्कृते ॥ इहत्वेनोत्पद्यतेंगी । शय्योत्संगे महातपाः ॥ ५७ ॥ अस्य षष्टिः सहस्राणि । सामानिकसु-धाभुजां ॥ त्रायस्त्रिंशकदेवाश्च । त्रयस्त्रिंशदुदीरिताः ॥ ५८ ॥

सांप्रतीनास्त्वमी बन्ने–जकग्रामनिवासिनः ॥ अन्नावत्रयस्त्रिंश–त्सुहृदश्च परस्परं ॥५९॥
प्रागेते दृढधर्माणः । पश्चाच्छिथिलचेतसः ॥ उत्पन्ना अत्र चमर–त्रायस्त्रिंशकदेववत् ॥ ६० ॥
प्राग्वत्तिस्रः पर्षदोऽस्य । तिसृष्वपि सुराः क्रमात् ॥ सहस्राणां विंशतिः स्यु–श्चतुरष्टाधिका च
सा ॥ ६१ ॥ सार्द्धे द्वे च शते द्वे च । सार्द्धं शतमनुक्रमात् ॥ देव्यः पर्षत्सु तिसृषु । देवानां
क्रमतः स्थितिः ॥ ६२ ॥ पल्यानां त्रितयं सार्द्धं । त्रयं सार्द्धं द्वयं क्रमात् ॥ देवीनां तु स्थितिः
सार्द्धं । द्वे ते द्वे सार्द्धमेव च ॥ ६३ ॥ तिस्रस्तिस्रः पर्षदोऽस्य । भवंति प्राग्वदेव च ॥ सा-
मानिकत्रायस्त्रिंश–लोकपालाग्रयोषितां ॥ ६४ ॥ शुम्भा निशुम्भा रंभा च । निरंभा मदनेति
च ॥ स्युः पंचाग्रमहिष्योऽस्य । प्राग्वदासां परिच्छदः ॥ ६५ ॥

एवं सहस्रैश्चत्वारिं–शतांतःपुरिकाजनैः ॥ सुधर्मायां बहिर्भुंक्ते । कृतैतावद्वपुःसुखं ॥
॥ ६६ ॥ चत्वारोऽस्य लोकपाला–श्चतुर्दिगधिकारिणः ॥ सोमो यमश्च वरुण–स्तुर्यो वैश्रम-
णाभिधः ॥ ६७ ॥ एषां चतस्रः प्रत्येकं । दयिता नामतस्तु ताः ॥ मीनका च सुभद्रा च ।
विद्युदाख्या तथाशनिः ॥ ६८ ॥ स्वस्वनामराजधान्यां । सिंहासने स्वनामनि ॥ उपविष्टाः

सुखं दिव्यं । मुदा तेऽप्युपभुंजते ॥ ६९ ॥ महाद्रुमो १ महासौदा–साह्वयः २ परिकीर्त्तितः ॥ मालकारोऽपि ३ च महा–लोहिताक्षाभिधः ४ सुरः ॥ ७० ॥ किंपुरुषो ५ महारिष्ट ६–स्तथा गीतयशा इति ॥ बलिनाम्नोऽसुरपतेः । क्रमात्सप्तेति सैन्यपाः ॥ ७१ ॥ पत्तीशस्याद्यकक्षायां । षष्टिर्देवसहस्रकाः ॥ कक्षाः षडन्याश्च ततः । स्युरस्य द्विगुणाः क्रमात् ॥ ७२ ॥ एवं सामानिकैस्त्राय–स्त्रिंशकैर्लोकपालकैः ॥ सेव्योऽग्रमहिषीभिश्च । सप्तभिः सैन्यसैन्यपैः ॥७३॥

षष्ट्या सहस्रैः प्रत्याशं । सेव्यमानोंगरक्षकैः ॥ चत्वारिंशत्सहस्राढ्य–लक्षद्वयमितैः समैः ॥ ७४ ॥ श्यामवर्णो रक्तवासा–श्चूडामण्यकमौलिभृत् ॥ सुरूपः सातिरेकैक–सागरोपमजीवितः ॥ ७५ ॥ भवनावासलक्षाणां । त्रिंशतोऽनुभवत्यसौ ॥ असुरीणां चासुराणा–मुदीच्यानामधीशतां ॥ ७६ ॥ चतुर्भिः कलापकं ॥ परिवारयुतस्यास्य । शक्तिर्विकुर्वणाश्रिता ॥ चमरेंद्रस्येव किंतु । सर्वत्र सातिरेकता ॥ ७७ ॥ इत्येवमस्मिन्नसुर–निकाये प्रभवो दश ॥ चमरेंद्रो बलिंद्रश्च । लोकपालास्तथाष्ट च ॥ ७८ ॥ लक्षेष्वेवं चतुःषष्टौ । भवनेष्वपरेऽपि हि ॥ उत्पद्यंतेऽसुरवराः । स्वस्वपुण्यानुसारतः ॥ ७९ ॥ उत्पत्तिकाले शय्यायां । भूषणांबरव-

जिताः ॥ ततश्चालंकृतास्तेन । वपुषा नूतनेन वा ॥ ८० ॥ सर्वेऽप्यमी श्यामवर्णा । बिंबोष्टाः कृष्णमूर्द्धजाः ॥ शुभ्रदंता वामकर्णा–वसक्तदीप्रकुंमलाः ॥ ८१ ॥ दंताः केशाश्चामीषां वैक्रिया दृष्टव्याः, न स्वाभाविकाः, वैक्रियशरीरत्वात्, इति जीवाभिगमवृत्तौ. आईचंदनलिप्तांगा । अरुणांबरधारिणः ॥ चिह्नेन चूडामणिना । सदालंकृतमौलयः ॥ ८२ ॥ कुमारत्वमतिक्रांता । असंप्राप्ताश्च यौवनं ॥ ततोऽतिमुग्धमधुर–मृदुयौवनशालिनः ॥ ८३ ॥ केयूरांगदहाराद्यै–र्भूषिता विलसंति ते ॥ दीप्रा दशस्वंगुलीषु । मणिरत्नांगुलीयकैः ॥ ८४ ॥ देव्योऽप्येवंविधाः काम–क्रीडाविधिविचक्षणाः ॥ घनस्तना युवजनो–न्मादिलावण्ययौवनाः ॥ ८५ ॥ सप्तहस्ता देहमान–मेषामुत्कर्षतो भवेत् ॥ अंगुलासंख्यांशमान–मुत्पत्तौ तज्जघन्यतः ॥ ८६ ॥

लक्षयोजनमानं चो–त्कर्षादुत्तरवैक्रियं ॥ प्रारंभेंगुलसंख्येय–भागमानं जघन्यतः ॥८७॥ एषां च दाक्षिणात्यानां । स्थितिरुत्कर्षतो भवेत् ॥ सागरोपममेकं त–दुदीच्यानां च साधिकं ॥ ८८ ॥ देवीनां दाक्षिणात्यानां । सार्द्ध पल्यत्रयं स्थितिः ॥ ज्येष्ठोत्तराहदेवीनां । सार्द्ध पल्यचतुष्टयं ॥ ८९ ॥ जघन्या तु वत्सराणां । सहस्राणि दश स्थितिः ॥ सर्वेषां मध्यमा

ज्येष्ठा । कनिष्ठांतरनेकधा ॥ ९० ॥ ज्येष्ठायुषो दाक्षिणात्या । मासार्द्धेनोच्छ्वसंत्यथ ॥ आहारकांक्षिणो वर्ष—सहस्रेण ज्ञवंति च ॥ ९१ ॥ उदीच्याः सातिरेकेण । मासार्द्धेनोच्छ्वसंति वै ॥ साधिकाब्दसहस्रेण । ज्ञवंत्याहारकांक्षिणः ॥ ९२ ॥ मध्यमस्थितयस्त्वेते । स्वस्वस्थित्यनुसारतः ॥ मुहूर्त्ताहः पृथक्त्वैः स्यु—रुच्छ्वासाहारकांक्षिणः ॥ ९३ ॥ जघन्यजीविनः स्तोकैः । सप्तन्निः प्रोच्छ्वसंत्यमी ॥ एकाहांतरमाहार । समीहंते च चेतसा ॥ ९४ ॥

ततः संकल्पमात्रेणो—पस्थितैः सारपुद्गलैः ॥ ते तृप्येयुः कावलिका—हारानपेक्षिणः सदा ॥ ९५ ॥ विषयः स्याद्गतेरेषा—मधस्तमस्तमावधि ॥ तृतीयां पुनरवनीं । गता यास्यंति च स्वयं ॥ ९६ ॥ प्रयोजनं तत्र पूर्व—रिपोः पीडाप्रवर्द्धन ॥ प्राग्जन्मसुहृदस्ताव—त्कालं पीडानिवर्त्तनं ॥ ९७ ॥ तिर्यक् चैषामसंख्याब्धि—द्वीपाः स्युर्विषयो गतेः ॥ नंदीश्वरं पुनर्द्वीपं । गता यास्यंति च स्वयं ॥ ९८ ॥ तत्र प्रयोजनं त्वर्ह—त्कल्याणकेषु पंचसु ॥ संवत्सरचतुर्मासा—दिषु चाष्टाह्निकोत्सवः ॥ ९९ ॥ तथैषां गतिविषय । ऊर्ध्वमप्यच्युतावधि ॥ स्वर्गं सौधर्मं च याव—द्गता यास्यंति च स्वयं ॥ १०० ॥ प्रयोजनं तत्र ज्ञव—प्रत्ययं वैरमूर्जितं ॥ मा-

तंगपंचाननव–देषां वैमानिकैः सह ॥ १ ॥
ततो वैरादमी मत्ता । गत्वा वैमानिकाश्रयान् ॥ कुर्वंति व्याकुलं स्वर्गं । त्रासयंत्या-
त्मरक्षकान् ॥ २ ॥ शक्रमप्याक्रोशयंति । प्रागुक्तचमरेंद्रवत् ॥ वैरप्रसिद्धिर्लोकेऽपि । देवदान-
वयोरिति ॥ ३ ॥ रत्नान्यप्सरसस्तेषां । प्रसह्यापहरंति च ॥ गत्वैकांते स्वानुरक्ता–स्ताः स्वैरं
रमयंत्यपि ॥ ४ ॥ अथ नागनिकायस्य । दाक्षिणात्यः सुरेश्वरः ॥ धरणेंद्रो वरिवर्त्ति । सांप्र-
तीनस्त्वसौ पुरा ॥ ५ ॥ आसीदहिर्बहिः काशी–पुरतः काननांतरे ॥ शुष्ककाष्ठकोटरांतः ।
सोऽर्कतापार्दितोऽविशत् ॥ ६ ॥ कमठेन परिप्लुष्टः । पंचाग्निकष्टकारिणा ॥ तापार्त्तः कर्षितः
काष्ठात् । श्रीपार्श्वेन कृपालुना ॥ ७ ॥ स चार्हद्दर्शनान्नष्ट–पाप्मा श्रुतनमस्कृतिः ॥ उपार्जि-
तोर्जितश्रेया । धरणेंद्रतयाऽभवत् ॥ ८ ॥ ततो मेघसुरीभूत–कमठेनाकालिकांबुदैः ॥ एष पा-
र्श्वमुपद्रूय–मानमाछादयत्फणैः ॥ ९ ॥ श्रीपार्श्वस्तोत्रमंत्राख्या–स्मरणात्तुष्टमानसः ॥ अद्या-
पि शमयन् कष्ट–मिष्टानि वितरत्यसौ ॥ १० ॥ षष्टिश्च सप्ततिश्चैवा–ऽशीतिः क्रमात्सहस्र-
काः ॥ पर्षत्त्रये स्युर्देवानां । स्थितिश्चैषां यथाक्रमं ॥ ११ ॥ पल्यस्यार्द्धं सातिरेक–मर्द्धं देशो-
॥

नितं च तत् ॥ सपंचसप्ततिशतं । पंचाशं पंचविंशकं ॥ १२ ॥

देव्यः पर्षत्सु देशोन । पल्यस्यार्द्धमिहस्थितिः ॥ साधिकः पल्यतुर्यांश–स्तुर्यांश एव च क्रमात् ॥ १३ ॥ समिता चंडा जायाख्याः । स्युः सन्ना धरणेशितुः ॥ अपि सामानिकत्राय–स्त्रिंशानामेतदाह्वया ॥ १४ ॥ लोकपालानां तथाग्र–महिषीणां जवंति ताः ॥ ईषा तथान्या त्रुटिता । ततो दृढरथाभिधा ॥ १५ ॥ शेषाणां जवनेंद्राणां । पर्षदामभिधाः किल ॥ तृतीयसंगमालोक्य । विज्ञेया धरणेंद्रवत् ॥ १६ ॥ स्युः षडग्रमहिष्योऽस्य । अला १ मक्का २ शतेरिका ३ ॥ सौदामिनी ४ इा ५ च घन–विद्युते ६ ति च नामतः ॥ १७ ॥ षड्भिः सहस्रैर्देवीनां । प्रत्येकं परिवारिताः ॥ षट् सहस्राणि देवीनां । विकुर्वितुमपि क्षमाः ॥ १८ ॥ शेषाणामप्यथेंद्राणा–मष्टानां याम्यदिग्भुवां ॥ षड् षडग्रमहिष्यः स्यु–रेतैरेव च नामभिः ॥१९॥ काशीनगरवास्तव्या–श्चतुष्पंचाशदप्यमूः ॥ बृहत्कन्याः स्वाभिधानु–रूपाख्यपितरोऽजवन् ॥ पार्श्वपार्श्वादात्तदीक्षाः । शिक्षिताः पुष्पचूलया ॥ विराद्धसंयमाः पक्षं । संलिख्य च मृतास्ततः ॥ २० ॥ स्वाख्यावतसभवने । स्वाख्यसिंहासनस्पृशि ॥ देवीत्वेन समुत्पन्नाः ॥ २१ ॥

। सार्द्धपल्यमितायुषः ॥ २२ ॥ चतुर्भिः कलापकं ॥ भूतानंदाद्योत्तरार्द्ध–इाणामपि मनःप्रियाः ॥ संति पड् षट् वक्ष्यमाणै–रूपाद्यैः षड्भिराह्वयैः ॥ २३ ॥ चतुष्पंचाशतोऽप्यून–पल्योपमयुगायुषां ॥ प्रागासां नगरी चंपा । वाच्या शेषमिहोक्तवत् ॥ २४ ॥ अथ प्रकृतं—कालपालः कोलपालः । शैलपालोऽस्य च क्रमात् ॥ शंखपालश्च चत्वारो । लोकपालाः सुरेशितुः ॥ २५ ॥ अशोका विमला चैव । सुप्रभा च सुदर्शना ॥ एषां चतस्रो दयिताः । प्रत्येकमेतदाह्वयाः ॥ २६ ॥ भद्रसेनोऽ १ स्य च यशो–धरः २ सुदर्शनः ३ क्रमात् ॥ नीलकंठ ४ स्तथानंदो ५ । नंदन ६ स्तेतलीति ७ च ॥ २७॥ पत्तिवाजीभमहिष–रथाख्यानां यथाक्रमं ॥ नटगंधर्वयोश्चापि । सैन्यानामधिपाः स्मृताः ॥ २८ ॥ अस्याद्यकक्षायां पत्ति–नेतुर्देवसहस्रकाः ॥ स्युरष्टाविंशतिः कक्षाः । षडन्या द्विगुणाः क्रमात् ॥ २९ ॥ एतदेव च सप्तानां । कक्षानां मानमूह्यतां ॥ भक्तान्यभवनेशेंद्र–पत्तिसैन्याधिकारिणां ॥ ३० ॥ षड्भिः सहस्रैरिंद्रोऽयं । सामानिकैरुपासितः ॥ पर्षत्त्रायस्त्रिंशलोक–पालसैन्यतदीश्वरैः ॥ ३१ ॥

प्रत्याशं सेवितः षड्भिः । सहस्रैश्चात्मरक्षिणां ॥ सर्वाग्रेण चतुर्विंश–त्या सहस्रैर्महाबलैः

॥३२॥ भवनानां चतुस्त्रिंशल्लक्षाणि पालयन् ॥ समृद्धः शास्ति साम्राज्यं । सार्द्धपल्योपमास्थितिः ॥ ३३ ॥ त्रिभिर्विशेषकं ॥ दधिपांडुरवर्णांगो । नीलांबरमनोरमः ॥ सर्पस्फटाचिह्नशालि–भूषणो गतदूषणः ॥ ३४ ॥ भूषणमत्र मुकुटो द्रष्टव्य इति जीवाभिगमवृत्तौ, एवमेषोऽपि. एकया स्फटया जंबू–द्वीपं छादयितुं क्षमः ॥ धरणेंद्रः साधिकं तं । वक्ष्यमाणो भुजंगराट् ॥३५॥ इंद्रो नागनिकायस्यो–दीच्योऽथ परिकीर्त्यते ॥ भूतानंदोऽस्य पर्षत्सु । तिसृष्वपि सुराः क्रमात् ॥ ३६ ॥ पचाशदथ षष्टिश्च । सप्ततिश्च सहस्रकाः ॥ पल्यं देशोनमर्द्धं च । पल्यस्य साधिक तथा ॥ ३७ ॥ अर्द्धं पल्योपमं चैषां । स्थितिः क्रमात् शतद्वयं ॥ पंचाविंशं द्वे शते च । शतं देव्यः क्रमादिह ॥ ३८ ॥ आसां पल्योपमस्यार्द्धं । देशोनमर्द्धमेव च ॥ सातिरेकश्च तुर्यांशः । स्थितिर्ज्ञेया यथाक्रमं ॥ ३९ ॥ रूपा रूपांशा सुरूपा । प्रेयस्यो रूपकावती ॥ रूपकांता तथा रूप–प्रभास्य नागचक्रिणः ॥४०॥ आसां परिच्छदः प्राग्व–ल्लोकपालास्तथास्य च ॥ कालकौलशंखशैलाः । स्युः पालोपपदा अमी ॥ ४१ ॥ सुनंदा च सुभद्रा च । सुजाता सुमना इति ॥ एषां चतुर्णां प्रत्येकं । चतस्रो दयिताः स्मृताः ॥ ४२ ॥ सप्त से-

नान्योऽस्य दक्षः १ । सुग्रीवश्च २ सुविक्रमः ३ ॥ श्वेतकंठः ४ क्रमान्नंदो-त्तरो ५ रतिश्च ६ मा-
नसः ७ ॥ ४३ ॥ सैन्यक्रमस्तु प्रागुक्त एव. षड्भिः सहस्रैरिंद्रोऽयं । सामानिकैरुपासितः ॥
त्रायस्त्रिंशैः लोकपालैः । पार्षदैः सैन्यसैन्यपैः ॥ ४४ ॥ सहस्रैः षड्भिरेकैक-दिश्यात्मरक्षकैः
श्रितः ॥ चतुर्विंशत्या सहस्रै-रित्येवं सर्वसंख्यया ॥ ४५ ॥ चत्वारिंशच्च भवन-लक्षाणि प-
रिपालयन् ॥ साम्राज्यं शास्ति नागानां । न्यूनाद्विपल्यजीवितः ॥ ४६ ॥ त्रिभिर्विशेषकं ॥
देहवस्त्रवर्णचिह्ना-त्कृष्टस्थित्यादिकं भवेत् ॥ सर्वेषां भवनेशानां । स्वजातीयसुरेंद्रवत् ॥४७॥
इंद्राणां वक्ष्यमाणेषु । निकायेष्वष्टसु स्थितिः ॥ तिसृणां पर्षदां देव-देवीसंख्याथ तत्स्थितिः
॥ ४८ ॥ लोकपालप्रियाभिख्याः । सामानिकात्मरक्षिणां ॥ संख्याग्रमहिषीणां च । संख्या-
नामपरिच्छदाः ॥ ४९ ॥ अष्टानां दाक्षिणात्यानां । विज्ञेया धरणेंद्रवत् ॥ अष्टानामौत्तराहा-
णां । भूतानंदसुरेंद्रवत् ॥ ५० ॥ केवलं लोकपालानां । सुरेंद्राणां च नामसु ॥ विशेषोऽस्ति
स एवाथ । लाघवाय प्रतन्यते ॥ ५१ ॥ दक्षिणोत्तरयोर्लोक-पालानां किंतु नामसु ॥ सर्वत्रा-
पि व्यतीहारः । स्यात्तृतीयतुरीययोः ॥ ५२ ॥ दक्षिणस्यां तृतीयो य-स्तुरीयः स भवत्युदक्

॥ दाक्षिणात्यस्तुरीयस्तु । स्यादुदीच्यां तृतीयकः ॥ ५३ ॥

वेणुदेवो वेणुदारी (वेणुदालिः) ॥ स्वर्णाभौ श्वेतवाससौ ॥ द्वौ सुपर्णकुमारेंद्रौ । गरुडांकितभूषणौ ॥ ५४ ॥ चित्रो विचित्रश्च चित्र-पक्षो विचित्रपक्षकः ॥ एतयोरिंद्रयोर्लोक-पालाः स्युरिति नामतः ॥५५॥ जंबूद्वीपं वेणुदेवः । पक्षेणावरितुं क्षमः ॥ एनमेव सातिरेकं । वेणुदारी सुपर्णराट् ॥ ५६ ॥ इंद्रौ विद्युत्कुमारेषु । हरिकांतहरिस्सहौ ॥ तप्तस्वर्णारुणौ नीलां-बरौ वज्रांकभूषणौ ॥ ५७ ॥ प्रभस्तथा सुप्रभश्च । प्रभाकांतस्तथापरः ॥ सुप्रभाकांत इत्येते । लोकपालाः स्युरेतयोः ॥ ५८ ॥ एकया विद्युता जंबू-द्वीपं हरिः प्रकाशयेत् विद्युत्कुमाराधिपतिः । साधिकं तं हरिस्सहः ॥ ५९ ॥ स्यातामग्निकुमारेंद्रा-वग्निशिखाग्निमाणवौ ॥ तप्तस्वर्णतनू नील-वस्त्रौ कुंभांकभूषणौ ॥६०॥ तेजस्तेजःशिखस्तेजः-कांतस्तेजःप्रभोऽपि च ॥ एतयोः स्युर्लोकपाला । विशेषोत्कृष्टबुद्धयः ॥ ६१ ॥

एकाग्निज्वालया जंबू-द्वीप प्लोषयितुं क्षमः ॥ सुरेंद्रोऽग्निशिखस्तं सा-तिरेकमग्निमाणवः ॥ ६२ ॥ इंद्रौ द्वीपकुमाराणां । पूर्णो वसिष्ठ इत्युभौ ॥ तप्तस्वर्णप्रभौ नील-क्षौमौ सिं-

ह्वांकभूषणौ ॥६३॥ रूपो रूपांशश्च रूप–कांतो रूपप्रभोऽपि च ॥ लोकपाला अमी द्वीप–कुमारचक्रवर्त्तिनोः ॥ ६४ ॥ जंबूद्वीपं हस्ततले–नैकं स्थगयितुं क्षमः ॥ पूर्णो द्वीपकुमारेंद्रो । वसिष्ठस्तं च साधिकं ॥ ६५ ॥ अथोदधिकुमारेंद्रौ । जलकांतजलप्रभौ ॥ शुक्लद्युती नीलवस्त्रा–वश्वरूपांकभूषणौ ॥ ६६ ॥ जलश्च जलरूपश्च । जलकांतो जलप्रभः ॥ लोकपालाः स्युरुदधि–कुमारसुरराजयोः ॥ ६७ ॥ एकेनांबुतरंगेण । जंबूद्वीपं प्रपूरयेत् ॥ जलकांतः सुराधीशः । साधिकं तं जलप्रभः ॥ ६८ ॥ दिक्कुमारेशावमित–गतिश्चामितवाहनः ॥ स्वर्णगौरौ शुभ्रवस्त्रौ । गजरूपांकभूषणौ ॥ ६९ ॥ एतयोस्त्वरितः क्षिप्रः । सिंहश्च सिंहविक्रमः ॥ चत्वारो गत्युपपदा । लोकपालाः प्रकीर्त्तिताः ॥ ७० ॥ एकपार्ष्णिप्रहारेण । जंबूद्वीपं प्रकंपयेत् ॥ इंद्रोऽमितगतिः साति–रेकं त्वमितवाहनः ॥ ७१ ॥ इंद्रौ वायुकुमारेषु । वेलंबाख्यप्रभंजनौ ॥ श्यामौ संध्यारागवस्त्रौ । मकरांकितभूषणौ ॥ ७२ ॥

कालश्चाथ महाकालो–ञ्जनश्च रिष्ट एव च ॥ स्युर्लोकपाला वेलंब–प्रभंजनसुरेंद्रयोः ॥ ॥ ७३ ॥ मरुत्तरंगेणैकेन । जंबूद्वीपं प्रपूरयेत् ॥ वेलंबेंद्रः सातिरेकं । तं पूरयेत्प्रभंजनः ॥७४॥

इंद्रौ घोषमहाघोषौ । स्तनिताख्यकुमारयोः ॥ स्वर्णवर्णौ शुक्लवस्त्रौ । वर्द्धमानांकभूषणौ ॥ ७५ ॥ आवर्त्तो व्यावर्त्तनामा । नद्यावर्त्तस्तथापरः ॥ महानद्यावर्त्त एते । लोकपालाः स्युरेतयोः ॥ ७६ ॥ स्तनितध्वनिनैकेन । बधिरीकर्त्तुमीश्वरः ॥ घोषो जंबूद्वीपमेनं । महाघोषस्तु साधिकं ॥ ७७ ॥ एवं सर्वनिकायेषु । देवा दशदशाधिपाः ॥ दाक्षिणात्योत्तराहेंद्रौ । लोकपालास्तथाष्ट च ॥ ७८ ॥

एवं च धरणेंद्राद्या । इंद्रा अष्टादशाप्यमी ॥ स्वैः स्वैः सामानिकैस्त्राय–स्त्रिंशकैर्लोकपालकैः ॥ ७९ ॥ पार्षदैस्त्रिविधैरग्र–महिषीभिरुपासिताः ॥ मेलानीभिस्तथा सैन्यैः । समंतादात्मरक्षकैः ॥ ८० ॥ दाक्षिणात्योदीच्यनिज–निकायजैः परैरपि ॥ सेविताः स्वस्वभवन–लक्षाणां दधतीशतां ॥ ८१ ॥ त्रिभिर्विशेषकं ॥ रूपलावण्यसौभाग्या–दिभिस्तु चमरेंद्रवत् ॥ महर्द्धिका महासौख्या । महाबला महोदयाः ॥ ८२ ॥ एक जंबूद्वीपमेते । रूपैः पूरयितुं क्षमाः ॥ स्वजातीयैर्नवैस्तिर्यक् । संख्येयद्वीपवारिधीन् ॥ ८३ ॥ एवं सामानिकास्त्राय–स्त्रिंशका लोकपालकाः ॥ एषामग्रमहिष्योऽपि । कर्त्तुं विकुर्वणां क्षमाः ॥ ८४ ॥ अल्पाल्पकान्

किंतु तिर्यक् । द्विपाद्धीन्न पूरयंत्यमी ॥ प्राच्यपुण्यप्रकर्षात्त—स्वस्वलब्ध्यनुसारतः ॥ ७५ ॥ तथाहुः—' धरणेणं न्नते नागकुमारिंदे नागकुमारराया ' इत्यादि न्नगवतीसूत्रे. जंबूद्वीपं मेरुमूर्ध्नि । धृत्वा ग्रत्राकृतिं क्षणात् ॥ कर्त्तुमेपामन्यतमः । क्षमः स्वबललीलया ॥ ७६ ॥

इयं प्रत्येकं प्रागुक्ता चैषा शक्तिर्देवेंद्रस्तवे. शक्तेर्विषय एवायं । नाकरोन्न करिष्यति ॥ न चैवं कुरुते कश्चि—द्विकुर्वणादिशक्तिवत् ॥ ७७ ॥ न्नत्पद्यते परेऽप्येवं । निकायेषु नवस्विह ॥ सुखानि भुंजते देवाः । प्राच्यपुण्यानुसारतः ॥ ७८ ॥ दशानामसुरादीनां । न्नवनाधिपना-किनां ॥ अश्वत्थाद्याश्चैत्यवृक्षा । दश प्रोक्ता यथाक्रमं ॥ ७९ ॥ तथोक्तं स्थानांगे दशमस्था-नके—अस्सत्थ १ सत्तवन्ने २ । सामलि ३ न्नवर ४ सरीस ५ दहिवन्ने ६ ॥ वंजुल ७ पलास ८ वप्पो । तत्तेय ९ कणियाररुक्खेय १० ॥ ८० ॥ अनेन क्रमेणाश्वत्थादयश्चैत्यवृक्षा ये सिद्धायत-नादिद्वारेषु श्रूयंते, इतिस्थानांगवृत्तौ.

एतेषां दाक्षिणात्यानां । सार्द्धं पल्योपमं स्थितिः ॥ न्नदीच्यानां तु देशोनं । स्थितिः प-ल्योपमद्वयं ॥ ८१ ॥ देवीनां दाक्षिणात्याना—मर्द्धपल्योपमं स्थितिः ॥ न्नदीच्यानां तु देशो-

न—मेकं पल्योपमं स्थितिः ॥ ९२ ॥ दशाब्दानां सहस्राणि । सर्वेषां सा जघन्यतः ॥ आहारोच्छ्वासकालांग—मानं व्यंतरदेववत् ॥ ९३ ॥ वसंति यद्यप्यसुरा । आवासापरनामसु ॥ प्रायो महामंडपेषु । रामणीयकशालिषु ॥ ९४ ॥ कदाचिदेव भवने—ष्वन्ये नागादयः पुनः ॥ वसंति भवनेष्वेव । कदाचिन्मंडपेषु तु ॥ ९५ ॥ तथापि भवनेष्वेषां । निवासरूढ्यपेक्षया ॥ सामान्यतोऽमी भवन—वासिनः स्युर्दशापि हि ॥ ९६ ॥ संमूर्छिमा गर्भजाश्च । तिर्यंचो गर्भजा नराः ॥ षट्संहननसंपन्ना । विराद्धार्हतदर्शनाः ॥ ९७ ॥

मिथ्यात्विनश्चोग्रबाल—तपसः प्रोत्कटक्रुधः ॥ गर्वितास्तपसा वैर—क्रूरा द्वैपायनादिवत् ॥ ॥ ९८ ॥ उत्पद्यंत एषु मृत्वा । च्युत्वामी यांति चामराः ॥ गर्भजेषु नृतिर्यक्षु । संख्येयस्थितिशालिषु ॥ ९९ ॥ पर्याप्तबादरक्ष्मांबु—प्रत्येकपादपेषु च ॥ आरभ्यैकमसंख्येया—वध्येकसमयेन ते ॥ १०० ॥ उत्पद्यंते च्यवतेऽत्र । जघन्यं गुरु चांतरं ॥ समयश्च मुहूर्त्ताश्च । चतुर्विंशतिसंमिताः ॥ १ ॥ एषां लेश्याः कृष्णनील—तेजःकापोतसंज्ञिताः ॥ स्युश्चतस्रो नांतिमे द्वे । तथा भवस्वभावतः ॥ २ ॥ किंचिन्न्यूनार्द्धपाथोधि—जीविनोऽवधिचक्षुषा ॥ संख्येयानि यो-

जनानि । पश्यंति भवनाधिपाः ॥ ३ ॥ परे पुनरसंख्यानि । तान्येवं तत्र भावना ॥ यथा य-
थायुषो वृद्धिः । क्षेत्रवृद्धिस्तथा तथा ॥ ४ ॥ एवं च-अवधेर्विषयो नागा-दिषु संख्येययोजनः
॥ असुरेषु त्वसंख्येय-द्वीपवार्द्धिमितो गुरुः ॥ ५ ॥ सर्वेष्वपि लघुः पंच-विंशत्या योजनैर्मि-
तः ॥ विषयः स्यात् स च दश-सहस्रवर्षजीविषु ॥ ६ ॥

भवनेशा व्यंतराश्च । पश्यंत्यवधिना बहु ॥ ऊर्ध्वं यथासौ चमरो-ऽशक्रोत्सौधर्मवासवं
॥ ७ ॥ अधस्तिर्यक् चाल्पमेव-माकृतिर्जायतेऽवधेः ॥ तप्रस्येवायतश्चास्र-स्तप्रः स विदितो
जने ॥ ८ ॥ भवनपतिभिरेवं भूषितः स्वप्रभाभि-स्तिमिरनिकरभीष्मं कोऽप्यधोलोक एषः
॥ ततिभिरिव निशीथो दीप्रदीपांकुराणा-मिव घनवनखंडः पुंडरीकैः प्रफुल्लैः ॥ ९॥ विश्वा-
श्चर्यदकीर्त्तिकीर्त्तिविजयश्रीवाचकेंद्रांतिष-द्राजश्रीतनयोऽतनिष्ट विनयः श्रीतेजपालात्मजः ॥
काव्यं यत्किल तत्र निश्चितजगत्तत्त्वप्रदीपोपमे । सर्गोऽयं सुभगस्त्रयोदशतमः सार्थः समाप्तः
सुखं ॥ ३१० ॥

॥ इति श्रीलोकप्रकाशे त्रयोदशमः सर्गः समाप्तः ॥ श्रीरस्तु ॥

॥ अथ चतुर्दशमः सर्गः प्रारभ्यते ॥

मुक्त्वैकैकं सहस्रं चो–पर्यधः प्रथमक्षितेः ॥ सहस्रैरष्टसप्तत्या–योजनलक्षकेऽधिके ॥१॥ त्रयोदश प्रस्तटाः स्यु–र्नरकावासवीथयः ॥ समश्रेणिस्थायिभिस्तै–रेकैकः प्रस्तटो हि यत् ॥२॥ तथोक्तं श्रीजीवाभिगमे–' इमीसेणं रयणप्पभाए पुढवीए असीउत्तरजोअणसयसहस्स बाहल्लाए उवरि एगं जोअणसयसहस्सं उगाहेत्तो हेठावेगं जोअणसहस्सं वज्जित्ता मझे अठहुत्तरे जोअणसयसहस्से, इछणं रयणप्पभाए पुढवीए तीसं नरयावाससयसहस्सा भवंतीतिमरकाया ' सर्वेऽप्यमी योजनानां । सहस्रत्रयमुच्छ्रिताः ॥ सर्वास्वपि क्षितिष्वेषां । मानं ज्ञेयमिदं बुधैः ॥ ३ ॥ एकादश सहस्राणि । शतानि पंच चोपरि ॥ त्र्यशीतिर्योजनान्यंश–स्तृतीयो योजनस्य च ॥ ४ ॥ एतावदंतरं ज्ञेयं । प्रस्तटानां परस्परं ॥ प्रतिप्रतरमेकैको । भवेच्च नरकेंद्रकः ॥ ५ ॥ तथाहि—सीमंतकः स्यात्प्रथमे । द्वितीये रोरकाभिधः ॥ भ्रांतस्तृतीये उद्भ्रांत–श्चतुर्थे प्रस्तटे भवेत् ॥ ६ ॥ संभ्रांतः पंचमे ज्ञेयः । षष्ठेऽसंभ्रांतसंज्ञकः ॥ विभ्रांतः सप्तमे तप्त–संज्ञितः पुनरष्टमे ॥ ७ ॥ नवमे शीतनामा स्या–द्वक्रांतो दशमे भवेत् ॥ एकादशे त्ववक्रां-

प्रतिप्रतरमे-
तो । विक्रांतो द्वादशे भवेत् ॥ ८ ॥ त्रयोदशे रोरुकः स्या–देवमेते त्रयोदश ॥ प्रतिप्रतरमे-
न्यश्च । निर्गता नरकालयः ॥ ९ ॥ प्रथमप्रतरे तत्र । सीमंतनरकेंद्रकात् ॥ निर्गता नरका-
वासा–वष्टयो दिक्षु विदिक्षु च ॥ १० ॥ एकोनपंचाशद्वासा । दिशां नरकपंक्तिषु ॥ अष्टचत्वा-
रिंशदेते । विदिकूनरकपंक्तिषु ॥ ११ ॥ त्रिशत्येकोननवतिः ( ३८९ )। प्रथमे सर्वपंक्तिगाः ॥
प्रतिप्रतरमेकैक–न्यूना अष्टापि पंक्तयः ॥ १२ ॥ सैकाशीतिस्त्रिशती च । त्रिशती च त्रिसप्त-
तिः ॥ त्रिशती पंचषष्टिश्च । स्याद् द्वितीयादिषु त्रिषु ॥ १३ ॥ त्रिशती सप्तपंचाश–त्पंचमे
प्रतरे भवेत् ॥ त्रिशत्येकोनपंचाशत् । षष्टे प्रतर इष्यते ॥ १४ ॥ एकचत्वारिंशदाद्या । त्रिश-
ती सप्तमे मता ॥ त्रिशती च त्रयस्त्रिंशत् । त्रिशती पचविंशतिः ॥ १५ ॥ त्रिशती सप्तद-
श च । त्रिशती स्यान्नवोत्तरा ॥ एकाधिका च त्रिशती । प्रतरेष्वष्टमादिषु ॥ १६ ॥ त्रयोद-
शेऽथ प्रतरे । आवलीनरकालयाः ॥ त्रिनवत्यधिके प्रोक्ते । द्वे शते तत्ववेदिभिः ॥ १७ ॥
शेषाः पुष्पावकीर्णाः स्युः । पंक्तीनामंतरेषु ते ॥ सर्वेष्वपि प्रतरेषु । विकीर्णकुसुमौ-
घवत् ॥ १८ ॥ चत्वारि स्युः सहस्राणि । तावंत्येव शतानि च ॥ त्रयस्त्रिंशच्च धर्माया–मा-

वलीनरकालयाः ॥ १९ ॥ एकोनत्रिंशल्लक्षाणि । शतानि पंच चोपरि ॥ सहस्राः पंचनवति । सप्तषष्टिः प्रकीर्णकाः ॥ २०॥ त्रिंशल्लक्षाश्च निखिला । घर्मायां नरकालयाः ॥ सर्वेऽपि चैतेंतर्वृत्ता । बहिश्च चतुरस्रकाः ॥ २१ ॥ यदुक्तं प्रज्ञापनायां—' तेणं णरगा अंतोवट्टा बाहिं चउरंसा इति ' पीठादि सर्वं चापेक्ष्य । वृत्ताः स्युः केऽपि केऽपि च ॥ त्र्यस्राश्चतुरस्राश्च । पांक्तेया नरकालयाः ॥ २२ ॥ वृत्ता एव भवंत्यत्र । सर्वेऽपि नरकेंद्रकाः ॥ ततश्चानंतरं त्र्यस्रा । नूनमष्टासु पंक्तिषु ॥२३॥ चतुरस्रास्ततो वृत्ता–स्त्र्यस्राश्चेति यथाक्रमं ॥ ज्ञेयाः पुष्पावकीर्णास्तु । नानासंस्थानसंस्थिताः ॥ २४ ॥

योजनानां सहस्राणि । त्रीणि सर्वेऽपि चोच्छ्रिताः ॥ अधोमुखन्यस्तकुंडा–काराः कारागृहोपमाः ॥ २५ ॥ योजनानां सहस्रं च । पीठे बाहल्यमीरितं ॥ सहस्रमेकं शुषिरं । स्तूपिकैकसहस्रिका ॥ २६ ॥ यदुक्तं—हेट्ठा घणा सहस्सं । उप्पिं संकोयओ सहस्सं तु ॥ मज्झे सहस्स झुसिरा । तिन्निसहस्सूसिया निरया ॥ २७ ॥ संख्यातयोजनाः केऽपि । परेऽसंख्यातयोजनाः ॥ विस्ताराद्दैर्घ्यतश्चापि । प्रज्ञप्ता नरकालयाः ॥ २८ ॥ सर्वास्वपि पृथ्वीषु । ता-

द्दशाः किंतु मानतः ॥ सीमंतकः पंचचत्वा—रिंशद्योजनलक्षकः ॥ २९ ॥ अप्रतिष्ठानश्च लक्ष
—योजनः सप्तमक्षितौ ॥ परितस्तं च चत्वारो—ऽसंख्यातकोटियोजनाः ॥ ३० ॥ घर्माद्यप्रत-
रे सीमं—तकाद्यनरकेंद्रकात् ॥ आवलीनरकाः प्रोक्ताः । सीमंतकप्रभादयः ॥ ३१ ॥ तदुक्तं—
स्थानांगवृत्तौ——

सीमंतगप्पभो खलु । नरउ सीमंतगस्स पुव्वेण । सीमंतगमज्झिमउ । उत्तरपासे मुणे-
यव्वो ॥ ३२ ॥ सीमंतावत्तो पुण । नरउ सीमंतगस्स अवरेण ॥ सीमंतगावसिठ्ठो । दाहिण-
पासे मुणेयव्वो ॥ ३३ ॥ आवल्याश्चांतिमौ द्वौ स्तो । लोललोलुपसंज्ञकौ ॥ विंशतितमैकविं-
शौ । सीमंतनरकेंद्रकात् ॥ ३४ ॥ उद्दग्धनिर्दग्धसंज्ञौ । ज्वरप्रज्वरकौ पुनः ॥ पंचत्रिंशषट्त्रिं-
शौ । प्राच्यावल्यां स्मृता अमी ॥ ३५ ॥ उदीच्याद्यावलिकासु । मध्यावर्त्तावशिष्टकैः ॥ पदै-
र्विशिष्टाः प्रज्ञप्ताः । प्रागुक्ता नरकाः क्रमात् ॥ ३६ ॥ यथोदीच्यां लोलमध्य—लोलुपमध्यसं-
ज्ञकौ ॥ पश्चिमायां लोलावर्त्त—लोलुपावर्त्तसंज्ञकौ ॥ ३७ ॥ लोलावशिष्टलोलुपा—वशिष्टसंज्ञ-
कावपाग् ॥ आव्या नामव्यवस्थैवं । प्रागुक्तेष्वखिलेष्वपि ॥ ३८ ॥ तदुक्तं स्थानांगवृत्तौ——

मज्जा उत्तरपासे । आवत्ता अवरत्त मुणेयव्वा ॥ सिवा दाहिणपासे । पुव्विलाउवि भइयव्वत्ति ॥ ॥ ३८ ॥ सर्वेऽपि ते रौद्ररूपाः । क्षुरप्रोपमभूमयः ॥ देहिनां दर्शनादेवो–द्वेजकाः कंपकारिणः ॥ ३९ ॥ पुद्गलानां परिणति–र्दशधा बधनादिका ॥ सापि क्षेत्रस्य स्वभावा–त्तत्र दुःखप्रदा भवेत् ॥ ४० ॥ तथाहि—

बंधनं चानुसमय–माहार्यैः पुद्गलैः सह ॥ संबंधो नारकाणां स । ज्वलज्ज्वलनदारुणः ॥ ४१ ॥ गतिरुष्ट्रखरादीनां । सदृशो दुस्सहश्रमा ॥ तप्तलोहपदन्यासा–दपि दुःखप्रदा भृशं ॥ ४२ ॥ संस्थानमत्यंतहुंडं । लूनपक्षांडजोपम ॥ कुड्यादिभ्यः पुद्गलानां । भेदः सोऽप्यस्वत्कटुः ॥ ४३ ॥ वर्णः सर्वनिकृष्टोऽति–भीषणो मलिनस्तथा ॥ नित्यांधतमसा ह्येते । हारजालादिवर्जिताः ॥ ४४ ॥ किंचामी श्लेष्मविण्मूत्र–कफाद्यालिप्तभूतलाः ॥ मांसकेशनखदंत–चर्मास्तीर्णाः श्मशानवत् ॥ ४५ ॥

कुथितश्वाहिमार्जार–मृतकेभ्योऽपि दारुणः ॥ गंधस्तत्र रसो निंब–घोषातक्यादितः कटुः ॥ ४६ ॥ स्पर्शो वह्निवृश्चिकादि–स्पर्शादप्यतिदारुणः ॥ परिणामोऽगुरुलघु–रप्यतीव व्यथाक-

रः ॥ ४७ ॥ शब्दोऽपि सततं पीडा–क्रांतानामतिदारुणः ॥ विलापरूपः श्रवणा–दपि दुःखैककारणं ॥ ४८ ॥ कुड्येषु वाज्रिकेष्वत्र । संति वातायनोपमाः ॥ अचित्ता योनयस्तासू–त्पद्यंते नारकाः किल ॥ ४९ ॥ माघगतौ शीतवायौ । हिमाद्रौ खेऽभ्रवर्जिते ॥ निरग्नेर्वातविक्रते–र्दुःस्थपुंसो निरावृतेः ॥ ५० ॥ तुषारकणसिक्तस्य । या भवेच्छीतवेदना ॥ तेभ्योऽप्यनंतगुणिता । तेषु स्याच्छीतवेदना ॥ ५१ ॥ तेभ्यः शीतवेदनेभ्यो । नरकेभ्यश्च नारकाः ॥ यथोक्तपुरुषस्थाने । स्थाप्यंते यदि ते तदा ॥५२॥प्राप्नुवंति सुखं निद्रां । निर्वातस्थानगा इव ॥ अथोष्णकाले मध्याह्ने । निरभ्रे वियदंगणे ॥५३॥ पुंसः पित्तप्रतप्तस्य । परितो ज्वलनस्पृशः ॥ योष्णपीडा ततोऽनंत––गुणा तेषूष्णवेदना ॥ ५४ ॥ तथोष्णवेदनेभ्यस्ते । नरकेभ्यश्च नारकाः ॥ उत्पाट्य किंशुकाकार–खदिरांगारराशिषु ॥ ५५ ॥ ध्मायंते यदि निक्षिप्य । तदा ते चंदनद्रवैः ॥ लिप्ता इवात्यंतसुखा–न्निद्रां यांति क्षणादपि ॥ ५६ ॥

सदा क्षुद्वह्निना दह्य–मानास्ते जगतोऽपि हि ॥ घृतान्नादिपुद्गलौघै–र्न तृप्यंति कदाचन ॥ ५७ ॥ तेषां पिपासा तु तालु–कंठजिह्वादिशोषणी ॥ सकलांभोधिपानेऽपि । नोपशाम्य-

ति कार्हिचित् ॥ ५८ ॥ क्षुरिकाद्यैरप्यजय्या । कंडूर्देहेऽतिदुःखदा ॥ अनंतगुणितोऽत्रत्याद्याव-
ज्जीव ज्वरस्तथा ॥ ५९ ॥ अनंतघ्न पारवश्यं । दाहशोकभयाद्यपि ॥ कष्टं विभंगमप्येषां ।
वैरिशस्त्रादिदर्शनात् ॥ ६० ॥ तत्रत्यक्ष्मांभोऽग्निमरुद्—द्रुमस्पर्शोऽतिदुःखदः ॥ अग्निस्त्वत्रोप-
चरितः । क्ष्मादिकायास्तु वास्तवाः ॥ ६१ ॥ तथोक्तं—रयणप्पभापुढविणेरइआणं भंते केरिस-
यं पुढविफासं पच्चणुभवमाणा विहरंति? गो० अणिट्ठं जाव अमणामं, एवं जाव अहे सत्त-
मापुढविणेरइआ एवं आउफासं जाव वणस्सइफासं, इति भगवत्यां श० १३ उ० ४ सूत्रे.
इत्येवं विविधा तेषु । वर्त्तते क्षेत्रवेदना ॥ मिथ्यादृशां नारकाणां । परस्परकृतापि सा ॥६२॥
तथाहि——दूरादन्योऽन्यमालोक्य । श्वानः श्वानमिवापरं ॥ ते युद्ध्यते ससंरंभं । ज्वलंतः क्रोध-
वह्निना ॥ ६३ ॥ विधाय वैक्रियं रूपं । शस्त्रैः क्षेत्रानुभावजैः ॥ पृथ्वीरूपैर्वैक्रियैर्वा । कुंतासि-
तोमरादिभिः ॥ ६४ ॥ करांह्रिदंताघातैश्च । ते निघ्नंति परस्परं ॥ भूमौ लुठंति कृत्तांगाः ।
शूनांतर्महिषादिवत् ॥ ६५ ॥ परोदीरितदुःखानि च । सहंते नासुरेषु ते ॥ उदीरयंति सम्य-
क्त्व—वतस्तत्त्वविचारणात् ॥ ६६ ॥ अत एव स्वल्पपीडाः । स्वल्पकर्माण एव च ॥ मिथ्या-

दृग्भ्यो नारकेभ्यो । नारकाः शुद्धदृष्टयः ॥ ६७ ॥ मिथ्यादृशस्तु क्रोधेनो–दीरयंतः परस्परं ॥ पीडाः कर्माण्यर्जयंति । भूयांसि भूरिवेदनाः ॥ ६८ ॥ तथाहु —

नेरइया डुविहा प० तं० माइमिच्छदिठ्ठी उववन्नगा य, अमाइ सम्मदिठ्ठी उववन्नगा य. तच्छणं जे से माइमिच्छदिठ्ठी, तेणं महाकम्मतराए चेव जाव महावेयणतरा चेव. तच्छणं जे से अमाइसम्मदिठ्ठी तेणं अप्पकम्मतराए चेव, अप्पवेअणतराए चेव. भगवती शत० १८ पंचमोद्देशके. मनोदुःखापेक्षया तु । सदृशो भूरिवेदनाः ॥ यदेते पूर्वकर्माणि । शोचंति न तथा परे ॥ ६९ ॥ तथाहुः–तच्छणं जे ते सन्निभूया, तेणं महावेअणा, तच्छणं जे ते असन्निभूया तेणं अप्पवेअणतरागा. अत्र ' सन्निभूयत्ति ' संज्ञा सम्यग्दर्शनं तद्वंतो भूताः, यद्वा पूर्वभवे संज्ञिपंचेंद्रियाः संतो नारकत्वं प्राप्ताः, अथवा संज्ञीभूताः पर्याप्तकीभूताः, तद्विपरीताः सर्वत्रासंज्ञीभूताः, इति भगवतीशत० १ द्वितीयोद्देशके. तप्तायःपुत्रिकाश्लेषः । संतप्तत्रपुपायनं ॥ अयोघनादिघाताश्चा–रोपणं कूटशाल्मलौ ॥ ७० ॥ क्षते क्षारोष्णतैलादि–क्षेपणं भ्राष्ट्रभर्जनं ॥ कुंतादिप्रोतनं यंत्रे । पीडनं च तिलादिवत् ॥ ७१ ॥ क्रकचैः पाटनं तप्त–वालु-

कास्ववलारणे ॥ वैक्रियोलूकहर्यक्ष–कंकादिभिः कदर्थनं ॥ ७२ ॥ स्नावनं वैतरण्यां च । योधनं कुर्कुटादिवत् ॥ प्रवेशन चासिपत्र–वने कुंभीषु पाचनं ॥ ७३ ॥ परमाधार्मिकैः क्लृप्ता । इत्याद्या विविधा व्यथाः ॥ वेदयंते नारकास्ते । दुःकर्मवशवर्त्तिनः ॥ ७४ ॥ यदाहुः—

श्रवणलवनं नेत्रोद्धारं करक्रमपाटनं । हृदयदहनं नासाछेदं प्रतिक्षणदारुणं ॥ कटविदहनं तीक्ष्णाघातत्रिशूलविभेदन । दहनवदनैः कंकैर्घोरैः समंतति च भक्षणं ॥ ७५ ॥ छिद्यंते कृपणाः कृतांतपरशोस्तीक्ष्णेन धारासिना । क्रंदंतो विषविच्युभिः परिवृताः संभक्षणव्यापृतै. ॥ पाट्यंते क्रकचेन दारुवदसिप्रछिन्नबाहुद्वयाः । कुंभीषु त्रपुपानदग्धतनवो मूषासु चांतर्गताः ॥ ७६ ॥ भृज्यंते ज्वलदंबरीषहुतभुक्ज्वालाभिरारावणाः । दीप्तांगारनिभेषु वज्रभवनेष्वंगारकेषूत्थिताः ॥ दह्यंते विकृतोर्ध्वबाहुवदनाः क्रंदंत आर्त्तस्वराः । पश्यंतः कृपणा दिशो विशरणास्त्राणाय को नो भवेत् ॥ ७७ ॥ तीक्ष्णैरसिभिर्दीप्तैः । कुंतैर्विषमैः परश्वधैश्चक्रैः ॥ परशुत्रिशूलमुद्गर–तोमरवासीमुसुंढीभिः ॥ ७८ ॥ संभिन्नतालुशिरस–छिन्नभुजाछिन्नकर्णनासौष्ठाः ॥ भिन्नहृदयोदरांत्रा । भिन्नाक्षिपुटाः सुदुःखार्त्ताः ॥ ७९ ॥ निपतंत उत्पतंतो । वि·

चेष्टमाना महीतले दीनाः ॥ नेक्षते त्रातारं । नैरयिकाः कर्मपटलांधाः ॥ ८१ ॥ इत्यादि, तथा—कुंभीषु पच्यमानास्ते । प्रोच्छलंत्यूर्ध्वमर्दिताः ॥ उत्कर्षतो योजनानां । शतानि पंच नारकाः ॥ ८२ ॥ त्राट्यते निपतंतस्ते । वज्रचंचूविहंगमैः ॥ व्याघ्रादिभिर्विलुप्यते । पतिता भुवि वैक्रियैः ॥ ८३ ॥ परमाधार्मिकास्ते च । पापिनोऽत्यंतनिर्दयाः ॥ पंचाग्न्यादितपःकष्ट—प्राप्तासुरविभूतयः ॥ ८४ ॥ मृगयासक्तवन्मेष—महिषाद्याजिदर्शिवत् ॥ एते हृष्यंति ताडीव्याद् । दृष्ट्वार्त्तान् हंत नारकान् ॥ ८५ ॥ हृष्टाः कुर्वंत्यट्टहासं । त्रिपद्यास्फालनादिकं ॥ इत्थं यथैषां स्यात्प्रीति—र्न तथा नाटकादिभिः ॥ ८६ ॥ मृत्वांडगोलिकाभिख्या—स्तेऽपि स्युर्जलमानुषाः ॥ ग्रहयैः प्रलोभ्यानीतास्ते । तदंडगोलकार्थिभिः ॥ ८७ ॥

यंत्रेषु पीड्यमानाश्च । सोढकष्टकदर्थनाः ॥ पञ्चिर्मासैर्मृता यांति । नरकेष्वसकृत्तथा ॥ ॥ ८७ ॥ घर्मायां च त्रिधाप्येताः । पूर्वोक्ताः संति वेदनाः ॥ परं शीतोष्णयोर्मध्ये । उष्णैव केवलवेदना ॥ ८८ ॥ तथाहि—उत्पत्तिस्थानकान्येषां । संत्यावृतगवाक्षवत् ॥ ततोत्पत्याधः पतंति । कष्टात्पुष्टवपुर्भृतः ॥ ८९ ॥ अन्यत्र चोत्पत्तिदेशात् । प्रालेयाचलशीतलात् ॥ सर्वत्र न-

रकेषु क्ष्मा । खदिरांगारसन्निन्ना ॥ ९० ॥ ततः शीतयोनिकानां । तेषां नारकदेहिनां ॥ ज-
नयत्यधिकं कष्ट । क्षेत्रमुष्णं हुताशवत् ॥ ९१ ॥ प्रथमप्रतरे चास्यां । नारकाणां न्नवेद्वपुः ॥
हस्तत्रयं द्वितीयेऽस्मिन् । हस्ताः पंचाधिकानि च ॥ ९२ ॥ अष्टांगुलानि सार्द्धानि । तृतीये
प्रस्तटे पुनः ॥ सप्तहस्ताः सप्तदशां–गुलान्युपरि निर्दिशेत् ॥ ९३ ॥ चतुर्थे प्रस्तटे हस्ता ।
दश सार्द्धं तथांगुलं ॥ दशांगुलाधिका ज्ञेया । हस्ता द्वादश पञ्चमे ॥ ९४ ॥ षष्ठे चतुर्दश क-
राः । ससार्द्धाष्टादशांगुलाः ॥ सप्तमे च सप्तदश । कराः स्युस्त्र्यंगुलाधिकाः ॥ ९५ ॥ एको-
नविंशतिर्हस्ताः । ससार्द्धैकादशांगुलाः ॥ अष्टमप्रस्तटे देहो । नवमप्रस्तटे पुनः ॥ ९६ ॥

युक्तांगुलानां विंशत्या । कराणामेकाविंशतिः ॥ दशमे जिनसंख्यास्ते । ससार्द्धचतुरंगु-
लाः ॥ ९७ ॥ एकादशे कराः षड्विं–शतिस्त्रयोदशांगुलाः ॥ द्वादशेऽष्टाविंशतिस्ते–गुलाः सा-
र्द्धैकविंशतिः ॥ ९८ ॥ षडंगुलाधिका एक–त्रिंशद्धस्तास्त्रयोदशे ॥ प्रतरेषु वपुर्मानं । क्रमाड्-
त्प्रत्नाकितेः ॥ ९९ ॥ स्वान्नाविकतनोर्देह–मानमेतदुदीरितं ॥ स्वस्वदेहाद् द्विगुणितं । स-
र्वत्रोत्तरवैक्रियं ॥ १०० ॥ जघन्यतस्तु सहजो–नरवैक्रिययोः क्रमात् ॥ अंगुलासंख्यसंख्यां

शौ । मानप्रारंभ एव तत् ॥ १ ॥ सर्वास्वपि क्षितिष्वेवं । सर्वेषां नारकांगिनां ॥ स्वाभावि-
कांगाद् द्विगुणं । ज्ञेयमुत्तरवैक्रियं ॥ २ ॥ अत्रायमाम्नायः—पइपयरवुड्ढिअंगुल—सड्ढा उप्पन्न
हुंति रयणाए ॥ तिकरतिअंगुलकरसत्त । अंगुला सड्ढिगुणवीसं ॥ ३ ॥ पणधणुअंगुलवीसं ।
वारसधणु दुन्नि हत्थ सड्ढा य ॥ वासट्ठिधणुहसड्ढा । बीयाइसु पयरवुड्ढि कमा ॥ ४ ॥ सह-
स्राणि दशाब्दानां । प्रथमप्रतरे स्थितिः ॥ जघन्या पुनरुत्कृष्टा । सहस्रा नवतिः स्मृताः ॥
॥ ५ ॥ दशलक्षाश्च वर्षाणां । लक्षाणां नवतिस्तथा ॥ क्रमाज्जघन्योत्कृष्टा च । द्वितीयप्रतरे
स्थितिः ॥ ६ ॥ एवं च—

नवत्यब्दसहस्रेभ्यः । समयाद्यधिकस्थितिः ॥ दशाब्दलक्षोनायुश्च । न संभवति नारकः
॥ ७ ॥ वर्षाणां नवतिर्लक्षाः । पूर्वकोटिस्तथैव च ॥ तृतीयप्रतरे ज्ञेया । जघन्योत्कर्षतः स्थि-
तिः ॥ ८ ॥ जघन्या पूर्वकोट्येका । चतुर्थप्रतरे स्थितिः ॥ दशभागीकृतस्यैको । भागोऽब्धेः
परमा पुनः ॥ ९ ॥ एको भागः पंचमे च । जघन्योत्कर्षतः पुनः ॥ स्यातां द्वौ दशमौ भा-
गौ । तौ षष्ठे च जघन्यतः ॥ १० ॥ उत्कर्षतश्च षष्ठे स्यु—स्त्रयो भागास्त एव च ॥ जघन्यतः

सप्तमे स्यु–रुत्कर्षात्तच्चतुष्टयं ॥ ११ ॥ जघन्यतोऽष्टमे भागा–श्चत्वार एव तादृशाः ॥ उत्कर्ष-
तश्चाष्टमे स्यु–र्भागाः पंच पयोनिधेः ॥ १२ ॥ पंचैव भागास्तादृक्षा । नवमे तु जघन्यतः ॥
उत्कर्षान्नवमे षट् ते । दशमे षड् जघन्यतः ॥ १३ ॥ उत्कर्षाद्दशमे सप्त–काद्शे ते जघन्य-
तः ॥ एकादशेऽष्ट चोत्कर्षाद् । द्वादशेऽष्ट जघन्यतः ॥ १४ ॥ द्वादशे पुनरुत्कर्षा–न्नव भागा
स्त्रयोदशे ॥ नव भागा जघन्येनो–त्कर्षतः सागरोपमं ॥ १५ ॥ अस्यां लेश्या च कापोती ।
जघन्योऽवधिगोचरः ॥ गव्यूतानां त्रयं सार्द्धं । परस्तेषां चतुष्टयं ॥ १६ ॥ उत्पद्यंते च्यवंते च
। सर्वदा नारका इह ॥ कदाचिद्विरहोऽपि स्या–ज्जघन्यः समयं स च ॥ १७ ॥ उत्कर्षतो मु-
हूर्त्तानां । चतुर्विंशतिराहिता ॥ सर्वासां समुदाये च । मुहूर्त्ता द्वादशांतरं ॥ १८ ॥ एकेन स-
मयेनैका–द्योऽसंख्यावसानकाः ॥ उत्पद्यंते च्यवंतेऽस्या–मेवं सर्वक्षितिष्वपि ॥ १९ ॥ इ-
ति रत्नप्रभापृथ्वी ॥

अथ वंशाभिधा पृथ्वी । द्वितीया परिकीर्त्यते ॥ या शर्कराणां बाहुल्या–च्छोत्रेण शर्क-
राप्रभा ॥ २० ॥ घनोदध्यादिकं सर्वं । ज्ञेयमत्रापि पूर्ववत् ॥ घनोदध्यादिवलय–विष्कंभस्तु

विशिष्यते ॥ २१ ॥ स चैवं—योजनैकतृतीयांश—युतानि योजनानि षट् ॥ वंशायामाद्यवलये । विष्कंभः परिकीर्त्तितः ॥ २२ ॥ पादोनानि योजनानि । पंच मानं द्वितीयके ॥ योजनं योजनस्य द्वा—दशांशाः सप्त चांतिमे ॥ २३ ॥ त्रयोदशभिरित्येवं । तृतीयभागवर्जितैः ॥ अलोकः शर्करापृथ्वी—पर्यंतात्किल योजनैः ॥ २४ ॥ एकं लक्षं योजनानां । सद्वात्रिंशत् सहस्रकं ॥ अस्या बाहल्यमादिष्टं । विशिष्टज्ञानशालिभिः ॥ २५ ॥ मुक्त्वैकैकं सहस्रं च । प्राग्वदस्यामुपर्यधः ॥ एकलक्षे योजनानां । सहस्रैस्त्रिंशतान्विते ॥ २६ ॥ एकादश प्रस्तटाः स्यु—स्तेषां प्रत्येकमंतरं ॥ योजनानां सहस्राणि । नवसप्तशतानि च ॥ २७ ॥ प्रतिप्रतरमेकैको । भवेच्च नरकेंद्रकः ॥ मध्यभागेऽथ नामानि । तेषां ज्ञेयान्यनुक्रमात् ॥ २८ ॥ घनिको १ धनकश्चैव २ । मनको ३ वनकस्तथा ४ ॥ घट्ट ५ संघट्ट ६ जिह्वाख्या ७ । वपजिह्वस्तथापरः ८ ॥ २९ ॥ लोलश्च ९ लोलावर्त्तश्च १० । घनलोल ११ स्तथैव च ॥ प्रतिप्रतरमेभ्योऽष्टा—वष्टौ स्युर्नरकालयः ॥ ३० ॥ तत्राद्यप्रतरमध्य—नरकादावलीप्रति ॥ षट्त्रिंशद्दिक्षु नरकाः । पंचत्रिंशद्विदिक्षु च ॥ ३१ ॥ प्रथमे पंक्तिगाः पंचा—शीतियुक्तं शतद्वयं ॥ द्वितीया-

दिषु चैकैक–हीनाः स्युः सर्वपंक्तयः ॥ ३२ ॥ द्वितीयप्रतरे तस्माद्–द्विशती सप्तसप्ततिः ॥ तृतीये पंक्तिनरका । द्विशत्येकोनसप्ततिः ॥ ३३ ॥ चतुर्थे पंक्तिनरका । द्वे शते सैकषष्टिके ॥ पचमे द्विशती तेषां । त्रिपंचाशत्समन्विता ॥ ३४ ॥ पंचचत्वारिंशदाद्ये । द्वे शते षष्ट ईरिताः ॥ सप्तमप्रस्तटे सप्त–त्रिंशताढ्या शतद्वयी ॥ ३५ ॥ एकोनत्रिंशदधिके । द्वे शते प्रस्तटेऽष्टमे ॥ एकविंशत्यधिके च । द्वे शते नवमे मताः ॥ ३६ ॥ शतद्वयं च दशमे । त्रयोदशाधिकं भवेत् ॥ एकादशे प्रस्तटे च । पंचोत्तरं शतद्वय ॥ ३७ ॥

षड्विंशतिः शतानि स्यु–र्नवतिः पंचभिर्युता ॥ वंशायां नरकावासाः । सर्वे पंक्तिगताः किल ॥ ३८ ॥ सहस्राः सप्तनवति–श्चतुर्विंशतिलक्षकाः ॥ त्रिशती पंचभिर्युक्ता । प्राग्वत्पुष्पावकीर्णकाः ॥ ३९ ॥ सर्वे च नरकावासा । लक्षाः स्युः पंचविंशतिः ॥ वंशायां ज्ञानिभिर्दृष्टा । ज्ञानेन सर्वगामिना ॥ ४० ॥ एषां संस्थानमुच्चत्वं । स्वरूपं वेदनादिकं ॥ रत्नप्रभावद्विज्ञेयं । त्र्यस्राद्यनुक्रमोऽपि च ॥ ४० ॥ षडंगुलाधिका एक–त्रिंशत्करा वपुर्भवेत् ॥ प्रथमप्रस्तटे वंशा–पृथिव्यां नारकांगिनां ॥ ४१ ॥ द्वितीये च चतुस्त्रिंश–त्करा नवांगुलाधिकाः

॥ द्वादशांगुलयुक् सप्त–त्रिंशत्करास्तृतीयके ॥ ४२ ॥ चत्वारिंशत्करास्तुर्ये–ऽधिकपंचदशांगु-
लाः ॥ पंचमे ते त्रिचत्वारिं–शत्सहाष्टादशांगुलाः ॥ ४३ ॥ कराणां सप्तचत्वारिं–शद्विहीनां-
गुलैस्त्रिभिः ॥ षष्ठेऽथ सप्तमे पूर्णाः । कराः पंचाशदाहिताः ॥ ४४ ॥ अष्टमे च त्रिपंचाश–
त्करास्त्र्यंगुलशालिनः ॥ नवमेंगुलषट्काढ्याः । षट्पंचाशत्करा मताः ॥ ४५ ॥ एकोनषष्टिह-
स्तानां । दशमे सनवांगुलाः ॥ एकादशे च द्वाषष्टिः । कराः सद्वादशांगुलाः ॥ ४६ ॥ स्थि-
तिर्जघन्यास्यामाद्ये–बुधिमानाऽपरा तु सा ॥ कतैकादशभागस्यां–बुधद्भागद्वयान्विता ॥४८॥
द्वितीयप्रस्तटे लघ्वी । द्विभागसहितोंबुधिः ॥ उत्कृष्टा चैकादशांशै–श्चतुर्भिरधिकोंबु-
धिः ॥ ४९ ॥ तृतीये प्रस्तटे वार्द्धि–श्चतुर्भागयुतो लघुः ॥ षड्भिर्भागैर्युतश्चाब्धि–रुत्कृष्टा स्थि-
तिराहिता ॥ ५० ॥ जघन्या प्रस्तटे तुर्ये । षड्भागयुतवारिधिः ॥ उत्कृष्टा चाष्टभिर्भागै–र्यु-
क्त एकः पयोनिधिः ॥ ५१ ॥ पंचमेऽल्पीयसी भागै–रष्टभिः सह वारिधिः ॥ गरीयसी चात्र
भागै–र्दशभिः सह तोयधिः ॥ ५२ ॥ दशभागान्वितश्चाब्धिः । षष्टे तु स्याज्जघन्यतः ॥ उ-
त्कर्षतश्चैकभाग–संयुक्तं सागरद्वयं ॥ ५३ ॥ सागरद्वयमेकांश–संयुक्तं सप्तमे लघुः ॥ त्रिभि-

रेकादशांशैश्च । युक्तमब्धिद्वयं गुरुः ॥ ५४ ॥ अष्टमे तु त्रिभिर्भागैः । सहाब्धिद्वितीयं ल-
घुः ॥ अंचितं पंचभिर्भागै-र्वारिधिद्वितयं गुरुः ॥ ५५ ॥ नवमेऽल्पीयसी पंच-भागाढ्यमंबु
धिद्वयं ॥ पयोधिद्वितयं सप्त-भागोपेतं गरीयसी ॥ ५६ ॥ जघन्या दशमे सप्त-भागाढ्य
सागरद्वय ॥ उत्कृष्टा सागरद्वंद्वं । भागैर्नवभिरन्वितं ॥ ५७ ॥ नव भागान्वितं वार्द्धि-द्वयमे-
कादशे लघुः ॥ उत्कृष्टा च वारिधीनां । संपूर्णं त्रितय भवेत् ॥ ५८ ॥ प्राग्वल्लेश्या च कापो-
ती । ह्यवधेर्गोचरा गुरुः ॥ गव्यूतानां त्रयं सार्द्धं । गव्यूतत्रितयं लघुः ॥५९॥ नारकव्यवनो-
त्पत्ति-विरहोऽत्र जघन्यतः ॥ समयं यावदुत्कर्षा-द्दिनानि सप्त कीर्त्तितः ॥ ६० ॥ इति शर्क-
राप्रभापृथ्वी. ॥ अथ शैलाभिधा पृथ्वी । तृतीया परिकीर्त्यते ॥ या वालुकानां बाहुल्या-
त्तोत्रेण वालुकाप्रभा ॥ ६१ ॥ अस्यां प्रथमवलये । विष्कंभो योजनानि षट् ॥ द्वौ त्रिभागौ
योजनस्य । द्वितीये वलये पुनः ॥ ६२ ॥ पचैव योजनानि स्यु-र्वलयेऽथ तृतीयके ॥ योज-
नस्य द्वादशांशै-रष्टभिः सह योजनं ॥ ६३ ॥ त्रयोदशभिरित्येवं ! स तृतीयांशयोजनैः ॥
अलोको वालुकापृथ्वी-पर्यंततः प्ररूपितः ॥ ६४ ॥ शेषं घनोदध्यादिस्वरूपं घर्मावत् ॥ अ-

द्वाविंशत्या सहस्रै–र्योजनानां समन्वितं ॥ लक्षं बाहल्यमादिष्ट–मस्यां दृष्टजगत्त्रयैः ॥६५॥
मुक्त्वा चैकैकं सहस्रं । प्राग्वदस्यामुपर्यधः ॥ मध्ये षड्विंशतिसह–स्राढ्यैकलक्षयोजनं ॥६६॥

नव स्युः प्रस्तटास्तेषां । प्रत्येकमिदमंतरं ॥ सहस्राणि द्वादशैव । त्रिशती पंचसप्ततिः ॥ ६७ ॥ प्रतिप्रतरमेकैको । मध्ये स्यान्नरकेंद्रकः ॥ ते च तप्त १ स्तपितश्च २ तपन ३ स्तापन ४ स्तथा ॥ ६८ ॥ निदाघश्च ५ प्रज्वलितः ६ । पर ज्ज्वलिताग्निधः ७ ॥ तथा संज्वलिताग्निख्यः ८ । संप्रज्वलितसंज्ञकः ९ ॥ ६९ ॥ एभ्यश्च पंक्तयो दिक्षु । विदिशासु च निर्गताः ॥ पंचविंशतिरावासा–स्तत्र दिग्वर्त्तिपंक्तिषु ॥ ७० ॥ विदिशापंक्तिषु चतु–र्विंशतिर्नरकालयाः प्रथमप्रतरे सप्त–नवत्याढ्यं शतं समे ॥ ७१ ॥ द्वितीयादिप्रस्तटे स्युः । श्रेण्य एकैकवर्जिताः ॥ ततो द्वितीय एकोन–नवत्याढ्यं शतं समे ॥ ७२ ॥

सैकाशीति तृतीये त–च्चतुर्थे सत्रिसप्तति ॥ पंचमे प्रतरे प्रोक्तं । पंचषष्टियुतं शतं ॥ ॥ ७३ ॥ षष्टे च प्रस्तटे सप्त–पंचाशं संमतं शतं ॥ शतमेकोनपंचाश–द्युक्तमुक्तं च सप्तमे ॥ ७४ ॥ अष्टमे त्वेकचत्वारिं–शतोपेतं शतं मतं ॥ त्रयस्त्रिंशं शतं चैकं । नवमे प्रस्तटे त्व-

वेत् ॥ ७५ ॥ एवं चतुर्दशशती । पंचाशीतिसमन्विता ॥ वालुकायां पंक्तिगताः । सर्वेऽपि नरकालयाः ॥ ७६ ॥ सहस्राण्यष्टनवति–स्तथा लक्षाश्चतुर्दश ॥ शताः पंच पंचदशा–धिकाः पुष्पावकीर्णकाः ॥ ७७ ॥ एवं च वालुकापृथ्व्यां । नरकाः सर्वसंख्यया ॥ लक्षाः पंचदश प्रोक्ता–स्तत्वज्ञानमहार्णवैः ॥ ७७ ॥ शेषं सर्वं स्वरूपं घर्मावत् ॥ द्वाषष्टिः पाणयः सार्द्धाः । प्रथमप्रस्तटे तनुः ॥ सार्द्धसप्तांगुलाख्याश्च । द्वितीये सप्ततिः कराः ॥ ७८ ॥

तृतीयेऽष्टसप्ततिस्ते । संयुक्ता अंगुलैस्त्रिभिः ॥ तुर्ये सार्द्धांगुलन्यूनाः । षडशीतिः कराः किल ॥ ७९ ॥ पंचमे च त्रिनवतिः । कराः सार्द्धदशांगुलाः ॥ एकोत्तरशतं षष्टे–ऽध्यर्द्धत्रयोदशांगुलाः ॥ ८० ॥ नवोत्तरं शतं हस्ताः । सप्तमे सनवांगुलाः ॥ सार्द्धांगुलचतुष्काढ्यं । शतं सप्तदशोत्तरं ॥ ८१ ॥ कराणामष्टमे ज्ञेयं । नवमप्रस्तटे तथा ॥ शतं सपादं संपूर्णं । द्विघ्नं तूत्तरवैक्रियं ॥ ८२ ॥ प्रथमेऽब्धित्रयं लघ्वी । स्थितिरुत्कर्षतोंबुधेः ॥ नवभागीकृतस्यांश–चतुष्काढ्यास्त्रयोऽर्णवाः ॥ ८३ ॥ एषैव च द्वितीये स्या–ज्जघन्या परमा पुनः ॥ वार्द्धित्रयं प्रोक्तरूपै–र्भागैरष्टभिरंचितं ॥ ८४ ॥ तृतीये तु जघन्याब्धि–त्रयं भागैः सहाष्टभिः ॥ उत्कर्षत-

त्रिभिर्भागै-र्युक्तमब्धिचतुष्टयं ॥ ८५ ॥

भागत्रयान्वितं तुर्ये । जघन्याब्धिचतुष्टयं ॥ उत्कर्षतः सप्तभाग-युक्तमब्धिचतुष्टयं ॥ ॥ ८६ ॥ एषैव प्रतरे लघ्वी । पंचमे परिकीर्त्तिता ॥ उत्कर्षतो द्विभागाढ्या । प्रज्ञप्ता पंचसागरी ॥ ८७ ॥ षष्ठे जघन्यतः पंच-पारावारी द्विभागयुक् ॥ उत्कर्षतः पंचपारा-वारी षड्भागसंयुता ॥ ८८ ॥ इयमेव जघन्या च । सप्तमप्रतरे भवेत् ॥ युक्तान्येकेन भागेन । परमा सागराणि षट् ॥ ८९ ॥ सागराणि षडेकांश-संयुक्तान्यष्टमे लघुः ॥ उत्कृष्टा षट् सागराणि । पंचभागयुतानि च ॥ ९० ॥ नवमे पंचभागाढ्या । जघन्या षट् पयोधयः ॥ उत्कर्षतः स्थितिश्चात्र । संपूर्णाः सप्त सागराः ॥ ९१ ॥ प्रथमप्रतरे चात्र । केषांचिन्नारकांगिनां ॥ कापोतलेश्या सर्वेषु । नीललेश्यापरेषु च ॥ ९२ ॥ स्थितिः कापोतलेश्याया । भवेदुत्कर्षतोऽपि यत् ॥ पल्योपमासंख्यभागा-भ्यधिकं सागरत्रयं ॥ ९३ ॥

द्वितीयादिप्रस्तटे तु । जघन्यापि न सा स्थितिः ॥ तदाद्य एव प्रतरे । कापोत्यस्यामिति स्थितं ॥ ९४ ॥ तत्रापि पल्यासंख्यांशा-धिकाब्धित्रयावधि ॥ बिभ्रतामायुरेषा स्या-

नीलैवातोऽधिकायुषां ॥ ९५ ॥ ॥ सजातीयापि लेश्या स्या–दधोऽधोऽनुक्रमादिह ॥ क्लिष्टा
क्लिष्टतरा क्लिष्ट–तमा सर्वासु भूमिषु ॥ ९६ ॥ उत्कर्षतोऽवधिक्षेत्रं । गव्यूतत्रयमत्र च ॥
जघन्यतश्च गव्यूत–द्वयं सार्द्धं तदाहितं ॥ ९७ ॥ अत्रोत्पत्तिच्यवनयो–रंतरं परमं भवेत् ॥
दिनानि पंचदश त–ज्जघन्यं समयात्मकं ॥ ९८ ॥ इति वालुकाप्रभा ॥ अथांजनाभिधा पृ-
थ्वी । चतुर्थीयं निरूप्यते ॥ या प्रोक्ता पंकबाहुल्या–त्पंकप्रभेति गोत्रतः ॥ ९९ ॥ सप्तयो-
जनविस्तीर्ण–मस्यां वलयमादिमं ॥ सपादपंचपादोन–द्वयमाने क्रमात्परे ॥ १०० ॥ चतुर्द-
शभिरित्येवं । संपूर्णैर्ननु योजनैः ॥ पंकप्रभायाः पर्यंता–दलोकः परिकीर्त्तितः ॥ ' ॥ लक्षं
सहस्त्रैर्विंशत्या–धिकं बाहल्यमत्र च ॥ मुक्त्वा सहस्त्रमेकैकं । प्राग्वदत्राप्युपर्यधः ॥ २ ॥ म-
ध्ये चाष्टादशसह–स्त्राढ्ययोजनलक्षके ॥ भवति प्रस्तटाः सप्त । तेषां प्रत्येकमंतरं ॥ ३ ॥
योजनानां सहस्त्राणि । षोडशैक तथा शतं ॥ सषट्षष्टिद्वौ त्रिभागौ । योजनस्येति की-
र्त्तितं ॥ ४ ॥ प्रतिप्रतरमेकैको । भवेच्च नरकेंद्रकः ॥ ते चामी गदिता आर १–नारो २ मा-
र ३ स्तथापरः ॥ ५ ॥ वर्च ४ स्तमः ५ खाडखड ६–स्तथा खडखडाभिधः ७ ॥ प्रतिप्रतर-

मेन्यश्च । प्रागवदष्टाष्टपंक्तयः ॥ ६ ॥ स्युः षोडश पंचदशा–वासा दिक्षु विदिक्षु च ॥ शतं स-पादं प्रथम–प्रतरे सर्वसंख्यया ॥ ७ ॥ द्वितीयादिषु चैकैक–हीना अष्टापि पंक्तयः ॥ ततो द्वितीयप्रतरे । सर्वे सप्तदशं शतं ॥ ८ ॥ नवोत्तरं तृतीये तत् । तुर्ये एकोत्तरं शतं ॥ पंचमे च त्रिनवतिः । पंचाशीतिश्च षष्ठके ॥७॥ सर्वे च पंक्तिनरकाः । सप्तमे सप्तसप्ततिः ॥ सप्ताधिका सप्तशती । सर्वेऽस्यां पंक्तिसंश्रयाः ॥ ८ ॥ सहस्रा नवनवति–र्नव लक्षास्तथा परे ॥ द्विशती सत्रिनवति–रस्यां पुष्पावकीर्णकाः ॥ ए ॥ एवं च सर्वे नरका–वासाः पंकप्रभाक्षितौ ॥ निर्दिष्टा दश लक्षाणि । साक्षात्कृतचराचरैः ॥ १० ॥

इत आरभ्य नो पीडाः । परमाधार्मिकोद्भवाः ॥ ततोऽस्यां द्विविधा एव । क्षेत्रजाश्च मिथः कृताः ॥ ११ ॥ परमेताः प्राक्तनाभ्यो–ऽनंतानंतगुणाधिकाः ॥ तीव्रास्तीव्रतरास्तीव्र–तमाश्चानुक्रमादधः ॥ १२ ॥ तत्राप्यत्रोपरितन–प्रतरेषु बहुष्वपि ॥ उष्णा स्तोकेष्वधःस्थेषु । शीता च क्षेत्रवेदना ॥ १३ ॥ उष्णेषु च नरकेषु । नारकाः शीतयोनयः ॥ नरकेषु च शीतेषु । नारका उष्णयोनयः ॥ १४ ॥ सर्वेष्वपि नरकेषु । ज्ञेय एवं विपर्ययः ॥ नारकोत्पत्तिदेशा-

न्य–क्षेत्रयोः सोऽतिदुःखदः ॥ १५ ॥ हैमत्रिषष्टिचरिते सप्तमपर्वणि त्वत्रापि परमाधार्मिककृता वेदनोक्ता, तथाहि—सिंहादिरूपैर्विकृतै–स्तत्र शंबूकरावणौ ॥ लक्ष्मणेन समं क्रुद्धौ । युद्ध्यमानौ ददर्श सः ॥ १ ॥

नैवं वो युद्ध्यमानानां । दुःखं स्त्रावीति वादिनः ॥ परमाधार्मिकाः क्रुद्धा । अग्निकुंडेषु तान्न्यधुः ॥ २ ॥ शतं सपादं हस्तानां । प्रथमेंगं द्वितीयके ॥ स्यात् षट्चत्वारिंशशत–मूनं चतुर्भिरंगुलैः ॥ १६ ॥ करास्तृतीये षट्षष्टि–शतं सषोडशांगुलं ॥ सप्ताशीतिशतं तुर्ये–गुलैर्द्वादशभिर्युतं ॥ १७ ॥ अष्टाधिके द्वे शते च । पंचमेऽष्टांगुलाधिके ॥ षष्टे च प्रस्तटे देहमानं हस्तशतद्वयं ॥ १८ ॥ एकोनत्रिंशता हस्तै–श्चतुर्भिश्चांगुलैर्युत ॥ सप्तमप्रस्तटे देहो । हस्ताः सार्द्ध शतद्वयं ॥ १९ ॥ प्रथमप्रस्तटेऽथायु–र्जघन्यं सप्तसागरी ॥ उत्कृष्टा सा त्रिभिर्वार्द्धि–र्भागैर्युक्ता च साप्तिकैः ॥ २० ॥ द्वितीयप्रस्तटे त्वेषा । जघन्या कीर्त्तिता स्थितिः ॥ उत्कृष्टा षट्साप्तिकांश–समेताः सप्तवार्द्धयः ॥ २१ ॥

तृतीये तु जघन्यैषा । गदिता परमा पुनः ॥ द्वाभ्यां साप्तिकभागाभ्यां । संयुक्ता अष्ट

सागराः ॥ २२ ॥ अष्टाब्धयो भिन्नागाद्या–स्तुर्ये जघन्यतः स्थितिः ॥ पंचभिः साप्तिकैर्ना-गैः । सहाष्टांभोधयः पराः ॥ २३ ॥ पंचमे पंचभिर्नागैः । सहाष्टसिंधवो लघुः ॥ एकेन साप्ति-कांशेन । सहोत्कृष्टा नवार्णवाः ॥ २४ ॥ षष्ठे जघन्या त्वेकांश–संयुक्ताः सागरा नव ॥ च-तुर्भिः साप्तिकैर्नागैः । सहोत्कृष्टा नवाब्धयः ॥ २५ ॥ इयमेव जघन्येन । सप्तमे स्थितिरा-स्थिता ॥ उत्कर्षतः स्थितिश्चात्र । जिनैरुक्ता दशाब्धयः ॥ २६ ॥ नीला भवेदत्र लेश्या । प-रमोऽवधिगोचरः ॥ गव्यूतद्वयमध्यर्द्धं । गव्यूतद्वितयं लघुः ॥ २७ ॥ उत्पत्तेश्चवनस्यापि । ना-रकाणामिहांतरं ॥ मासमेकं भवेज्ज्येष्टं । जघन्यं समयावधि ॥ २८ ॥ इति पंकप्रभा ॥

अथ रिष्टाभिधा पृथ्वी । पंचमी परिकीर्त्यते ॥ या धूमरूपबाहुल्या–द्धूमप्रभेति गोत्रतः ॥ २९ ॥ वलयस्येह विष्कंभः । प्रथमस्य प्ररूपितः ॥ योजनस्य तृतीयांश–संयुता सप्तयो-जनी ॥ ३० ॥ द्वितीयवलये सार्द्ध–पंचयोजनविस्तृतिः ॥ तृतीये च द्वादशांशै–र्दशभिः सह योजनं ॥ ३१ ॥ इत्येवं पंचदशभि–र्योजनैश्च समंततः ॥ स्यादलोकस्तृतीयांश–न्यूनैर्धूमप्र-भांततः ॥३२॥ अष्टादशसहस्राढ्य–लक्षयोजनसंमितं ॥ बाहल्यमस्यामुदित–मुदितामितवा-

ड्र्मयैः ॥ ३३ ॥ मुक्त्वा सहस्रमेकैकं । प्राग्वदत्राप्युपर्यधः ॥ मध्येऽत्र षोडशसह—स्राढ्ययोजनलक्षके ॥ ३४ ॥ भवंति प्रस्तटाः पंच । तेषां प्रत्येकमंतरं ॥ योजनद्विशती सार्द्धाः । सहस्राः । पचाविंशतिः ॥ ३५ ॥ तेषु प्रत्येकमेकैकः । कथितो नरकेंद्रकः ॥ खात १ स्तमो २ भ्रम ३ श्चांध—स्तथांधतमसोऽपि च ॥ ३६ ॥ प्रतिप्रतरमेभ्यश्च । निर्गता अष्ट पंक्तयः ॥ चतस्रो दिग्गतास्तद्व—च्चतस्रः स्युर्विदिग्गताः ॥ ३७ ॥ दिक्पांक्तिषु नवनव । भवंति नरकाश्रयाः ॥ परास्वष्टाष्ट सर्वाग्र—माद्य एकोनसप्ततिः ॥ ३८ ॥ प्रतिप्रतरमेकैक—हीना अष्टापि पंक्तयः ॥ ततो द्वितीये पांक्तेया । एकषष्टिः प्ररूपिताः ॥ ३९ ॥ तृतीये च त्रिपचाश—त्तुरीये प्रस्तटे पुनः ॥ पंचचत्वारिंशदेव । सप्तत्रिंशच्च पंचमे ॥ ४० ॥

एवं पंक्तिगताः सर्वे । द्विशती पंचषष्टियुक् ॥ शेषाः पुष्पावकीर्णास्तु । लक्षयोर्द्वितयं तथा ॥ ४१ ॥ सहस्रा नवनवतिः । शतानि सप्त चोपरि ॥ पंचत्रिंशदिति त्रीणि । लक्षाणि सर्वसंख्यया ॥ ४२ ॥ पकप्रभावद्विज्ञेया । द्विधा पीडात्र किंत्विह ॥ स्तोकेषु नरकेषूष्णा । शेषेषु शीतवेदना ॥ ४३ ॥ कराणां द्विशती सार्द्धा । प्रथमे प्रस्तटे तनुः ॥ द्वितीये त्रिशती

द्वाद-शोत्तराः द्वादशांगुलाः ॥ ४४ ॥ हस्तास्तृतीये त्रिशती । पंचसप्ततिसंयुता ॥ सार्द्धसप्त-
त्रिंशदाढ्या । तुर्ये चतुःशती कराः ॥ ४५ ॥ शतानि पंच हस्तानां । पंचमे प्रस्तटे जिनैः ॥
पंचमज्ञानपटुभि-स्तनुमानं निरूपितं ॥ ४६ ॥ दशाब्धयो जघन्येन । प्रथमप्रस्तटे स्थितिः
॥ उत्कृष्टा च पंचभागी-कृतस्य जलधेः किल ॥ ४७ ॥ युक्ता द्वाभ्यां विभागाभ्या-मेकाद-
श पयोधयः ॥ एषैव च जघन्येन । द्वितीयप्रस्तटे भवेत् ॥ ४८ ॥ ज्येष्टा चात्र युता भागै-
श्चतुर्भिर्द्वादशाब्धयः ॥ इयमेव जघन्येन । तृतीयप्रतरे स्थितिः ॥ ४९ ॥ उत्कर्षतस्तृतीये च
। स्युश्चतुर्दश वार्द्धयः ॥ पंचभागीकृतस्याब्धे-र्भागेनैकेन संयुताः ॥ ५० ॥

एषा लघुश्चतुर्थे स्या-दुत्कृष्टात्र स्थितिः पुनः ॥ त्रिभिः पूर्वोदितैर्भागै-र्युताः पंचदशा-
ब्धयः ॥ ५१ ॥ पंचमेंशत्रयोपेता । लघुः पंचदशाब्धयः ॥ उत्कृष्टा च सप्तदश । संपूर्णा
जलराशयः ॥ ५२ ॥ केषांचिदाद्यप्रतरे । नारकाणां भवेदिह ॥ नीललेश्या यदुत्कर्षा-दप्य-
स्याः स्थितिराहिता ॥ ५३ ॥ पल्योपमासंख्यभागा-धिका दश पयोधयः ॥ ततोऽधिकस्थि-
तीनां तु । तेषां कृष्णैव केवलं ॥ ५४ ॥ गव्यूतद्वयमुत्कृष्टो । भवेदवधिगोचरः ॥ जघन्यत-

स्तु गव्यूतं । सार्द्धमुक्तोऽत्र पारगैः ॥ ५५ ॥ च्यवनोत्पत्तिविरहो । नारकाणां भवेदिह ॥ मा-
सयोर्द्वयमुत्कर्षा-ज्जघन्यात्समयावधिः ॥ ५६ ॥ इति धूमप्रभा पृथ्वी ॥ मघाभिधाथ पृथिवी
। षष्ठी स्पष्टं निरूप्यते ॥ तमसामतिबाहुल्या-द्या गोत्रेण तमःप्रभा ॥ ५७ ॥

तृतीयांशोनितान्यष्टौ । योजनानि घनोदधेः ॥ वलये विस्तृतिः षट् च । पादोनानि द्वि-
तीयके ॥ ५८ ॥ योजनं योजनस्य द्वा-दशभागीकृतस्य च ॥ भागा एकादशेत्युक्ता । तृती-
ये वलये मितिः ॥ ५९ ॥ योजनैः पंचदशभि-स्तृतीयभागसंयुतैः ॥ भवत्येवमलोकश्च । म-
घापर्यंतभागतः ॥ ६० ॥ लक्षमेकं योजनानां । सषोडशसहस्रकं ॥ बाहल्यमस्यां निर्दिष्टं ।
प्राग्वदत्राप्युपर्यधः ॥ ६१ ॥ मुक्त्वा सहस्रमेकैकं । मध्ये स्युः प्रस्तटास्त्रयः ॥ सहस्राणि द्वि-
पंचाश-त्सार्द्धान्येतेषु चांतरं ॥ ६२ ॥ हिम १ वार्द्दल २ लल्लका ३-स्त्रयोऽमी नरकेंद्रकाः ॥
क्रमात्त्रिषु प्रस्तटेषु । प्राग्वदेभ्योऽष्ट पंक्तयः ॥ ६३ ॥ दिश्यपंक्तिषु चत्वार-श्चत्वारो नरकाल-
याः ॥ त्रयस्त्रयो विदिक्ष्वेव-मेकोनत्रिंशदादिमे ॥ ६४ ॥ द्वितीयादिषु चैकैक-हीना अष्टापि
पंक्तयः ॥ एवं द्वितीयप्रतरे । पांक्तेया एकविंशतिः ॥ ६५ ॥ त्रयोदश तृतीये स्यु-स्त्रिषष्टिः

सर्वरुपया ॥ मघायां पंक्तिनरकाः । शेषाः पुष्पावकीर्णकाः ॥ ६६ ॥

सहस्रा नवनवतिः । शतानि नव चोपरि ॥ द्वात्रिंशदिति सर्वाग्रं । लक्षं पंचोनमाहिताः ॥ ६७ ॥ द्वैधात्र वेदना किंतु । शीतैव क्षेत्रवेदना ॥ मिथःकृता वेदनाश्च । विना प्रहरणैरिह ॥ ६८ ॥ मघामाघवतीजाताः । शस्त्राणि न हि नारकाः ॥ विकुर्वितु शक्नुवंति । तथा त्ववस्वज्ञावतः ॥ ६९ ॥ ततः प्रहरणाज्ञावा–न्मिथोंगेषु प्रवेशितैः ॥ वज्रतुंफकुंथुरूपैः । पीडयंति विकुर्वितैः ॥ ७० ॥ तथोक्तं जीवाभिगमे–छसत्तमासुण पुढवीसु नेरइया महंताइं लोहियकुंथुरूवाइं वयरमयतुंमाइं गोमयकीडसमाणाइं विउव्वित्ता अन्नमन्नस्स कायं समतुरंगेमाणा २ खाएमाणा २ सयपोरा किमिया इव दालेमाणा २ अंतो २ अणुपविसमाणा वेयणं उइरैंति. अत्र ' समतुरंगेमाणा २ इति ' समतुरंगायमाणा अश्वा इवान्योन्यमारोहंत इत्यर्थः ' सयपोरा किमियत्ति ' शतपर्वकृमय इक्षुकृमयः ॥ प्रथमप्रस्तटे हस्ताः । शतानि पंच न्यूघनं ॥ शतानि सप्त सार्द्धानि । द्वितीयप्रस्तटे तनुः ॥ ७१ ॥ सहस्रं पाणयः पूर्णा–स्तृतीयप्रस्तटे वपुः ॥ स्थितिर्जघन्या प्रथमे । स्यात्सप्तदश वार्द्धयः ॥ ७२ ॥ त्रिभागीकृतपाथोधे—

र्भागद्वयसमन्विताः ॥ उत्कर्षतः स्थितिश्चाद्य–प्रस्तटेऽष्टादशाब्धयः ॥ ७३ ॥ द्वितीये लघुरेषै-
व । ज्येष्टा विंशतिरब्धयः ॥ वार्द्धेस्त्रिधा खंडितस्य । भागेनैकेन संयुताः ॥ ७४ ॥ इयमेव
जघन्येन । तृतीयप्रस्तटे स्थितिः ॥ उत्कर्षतश्च संपूर्णा । द्वाविंशतिपयोधयः ॥ ७५ ॥ अवधे-
र्विषयो ज्येष्टः । सार्द्धगव्युतसंमितः ॥ लघीयांश्चैकगव्यूत–मानः प्रोक्तोऽत्र तात्त्विकैः ॥ ७६ ॥
अंतरं मरणोत्पत्त्यो–र्जघन्यं समयावधि ॥ चतुष्टयं च मासाना–मुत्कृष्टं तन्निरूपितं ॥
॥ ७७ ॥ इति तमःप्रभा पृथ्वी ॥ क्रमात्सप्तस्वपि नरकेषु वेदना ॥ अथ माघवती नाम्ना ।
सप्तमी कथ्यते मही ॥ या घोरध्वांतरूपत्वा–त्प्रोक्तात्तमस्तमःप्रभा ॥ ७८ ॥ प्रथमे योजना-
न्यष्टौ । द्वितीये योजनानि षट् ॥ तृतीये द्वे योजने च । वलयाततयः क्रमात् ॥ ७९ ॥ एवं
षोडशभिः पूर्णा–र्योजनैर्जिनभानुभिः ॥ तमस्तमायाः पर्यंता–दलोकः परिकीर्त्तितः ॥८०॥
लक्षमेकं योजनानां । सहस्रैरष्टभिः सह ॥ बाहल्यमस्यामादिष्ट–मत्र चोपर्यधः पृथक् ॥
॥ ८१ ॥ द्विपंचाशत्सहस्राणि । सार्द्धान्युन्मुच्य मध्यतः ॥ एक एव प्रस्तटः स्यात् । सहस्र-
त्रितयोन्नतः ॥ ८२ ॥ लक्षयोजनविस्तार–स्तन्मध्ये नरकेंद्रकः ॥ अप्रतिष्टानको नाम्ना । त-

स्मात्प्राग्वच्चतुर्दिशं ॥ ८३ ॥ एकैको नरकावास–स्त्र्यस्रो भूरिभयंकरः ॥ असंख्ययोजनायाम–विष्कंभपरिधिः स्मृतः ॥ ८४ ॥ तथाहि—

प्राच्यां कालः प्रतीच्यां च । महाकाल इति स्मृतः ॥ महारोरुरुत्तरस्यां । रोरुर्दक्षिणतो भवेत् ॥ ८५ ॥ विदिक्षु चात्र नैकोऽपि । तत्पंक्तीनां परिक्षयात् ॥ प्रतरोऽयं यदेकोन—पंचाशत्तम आहितः ॥ ८६ ॥ तमःप्रभावद्विज्ञेया । द्विविधात्रापि वेदना ॥ सर्वोत्कृष्टा तीव्रतमा–ऽनंतघ्ना सर्वतोऽपि हि ॥ ८७ ॥ देहमानं भवेदत्र । सहस्रद्वितयं कराः ॥ स्वाभाविकं कृत्रिमं तु । सर्वत्र द्विगुणं भवेत् ॥ ८८ ॥ द्वाविंशतिर्जलधयः । स्थितिरत्र जघन्यतः ॥ उत्कर्षतस्तु संपूर्णा–स्त्रयस्त्रिंशत्पयोधयः ॥ ८९ ॥ नारकोद्वर्त्तनोत्पत्ति–विरहोऽत्र जघन्यतः ॥ समयं यावदुत्कर्षात् । षण्मासावधिराहतः ॥ ९० ॥ गव्यूतं च तदर्द्धं चो–त्कर्षाज्जघन्यतः क्रमात् ॥ अवधेर्विषयः प्रोक्तो । जिनैर्दृष्टजगत्त्रयैः ॥ ९१ ॥ अथासु येषां जीवानां । यैश्च संहननैर्गतिः ॥ लब्धिश्चाभ्यो निर्गतानां । या स्यात्तत्सर्वमुच्यते ॥ ९२ ॥ संमूर्छिमा हि तिर्यंच । उत्कर्षात्प्रथमां क्षितिं ॥ यावद्गच्छंत एते । न द्वितीयादिषु ध्रुवं ॥ ९३ ॥

तत्राप्येषां दशाब्दानां । सहस्राणि स्थितिर्लघुः ॥ ज्येष्ठा पल्यासंख्यन्नागो । नवेन्नातः परा पुनः ॥ ९४ ॥ नत्पद्यमानाश्चैनेऽत्र । प्राग्जन्मबोधिमांद्यतः ॥ अपर्याप्तत्वे लन्नंते । ह्यव्यक्तमपि नावधिं ॥ ९५ ॥ तथाह जीवान्निगमे—' नेरइया अन्नेगइया डुअन्नाणि, अन्नेगइया तिअन्नाणि. द्वितीयामेव यावच्च । गर्न्नजाताः सरीसृपाः ॥ तृतीयावधि गच्छंति । गृध्राद्याः पापपक्षिणः ॥ ९६ ॥ क्ष्मां चतुर्थीमेव याव–त्सिंहादयश्चतुष्पदाः ॥ तथोरःपरिसर्पास्तां । पचमीं यावदेव च ॥ ९७ ॥ स्त्रियः षष्ठीमेव याव–द्यांति यावत्तमस्तमां ॥ नरा महारंन्नमग्ना । मत्स्याद्याश्च जलांगिनः ॥ ९८ ॥ ससेवार्त्तसंहनना । आद्यपृथ्वीद्वयावधि ॥ यांति यावत्तृतीयां च । कीलिकांचितन्नूघनाः ॥ ९९ ॥ सार्द्धनाराचाश्चतुर्थीं । सनाराचाश्च पंचमीं ॥ षष्ठीं यावत्सऋषन्न–नाराचा अथ सप्तमीं ॥ ३०० ॥ सवज्रर्षन्ननाराचा । एव गच्छंति नापरे ॥ नरके गच्छतामेषा–मेषोत्कर्षान्नवेद्गतिः ॥ १ ॥ आद्यक्ष्माद्यप्रतरे । सर्वेषां सा जघन्यतः ॥ जघन्योत्कर्षयोर्मध्ये । मध्यागतिरनेकधा ॥ २ ॥ आद्याया एव चोद्वृत्ता । न्नवंति चक्रवर्त्तिनः ॥ पृथिवीन्न्यो न शेषान्न्य–स्तथा न्नवस्वन्नावतः ॥ ३ ॥

एवमाद्यद्वयादेव । बलदेवार्द्धचक्रिणौ ॥ आद्यत्रयादेव तीर्थ—करा नांत्यचतुष्टयात् ॥४॥ उद्धृताः स्युः केवलिन । आद्यपृथ्वीचतुष्टयात् ॥ अंत्यत्रयागतानां तु । कैवल्य नैव संभवेत् ॥ ५ ॥ चारित्रिणो भवंत्याद्य—पंचकादाद्यषट्कतः ॥ उद्धृता देशविरताः । स्युः सप्तम्योऽपि सद्दृशः ॥ ६ ॥ एताश्च लब्धीः प्राक् क्लृप्त—पुण्यैघा नरकेषु तु ॥ प्राग्बद्धायुर्वशोत्पन्ना । लभंते नान्यनारकाः ॥ ७ ॥ ये स्युस्तीर्थंकरास्तेऽपि । प्राग्बद्धनरकायुषः ॥ पश्चात्तद्धेतुनिर्बद्ध—तीर्थकृन्नामकर्मकाः ॥ ८ ॥ ततो बद्धायुष्कतया—ऽनुभूय नारकस्थितिं ॥ उद्धृत्य नारकेभ्यः स्यु—रर्हंतः श्रेणिकादिवत् ॥ ए ॥

गर्भजेषु नृतिर्यक्षू—त्पद्यंतेसंख्यजीविषु ॥ सप्तम्यस्तादृशतिर्यक्षु । सप्तम्या निर्गताः परं ॥ ॥ १० ॥ किंच—सर्वास्वपि क्षितिष्वासु । नारकाः केचनानघाः ॥ नवीनमपि सम्यक्त्वं । लभंते कर्मलाघवत् ॥ ११ ॥ पंचेंद्रियवधैर्मांसा—हारैर्महापरिग्रहैः ॥ महारंभैश्च बध्नंति । नरकायुः शरीरिणः ॥ १२ ॥ तथोक्तं—' बंधइ नरयाउ । महारंभपरिग्गहरउ रुद्दो ' स्थानांगेऽपि —चउहिं ठाणेहिं जीवा नेरइयाउयत्ताए कम्मं पकरेंति, तं० महारंभयाए महापरिग्गहाए

कुणिमाहारेणं पंचिंदियवहेणं, अहर्निशं नारकाणां । दुःखमायुःक्षयावधि ॥ पीडाभिः पच्य-
मानानां । प्राग्भूरीकृतपाप्मनां ॥ १३ ॥ तथोक्तं जीवाभिगमे—अच्छि निमीलणमित्तं । नत्थि
सुहं दुक्खमेव अणुबद्धं ॥ नरए नेरइयाणं । अहोनिसं पच्चमाणाणं ॥ १४ ॥ कदाचिदेव य-
त्सौख्य—मल्पकाल तदल्पक ॥ उपपातादिभिर्वक्ष्य—माणैर्भवति हेतुभिः ॥ १५ ॥ तथोक्तं
—उववाएण वसायं । नेरइयदेवकम्मुणा वावि ॥ अज्झवसाणनिमित्तं । अहवा कम्माणुभा
वेणं ॥ १६ ॥ तथाहि—विनांगदाहच्छेदादि । मृतो यः पूर्वजन्मनि ॥ नारको नातिपीडार्त्तः ।
उत्पद्येतास्य तत्क्षणे ॥ १७ ॥

न प्राग्भवानुसबध । नापि क्षेत्रादिसंभवं ॥ असातं सातमित्यस्यो—पपातसमये भवेत्
॥ १८ ॥ पूर्वमित्र सुरः कश्चि—द्यथा कृष्णस्य सात्वतः ॥ करोति पीडोपशमं । तदासौ देव
कर्मणा ॥ १९ ॥ कियत्कालं सुखं किंचि—द्भजंतेऽथ ततः पर ॥ क्षेत्राद्यन्यतरा पीडा । तेषां
प्रादुर्भवेद् ध्रुवं ॥ २० ॥ सम्यक्त्वलाभे प्रथमं । चक्षुर्लाभे इवांधलाः ॥ ततः परं चार्हदादि—
गुणानामनुमोदनात् ॥ २१ ॥ एवमध्यवसायेन । सुखमासादयंत्यमी ॥ अपेक्ष्य जिनजन्मा-

दि । सातकर्मोदयेन वा ॥२२॥ कतिचिदिति चिदुच्चा नारकास्तारकाणा–मुचितमनुसरंतस्तीर्थकृन्नामकर्म ॥ सुकुलजनिमवाप्य प्राप्तचारित्रचर्या । जिनपतिपदभाजः प्राप्नुयुर्मोक्षलक्ष्मीं ॥ २३ ॥ विश्वाश्चर्यदकीर्त्तिकीर्त्तिविजयश्रीवाचकेंद्रांतिष–द्राजश्रीतनयोऽतनिष्ट विनयः श्रीतेजपालात्मजः ॥ काव्यं यत्किल तत्र निश्चितजगत्तत्वप्रदीपोपमे । सर्गश्चारुतमश्चतुर्दशतमोऽपूर्वः समाप्तः सुखं ॥ २४ ॥

॥ इति श्रीलोकप्रकाशे चतुर्दशः सर्गः समाप्तः ॥ श्रीरस्तु ॥

॥ अथ पंचदशमः सर्गः प्रारभ्यते ॥

नक्षिज्जीव जरासंध–जराजर्जरितं जवात् ॥ यतो यदुबलं सोऽस्तु । पीयूषप्रतिमः श्रिये ॥ १ ॥ तिर्यग्लोकस्य स्वरूप–मथ किंचिद्वितन्यते ॥ मया श्रीकीर्त्तिविजया–र्यवप्राप्तश्रुतश्रिया ॥ २ ॥ तत्र च–तिर्यग्लोकवर्त्तिनोऽपि । योजनानां शता नव ॥ धर्मापिंडास्थिता आद्या–स्तद्वर्णनप्रसंगतः ॥ ३ ॥ नक्ता अधोलोक एव । तत्रस्था व्यंतरा अपि ॥ रत्नप्रभोपरितलं । वर्णयाम्यथ तत्र च ॥ ४ ॥ संति तिर्यगसंख्येय–माना द्वीपपयोधयः ॥ सार्द्धोद्धारांभो-

द्वियुग्म—समयैः प्रमिताश्च ते ॥ ४ ॥ तत्र जंबूद्वीपनामा । प्रथमो मध्यतः स्थितः ॥ लवणाब्धिस्तमावेष्ट्या—वस्थितो वलयाकृतिः ॥ ५ ॥ तमावेष्ट्य पुनर्द्वीपो । धातकीखंडसंज्ञकः ॥ तमप्यावेष्ट्य परितः । स्थितः कालोदवारिधिः ॥ ६ ॥

कक्षीकृत्य च कालोदं । पुष्करद्वीप आस्थितः ॥ पुष्करद्वीपमावेष्ट्य । स्थितः पुष्करवारिधिः ॥ ७ ॥ एवमग्रेऽपि सकलाः । स्थिता द्वीपपयोधयः ॥ परः पूर्वं समावेष्ट्या—ब्धयो द्विपसमाभिधाः ॥ ८ ॥ ते चैवं—वारुणीवरनामा च । द्वीपोऽब्धिर्वारुणीवरः ॥ वरुणवरेत्येषापि । श्रूयतेऽस्य श्रुतेऽभिधा ॥ ९ ॥ ततः क्षीरवरो द्वीपः । क्षीरोदश्चास्य वारिधिः ॥ ततो घृतवरो द्वीपो । घृतोदः पुनरंबुधिः ॥ १० ॥ तत इक्षुवरो द्वीप । इक्षूदश्च तदंबुधिः ॥ नंदीश्वराभिधो द्वीपो । नंदीश्वरोदवारिधिः ॥ ११ ॥ स्युस्त्रिप्रत्यवताराणि । नामधेयान्यतः परं ॥ अरुणप्रभृतिद्वीपा—ब्धीनां तस्मात्तथा ब्रुवे ॥ १२ ॥ अरुण १ श्चारुणवरो २—ऽरुणवरावभासकः ३ ॥ कुंडलः ४ कुंडलवर ५—स्तथा तदवभासकः ६ ॥ १३ ॥ शंखः ७ शंखवरः ८ शंख—वरावभास ९ इत्यपि ॥ रुचको १० रुचकवर ११—स्तदवभासकोऽपि १२ च ॥ १४ ॥

भुजगो १३ भुजगवर १४—स्तदवन्नासकोऽपि १५ च ॥ कुशः १६ कुशवरश्चैव १७ । कुशवरा-
वन्नासकः १८ ॥ १५ ॥ क्रौंचः १९ क्रौंचवरः २० क्रौंच—वरावन्नासकोऽपि २१ च ॥ एकविं-
शतिरित्येते । समनामाब्धिवेष्टिताः ॥ १६ ॥

एवं चामी असंख्यत्वा—न्नियतैर्नामन्निः कथं ॥ शक्यंते वक्तुमित्यत्रा—म्नायो नाम्नां नि-
रूप्यते ॥ १७ ॥ विन्नूषणानि वस्त्राणि । गंधाः पद्मोत्पलानि च ॥ तिलकानि निधानानि । र-
त्नानि सरितोऽप्यपः ॥ १८ ॥ पद्मादयो ह्रदाः कन्ना—प्रमुखा विजया अपि ॥ वक्षस्कारादयो
वर्ष—धराश्च कुरुमंदराः ॥ १९ ॥ सौधर्मप्रमुखाः स्वर्गाः । शक्रादयः सुरेश्वराः ॥ चंद्रसूर्यग्र-
हर्क्ष—ताराः कूटानि नूभृतां ॥ २० ॥ इत्यादि शस्तवस्तूनां । यानि नामानि विष्टपे ॥ द्वी-
पाब्धयः स्युस्तैः सर्वै—स्त्रिशः प्रत्यवतारितैः ॥ २१ ॥ एकैकेनान्निधानेना—न्निधेयास्तेऽप्यसं-
ख्यशः ॥ यथा जंबूद्वीपनाम्ना । द्वीपाः परेऽप्यसंख्यशः ॥ २२ ॥ यावदेवं क्रमाद् द्वीपं । सू-
र्यवरावन्नासकं ॥ परिवेष्ट्य स्थितः सूर्य—वरावन्नासवारिधिः ॥ २३ ॥ ततश्चैकैकेन नाम्ना । न
त्रिप्रत्यवतारणं ॥ देवद्वीपो देववार्द्धि—र्नागद्वीपस्तदंबुधिः ॥ २४ ॥ यक्षद्वीपो यक्षवार्द्धि—र्नूत-

द्वीपस्तदंबुधिः ॥ स्वयंभूरमणद्वीपः । स्वयंभूरमणांबुधिः ॥ २५ ॥ जंबूद्वीपादयश्चैते । स्थान-
द्विगुणविस्तृताः ॥ सर्वे स्वयंभूरमणा-र्णवांता द्वीपवार्धयः ॥ २६ ॥

जंबूद्वीपाद्यथा सिंधु-र्लवणो द्विगुणस्ततः ॥ धातकीखंड इत्येव-मंत्याद्द्वीपात्तदंबुधिः
॥ २७ ॥ तत्रायं सर्वतः क्षुल्लः । सर्वाभ्यंतरतः स्थितः ॥ विष्वक्प्रतरवृत्तश्च । पूर्णेंदुमंडलाकृ-
तिः ॥ २८ ॥ अस्य द्वीपस्याधिपते-रेकपल्योपमायुषः ॥ महर्द्धिकानादृताख्य-देवस्याश्रय-
भूतया ॥ २९ ॥ जंब्वा नानारत्नमय्या । वक्ष्यमाणस्वरूपया ॥ सदोपलक्षितो द्वीपो । जंबू-
द्वीप इति स्मृतः ॥ ३० ॥ नित्यं कुसुमितैस्तत्र । तत्र देशे विराजते ॥ वनैरनैकैर्जंबूनां । जं-
बूद्वीपस्ततोऽपि च ॥ ३१ ॥ विष्कंभायामतश्चैष । लक्षयोजनसंमितः ॥ परितः परिधिस्त्वस्य
। श्रूयतां यः श्रुते श्रुत ॥ ३२ ॥ लक्षत्रयं योजनानां । सहस्राणि च षोडश ॥ क्रोशास्त्रयस्त-
दधिक-मष्टाविंशं धनुःशतं ॥ ३३ ॥ त्रयोदशांगुलाः सार्द्धा । यवाः पंचैकयूकिका ॥ जंबूद्वीप-
स्य गणित-पदं वक्ष्येऽथ तत्त्वदः ॥ ३४ ॥ शतानि सप्त कोटीनां । नवतिः कोटयः पराः ॥
लक्षाणि सप्तपंचाशत् । षट्सहस्रोनितानि च ॥ ३५ ॥ सार्द्धं शतं योजनानां । पादोनक्रोश-

यामलं ॥ धनूंषि पंचदश च । सार्द्धं करद्वयं तथा ॥ ३६ ॥ अंकतोऽपि ७९०५६९४१५० को० १ धनुः १५१५ कर २ अं १२ ॥ अयं भावः—इयंति जंबूद्वीपस्य । योजनप्रमितानि वै ॥ चतुरस्राणि खंमानि । स्युः क्रोशाद्यतिरिच्यते ॥ ३७ ॥ असौ सहस्राणि नव—नवतिः स्यात्समुच्छ्रितः ॥ साधिकानि योजनाना—मुर्द्धाधश्च सहस्रकं ॥ ३८ ॥ उद्वेधोच्छ्रययोगे तु । स्यादूर्ध्वाधः प्रमाणतः ॥ जंबूद्वीपो योजनानां । लक्षमेकं किलाधिकं ॥ ३९ ॥ आह—जलाशयादौ शैलादौ । व्यवहारा हि संमतः ॥ उद्धेधोच्चत्वयोर्जंबू—द्वीपे स तु कथं भवेत् ॥ ४० ॥ अत्र ब्रूमः—हीयमाना प्रतीच्यां भू—र्धर्मायां समभूतलात् ॥ सहस्रयोजनोमांते । स्यात्क्रमाद्विजयद्वये ॥ ४१ ॥

तत्राधो लौकिकग्रामाः । संति सर्वेषु तेषु च ॥ द्वीपस्यास्य व्यवहारा—त्तावानुद्वेध उच्यते ॥ ४२ ॥ जंबूद्वीपार्हतामेत—त्सुमेरोः पांडुके वने ॥ अभिषेकशिलोत्संगे—ऽभिषेकः क्रियते यतः ॥ ४३ ॥ जंबूद्वीपव्यवहारं । मेरौ संभाव्य सुष्टु तत् ॥ प्रज्ञप्तं तावदुच्चत्वं । जंबूद्वीपस्य तात्त्विकैः ॥ ४४ ॥ तथाह जंबूद्वीपप्रज्ञप्त्यां—एगं जोअणसहस्सं उव्वेहेणं णवणउतिजोअ-

एगसहस्साइं साइरेगाइं, नहं नवत्तेणं साइरेगं जोअणसय सहस्संसव्वग्गेणं पन्नत्ते. पृथ्व्यप्जीवपुद्गलात्मा । जंबूद्वीपोऽस्ति वस्तुतः ॥ पृथ्व्यप्जीवपुद्गलानां । परिणामो यदीदृशः ॥ ॥ ४५ ॥ शाश्वतोऽशाश्वतश्चाय ।  द्रव्यतस्तत्र शाश्वतः ॥ वर्णगंधरसस्पर्श–पर्यायैः स्यादशाश्वतः ॥ ४६ ॥ अथास्य जंबूद्वीपस्य । त्राति वज्रमणीमयः ॥ प्राकार आगमे ख्यातो । जगतीत्यपराख्यया ॥ ४७ ॥ धेनुपुछाकृतिः सोऽष्टौ । योजनानि समुछ्रितः ॥ योजनानि द्वादशास्य । मूले विस्तार आहितः ॥ ४८ ॥ मूलादुत्पत्यते याव–द्धनुःक्रोशादिकं किल ॥ मूलव्यासस्तावतोन–स्तत्र तत्रास्य जायते ॥ ४९ ॥ यथा–

मूलादूर्ध्वं कोशयुगे । व्यतीते तत्र विस्तृतिः ॥ सार्द्धरुद्रयोजनानि । सर्वत्रैवं विभाव्यतां ॥ ५० ॥ एवं च मूलादुत्क्रांते । योजनानां चतुष्टये ॥ मूलव्यासे चतुरूने । स्याद्विस्तारोऽष्टयोजनः ॥ ५१ ॥ तथास्य मूर्ध्नि पूर्णेषु । योजनेषु किलाष्टसु ॥ मूलव्यासेऽष्टभिन्यूने । व्यासोऽब्धिमितयोजनः ॥ ५२ ॥ उक्त जंबूद्वीपमान–मध्येऽस्यामूलविस्तृतिः ॥ ज्ञाव्यैवमखिलद्वीप–पाथोधिजगतीष्वपि ॥ ५३ ॥ इत्यर्थतो वीरजयक्षेत्रविचारवृत्तौ. अथास्योपरिभागस्य ।

चतुर्योजनविस्तृतेः ॥ मध्यदेशे सर्वरत्न–मयी राजति वेदिका ॥ ५४ ॥ सोपरिष्टाद्दिष्टरत्न–
मयी वज्रमयी त्वधः ॥ वज्रस्तंभस्वर्णरूप्य–फलकैरुपशोभिता ॥ ५५ ॥ नरकिन्नरगंधर्व–वृ-
षोरगाश्वहस्तिनां ॥ रम्या नानाविधै रूपै–र्भाति सातिमनोरमैः ॥ ५६ ॥ तथा तस्यां रत्न-
मय्यो । राजंते बहुवल्लयः ॥ वासंतीचंपकाशोक–कुंदातिमुक्तकादयः ॥ ५७ ॥ लताश्च ताः
स्तवकिताः । पुष्पिताः पल्लवान्विताः ॥ प्रणताः क्रीडदमर–मिथुनप्रश्रयादिव ॥ ५८ ॥ प-
रिक्षेपेण जगती–समाना विस्तृता च सा ॥ शतानि पंच धनुषा–मुत्तुंगा त्वर्द्धयोजनं ॥५९॥
स्थाने स्थाने सर्वरत्न–मयपद्मोपशोभिता ॥ पद्मप्राधान्यतो नाम्ना । सा पद्मवरवेदिका
॥ ६० ॥ विभाति वनखंडाभ्यां । सा पद्मवरवेदिका ॥ तयोः पार्श्वयोः स्थूल–कुलाभ्यामिव
निम्नगा ॥ ६१ ॥ परिक्षेपेण जगती–तुल्यौ तौ वनखंडकौ ॥ सार्द्धचापशतद्वंद्व–न्यूनद्वियोज-
नाततौ ॥६२॥ एवं च––वेदिकाव्याससंयुक्तो । विस्तारो वनयोर्द्वयोः ॥ स्यात्पूर्णो जगतीव्या-
सो । योजनानां चतुष्टयं ॥६३॥ पुष्पितैः फलितैः शाखा–प्रशाखाशतशालितैः ॥ अनेकोत्तमजा-
तीय–वृक्षै रम्ये च ते वने ॥ ६४ ॥ विराजते च भूभाग । एतयोर्वनखंडयोः ॥ मरुत्कीर्णपं-

चवर्ण—पुष्पप्रकरपूजितः ॥ ६५ ॥ कस्तूरिकैलाकर्पूर—चंदनाधिकसौरभैः ॥ अनिलांदोलनोद्भू-
त—वीणादिजित्वरारवैः ॥ ६६ ॥

अत्यंतकोमलैर्नाना—वर्णैर्वर्ण्यैस्तृणांकुरैः ॥ रोमोद्गमैरिव भुवः । सुरक्रीडासुखस्पृशः ॥
॥ ६७ ॥ मरुत्कृतास्फालनेनो—द्भिरद्भिर्मधुरध्वनीन् ॥ पंचवर्णैर्मणिभिर—प्यसौ कीर्णः सुगंधि-
भिः ॥ ६८ ॥ न वरं विपिनेंतःस्थे—न स्यात्तृणमणिध्वनिः ॥ वेदिकोन्नत्तिरुद्धस्य । तादृग्वायो-
रसंगतेः ॥ ६९ ॥ वनयोरेतयोश्चित्र—करयोः स्युः पदे पदे ॥ पुष्करिण्यो दीर्घिकाश्च । महा-
सरोवराणि च ॥ ७० ॥ सुखोत्तारास्तपनीय—तलाः सद्वज्रभित्तयः ॥ नानारत्नबद्धतीर्थाः । सु-
वर्णरूप्यवालुकाः ॥ ७१ ॥

काश्चिज्जात्यासवरसाः । काश्चिच्च वारुणीरसाः ॥ सुधोपमजलाः काश्चि—त्काश्चिदिक्षुर-
सोदकाः ॥ ७१ ॥ एवं नानास्वादजलाः । शतपत्रादिपंकजैः ॥ मनोज्ञास्ताः पुष्करिण्यः ।
क्रीडाभिर्भांति नाकिनां ॥ ७२ ॥ तिभिर्विशेषकं ॥ स्पष्टाष्टमंगलैश्छत्र—चामरध्वजराजि-
भिः ॥ त्रिसोपानान्यासु चतु—र्दिशं राजंति तोरणैः ॥ ७३ ॥ भांति क्रीडासरांस्येवं । यथा-

हैं दीर्घिका अपि ॥ चतुर्दिशं त्रिसोपाना–दिव्नी रत्नमणीमयैः ॥ ७४ ॥ रम्याः क्रीडापर्वताश्च । भांति तत्र पदे पदे ॥ तेषां प्रत्येकमेकैकः । प्रासादो भाति मूर्द्धनि ॥ ७५ ॥ प्रतिप्रासादमेकैकं । मध्ये सज्जितमासनं ॥ अस्ति क्रौंचासनं क्वापि । हंसासनमपि क्वचित् ॥७६॥

पद्मासनं च गरुडा–सनं सिंहासनं क्वचित् ॥ भद्रासनं च मकरा–सनं चातिमनोहरं ॥ ७७ ॥ तथा—नानाक्रीडागृहाः संति । तयोश्च वनखंडयोः ॥ क्वचित्प्रेक्षणकगृहं । क्वचिच्च केतकीगृहं ॥ ७८ ॥ लतागृहं गर्भगृहं । क्वचिच्च कदलीगृहं ॥ कुत्रचिन्मज्जनगृहं । प्रसाधनगृहं क्वचित् ॥ ७९ ॥ प्रत्येकं च गृहेष्वेषु । विभात्येकैकमासनं ॥ क्रीडतां तत्र देवानां । योग्यं रत्नमणीमयं ॥ ८० ॥ तथा—मुद्रिकामल्लिका जाती–मालत्यादिलताततैः ॥ रत्नात्मनस्तत्र तत्र । भूयांसो भांति मंडपाः ॥ ८१ ॥ मंडपेषु तथैतेषु । जात्यकांचननिर्मिताः ॥ शिलानां पट्टकाः संति । क्रौंचाद्यासनसंस्थिताः ॥ ८२ ॥ एतेषु पर्वतेष्वेषु । गृहेषु मंडपेषु च ॥ दीर्घिकादिषु च स्वैरं । क्रीडंति व्यंतरामराः ॥ ८३ ॥ तथा—

परितो जगती भाति । गवाक्षवलयेन सा ॥ गवाक्षवलयं तच्च । गव्यूतद्वितयोच्छ्रितं ॥

॥ ७४ ॥ शतानि पंच धनुषां । विस्तीर्णं चारुचित्रितं ॥ कृतनेत्रमनोमोदं । सुराणां रमणो- चितं ॥ ७५ ॥ लवणोदसमासन्न–जगतीभित्तिमध्यगं ॥ दृश्यमानाब्धि कुतुकं । ज्ञातव्यं स- र्वतः स्थितं ॥ ७६ ॥ अत्रेदं गवाक्षकटकं जंबूद्वीपप्रज्ञप्तिवृत्तौ जगतीभित्तिमध्यगतमुक्तं. जंबू- द्वीपसंग्रहणीवृत्तौ जगत्या उपर्युक्तं, तथा च तद्ग्रंथः–तस्याः पार्श्वद्वयेऽपि द्वौ वनखंडौ वे- दिकामानदैर्घ्यौ विद्येते, न वरं विस्तारेणाभ्यंतरः सार्द्धधनुःशतद्वयोनयोजनयुग्मप्रमाणः, बाह्यस्तु वनखंडोऽर्धाष्टमधनुःशतहीनयोजनयुग्ममानो, यतस्तत्र अभ्यंतराद्वनखंडादधिकानि पंचधनुःशतानि जालकटकेनावरुद्धानि.

परं श्रीमलयगिरिपादैर्न तद्विवक्षितं, द्वयोरपि वनखंडयोरेकमेव मानमुक्तं, तत्वं तु ब हुश्रुता विदंतीति, सर्वे द्वीपाः समुद्राश्च । जगत्यैवं विराजिताः ॥ सर्वासां जगतीनां च । स्व- रूपमनया दिशा ॥ ७६ ॥ [1]अथैतस्यां जगत्यां च । द्वाराणि स्युश्चतुर्दिशं ॥ विजयं वैजयं-

१ तथोक्तं क्षेत्रसमासे–वईरामईहिं नीअनीय–दीवोदहिमझगणिअमूलेहिं ॥ अठुच्चाहि बारस । चउमूले उवरिकंदाहिं ॥ १ ॥ इत्यादि, यत्तु जीवाभिगमे सूत्रे लवणसमुद्रादिषु के-

तं च । जयंतं चापराजितं ॥ ८७ ॥ सहस्रान् पंचचत्वारिं–शतमुल्लंघ्य मेरुतः ॥ योजनानां दिशि प्राच्यां । शीताकूलंकषोपरि ॥ ८८ ॥ विजयं द्वारमाख्यात–मेवं विद्धि पराण्यपि ॥ दक्षिणस्यां पश्चिमाया–मुदीच्यां च यथाक्रमं ॥ ८९ ॥ प्रत्येकमेषां द्वाराणां । उच्छ्रयो योजनाष्टकं ॥ वप्रभित्तिसमाना हि । युक्ता द्वारेषु तुंगता ॥ ९० ॥ प्रत्येकं तेषु विस्तारो । योजनानां चतुष्टयी ॥ क्रोशं पृथुर्द्वारशाखा । प्रत्येक पार्श्वयोर्द्वयोः ॥ ९१ ॥ एवं सामस्त्यतो द्वार–विस्तारो यदि ज्ञाप्यते ॥ तदा सार्द्धानि चत्वारि । योजनानि भवेदसौ ॥ ९२ ॥ तत्रेदं विजयं भूमि–प्रवेशे वज्रनिर्मितं ॥ भूमेरुर्ध्वं रिष्टरत्न–मयमुक्तं जिनेश्वरैः ॥ ९३ ॥ स्तंभाः सर्वत्र वैडूर्य–वर्यरत्नविनिर्मिताः ॥ पंचवर्णैर्मणीरत्नै–र्निर्मितं तत्र कुट्टिमं ॥ ९४ ॥ हंसगर्भरत्नमयी । देहल्यग्रेंद्रकीलकः ॥ गोमेयरत्नघटितो । द्वारशाखे तथात्र च ॥ ९५ ॥ लोहिताख्यरत्नमय्यौ । परिघो वज्रनिर्मितः ॥ कपाटे अपि वैडूर्य–मये प्रोक्ते जिनेश्वरैः ॥ ९६ ॥

वलं वेदिकैवोक्ता, तत्र स लवणनामा समुद्र एकया पद्मवरवेदिका अष्टयोजनोच्छ्रितजगत्युपरिभाविन्येति गम्यते, इति तद्वृत्तौ व्याख्यातं, एवं धातकीखंडादिष्वपि,

नानामणिमये तत्र । कपाटचूलिकागृहे ॥ ज्योतीरसरत्नमय–मुत्तरंगं निरूपितं ॥ ९७ ॥ वि-
जयस्योपरितनो । भागो भाति विभूषितः ॥ रत्नभेदैः षोडशभि–स्ते चामी कथिताः श्रुते
॥९८॥ रत्न १ वज्रं २ वैडूर्यं ३ । लोहिताक्षं ४ मसारगल्लं ५ च ॥ अपि हंसगर्भ ६ पुलके ७ ।
सौगंधिक ८ मंजनं ९ रजतं १० ॥ ९९ ॥ ज्योतीरस ११ मंकां १२ जन–पुलकं १३ रिष्टं च
१४ जातरूपं च १५ ॥ स्फटिकं १६ चैताः षोडश । रत्नभिदस्तत्र राजंते ॥ १०० ॥ श्रीवत्स
१ मत्स्य २ दर्पण ३–भद्रासन ४ वर्द्धमान ५ वरकलशाः ६ ॥ स्वस्तिक ७ नंदावर्त्तौ । द्वा-
रोपरि मंगलान्यष्टौ ॥ १ ॥ द्वारस्यास्य वज्रमयो । माढभागः प्रकीर्त्तितः ॥ माढस्य शिखरं
रौप्य–मुल्लोकस्तपनीयजः ॥ २ ॥ मणिवंशलोहिताक्ष–प्रतिवंशौ रजतभूभागैः ॥ द्वारं ग-
वाक्षकटकै–र्विराजते तत्समुद्रदिशि ॥ ३ ॥ भित्तावुभयतो भित्ति–गुलिकाः पीठसन्निभाः ॥
अष्टषष्ट्याधिकं शतं । शय्यास्तावत्य एव च ॥ ४ ॥

रत्नानि व्यालरूपाणि । मणिमय्यश्च पुत्रिकाः ॥ अलंकुर्वंति तद्द्वारं । मणिदामादिभू-
षितं ॥ ५ ॥ तथा निषदनस्थान–मेकैकं पार्श्वयोर्द्वयोः ॥ तत्र द्वौ द्वौ च प्रत्येकं । मांगल्य-

कलशौ मतौ ॥ ६ ॥ तथा द्वौ द्वौ नागदंतौ । मुक्तादामाद्यलंकृतौ ॥ तयोरूर्ध्वं पुनर्द्वौ द्वौ । धूपघट्यन्वितौ च तौ ॥ ७ ॥ साक्षादिव स्वर्गिकन्ये । द्वे द्वे च शालभंजिके ॥ द्वौ द्वौ च जालकटकौ । द्वे द्वे घंटे शुभस्वरे ॥ ८ ॥ नानाद्रुकिसलाकीर्णे । द्वे द्वे च वनमालिके ॥ भ्रमद्भ्रमरझंकार—गीतारवमनोरमे ॥ ९ ॥ आत्मदर्शाकृती द्वौ द्वौ । पीठौ प्रकंठकाभिधौ ॥ तौ च द्वियोजनस्थूलौ । चतुर्योजनविस्तृतौ ॥ १० ॥ चत्वारि योजनान्युच्चा । योजनद्वयविस्तृतः ॥ तेषु प्रत्येकमेकैकः । प्रासादोऽस्ति मनोरमः ॥ ११ ॥

प्रासादास्ते तुंगशृंगा । ध्वजछत्रमनोहराः ॥ सिंहासनैः सविजय—दूष्यैर्विराजितांतराः ॥ १२ ॥ आस्थानस्थानयोः किंच । द्वे द्वे स्तस्तोरणे तयोः ॥ तोरणानां पुरः शाल—भंजिकानां द्वयं द्वयं ॥ १३ ॥ तथाच—द्वौ नागदंतावश्वेभ—नरकिंपुरुषांगिनां ॥ किन्नरोरगगंधर्व—वृषभाणां युगानि च ॥ १४ ॥ वीथ्यः पंक्तयश्चैषां । नित्यं कुसुमिता लताः ॥ पद्मनागाशोकलता—श्चंपकाम्रादयोऽपि च ॥ १५ ॥ मांगल्यकलशा भृंगा—रकास्तथात्मदर्शकाः ॥ स्थालानि साक्षतानीव । पात्र्यः फलभृता इव १६ ॥ सर्वौषधिप्रसाधन—भांडभृताः सुप्रतिष्ठका-

श्चैव ॥ पीठात्ममनोगुलिका–युताः फलकनागदंताद्यैः ॥ १७ ॥ रात्नाः करंमकारात्ना । हृ-यकंठादयोऽष्ट च ॥ चंगेर्यस्तेष्वष्टविधाः । पटलान्यापि चाष्टधा ॥ १८ ॥ तथाहि—पुष्पैर्माल्यैश्चूर्णगंधै–र्वस्त्रसिद्धार्थभूषणैः ॥ लोमहस्तैश्च संपूर्णा–श्चंगेर्यः पटलानि च ॥ १९ ॥

सिंहासनातपत्रे । चमराणि समुद्गकाश्च दशभेदाः ॥ प्रतितोरणमेतेषां । द्वयं द्वयं भवन्ति सर्वेषां ॥ २० ॥ समुद्गकसंग्रहगाथा चेयं–तेल्ले १ कोठ्ठ २ समुग्गे–पत्ते ३ चोएअ ४ तगर ५ एलाय ६ ॥ हरिआले ७ हिंगुलए ८ मणोसिला ९ अंजणसमुग्गे १० ॥ २१ ॥ तथात्र विजयद्वारे । शतमष्टाधिकं ध्वजाः ॥ प्रत्येकं चक्रादिचिह्ना । दशधा ते त्वमी मताः ॥ ॥२२॥ चक्रमृगगरुडासिंहाः । पिच्छवृकछत्रवर्यहर्यक्षाः ॥ वृषभचतुर्दंतगजाः । सर्वेऽशीत्यन्वितसहस्रं ॥ २३ ॥ विशिष्टस्थानरूपाणि । भौमानि नवसंख्यया ॥ विजयद्वारस्य पुरः । स्युर्भोग्यानि तदीशितुः ॥ २४ ॥ तथाहुर्जीवाभिगमे–' विजयस्सणं दारस्स पुरओ नव भोमा पन्नत्ता ' इत्यादि. समवायांगे तु ' विजयस्सणं दारस्स एगमेगाए बाहाए नवनवभोमा पन्नत्ता ' इति दृश्यते, तदत्र तत्वं सर्वविद्वेद्यं. मध्ये च तेषां भौमानां । पंचमे सपरिच्छदं ॥

सिंहासनमधीशस्या-न्येषु भद्रासनानि च ॥ २५ ॥

इत्येवं विजयद्वारं । लेशतो वर्णितं मया ॥ तृतीयोपांगमालोक्यं । विशेषविस्तरार्थिभिः ॥ २६ ॥ यो योऽस्याधिपतिर्देव-स्तं तं सामानिकादयः ॥ आह्वयंति विजयेति । पुस्तकेषु तथोक्तितः ॥ २७ ॥ तदिदं विजयस्वामि-योगाद्विजयनामकं ॥ अथवामुष्य नामेदं । त्रैकालिकं च शाश्वतं ॥ २८ ॥ एवं क्षेत्रद्वीपवार्द्धि-नामानि स्युर्यथायथं ॥ नित्यानि स्वामियोगस्तु । यथास्थानं प्रवक्ष्यते ॥ २९ ॥ यथेदं विजयद्वारं । तथा त्रीण्यपराण्यपि ॥ समरूपाणि किंत्वीशा । द्वारतुल्याभिधाः सुराः ॥ ३० ॥ वैजयंतो जयंतश्चा-पराजित इति क्रमात् ॥ चत्वार्येषां सहस्राणि । सामानिकसुधाभुजां ॥ ३१ ॥ सहस्राणि च देवाना-मष्टाभ्यंतरपर्षदि ॥ देवानामयुतं मध्य-पर्षदि स्फातिशालिनां ॥ ३२ ॥ स्युर्द्वादश सहस्राणि । देवानां बाह्यपर्षदि ॥ चतस्रोऽग्रमहिष्यश्च । स्युः साहस्रपरिच्छदाः ॥ ३३ ॥ सेनाः सेनान्यश्च सप्त । पूर्वोक्तव्यंतरेंद्रवत् ॥ आत्मरक्षकदेवानां । सहस्राणि च षोडश ॥ ३४ ॥

प्रत्येकमेवं विजय-प्रमुखाणां परिच्छदः ॥ सर्वेऽपि विजयाद्यास्ते । तुल्याः पल्यायुषः

स्मृताः ॥ ३५ ॥ पूर्वोक्तानां निजनिज–नगरीवासिनां च ते ॥ व्यंतराणां व्यंतरीणा–मैश्वर्यमुपभुंजते ॥ ३६ ॥ एवं द्वाराणि चत्वारि । सर्वासु जगतीष्वपि ॥ तत्र जंबूद्वीपसत्क—विजयद्वारनाकिनः ॥ ३७ ॥ विजयद्वारतः प्राच्यां । दिशि तिर्यगसंख्यकान् ॥ द्वीपाब्धीन् समतिक्रम्य । जंबूद्वीपेऽस्त्यथापरे ॥ ३८ ॥ योजनानां सहस्राणि द्वादशायतविस्तृता ॥ राजधानीपरिक्षेप–स्तस्याश्चैवसुदीरितः ॥ ३९ ॥ सप्तत्रिंशत्सहस्राणि । योजनानां शतानि च ॥ नवैव सप्तचत्वारिं–शत्किंचिदधिकान्यपि ॥ ४० ॥ वप्रो रत्नमयस्तस्या । राजधान्या विराजते ॥ सप्तत्रिंशद्योजनानि । सार्द्धानि स समुच्छ्रितः ॥ ४१ ॥

तथोक्तं जीवाभिगमे–से पागारे सत्तत्तीसं जोअणाइं अद्धजोअणं च उद्धं उच्चत्तेणं. श्रीसमवायांगे तु–सव्वासुणं विजयवेजयंतजयंतअपराजिआसुरायहाणीसु पागारा सत्तत्तीसं जोअणाइं उद्धं उच्चत्तेणं पण्णत्ता, इत्युक्तमिति ज्ञेयं. मूले च विस्तृतः सोऽयं । सार्द्धा द्वादशयोजनीं ॥ मध्ये च विस्तृतः क्रोशा–धिकानि योजनानि षट् ॥ ४२ ॥ अर्द्धक्रोशाधिकं मौलौ । विस्तृतो योजनत्रयं ॥ असौ नानारत्नमयैः । कपिशः कपिशीर्षकैः ॥ ४३ ॥ अर्द्धक्रोश-

मितायामं । क्रोशतुर्यांशविस्तृतं ॥ देशोनार्द्धक्रोशतुंग–मेकैकं कपिशीर्षकं ॥ ४४ ॥

वप्रस्य तस्यैकैकस्यां । बाहायां जिनपुंगवैः ॥ पंचविंशं पंचविंशं । द्वाराणां शतमीक्षितं ॥४५॥ शतानि पंच द्वारारा–मेवं स्युः सर्वसंख्यया ॥ विजयद्वारवत्सर्व–मेषां वर्णनमीरितं ॥ ४६ ॥ किंत्वियान् विशेषः–द्वाषष्टियोजनान्युच्चं । सार्द्धानि द्वारमेककं ॥ योजनानि सपादान्ये–कत्रिंशतं च विस्तृतं ॥ ४७ ॥ ये च प्रकंठकाख्ये । पीठे तत्रोदिते तयोरिह तु ॥ पंचदशयोजनानि च । सार्द्धौ क्रोशौ च तुंगत्वं ॥ ४८ ॥ आर्या.

एकत्रिंशद्योजनानि । क्रोशश्चायतिविस्तृती ॥ प्रत्येकमेषामुपरि । स्युः प्रासादावतंसकाः ॥ ४९ ॥ एकत्रिंशद्योजनानि । सक्रोशानि समुच्छ्रिताः ॥ उच्चूयार्द्धेन ते सर्वे । प्रासादा विस्तृतायताः ॥ ५० ॥ द्वारस्यैकैकस्य नाति–दूरासन्ने भुवस्तले ॥ सप्तदश सप्तदश । भौमाः प्रासादशेखराः ॥ ५१ ॥

तेषां मध्येनवमे । नवमे सिंहासनं विजयमरुतः ॥ सामानिकादिसुरगण–भद्रासनपरिवृतं भाति ॥ ५२ ॥ आर्या ॥ अष्टस्वष्टसु भौमेषु । स्थितेषून्नयतस्ततः ॥ अस्ति प्रत्येक

मेकैकं । रत्नसिंहासनं महत् ॥ ५३ ॥ तथा तस्या राजधान्या । बहिर्दिक्षु चतसृषु ॥ योज-
नानां पंचशत्याः । पुरतो वनमेकक ॥ ५४ ॥ प्राच्यामशोकविपिन–मपाच्यां साप्तपर्णिकं
॥ प्रतीच्यां चंपकवन–मुदक् चूतवनं क्रमात् ॥ ५५ ॥ सहस्राणि योजनानां । द्वादशायाम-
तोऽथ ते ॥ स्युः पंचशतविष्कंभा । वनखंडाः पृथक् पृथक् ॥ ५६ ॥ प्रत्येकं वप्रवलय–परि-
क्षिप्ताः समंततः ॥ मध्ये तेषां तथैकैकः । स्यात्प्रासादावतंसकः ॥ ५७ ॥ द्वाषष्टिं योजना-
न्यर्द्धा–धिकानि ते समुन्नताः ॥ योजनान्येकत्रिंशत् । सक्रोशानि च विस्तृताः ॥ ५८ ॥ प्र-
त्येक रत्नघटित–सिंहासनविभूषिताः ॥ पल्योपमायुरेकैक–निर्जराधिष्ठिता अपि ॥ ५९ ॥

मध्येऽस्यास्या राजधान्या । भूमिभागे मनोहरे ॥ शुद्धजांबूनदमयः । पीठबंधो विराज-
ते ॥ ६० ॥ योजनानां शतान्येष । द्वादशायतविस्तृतः ॥ क्रोशार्द्धमेदुरः पद्म–वेदिकावनवे-
ष्टितः ॥ ६१ ॥ त्रिसोपानकमेकैकं । द्वार चारु विराजते ॥ मणीमयं तोरणेन । तत्र दिक्षु
चतसृषु ॥ ६२ ॥ मध्येऽस्य पीठबंधस्य । भूमिभागेऽस्ति बंधुरे ॥ महानेकस्तपनीय–मयः
प्रासादशेखरः ॥ ६३ ॥ द्वाषष्टिं योजनान्यर्द्धा–धिकानि स समुन्नतः ॥ उच्चत्वस्यार्द्धमानेन ।

नवत्यायतविस्तृतः ॥ ६४ ॥ तस्य प्रासादस्य मध्ये । महती मणिपीठिका ॥ सा द्विगव्यूत-
बाहल्या । योजनं विस्तृतायता ॥ ६५ ॥ तस्या मणिपीठिकाया । मध्ये सिंहासनं महत्
॥ वृत्तं विजयदेवार्हं । सामानिकादिकासनैः ॥ ६६ ॥ तच्चैव—मूलसिंहासनाद्वायू—त्तरैशान-
दिशां त्रये ॥ सामानिकानां चत्वारि । सहस्राण्यासनानि वै ॥ ६७ ॥ प्राच्यामग्रमहिषीणा
—मासनानि चतसृणां ॥ चत्वार्येवातिचतुर—परिवारसुरीजुषां ॥६८॥ मूलसिंहासनादग्नि—को-
णेऽभ्यंतरपर्षदः ॥ भद्रासनसहस्राणि । भवंत्यष्टौ सुधाभुजां ॥ ६९ ॥ दक्षिणस्यां दिशि तथा
। भांति मध्यमपर्षदः ॥ दशासनसहस्राणि । तावताममृताशिनां ॥ ७० ॥ भद्रासनानि नै-
र्ऋत्यां । बाह्यपर्षत्सुधाभुजां ॥ स्युर्द्वादश सहस्राणि । पश्चिमायामथो दिशि ॥ ७१ ॥

सेनापतीनां सप्तानां । सप्त भद्रासनानि च ॥ ततः परं परिक्षेपे । द्वितीयस्मिंश्चतुर्दिशं
॥ ७२ ॥ चत्वारि चत्वारि सह—स्राणि भांति चतुर्दिशं ॥ आत्मरक्षकदेवानां । सहस्राणीति
षोडश ॥ ७३ ॥ स चैष मूलप्रासाद—श्चतुःप्रासादवेष्टितः ॥ उच्चत्वायामविष्कंभै—स्तेऽर्द्धमाना-
श्च मौलतः ॥ ७४ ॥ प्रासादास्तेऽपि चत्वार—श्चतुर्भिरपरैरपि ॥ स्वप्रमाणार्द्धमानैः । प्रत्येकं

परितो वृताः ॥ ७५ ॥ परिवारपरीवार—भूता एते च मौलतः ॥ चतुर्थभागमानेन । प्रोच्चुंगायतविस्तृताः ॥ ७६ ॥ एतेऽपि च स्वार्द्धमानै—श्चतुर्भिरपरैर्वृताः ॥ चतुर्दिश स्युरित्येवं । प्रत्येकमेकविंशतिः ॥ ७७ ॥

परिवारपरीवार—परीवारास्तु मौलतः ॥ विष्कंभायामतुंगत्वै—रष्टमांशमिता मताः ॥ ॥ ७८ ॥ पंचाशीतिरमी सर्वे । जीवाभिगमपुस्तके ॥ वृत्तौ तु तुर्या प्रासाद—परिपाटी निरीक्ष्यते ॥ ७९ ॥ तथाहि—परिवारपरीवार—परीवारा अपि स्फुट ॥ चतुर्भिरपरैर्मौलात् । षोडशांशमितैर्वृताः ॥ ८० ॥ तदैकैकस्यां दिशायां । पंचाशीतिर्भवंत्यतः ॥ शतानि त्रीण्येकचत्वा—रिंशानि सर्वसंख्यया ॥ ८१ ॥ विना च मूलप्रासादं । सर्वेऽप्येते विभूषिताः ॥ एकैकेनैव विजय—योग्यासिंहासनेन च ॥ ८२ ॥ अथास्त्युत्तरपूर्वस्यां । मूलप्रासादतः सभा ॥ सुधर्मानाम सतत—दिव्यनाट्याप्सरोभृता ॥ ८३ ॥ योजनानि द्वादशैषा । सार्द्धान्यायामतो मता ॥ सक्रोशानि योजनानि । षड् विष्कंभ ईरिता ॥ ८४ ॥ योजनानि नवोत्तुंगा । द्वारैस्त्रिभिरलंकृता ॥ प्राच्यामुदीच्यां चापाच्या—मेकैकमथ तान्यपि ॥ ८५ ॥ द्वे योजने उच्छ्रिता-

नि । योजनं विस्तृतानि च ॥ तेषां पुरस्तादेकैकः । प्रत्येकं मुखमंडपः ॥ ७६ ॥ तेऽप्युत्तप्त-तपनीय-वंशोदयविराजिताः ॥ सातिरेके योजने द्वे । समुत्तुंगा मनोरमाः ॥ ७७ ॥

ते सुधर्मासभातुल्या । विष्कंभायामतः पुनः ॥ तेषां पुरस्तादेकैकः । स्यात्प्रेक्षागृहमंडपः ॥ ७८ ॥ मुखमंडपतुल्यास्ते । प्रमाणैः सर्वतो मताः ॥ प्रत्यक्षं तेष्वक्षपाट-श्चतुरस्राकृतिः स्मृतः ॥ ७९ ॥ मध्ये चाक्षपाटकानां । एकैका मणिपीठिका ॥ अर्द्धयोजनबाहल्या । योजनं विस्तृतायता ॥ ८० ॥ तासां प्रत्येकमुपरि । सिंहासनमुरु स्फुरत् ॥ तेषां प्रेक्षामंडपानां पुरतोऽथ प्रकीर्त्तिता ॥ ८१ ॥ एकयोजनबाहल्या । द्वे च ते विस्तृतायता ॥ रचिता विविधै रत्नै-रेकैका मणिपीठिका ॥ ८२ ॥ क्षेत्रसमासबृहद्वृत्तौ तु इयं द्वियोजनायामविष्कंभबाहल्योक्तेति ज्ञेयं. साधिके योजने तुंग-स्तूपस्तदुपरि स्मृतः ॥ देशोने च योजने द्वे । प्रत्येकं विस्तृतायतः ॥ ८३ ॥ क्षेत्रसमासबृहद्वृत्तौ तु अयं देशोनद्वियोजनायामविष्कंभः परिपूर्णद्वियोजनोच्च उक्त इति ज्ञेयं.

तेषां च चैत्यस्तूपाना-मुपर्यातन्वते श्रियं ॥ रात्नानि मंगलान्यष्टौ । चैत्यस्तूपपुरः पुनः

॥ ९४ ॥ योजनायामविष्कंजा । ज्ञेवद्दिक्षु चतसृषु ॥ अर्द्धयोजनबाहल्या । प्रत्येक मणिपीठिका ॥ ९५ ॥ तासु प्रत्येकमेकैका । जिनमूर्त्तिर्विराजते ॥ पंचचापशतोत्तुंगा । शाश्वती स्तूपसंमुखी ॥ ९६ ॥ तथोक्त जीवाभिगमवृत्तौ—जिनोत्सेध उत्कर्षतः पंचधनुःशतानि, जघन्यतः सप्त हस्ताः, इह तु पंचधनुःशतानि संज्ञाव्यंते. ऋषभो वर्द्धमानश्च । चंद्राननजिनेश्वरः ॥ वारिषेणश्चेति नित्य—नामानो नाकिभिर्नुताः ॥ ९७ ॥ पुरस्तासां पीठिकाना—मेकैका मणिपीठिका ॥ स्थूलैकयोजनं द्वे च । योजने विस्तृतायता ॥ ९८ ॥ तासां प्रत्येकमुपरि । स्यादष्टयोजनोच्छ्रयः ॥ चैत्यवृक्षस्ते च सर्वे । नानातरुभिरावृताः ॥ ९९ ॥ वज्रमूलारिष्टकंदा । वैडूर्यस्कंधबंधुराः ॥ सद्रूप्यविटिमाः स्वर्ण—शाखा रत्नप्रशाखकाः ॥ २०० ॥ सुवर्णवृंतवैडूर्य—मयपत्रमनोहराः ॥ जांबूनदपल्लवाश्च । रत्नैः पुष्पफलैर्भृताः ॥ १ ॥ अत्र स्कंधविटिमादिमानं तु वक्ष्यमाणजंबूवृक्षवद् ज्ञेयं. तेषां च चैत्यवृक्षाणां । पुरतो मणिपीठिका ॥ योजनायामविष्कंभा । योजनार्द्धं च मेदुरा ॥ २ ॥ महेंद्रध्वज एकैक—स्तासर्द्धकोशविस्तृतः ॥ सार्द्धसप्तयोजनोच्चः । पताकाछत्रमंडितः ॥ ३ ॥ इदं जीवाभिगमसूत्रवृत्तौ. क्षेत्रसमासवृह-

द्वृत्तौ तु ते च महेंद्रध्वजाः प्रत्येकमष्टयोजनोच्छ्रया इत्युक्तमिति ज्ञेयं

तेषां महेंद्रध्वजानां । पुरः प्रत्येकमेकिका ॥ नंदापुष्करिणीपद्म–वेदिका वनवेष्टिता ॥
॥ ४ ॥ योजनानि दशोद्मास्ताः । सार्द्धं द्वादशयोजनीं ॥ आयताः षड् योजनानि क्रोशाधि-
कानि विस्तृताः ॥ ५ ॥ एवं सुधर्मसन्नाया । बहिर्नागो निरूपितः ॥ अथैतस्या मध्यन्नागो
। यथाम्नायं निरूप्यते ॥ ६ ॥ तस्यां सुधर्मासन्नायां । षट्महस्राणि पीठिकाः ॥ द्वे सहस्रे
दिशि प्राच्यां । पश्चिमायां तथैव च ॥ ७ ॥ दक्षिणस्यामुत्तरस्यां । तासां सहस्रमेककं ॥
ताः सर्वा अपि रैरूप्य–फलकैः खचिता ध्रुवं ॥ ८ ॥ नागदंता वज्रमयाः । फलकेष्वथ तेष्व-
पि ॥ सुगंधिपुष्पदामानि । लंबमानान्यनेकशः ॥ ९ ॥ सुधर्मायां सन्नायां च । स्युर्धूपवास-
पीठिकाः षट् सहस्राणि ताः प्राग्व–न्नावनीया यथाक्रमं ॥ १० ॥ एता अपि स्वर्णरूप्य–फ-
लकैरुपशोभिताः ॥ फलकेषु लसद्वज्र–नागदंता अमीषु च ॥ ११ ॥

वाज्रिकानि सिक्यकानि । सिक्यकेषु च वज्रजाः ॥ नक्रिरंत्यो धूपघट्यो । धूपधूममहर्निशं
॥ १२ ॥ तत्रैतस्याः सुधर्माया । मध्येऽस्ति मणिपीठिका ॥ योजनद्वयविष्कंभा–यामा यो-

जनमेदुरा ॥ १३ ॥ चैत्यस्तत्र नृपर्यस्या । महान्माणवकाभिधः ॥ सार्द्धसप्तयोजनोच्चः । क्रो-
शार्द्धस्थूलविस्तृतः ॥ १४ ॥ नृपर्यधस्त्वमौ स्तंभः । षट्षट् कोशान् विहाय च ॥ मध्यांशेऽष्टा-
दशक्रोशे । रैरूप्यफलकांचितः ॥ १५ ॥ प्राग्वत्तेषु नागदंता । निरुद्धा वज्रसिक्यकैः ॥ तेषु व-
ज्रशिक्यकेषु । वृत्ता वज्रसमुद्गकाः ॥ १६ ॥ तेषु वज्रसमुद्गेषु । जिनसक्थीनि संति च ॥
विजयस्वर्गिणान्यैश्चा–र्चितानि व्यंतरामरैः ॥ १७ ॥ पूज्यत्वमेषां सक्थ्नां तु । तादृग्महिम-
योगतः ॥ यदेतत्क्षालनजलं । सुराणामपि दोषहृत् ॥ १८ ॥ तथोक्तं श्राद्धविधिवृत्तौ–नव्यो-
त्पन्नतया तर्हि । सौधर्मेशानशक्रयोः ॥ विवादोऽभूद्विमानार्थं । हर्म्यार्थमिव हर्म्यिणोः ॥१९॥
तयोरिवोर्वीश्वरयो–र्विमानविप्रलुब्धयोः ॥ नियुद्धादिमहायुद्धा–न्यप्यभूवन्ननेकशः ॥ २० ॥
निवार्यते हि कलह–स्तिरश्चां तरसा नरैः ॥ नराणां च नराधीशै–र्नराधीशां सुरैः क्वचित् ॥
॥ २१ ॥ सुराणां च सुराधीशैः । सुराधीशां पुनः कथं ॥ केन वा स निवार्येत । वज्राग्निरि-
व दुःशमः ॥ २२ ॥

माणवकाख्यस्तंभस्था–र्हद्दंष्ट्राशांतिवारिणा ॥ साधिव्याधिमहादोष–महावैरनिवारिणा ॥

॥ २३ ॥ कियत्कालव्यतिक्रांतौ । सिक्तौ महत्तरैः सुरैः ॥ बभूवतुः प्रशांतौ तौ । किं वा सिद्धेन तज्जलात् ॥ २४ ॥ इत्यादि. स्तंभस्य तस्य पूर्वस्या—मस्त्येका मणिपीठिका ॥ अर्द्धयोजनबाहल्या । योजनायतविस्तृता ॥ २५ ॥ उपर्यस्या महदेकं । सिंहासनमनुत्तरं ॥ स्तंभस्यास्य पश्चिमायां । तथान्या मणिपीठिका ॥ २६ ॥ सापि योजनविष्कंभा—यामा द्विक्रोशमेदुरा ॥ उपरि स्वर्णमाणिक्य—शयनीयमनोहरा ॥ २७ ॥

तद्दपादुदीच्यां क्षुल्लेंद्र—ध्वजः पूर्वोक्तकेतुवत् ॥ मानतोऽस्मात्पश्चिमायां । कोशः प्रहरणैर्भृतः ॥ २८ ॥ तस्मिन्परिघरत्नादि—नानाप्रहरणानि च ॥ किंचिदेवं सुधर्मायाः । स्वरूप मुपवर्णितं ॥ २९ ॥ अस्याश्चोत्तरपूर्वस्यां । सिद्धायतनमुत्तमं ॥ आयामादिप्रमाणेन । तत्सुधर्मासभासमं ॥ ३० ॥ तस्य मध्यदेशभागे । एकयोजनमेदुरा ॥ भाति द्वियोजनायाम—विष्कंभा मणिपीठिका ॥ ३१ ॥ उपर्यस्या रत्नमयो—ऽधिकद्वियोजनोन्नतः ॥ द्वियोजनायततततो । देवछंदक आहितः ॥ ३२ ॥ इदं श्रीजीवाभिगमवृत्तौ, क्षेत्रसमासबृहद्वृत्तौ तु असौ द्वियोजनप्रमाणविष्कंभोच्चत्व उक्त इति ज्ञेयं, तस्मिन् देवछंदके च । सुरासुरनमस्कृतं ॥ जय-

त्यर्हत्प्रतिमानां । शतमष्टोत्तरं किल ॥ ३३ ॥ तस्य सिद्धायतनस्य । दिशात्युत्तरपूर्वतः ॥ उ-
पपातसभा सापि । सुधर्मेव प्रमाणतः ॥ ३४ ॥
अर्द्धयोजनबाहल्या । योजनायतविस्तृता ॥ तस्यां मणिपीठिकाढ्या । दिव्यशय्यास्ति
तत्र च ॥ ३५ ॥ तस्यां विजयदेवस्यो-पपातो वोभवीत्यथ ॥ अस्या उत्तरपूर्वस्यां । दिशि
ह्रदो महाह्रदः ॥ ३६ ॥ नंदापुष्करिणीतुल्यो । निष्कम्भोद्वेधदैर्घ्यतः ॥ वेष्टितो वनखण्डेन ।
पद्मवेदिकयापि च ॥ ३७ ॥ ह्रदस्योत्तरपूर्वस्या-मभिषेकसभात्र च ॥ सिंहासनपीठिकायां
। विजयोऽत्राभिषिच्यते ॥ ३८ ॥ इतोऽप्युत्तरपूर्वस्यां । ससिंहासनपीठिका ॥ अलंकारसभा
तत्र । भूष्यते विजयामरः ॥ ३९ ॥ अस्या उत्तरपूर्वस्यां । व्यवसायसभात्र च ॥ सिंहासनं
पीठिकायां । विजयस्य च पुस्तकः ॥ ४० ॥ स्वर्णरूप्यमणिमयः । समस्तस्थितिसूचकः ॥
सपीठिके सभे चैते । उपपातसभासमे ॥ ४१ ॥ व्यवसायसभायाश्च । वर्वर्त्युत्तरपूर्वतः ॥
द्वियोजनमितायाम-व्यासयोजनमेदुरं ॥४२॥ बलिपीठं रत्नमयं । तस्याप्युत्तरपूर्वतः ॥ नंदा-
पुष्करिणी प्रोक्तह्रदमाना विराजते ॥ ४३ ॥ यथा चैवं विजयस्य । नगरी विजयाभिधा ॥

तथा स्याद्वैजयंतस्य । वैजयंताभिधा पुरी ॥ ४४ ॥ वैजयंताभिधद्वारा । दक्षिणस्यामसंख्य-
कान् ॥ द्वीपाब्धीन्समतिक्रम्य । जंबूद्वीप इहैव हि ॥ ४५ ॥ जयंतस्यापि सावैव । द्वीपे
तद् द्वारतो दिशि ॥ पश्चिमायामसंख्येय–द्वीपाब्धिनामतिक्रमे ॥ ४५ ॥ अपराजितदेवस्यो
–त्तरस्यामपराजितात् ॥ द्वारासंख्यद्वीपाब्धीन् । मुक्त्वा द्वीप इहैव सा ॥ ४६ ॥

एताः सर्वा राजधान्यो–ऽवगाह्य द्वीपमेतकं ॥ सहस्राणि योजनानां । द्वादशाभ्यंतरे
स्थिताः ॥ ४७ ॥ एवं सर्वद्वीपवार्द्धि–जगतीद्वारनाकिनां ॥ पुर्यः स्वस्वद्वीपवार्द्धि–तुल्याख्य-
द्वीपवार्द्धिषु ॥ ४८ ॥ अथास्य जंबूद्वीपस्य । द्वाराणामंतरं मिथः ॥ द्वारविस्ताररहित–परि-
धेः पादसंमितं ॥ ४९ ॥ अर्द्धपंचमविस्तारं । द्वारमेकैकमग्रतः ॥ अष्टादशयोजनानि । तैरूनं
परिधिं कुरु ॥ ५० ॥ ३१६२०९ क्रोश ३५१२५ अं १३ ॥ तस्य तुर्यांश एकोना–शीतिः खलु
सहस्रकाः ॥ योजनानि द्विपंचाश–त्क्रोशश्चैकस्तथाधिकः ॥ ५१ ॥ सार्द्ध सहस्रं धनुषां । द्वा-
त्रिंशच्चापसंयुतं ॥ त्रीण्यंगुलानि त्रियवी । यूके द्वे साधिके इति ॥ ५२ ॥ ७९०५२ क्रोश १
धनुः १५३२ अंगुल ३ यव ३ ॥ इत्यस्य जंबूद्वीपस्य । बहिर्भागो निरूपितः ॥ अथैतस्य म-

ध्यन्नागो । यथाम्नायं निरूप्यते ॥ ५३ ॥ क्षेत्राणि सप्त संत्यस्य । जंबूद्वीपस्य मध्यतः ॥ ए-
केकेन पर्वतेनां–तरितानि परस्पर ॥ ५४ ॥ प्रथमं भरतक्षेत्र । परं हैमवताभिधं ॥ तृतीयं
हरिवर्षाख्य । तुर्यं महाविदेहक ॥ ५५ ॥

पञ्चमं रम्यकं षष्ठं हैरण्यवतमीरितं ॥ ऐरावतं सप्तमं चां–तराण्यमूनि नगा इमे ॥ ५६ ॥
आद्यद्वितीययोर्मध्ये । हिमवान्नामपर्वतः ॥ महाहिमवदद्रिश्च । द्वैतीयीकतृतीययोः ॥ ५७ ॥
तृतीयतुर्ययोरंत–र्निषधो नाम सानुमान् ॥ तुर्यपंचमयोर्नील–वान्नगः सीमकारकः ॥ ५८ ॥
रूप्यी शैलः क्षेत्रयोः स्या–न्मध्ये पंचमषष्ठयोः ॥ षष्ठसप्तमयोश्चैव । शिखरी भूधरोंतरं
॥ ५९ ॥ वर्षवर्षधरनाममात्रतो । द्वीप एष कथितो यदोद्यतः ॥ तद्विशेषविधिवर्णनेछया–दे-
श एव विहितोऽवसीयतां ॥ ६० ॥ विश्वाश्चर्यदकीर्त्तिकीर्त्तिविजयश्रीवाचकेंद्रांतिष—द्राजश्री-
तनयोऽतनिष्ट विनयः श्रीतेजपालात्मजः ॥ काव्यं यत्किल तत्र निश्चितजगत्तत्त्वप्रदीपोपमे ।
सर्गः पंचदशः समाप्तिमगमत्सिद्धांतसारोज्ज्वलः ॥ १६० ॥

॥ इति श्रीलोकप्रकाशे पंचदशः सर्गः समाप्तः ॥ श्रीरस्तु ॥

|| अथ षोडशः सर्गः प्रारभ्यते ||

द्वीपस्यास्याथ पर्यंते । स्थितं दक्षिणगामिनि ॥ नानावस्थं कालचक्रै-र्भरतं क्षेत्रमीरितं ॥ १ ॥ अधिज्यधनुराकारं । स्पृष्टं तच्च पयोधिना ॥ पूर्वपश्चिमयोः काष्ठयोः । पृष्टभागे च सर्वतः ॥ २ ॥ यो योऽत्रोत्पद्यते क्षेत्रे-ऽधिष्टाता पल्यजीवितः ॥ तमाह्वयंति भरतं । तस्य सामानिकादयः ॥ ३ ॥ कल्पस्थितिपुस्तकेषु । तथा लिखितदर्शनात् ॥ तत्स्वामिकत्वाद्भरतं । किंचेदं नाम शाश्वतं ॥ ४ ॥ अत्र क्षेत्रादिप्रमाणं । षोढा विष्कंभत १ स्तथा ॥ इषु २ जीवा ३ धनुःपृष्ट ४-बाहा ५ क्षेत्रफलै ६ ध्रुवे ॥ ५ ॥ तत्र विष्कंभः प्रतीतः, शेषाणां त्विमानि लक्षणानि—

विवक्षितस्य क्षेत्रस्य । जीवाया मध्यभागतः ॥ विष्कंभो योऽर्णवं याव-त्स इषुः परिभाषितः ॥ ६ ॥ विवक्षितस्य क्षेत्रस्य । पूर्वापरांतगोचरः ॥ आयामः परमो योऽत्र । सा जीवेत्यभिधीयते ॥ ७ ॥ विवक्षितक्षेत्रजीवा । पूर्वापरांतसीमया ॥ योऽब्धिस्पर्शी परिक्षेपो । धनुःपृष्टं तदूचिरे ॥ ८ ॥ पूर्वक्षेत्रधनुःपृष्टा-द्धनुःपृष्टेऽग्रिमेऽधिकं ॥ खंडं वक्रबाहुवद्य-त्सा बा-

क्षेत्यभिधीयते ॥ ९ ॥ विवक्षितस्य क्षेत्रस्य । यानि योजनमात्रया ॥ खंडानि सर्वक्षेत्रस्य ।
तत्क्षेत्रफलमुच्यते ॥ १० ॥ उच्चत्वस्यापि यन्मान । सर्वतो योजनादिभिः ॥ एतद्घनक्षेत्रफलं
। पर्वतेष्वेव संभवेत् ॥ ११ ॥ भिन्नस्यैकोनविंशत्या । विभागो योजनस्य यः ॥ सा कला ता-
भिरेकोन-विंशत्या पूर्णयोजनं ॥ १२ ॥ एकोनविंशतितमः । कलाया अपि यो लवः ॥ वि-
कला ताभिरेकोन-विंशत्येका कला भवेत् ॥ १३ ॥ इति परिभाषा ॥ व्यासो भरतहिमव-
दादिक्षेत्रमहीभृतां ॥ स्थानद्विगुणितो ज्ञेय । आविदेहमतः पुनः ॥ १४ ॥ यथा रोहावरोहे-
ण । विष्कंभोऽर्धविदेहानितः ॥ भवेदेवमैरवते । विष्कंभो भरतोपमः ॥ १५ ॥ तच्चैवं—चेजं-
बूद्वीपविष्कंभे । भागा नवतियुक् शतं ॥ कथ्यंते तत्र भरत—भेकभागमितं भवेत् ॥ १६ ॥
इतः स्थानद्विगुणत्वाद् । द्वौ भागौ हिमवद्गिरिः ॥ हैमवतं च चत्वारो—ऽष्टौ महाहिमवद्गिरिः
षोडशांशा हरिवर्षं । द्वात्रिंशन्निषधाचलः ॥ विदेहाश्च चतुःषष्टि—र्द्वात्रिंशन्नीलवान्नगः ॥
॥ १८ ॥ षोडशांशा रम्यकाख्यं । भागा रुक्मीनगोऽष्ट च ॥ चत्वारो हैरण्यवतं । द्वौ भा-
गौ शिखरी गिरिः ॥ १९ ॥ एक ऐरावतक्षेत्रं । नवत्या च शतेन च ॥ भागैरेवं योजनानां ।

लक्षमेकं समाप्यते ॥ २० ॥ यद्वेदं भरतक्षेत्र–प्रमाणं योजनादिकं ॥ नवत्याढ्यशतगुणं । यो-
जनानां हि लक्षकं ॥ २१ ॥ जंबूद्वीपस्य विष्कंभो । यथैवं लक्षयोजनः ॥ एवमायामोऽपि
लक्षं । योजनानां भवेद्यथा ॥ २२ ॥ सहस्राः पंच वनयो–र्व्यासः पूर्वापरस्थयोः ॥ योजना-
नां चतुश्चत्वा–रिंशान्यष्टौ शतानि च ॥ २३ ॥ पंचत्रिंशत्सहस्राणि । षडुत्तरा चतुःशती ॥
विजयानां षोडशानां । विष्कंभोऽयं समुच्चितः ॥ २४ ॥ षसामंतर्नदीनां च । पंचाशा सप्त-
शत्यसौ ॥ चतुःसहस्री विष्कंभो । वक्षस्काराष्टकस्य च ॥ २५ ॥ मेरुर्दशसहस्रोरु–र्भद्रसा-
लस्य चायतिः ॥ सहस्राणि चतुश्चत्वा–रिंशत्पूर्वापरस्थितेः ॥ २६ ॥
एषां संकलने लक्षं । योजनानां भवेदिति ॥ वक्ष्यमाणविदेहाना–मायामोऽप्येवमूह्यतां
॥ २७ ॥ दक्षिणोत्तरवर्त्तिन्यो–र्जगत्योर्मूलविस्तृतिः ॥ भरतैरवतक्षेत्र–व्यासेंतर्भाव्यतां क्रमा-
त् ॥ २८ ॥ जगत्योर्मूलविष्कंभः । पूर्वपश्चिमयोस्तु यः ॥ स्वस्वदिक्स्थवनमुख्य–व्यासेंत-
र्भाव्यतामसौ ॥ २९ ॥ विष्कंभो भरतस्याथ । शरश्च कथितो जिनैः ॥ षड्विंशानि योजना-
नि । शतानि पंच षट् कलाः ॥ ३० ॥ चतुर्दशसहस्राणि । चतुःशत्येकसप्ततिः ॥ योजनान्य

स्य जीवा स्था–त्किंचिदूनाश्च षट्कलाः ॥३१॥ धनुःपृष्टमहस्राणि । चतुर्दश तथोपरि ॥ अ-
ष्टाविंशा पंचशती । कला एकादशाधिकाः ॥३१॥ योजनानां त्रिपंचाश–छ्क्षा अशीतिरेव च
॥ सहस्राणि षट् शतानि । तथैकाशीतिरित्यथ ॥ ३७ ॥ एतावद्भरतक्षेत्रे । प्रोक्तं क्षेत्रफलं जिनैः
कलाः सप्तदश तथा । तावत्यो विकला अपि ॥ वैताढ्यगिरिणा कृतं ॥ दाक्षिणात्यं
॥ ३३ ॥ वाह्या त्वत्र न संभवति. तच्चेदं भरतं द्वेधा । भित्वा वैताढ्यभूधरं ॥ गंगासिं-
भरतार्द्ध–मुत्तरार्द्ध तथापरं ॥ ३४ ॥ षोढा हिमवडुद्भाभ्यां । स्याद्विष्कंभः शरोऽपि
धुभ्यां कृत त–त्कृत्वा पूर्वापरांबुधी ॥ ३५ ॥ अर्द्धस्य दाक्षिणात्यस्य । योजनानां सहस्राणि । नव सप्त-
च ॥ अष्टात्रिंशयोजनानां । द्वे शते च कलात्रयं ॥ ३६ ॥ योजनानां धनुःपृष्टं योजनानां ।
शतानि च ॥ जीवाष्टचत्वारिंशानि । द्वादशात्र कलास्तथा ॥ ३७ ॥ लक्षाण्यष्टादश
सहस्राणि नवोपरि ॥ शतानि सप्त षट्षष्टिः । कलैका दक्षिणार्द्धके ॥ ३८ ॥ कला द्वा-
पंच–त्रिंशदेव सहस्रकाः ॥ चतुःशती योजनानां । पंचाशीतिस्तथोपरि ॥ ३९ ॥
दश विकलाः । षडित्येवं जिनेश्वरैः ॥ दाक्षिणात्ये भरतार्द्धे । सर्वं क्षेत्रफलं मतं ॥ ४० ॥

वाह्या त्वत्र न संभवति. वैताढ्याद्दक्षिणस्यां चो–त्तरस्यां लवणार्णवात् ॥ चतुर्दशाधिकशतं । योजनानि कलास्तथा ॥ ४१ ॥

एकादशातीत्य मध्य–खंडेऽयोध्यापुरी भवेत् ॥ नवयोजनविस्तीर्णा । द्वादशयोजनायता ॥ ४२ ॥ खंडेऽत्रैवार्यदेशानां । स्यात्सार्द्धा पंचविंशतिः ॥ खंडोऽनार्यस्तान् विनासौ । खंडाः पंचापरे तथा ॥ ४३ ॥ मध्यखंडगतेष्वार्य–देशेष्वेव भवंत्यमी ॥ अर्हतां चक्रिणामर्द्ध–चक्रिणां शीरिणां तथा ॥ ४४ ॥ अष्टात्रिंशे योजनानां । द्वे शते त्रिकलाधिके ॥ अतिक्रम्य हिमवतो । दक्षिणस्यां तथांबुधेः ॥ ४५ ॥

एतावदेवातिक्रम्यो–त्तरस्यामत्र राजतः ॥ वैताढ्यो मध्यस्थ इव । व्यभजद्भरतं स च ॥ ॥ ४६ ॥ पंचाशतं योजनानि । विस्तीर्णः पंचविंशतिं ॥ योजनान्युन्नतः कोशा–धिकानि षड् भुवोंतरं ॥ ४७ ॥ युग्मं ॥ विहाय मंदरं सर्व–पर्वतानां भवेद्यतः ॥ स्वस्वोच्छ्रयस्य तुर्यांशो । व्यवगाढो भुवोंतरे ॥ ४८ ॥ द्वे योजनशते साष्टा–शीतिके त्रिकलाधिके ॥ इषुर्वैताढ्यशैलस्य । प्रत्यंचास्य प्रपंच्यते ॥ ४९ ॥ योजनानां सहस्राणि । दश सप्त शतानि च ॥ विंशतिश्च

कलाः किंचि—दूनां द्वादश कीर्त्तिताः ॥ ५० ॥ धनुःपृष्टं सहस्राणि । दश सप्त शतानि च ॥
त्रिचत्वारिंशताढ्यानि । कलाः पंचदशाधिकाः ॥ ५१ ॥ साष्टाशीतिर्योजनानां । चतुःशती
तथा कलाः ॥ सार्द्धाः षोडश बाहस्य । प्रत्येकं पार्श्वयोर्द्वयोः ॥ ५२ ॥ ऊर्ध्वं च पर्वतस्या-
स्य । दक्षिणोत्तरपार्श्वयोः ॥ अतिक्रमे योजनानां । दशानां समभूमितः ॥ ५३ ॥

अत्रास्ति मेखलैकैका । दशयोजनविस्तृता ॥ आयामेन च वैताढ्य—समाने ते उन्ने अ-
पि ॥ ५४ ॥ पृथुस्त्रिंशद्योजनानि । वैताढ्यः स्यादतः परं ॥ प्रतिमेखलमेकैका । मानतो मे-
खला समा ॥ ५५ ॥ शोन्निता वनखडेन । पद्मवेदिकयापि च ॥ वर्त्तते खेचरश्रेणी । रत्न-
बद्धमहीतला ॥ ५६ ॥ स्युस्तत्र दक्षिणश्रेणौ । वृतानि विषयैर्निजैः ॥ महापुराणि पंचाश—
त्परस्यां षष्टिरेव च ॥ ५७ ॥ दक्षिणस्यां पुरं मुख्यं । न्नवेद्गगनवल्लन्नं ॥ उदीच्यां रथनूपुर—
चक्रवालाह्वयं न्नवेत् ॥ ५८ ॥ अयं जंबूद्वीपप्रज्ञप्त्यन्निप्रायः. ऋषन्नचरित्रादौ तु दक्षिणश्रेण्यां
रथनूपुरचक्रवालमुत्तरश्रेण्यां गगनवल्लन्नमुक्तमिति ज्ञेयं. मुख्यत्वं त्वनयोर्ज्ञेयं । स्वस्वश्रेण्य-
धिराजयोः ॥ राजधानीरूपतया । महासमृद्धिशालिनोः ॥ ५९ ॥ वसंतस्तेषु चोत्तुंग—रत्नप्रा-

सादशालिषु ॥ तृणायापि न मन्यते । स्वर्गे विद्याधरेश्वराः ॥ ६० ॥ दशयोजनतुंगस्य । पं-
चाशद्विस्तृतेरपि ॥ खंडस्याद्यस्य सकलं । प्रतरं स्याद्भुवस्तले ॥ ६१ ॥ पंच लक्षाः सहस्रा-
णि । द्वादशाथ शतत्रयं ॥ सताढ्यं द्वादश कलाः । खंडेऽथ प्रथमे घनं ॥ ६२ ॥ लक्षाणा-
मेकपंचाश–त्रयोविंशतिरेव च ॥ सहस्रा योजनानां षट्–सप्ततिः षट्कलास्तथा ॥ ६३ ॥ श्रे-
ण्योर्द्वयोरथ वैताढ्यां । योजनानामतिक्रमे ॥ दशानां मेखलैकैका । वर्त्तते पार्श्वयोर्द्वयोः ॥
॥६४॥ तत्र याम्योत्तराश्रेण्यो । श्रेण्यौ गिरिसमायते ॥ वसंत्यत्र शक्रसत्क–लोकपालाभियो-
गिनः ॥ ६५ ॥ तथाहुः क्षमाश्रमणपादाः–विज्जाहरसेढीउ । उड्ढं गंतूण जोअणे दसउ ॥ द-
सजोअणपिहुलाउ । सढीउ सक्करायस्स ॥ ६६ ॥ सोमजमकाइयाणं । देवाणं वरुणकाइया-
णं च ॥ वेसमणकाइयाणं । देवाणं आभियोगाणं ॥ ६७ ॥ बहूनि भवनान्यत्र । तेषां प-
ल्योपमायुषां ॥ बहिर्वृत्तानि रात्नानि । चतुरस्राणि चांतरे ॥ ६८ ॥ वेदिकाननराजिभ्यां ।
श्रेण्योर्व्यासोऽनयोर्भवेत् ॥ योजनानि दशैतावान् । वैताढ्यस्यापि तत्र सः ॥ ६९ ॥ दशयो-
जनतुंगस्य । त्रिंशद्योजनविस्तृतेः ॥ खंडस्यास्य द्वितीयस्य । गणितं प्रतरात्मकं ॥ ७० ॥

न

तिस्रो लक्षाः सहस्राणि । सप्त त्रीणि शतानि च ॥ तथा चतुरशीतिश्च । कला एकादशाधिकाः ॥ ७१ ॥ अत्र च सर्वत्र यथोपयोगं योजनपदमनुक्तमपि अध्याहार्यं. तथा खण्डे द्वितीयस्मिन् । निश्चितं सर्वतो घनं ॥ त्रिंशल्लक्षा योजनानां । सहस्राणि त्रिसप्ततिः ॥ ७२ ॥ शतान्यष्टौ पंचचत्वा–रिंशदाढ्यानि चाधिकाः ॥ कलाः पंचदशेत्युक्तं । व्यक्तं युक्तिविशारदैः ॥७३॥ अन्नियोगिश्रेणितश्च । योजनानामतिक्रमं ॥ पंचानामूर्ध्वमत्रास्यो–परिन्नागो विराजते ॥ ७४ ॥ नानारत्नालंकृतस्य । दशयोजनविस्तृतेः ॥ मध्ये पद्मवेदिकास्य । तस्याश्चोन्नयतो वने ॥ ७५ ॥ तयोः क्रीडापर्वतेषु । कदल्यादिगृहेषु च ॥ दीर्घिकादिषु च स्वैरं । क्रीडंति व्यंतरामराः ॥ ७६ ॥ पंचयोजनतुंगस्य । दशयोजनविस्तृतेः ॥ खंडस्यास्य तृतीयस्य । प्रतरं परिकीर्त्तितं ॥ ७७ ॥ एकं लक्षं द्वे सहस्रे । चतुःशत्येकषष्टियुक् ॥ कला दशाथ गणितं । ब्रवीम्यस्मिन् घनात्मक ॥७८॥ पच लक्षा योजनानां। सहस्रा द्वादशापरे॥ ससातिरेका त्रिशती। कलाश्च द्वादशाधिकाः ॥ ७९ ॥ त्रयाणामपि खंडानां । घनेष्वेकीकृतेषु च॥ वैताढ्यस्याखिलस्यापि । जायते गणितं घनं ॥ ८० ॥ तच्चेदं–

सप्ताशीतिश्च लक्षाणि । द्विनवतिः शतान्यपि ॥ एकोनत्रिंशदाढ्यानि । कलाश्चतुर्दशाधिकाः ॥ ८१ ॥ सिद्धायतनं कूटं १ । दक्षिणभरतार्द्धनामधेयं च ॥ खंडप्रपातकूटं ३ । तुर्यं तन्माणिभद्राख्यं ४ ॥ ८२ ॥ वैताढ्याख्यं ५ पंचम—मथ षष्टं पूर्णभद्रसंज्ञं ६ च ॥ भवति तमिस्रगुहं ७ चो—त्तरभरतार्द्धं ८ च वैश्रमणं ९ ॥ ८३ ॥ वैताढ्ये नव कूटा—न्येवं ज्ञेयानि तत्र पूर्वाब्धेः ॥ सविधे सिद्धायतनं । ततः क्रमात्प्रत्यगखिलानि ॥ ८४ ॥ आर्या. कूटान्येतानि सक्रोशा—न्युच्चत्वे योजनानि षट् ॥ तावंत्येव मूलाद्भूमौ । विष्कंभायामतोऽपि च ॥ ८५ ॥ मध्ये देशोनानि पंच । योजनानि शिरस्यथ ॥ साधिकानि त्रीण्युदस्त—गोपुच्छसंस्थितान्यतः ॥८६॥ परिक्षेपामूलमध्य—शिरस्सूनानि विंशतिः ॥ तथोनानि पंचदश । साग्राणि नव च क्रमात् ॥ ८७ ॥ अधस्ताच्छिखरायाव—दागतं तत्कलाङ्कितं ॥ कूटोत्सेधार्द्धयुक्कूटे । व्यासो यत्रेप्सितास्पदे ॥ ८८ ॥ तथाहि——सक्रोशार्द्धे योजनानां । त्रयेऽतीते शिरोऽग्रतः ॥ यदा जिज्ञास्यतेऽमीषु । व्यासस्तदा तदर्द्धयेत् ॥ ८९ ॥ स्युः षट् क्रोशाः सपादास्ते । कूटोत्सेधार्द्धसंयुताः ॥ सपादक्रोशहीनैवं । संजाता पंचयोजनी ॥ ९० ॥ मध्यप्रदेशे विष्कंभ । एतावा-

ज

नेषु जायते ॥ एवं हीमवदादीनां । सर्वकूटेषु जावना ॥ ९१ ॥ सिद्धायतनकूटस्यो–परि र-
म्यं विराजते ॥ सत्सिद्धायतनं मौलौ । किरीटमिव जूपतेः ॥ ९२ ॥ तत्र कनकमणिमय–
मेकक्रोशायतं तदर्द्धनतं ॥ चापशतानि चतुर्दश–चत्वारिंशानि चोत्तुगं ॥ ९३ ॥ पूर्वोत्तराद-
क्षिणासु । द्वारमेकैकमत्र तत् ॥ धनुःपंचाशतोत्तुगं । तदर्द्धं किल विस्तृतं ॥ ९४ ॥ पंचधनुः-
शतविष्कं–जायामा स्यात्तदर्द्धबाहल्या ॥ मणिपीठिका तदंत–र्देवछंदक जपरि चास्याः ॥९५॥

पंचचापशतान्येव । विष्कंजायामतो मतः ॥ तान्येव सातिरेकाणि । तुंगत्वेन प्ररूपितः
॥ ९६ ॥ अष्टोत्तर शतं नित्य–प्रतिमास्तत्र चार्हतां ॥ जत्सेधांगुलनिष्पन्न–धनुःपंचशतोच्छ्रि-
ताः ॥ ९७ ॥ एकैकस्यां दिशि सप्त–विंशतिः सप्तविंशतिः ॥ एवं चतुर्दिशं ताः स्यु–र्नाम्ना
च ऋषजादयः ॥ ९८ ॥ तासां च जिनमूर्त्तीना–मंकरत्नमया नखाः ॥ अंतर्लोहिताक्षरत्न–
प्रतिसेकमनोहराः ॥९९॥ पाणिपादतलानि च । जिह्वा श्रीवत्सचूचुकं ॥ तालूनि च तपनीय–
मयानि रिष्टरत्नजाः ॥ १०० ॥ श्मश्रुरोमराजयश्च । जुष्टा विद्रुमनिर्मिताः ॥ नासा अंतर्लो-
हिताक्ष–निषेकास्तपनीयजाः ॥ १ ॥ लोहिताक्षप्रतिसेका–न्यक्षीण्यंकमयानि च ॥ तारका

अक्षिपक्ष्माणि । भ्रुवश्च रिष्टरत्नजाः ॥ २ ॥ ललाटपट्टश्रवण–कपोलं कनकोद्भवं ॥ केशभूमिस्तपनीय–मयी केशाश्च रिष्टजाः ॥ ३ ॥ वज्रजाः शीर्षघटिका–स्तथा कनकनिर्मिताः ॥ ग्रीवाबाहुपादजंघा–गुल्फोरुतनुयष्टयः ॥ ४ ॥ नन्वेतानि भावजिन–प्रतिरूपाणि तेषु च ॥ नुचितं श्मश्रुकूर्चादि । श्रामण्यानुचितं कथं ॥ ५ ॥ तदुक्तं तपागच्छनायकश्रीदेवेंद्रसूरिशिष्यश्रीधर्मघोषसूरिभिर्भाष्यवृत्तौ—भगवतोऽपगतकेशशीर्षमुखनिरीक्षणेन श्रामण्यावस्था सुज्ञातैवेति, अत उच्यते—

भावार्हतामपि श्मश्रु–कूर्चादीनामसंभवः ॥ न सर्वथा किंतु तादृक्–दिव्यातिशयसंभवात् ॥ ६ ॥ स्यादवस्थितता तेषां । श्रामण्यग्रहणादनु ॥ पुरुषत्वप्रतिपत्तिः । सौंदर्यं चेत्थमेव हि ॥ ७ ॥ यदुक्तं श्रीसमवायांगे–' अवठियकेसमंसुरोमणहे ' इति. औपपातिकेऽप्युक्तं—' अवठ्ठियसुविभत्तचत्तमंसू ' एवं च—तासां भावजिनाधीश–प्रतिरूपतया ततः ॥ शाश्वतार्हत्प्रतिमानां । श्मश्रुकूर्चादि युक्तिमत् ॥ ८ ॥ भाष्ये त्वकेशशीर्षा स्या । या श्रामण्यदशोदिता ॥ माऽवर्द्धिष्णुनयाद्धपत्वा–त्तदभावविवक्षया ॥ ९ ॥ एकैकस्याः प्रतिमायाः । पृष्ट-

तश्छत्रधारिणी ॥ द्वे द्वे चामरधारिण्यौ । पार्श्वतः पुरतः पुनः ॥ १० ॥ यक्षभूतकुंडधार-प्रतिमानां द्वयं द्वयं ॥ विनयावनतं पाद-पतितं घटितांजलि ॥ ११ ॥ यथा देवछंदकेऽस्मिन् । घंटाधूपकडुछकाः ॥ तथा चंदनकुंभाद्याः । प्रत्येक शतमष्टयुक् ॥ १२ ॥ तथाहि—चंदण-कलसा १ भिंगा-रगा २ आयसगा य ३ थाला य ४ ॥ पाईओ ५ सुपइठा ६ । मणगुलीया ७ वायकरगा य ८ ॥ १३ ॥ चित्तारयणकरंडग ९ । हय १० गय ११ नरकंठगाय १२ चंगेरी १३ ॥ पडलग १४ सीहासण १५ । छत्त १६ चामरा १७ समुगय १८ झया य १९ ॥१४॥ तथा—खंडप्रपातकूटे स्या-न्नृत्तमालः सुरो विभुः ॥ सप्तमे कृतमालश्च । स्यात्तमिस्रगुहाभिधे ॥ १५ ॥ शेषाणां च शेषकूटानां । कूटनामसमाभिधाः ॥ सुराः कुर्वंत्याधिपत्यं । सर्वे पल्योपमायुषः ॥ १६ ॥ एतेषां च परीवारो । देवीसामानिकादिकः ॥ तत्तदासननरीतिश्च । सर्वं विजयदेववत् ॥ १७ ॥ पूर्णभद्रं माणिभद्रं । कूटं वैताढ्यनामकं ॥ त्रीण्येतानि स्वर्णजानि । राजिकान्यपराणि षट् ॥ १८ ॥ उपर्येषामथैकैकः । स्यात्प्रासादावतंसकः ॥ राजिकः क्रोशतुंगोऽर्द्ध-क्रोशं च विस्तृतायतः ॥ १९ ॥ इदं जंबूद्वीपप्रज्ञप्तिवृत्तिबृहत्क्षेत्रसमासाभिप्रा-

येण, श्रीउमास्वातिकृते जंबूद्वीपसमासे त्वमी प्रासादावतंसकाः क्रोशदैर्घ्यविस्ताराः किंचिन्न्यूनतदुच्छ्रया उक्ताः संति.

तस्य प्रासादस्य मध्ये । महती मणिपीठिका ॥ धनुःपंचाशतायाम—व्यासा तदर्द्धमेदुरा ॥ २० ॥ उपर्यस्या रत्नमयं । सिंहासनमनुत्तरं ॥ तत्तत्कूटस्वामियोग्यं । परिवारासनैर्वृतं ॥ २१ ॥ यदा स्वस्वराजधान्याः । कूटानां स्वामिनः सुराः ॥ अत्रायांति तदैतस्मिन् । प्रासादे सुखमासते ॥ २२ ॥ मेरोर्दक्षिणतोऽसंख्य—द्वीपाब्धीनामतिक्रमे ॥ जंबूद्वीपेऽपरत्रैषां । राजधान्यो यथायथं ॥ २३ ॥ वैताढ्यस्य पर्वतस्य । द्वे गुहे भवतः क्रमात् ॥ खंडप्रपाता प्राच्यांशे । तमिस्रा परतः पुनः ॥ २४ ॥ उन्नते योजनान्यष्टौ । तानि द्वादश विस्तृते ॥ नित्यांधकारगहने । पंचाशद्योजनायते ॥ २४ ॥ दक्षिणस्यामुदीच्यां च । द्वारमेकैकमेतयोः ॥ उच्छ्रितं योजनान्यष्टौ । तानि चत्वारि विस्तृतं ॥ २५ ॥ नृत्तमालकृतमाला—वेकपल्यायुषौ सुरौ ॥ महर्द्धिकौ विजयव—द्देतयोः स्वामिनौ क्रमात् ॥ २६ ॥

प्रतिद्वारं द्वौ कपाटौ । वाज्रिकौ घटितौ सदा ॥ अष्टावष्टौ योजनानि । तुंगौ द्वे द्वे च

विस्तृतौ ॥ २७ ॥ यदेह चक्री भरतों-तरभागं जिगीषति ॥ सेनान्या रत्नदंडेना-हतौ तदा-
वसर्पतः ॥ २८ ॥ उद्घाटितस्यैकैकस्य । पश्चाद्भागेऽस्ति तोदकः ॥ चतुर्योजनविष्कंभा-या-
मोऽयमेतयोः ॥ २९ ॥ हस्तिरत्नं समारुह्य । कुंभस्थलस्फुरन्मणिः ॥ चक्री तदुद्योति-
ताध्वा । तमिस्रां प्रविशेद्गुहां ॥ ३० ॥ तत्र प्रविश्य पाश्चात्य-सैन्यप्रकाशहेतवे ॥ रत्नेन का-
किणीनाम्ना । खटीपिंडावलेखिना ॥ ३१ ॥

ऊर्ध्वाधो योजनान्यष्टौ । तिर्यग्द्वादशयोजनीं ॥ प्रकाशयेद्योजनं चै-कैकं दक्षिणवाम-
योः ॥ ३२ ॥ आदिमं योजन मुक्त्वा । प्रथमं मंडलं लिखेत् ॥ पंचचापशतायाम-विष्कंभं
भानुसन्निभं ॥ ३३ ॥ युग्म ॥ ततोऽपि योजनं मुक्त्वा । द्वितीयं मंडल लिखेत् ॥ इत्येवमु-
त्तरद्वारं । शेषेत्वं योजनेंतिमं ॥ ३४ ॥ एवं च—स्यादेकं दाक्षिणात्यप्रा-क्कपाटोपरि मंडलं
॥ द्वे तोदके त्रिचत्वारिं-शत्प्राग्भित्तावनुक्रमात् ॥ ३५ ॥ ततो द्वे उत्तराद्दप्राक्-तोदकेंत्यं च
मंडलं ॥ उदीच्यप्राक्कपाटेऽयं । पश्चिमायामपि क्रमः ॥ ३६ ॥

एवमेकोनपचाश-त्पूर्वभित्तौ भवंति वै ॥ तावत्यपरभित्तौ त-त्तुल्यानि संमुखानि च

॥ ३७ ॥ अयं च मलयगिरिकृतक्षेत्रविचारबृहद्वृत्त्याद्यभिप्रायः, आवश्यकबृहद्वृत्त्याद्यभिप्राय-
स्त्वयं—गुहायां प्रविशन् भरतः पाश्चात्यपांश्रजन प्रकाशकरणाय दक्षिणद्वारे पूर्वदिक्कपाटे प्र-
थमं योजन मुक्त्वा प्रथमं मंडलमालिखति, ततो गोमुत्रिकान्यायेनोत्तरतः पश्चिमदिक्कपाटतोदके
तृतीययोजनादौ द्वितीयं मंडलमालिखति, ततस्तेनैव न्यायेन पूर्वदिक्कपाटतोदके चतुर्थयोजनादौ
तृतीयं, ततः पश्चिमदिग्भित्तौ पंचमयोजनादौ चतुर्थं, ततः पूर्वदिग्भित्तौ षष्ठयोजनादौ पंचमं
यावदष्टचत्वारिंशत्तममुत्तरद्वारसत्कपश्चिमदिक्कपाटे प्रथमयोजनादौ एकोनपंचाशत्तम चोत्त-
रदिग्द्वारसत्कपूर्वदिक्कपाटे द्वितीययोजनादावालिखति. ॥

दक्षिणात्तोदकात्सप्त—दशभिर्योजनैः परा ॥ अस्त्युन्मग्नजलानाम—नदी त्रियोजनातता
॥ ३८ ॥ द्वादशयोजनायामा । पूर्वभित्तिविनिर्गता ॥ विभिद्य पश्चिमां भित्तिं । प्रविष्टा सिं-
धुनिम्नगां ॥ ३९ ॥ अस्यां पतति यत्किंचिद् । दृषत्काष्ठनरादिकं ॥ तत्सर्वमभिराहत्य । बहिः
प्रक्षिप्यते स्थले ॥ ४० ॥ ततः परं योजनयो—र्द्वयोरतिक्रमे परा ॥ स्यान्निमग्नजलानाम—न-
दी त्रियोजनातता ॥ ४१ ॥ द्वादशयोजनायामा । पूर्वभित्तिविनिर्गता ॥ प्रत्यग्भित्तिं प्रविभि-

थ । सिंधुं विशत्यसावपि ॥ ४२ ॥ अस्यां पतति यत्किंचि-तृणकाष्ठनरादिकं ॥ अधो मज्जति तत्सर्व-मीदृक् स्वभाव एनयोः ॥४३॥ ततश्चोत्तरतः सप्त-दशभिर्योजनैः परः ॥ चतुर्योजनविष्कंभा-याम उत्तरतोदकः ॥ ४४ ॥ ततश्च—

उन्नाम्यां द्वारभागाभ्या-मित्येव सर्वसंख्यया ॥ योजनैरेकविंशत्या । नद्यौ स्यातां यथोदिते ॥ ४५ ॥ अथ वार्द्धकिरत्नेन । सद्यः सज्जितपद्यया ॥ नद्यावुभे समुत्तीर्य । यावद्गच्छति चक्रभृत् ॥ ४६ ॥ तावद्विना प्रयासेन । कपाटावुत्तराश्रितौ ॥ उद्घटेते स्वयमेव । कृतक्रौंचारवौ रयात् ॥ ४७ ॥ निर्गत्य तेन द्वारेण । विजित्योत्तरभारतं ॥ दर्याः खंडप्रपातायाः-श्चक्री समीपमापतेत् ॥ ४८ ॥ उत्तरद्वारमुद्घाट्य । सेनानीकृतयत्नतः ॥ मंडलान्यालिखन् प्राग्व-च्चक्री विशति तां गुहां ॥ ४९ ॥ पूर्वं निमग्नसलिलां । समुत्तरेत्ततः परां ॥ तूर्णं वार्द्धकिरत्नेन । कृतया हृद्यपद्यया ॥ ५० ॥ इमे मानादिभिः प्राग्व-त्प्रत्यग्भित्तिविनिर्गते ॥ प्राच्यभित्तिं किंतु भित्वा । प्राप्ते गंगामहानदीं ॥ ५१ ॥ द्वारेण दाक्षिणात्येन । स्वयमुद्घटितेन च ॥ निर्गत्य कृतकृत्यः सं-श्चक्री निजपुरं विशेत् ॥ ५२ ॥ स्याद्यावच्चक्रिणो राज्यं । ता-

वत्तिष्ठंति संततं ॥ मंडलानि च पद्ये च । गुहामार्गे गतागते ॥ ५३ ॥ अयं प्रवचनसारोद्धारवृत्त्यभिप्रायः, त्रिषष्टीयाजितचरित्रे तु—

उद्घाटितं गुहाद्वारं । गुहांतर्मंडलानि च ॥ तावत्तान्यपि तिष्ठंति । यावज्जीवति चक्रभृत् ॥ ५४ ॥ इत्युक्तमिति ज्ञेयं. द्वारात्खण्डप्रपाताया । याम्याद्याम्यदिशि ध्रुवं ॥ गंगायाः पश्चिमे कूले । वसंति निधयो नव ॥ ५५ ॥ उदीच्यामथ वैताढ्याद् । हिमवद्गिरिसीमया ॥ स्याडुत्तरभरतार्द्धं । पर्यंकासनसंस्थितं ॥ ५६ ॥ अष्टात्रिंशे योजनानां । द्वे शते त्रिकलाधिके ॥ विष्कंभतोऽस्य बाहास्य । प्रत्येक पार्श्वयोर्द्वयोः ॥ ५७ ॥ योजनानां शतान्यष्टा—दशद्विनवतिस्तथा ॥ सार्द्धाः सप्त कलाः क्षेत्र—फलमस्याथ कीर्त्यते ॥ ५८ ॥ लक्षास्त्रिंशत्सहस्राणि । द्वात्रिंशदथ चोपरि ॥ शतान्यष्टौ योजनाना—मष्टाशीतिरथाधिका ॥ ५९ ॥ कला द्वादश विकला । एकादश प्रकीर्त्तिताः ॥ उक्तसामान्यभरत—वद्वेषं तु शरादिकं ॥ ६० ॥ नितंबस्य हिमवतो । दाक्षिणात्यस्य सन्निधौ ॥ क्षेत्रेऽस्मिन्नंतरे गंगा—सिंधुप्रपातकुंडयोः ॥६१॥ गिरिर्वृषभकूटाख्य । उच्चत्वेनाष्टयोजनः ॥ द्वे योजने भूमिमग्न—श्चारुगोपुच्छसंस्थितः ॥६२॥

पंचविंशतिरेवाष्टा—दशैव द्वादशापि च ॥ साधिकानि परिक्षेपो । मूले मध्ये च मूर्धनि च ॥
॥ ६३ ॥ द्वादशाष्ट च चत्वारि । मूले मध्ये शिरस्यपि ॥ योजनानि क्रमादस्य । व्यासाया-
मौ मतांतरे ॥ ६४ ॥

सप्तत्रिंशत्क्रमात्पंच—विंशतिर्द्वादशापि च ॥ साधिकानि परिक्षेपो । मूले मध्ये तथोप-
रि ॥ ६५ ॥ इदं च मतद्वयमपि जंबूद्वीपप्रज्ञप्तिसूत्रे. मतांतरे ननु कथं । श्रुते सर्वज्ञमूलके
॥ तुल्यकैवद्वयमाजां य—देकमेवार्हतां मतं ॥ ६५ ॥ अत्रोच्यते—दुर्भिक्षे स्कंदिलाचार्य—देव-
र्द्धिगणिवारके ॥ गणनाभावतः साधु—साध्वीनां विस्मृतं श्रुतं ॥ ६६ ॥ ततः सुभिक्षे संजा-
ते । संघस्य मेलकोऽभवत् ॥ वलभ्यां मथुरायां च । सूत्रार्थघटनाकृते ॥ ६७ ॥ वलभ्यां सं-
गते संघे । देवर्द्धिगणिरग्रणीः ॥ मथुरायां संगते च । स्कंदिलार्योऽग्रणीरभूत् ॥ ६८ ॥ तत-
श्च वाचनाभेद—स्तत्र जातः क्वचित् क्वचित् ॥ विस्मृतस्मरणे भेदो । जातु स्याद्भयोरपि
॥ ६९ ॥ तत्तैस्ततोऽर्वाचीनैश्च । गीतार्थैः पापभीरुभिः ॥ मतद्वयं तुल्यतया । कक्षीकृतम-
निर्णयात् ॥ ७० ॥ सत्यप्येवं सांप्रतीना । विसंवादं श्रुतस्थितं ॥ निर्णेतुमुत्सहंते ये । ते झे-

या मातृगामिनाः ॥ ७१ ॥ एवमेवोक्तं श्रीमलयगिरिभिर्ज्योतिष्करंडवृत्तौ.

देशोनक्रोशतुंगोऽर्द्ध–क्रोशविस्तृत एव च ॥ क्रोशायाम ऽपर्यस्य । प्रासादोऽतिमनोरमः ॥ ७२ ॥ देवोऽत्र वृषभाभिख्य । एकपल्योपमस्थितिः ॥ महर्द्धिको विजयव–त्तथास्य राजधान्यपि ॥ ७३ ॥ शैलोऽयं चित्रित इव । चक्रिभिर्जितभारतैः ॥ काकणीरत्नलिखितैः । समंतान्निजनामभिः ॥ ७४ ॥ नद्योऽष्टाविंशतिरिह । सहस्रा ह्युत्तरा मताः ॥ अमुष्य भरतक्षेत्र–स्योर्वीशस्यांगना इव ॥ ७५ ॥ अरकाश्च षडप्यत्र । सुषमासुषमादयः ॥ सदा विपरिवर्तंते । नियोगिन इवेशितुः ॥ ७६ ॥ इति भरतक्षेत्रं ॥ अथोत्तरार्द्धभरत–पर्यंत उत्तराश्रिते ॥ जात्यस्वर्णमयो भाति । हिमवान्नामपर्वतः ॥ ७७ ॥ स्पृशन् द्वाभ्यां निजांताभ्यां । पूर्वापरपयोनिधी ॥ योजनानां शतं तुंगो । भूमग्नः पंचविंशतिं ॥ ७८ ॥ योजनानां दशशती । द्विपंचाशत्समन्विता ॥ कला द्वादश विष्कंभः । पर्वतस्यास्य कीर्त्तितः ॥ ७९ ॥ योजनानां पंचदश–शतान्यथाष्टसप्ततिः ॥ अष्टादशकलाश्चात्र । शरः प्रोक्तो जितस्मरैः ॥ ८० ॥

योजनानां सहस्राणि । चतुर्विंशतिरेव च ॥ स द्वात्रिंशन्नवशती। प्रत्यंचास्य कलार्द्धयु-

द्वे शते त्रिंशदधिके । चतस्रश्चा
कू ॥ ८१ ॥ धनुःपृष्ठं योजनानां । सहस्राः पंचविंशतिः ॥ सार्द्धानि बाहैकैका-
धिकाः कलाः ॥ ८२ ॥ योजनानां सहस्राणि । पंचत्रीणि शतानि च ॥ योजनानां
स्या । द्व्यर्द्धाः पंचदशाशकाः ॥ ८३ ॥ ( कला इत्यर्थः ) कोटीद्वयं च लक्षाणि । कलाश्च
चतुर्दश ॥ षट्पंचाशत्सहस्राणि । शतानि नव चोपरि ॥ ८४ ॥ एकसप्ततिरेवाष्टौ । कोट्य-श्च-
विकलादश ॥ भूमौ प्रतरगणितं । निर्दिष्टं हिमवद्गिरेः ॥ ८४ ॥ कोटीनां द्वे शते एकं शतं चतुश्चत्वा
तुर्दशाश्च लक्षकाः ॥ षट्पंचाशतथा सप्त-नवतिश्च सहस्रकाः ॥ ८५ ॥ वेदिकाव-
-रिंश कलाश्च षोडश ॥ विकला द्वादशेत्युक्तं । शैलेऽस्मिन् सर्वतोघनं ॥ ८६ ॥
नखंडाभ्यां । रम्योऽय पार्श्वयोर्द्वयोः ॥ वेदिकावनखण्डानां । सर्वं मानादि पूर्ववत् ॥ ८७ ॥
अत्रैकादश कूटानि । बिभ्रति प्रकटप्रभां ॥ सिद्धायतनमुख्यानि । प्राच्या आरभ्य पू-
र्ववत् ॥ ८८ ॥ स्यात्सिद्धायतनं १ क्षुद्र-हिमवन्नामकं २ परं ॥ तृतीयं भरताभिख्य ३-मि-
लाकूटं ४ ततः परं ॥ ८९ ॥ गंगावर्त्तनकूटं ५ च । श्रीदेवीकूट ६ मित्यपि ॥ रोहितांशासु
रीकूट ७ । सिंध्वावर्त्तनसंज्ञकं ८ ॥ ९० ॥ सुरादेवीकूटमिति ९ । परं हैमवताभिधं १० ॥

एकादशं वैश्रमणं ११ । कूटानि हिमवद्गिरेः ॥ ९१ ॥ सर्वाण्यमूनि रात्नानि । मूले च व्या-
सदैर्घ्यतः ॥ योजनानां पंचशती । तावदेवोच्छ्रिनानि च ॥ ९२ ॥ मध्ये च त्रिशतीं पंच-स-
प्तत्याढ्यां शिरस्यथ ॥ ततानि द्वे शते सार्द्धे । गोपुच्छसंस्थितान्यतः ॥ ९३ ॥ शताः
पंचदशैकाशी---त्यधिकाः किंचनाधिकाः ॥ एकादश किंचिदून-म्फशीतियुताः शताः ॥
॥ ९४ ॥ शताः सप्तैकनवति-संयुताः किंचिदूनकाः ॥ परिक्षेपाः क्रमादेषु । मूले म
ध्ये च मूर्द्धनि ॥ ९५ ॥

सिद्धायतनकूटस्यो-परि सिद्धालयो महान् ॥ पंचाशद्योजनान्याया-मतः स परिकी-
र्त्तितः ॥ ९६ ॥ विष्कंभतो योजनानि । प्रज्ञप्तः पंचविंशतिः ॥ षट्त्रिंशद्योजनान्युच्च-स्त्रि-
द्वारो भास्वरप्रभः ॥ ९७ ॥ विना प्रतीचीं त्रिदिशं । द्वारमेकैकमुच्छ्रितं ॥ योजनान्यष्टच-
त्वारि । स्याद्विस्तारप्रवेशयोः ॥ ९८ ॥ सिद्धायतनमध्येऽथ । विभाति मणिपीठिका ॥ यो-
जनान्यष्ट विस्तीर्णा-यता चत्वारि मेदुरा ॥ ९९ ॥ तदुपर्येतस्या अथैको । देवछंदक आहितः
॥ उच्चैस्त्वेन साधिकानि । योजनान्यष्ट स श्रुतः ॥ १००॥ विष्कंभायामतोऽप्येष । योजना-

न्यष्ट तत्र च ॥ अष्टोत्तरशतं सिद्ध–प्रतिमास्तास्तु पूर्ववत् ॥ १ ॥ दशानां शेषकूटाना–मुपर्यैकैक आलयः ॥ द्वाषष्टिं योजनान्यर्द्धा–धिकान्यायतविस्तृतः ॥ २ ॥ एकत्रिंशद्योजनानि । सक्रोशानि समुन्नतः ॥ तत्तत्कूटसमाह्वान–स्वामिना समधिष्ठितः ॥ ३ ॥ कूटे द्वितीये तृतीये । दशमे रुक्मसिते ॥ चतुर्थेषु सुरा ईशा । देव्यः शेषेषु षट्सु च ॥ ४ ॥ तत्रापि—

इलादेवी सुरादेवी २ । द्वे इमे दिक्कुमारिके ॥ तिस्रश्च नद्यधिष्ठात्र्यः । श्रीश्चेति प्रथिता इमाः ॥ ५ ॥ देवा देव्यश्च सर्वेऽमी । एकपल्योपमायुषः ॥ महर्द्धिका विजयन–त्तथैषां राजधान्यपि ॥ ५ ॥ एता देव्यश्च भवन–पतिजातिगता मताः ॥ व्यंतरीणामर्द्धपल्य—मायुरुत्कर्षतोऽपि यत् ॥ ६ ॥ एवं वक्ष्यमाणा अपि देव्यो ज्ञेयाः, वक्ष्यमाणपर्वतेषु । यानि चैत्यानि येऽपि च ॥ प्रासादा देवतानां ते । सर्वेऽत्रत्यैः समाः स्मृताः ॥ ७ ॥ गिरेरस्योपरितले । ह्रदः पद्मह्रदाभिधः ॥ योजनानि दशोद्विद्धः । सहस्रयोजनायतः ॥ ८ ॥ शतानि पंच विस्तीर्णो । वेदिकावनमंडितः ॥ चतुर्दिशं तोरणाढ्य–त्रिसोपानमनोरमः ॥ ९ ॥ अयं च वक्ष्यमाणाश्च । महापद्मह्रदादयः ॥ सर्वे पूर्वापरायामा । दक्षिणोत्तरविस्तृताः ॥१०॥ तथाहुः—

हिमवंतसेलसिहरे । वरारविंदद्दहो सलिलपुसो ॥ दसजोअणावगाढो । विछिन्नो दाहि-
णुत्तरउ ॥ ११ ॥ तस्य मध्ये पद्ममेकं । योजनायतविस्तृत ॥ अर्द्धयोजनबाहल्यं । तावदेवो-
च्छ्रितं जलात् ॥ १२ ॥ जले मग्नं योजनानि । दशैतज्जगतीवृतं ॥ जंवूद्वीपजगत्याभा । सा
गवाक्षालिराजिता ॥ १३ ॥ किंत्वसौ योजनान्यष्टा–दशोच्चा सर्वसंख्यया ॥ जलेऽवगाढा द-
श य–योजनान्यष्ट चोपरि ॥१४॥ यत्तु जंवूद्वीपप्रज्ञप्तिमूलसूत्रे ' जंबूद्दीवजगइप्पमाणा ' इ-
त्युक्तं तज्जलावगाढप्रमाणमविवक्षित्वेति तद्वृत्तौ. किंच––वज्रमूलं रिष्टकदं । वैडूर्यं नालवंधु-
रं ॥ वैडूर्यबाह्यपत्रं त–ज्जांबूनदांतरच्छदं ॥ १५ ॥ अत्रायं विशेषोऽस्ति वृहत्क्षेत्रविचारवृत्या-
दौ–वाह्यानि चत्वारि पत्राणि वैडूर्यमयानि, शेषाणि तु रक्तसुवर्णमयान्युक्तानि. किंच जंबू-
द्वीपपन्नत्तिसूत्रे जांबुनदमीषद्रक्तस्वर्णं, तन्मयान्यभ्यंतरापत्राणि. सिरिनिलयक्षेत्रविचारवृत्तौ
तु पीतस्वर्णमयान्युक्तानीति ज्ञेयं. ॥ तपनीयकेसरवृत्ता । सौवर्णी कर्णिका भवेत्तस्य ॥ द्वि-
क्रोशायतवितता । क्रोशोच्चा श्रीभवनमस्यां ॥ १६ ॥
एकक्रोशायतमेत–त्तथार्द्धक्रोशविस्तृतं ॥ ऊनक्रोशोन्नतं तत्र । दक्षिणोत्तरपूर्वतः ॥१७॥

पंचचापशतोत्तुंगं । तदर्द्धव्यासमेककं ॥ द्वारं तत्राथ भवन–मध्येऽस्ति मणिपीठिका ॥ १८ ॥
सापि पंचशतधनु–र्व्यासायामार्द्धमेदुरा ॥ तदुपर्यस्याः शयनीयं । श्रीदेवीयोग्यमुत्तमं ॥ १९ ॥
पद्मजातीयैः परिक्षेपै–र्वेष्टितं मूलपंकज ॥ क्रमादर्द्धार्द्धमानाब्जाः । परिक्षेपाः समेऽप्यमी ॥२०॥
अष्टोत्तरं शतं पद्माः । प्रथमे परिधौ स्थिताः ॥ मूलपद्मादर्द्धमानाः । श्रीदेवीभूषणैर्भृताः ॥
॥२१॥ वायूत्तरेशानदिक्षु । सामानिकसुधाभुजां ॥ चतुःसहस्री पद्मानां । तावतां परिकीर्त्तिताः
॥२२॥ महत्तराणां देवीनां । प्राक् चत्वार्यंबुजानि च ॥ सहस्राण्यष्ट चाग्नेय्या–मभ्यंतरसभा-
जुषां ॥ २३ ॥ सहस्राणि दशाब्जाना–मपाच्यां मध्यपर्षदां ॥ द्वादशाब्जसहस्राणि । नैर्ऋत्यां
बाह्यपर्षदां ॥ २४ ॥ सेनापतीनां सप्तानां । प्रत्यक् सप्तांबुजानि च ॥ द्वितीयोऽयं परिक्षेपो
। मूलपद्मस्य वर्णितः ॥ २५ ॥ आत्मरक्षिसहस्राणां । षोडशानां चतुर्दिशं ॥ चतुःसहस्री
प्रत्येकं । परिवेषे तृतीयके ॥ २६ ॥ त्रयः परे परिक्षेपा । अभियोगिपयोरुहां ॥ द्वात्रिंशत्प्रथ-
मे लक्षा । अभ्यंतराभियोगिनां ॥ २७ ॥ चत्वारिंशत्पद्मलक्षा । मध्ये मध्याभियोगिनां ॥
लक्षाणामष्टचत्वारिं–शद्बाह्ये बाह्यसेविनां ॥ २८ ॥ कोट्येका विंशतिर्लक्षाः । पद्मानां सर्वसं-

ख्यया ॥ सहस्राणि च पंचाश—ह्रतं विंशतिसंयुतं ॥ २९ ॥ अत्र पट् परिक्षेपा इति पट्जातीयाः परिक्षेपा इति वाच्यं. तथाहि—आद्या मूलपद्मार्द्धमाना जातिः, द्वितीया तच्चतुर्थभागमाना जातिः, यावत्षष्ठी चतुःषष्टितमभागमाना जातिरिति. अन्यथा तु योजनात्मना सहस्रत्रयात्मके धनुरात्मना चत्वारिंशल्लक्षाधिकद्विकोटिप्रमिते ह्रदपरमपरिधौ षट्परिक्षेपपद्मानां षष्टिकोटिधनुःक्षेत्रमातव्यानामेकया पंक्त्याऽवकाशो न संभवति ।

ततश्च तत्तत्परिधिक्षेत्रपरिक्षेपपद्मसंख्याविस्तारान् परिभाव्य यत्र यावत्यः पंक्तयः संभवंति, तत्र तावतीभिः पंक्तिभिरेक एव परिक्षेपो ज्ञेयः ॥ पद्मानामेकजातीयत्वात्. एवं च पंचलक्षयोजनात्मके ह्रदक्षेत्रफले तानि सर्वाण्यपि पद्मानि सुखेन मांत्येव. पद्मरुद्धक्षेत्रस्य सर्वसंकलनया विंशतिः सहस्राणि पंचाधिकानि, योजनानां षोडशभागीकृतस्यैकयोजनस्य त्रयोदश भागा इत्येतावत एव संभवात्, इत्यधिकं तु उ० श्रीशांतिचंद्रगणिकृतजंबूद्वीपप्रज्ञप्तिवृत्तितोऽवसेयं. ततः पद्मह्रदाद्गंगा । प्राच्यतोरणनिर्गता ॥ योजनानां पंचशतीं । गिरौ पूर्वेण गच्छति ॥ ३० ॥ गंगावर्त्तनकूटस्या—धस्तादावृत्य सा ततः ॥ दक्षिणाभि-

मुखी नूत्वा । प्रवृत्ता पर्वतोपरि ॥ ३१ ॥ त्रयोविंशां पंचशतीं । योजनानां कलात्रयं ॥ सा- न्ना
ऽं गत्वा दक्षिणस्यां । पतेज्जिह्विकया नगात् ॥ ३२ ॥
सा च प्रणालिकारूपा । जात्यर्द्धक्रोशमेदुरा ॥ द्विक्रोशदीर्घा सक्रोश—षट्योजनसुविस्तृ
ता ॥ ३३ ॥ वाज्रिकी व्यात्तमकर—वक्त्राकारा तयाथ सा ॥ सातिरेकं योजनानां । शतमे-
क पतत्यधः ॥ ३४ ॥ योजनानि दशोद्विद्धे । षष्टिं च विस्तृतायते ॥ कुण्डे गंगाप्रपाता-
ख्ये । चारुमुक्तावलीसमा ॥ ३५ ॥ युग्म ॥ तथाहुः क्षमाश्रमणपादाः—आयामो विक्ख-
म्भो । सट्ठिं कुण्डस्स जोअणा हुंति ॥ नवउअसयं किंचूणं । परिही दसजोअणो गाहो ॥३६॥
इति बृहत्क्षेत्रसमासे.
जमास्वातिकृतजंबूद्वीपसमासे करणविभावनायां च मूले पणासं जोअणविच्छारो उव-
रिसट्ठी इति विशेषोऽस्ति. इदं च कुण्डस्य यथार्थनामोपपत्तिरपि जवति. एवमन्येष्वपि यथा-
योगं ज्ञेयमिति. तच्च कुण्डं वेदिकया । वनखण्डेन वेष्टितं ॥ पूर्वापरादक्षिणासु । सोपानश्रेणि-
शोभितं ॥ ३७ ॥ सोपानश्रेणयः सर्वा । वज्रस्तम्भाः सतोरणाः ॥ रत्नालंबनवाहाढ्या । रैरू-

भा

त्यफलकांचिताः ॥ ३८ ॥ गंगाद्वीपश्च भात्यस्मिन् । द्वौ क्रोशावुच्छ्रितो जलात् ॥ अष्टौ च
योजनान्येष । विष्कंभायाममानतः ॥ ३९ ॥ गंगाद्विपोपरि गंगा–भवनं पीठिकादियुक् ॥
स्वरूपतो मानतश्च । श्रीदेवीभवनोपमं ॥ ४० ॥ दाक्षिणात्यतोरणेन । गंगाप्रपातकुंडतः ॥
निर्गत्य वैताढ्योपांते । नदीसमसहस्रयुक् ॥ ४१ ॥ खंडप्रपाताप्राग्भागे । भित्वा वैताढ्यभू-
धरं ॥ दाक्षिणात्यसप्तनदी—सहस्रपरिवारिता ॥ ४२ ॥

एवं चतुर्दशनदी–सहस्रापूरिताभितः ॥ पूर्वतो जगतीं भित्वा । गंगा विशति वारिधिं
॥ ४३ ॥ त्रिभिर्विशेषकं ॥ सक्रोशानि योजनानि । षडस्या ह्रदनिर्गमे ॥ व्यासः क्रोशार्धमु-
द्वेधः । कुंडपातावधिः स च ॥ ४४ ॥ तथोक्तं जंबूद्वीपप्रज्ञप्तिसूत्रे–गंगामहानईपवाहे छक्को-
साइं जोअणाई विक्खंभेणं पण्णत्ता, अद्धकोसं उव्वेहेणं. समवायांगे तु–गंगासिंधुउ नदीउ णं
पवहे सातिरेगाइं चउवीसं कोसाइं विच्छरेणं पण्णत्ते, इत्युक्तमिति ज्ञेयं. कुंभोक्रमादनुव्यासो ।
योजनं योजनंप्रति ॥ पार्श्वद्वये समुदितो। धनूंषि दश वर्द्धते ॥ ४५ ॥ एवं च–वारिधेः संग-
मे सार्द्धा । द्वाषष्टिर्योजनान्यसौ ॥ मौलाद्दशघ्नो यद्व्यासो । नदीनामब्धिसंगमे ॥ ४६ ॥

॥

व्यासात्पंचाशत्तमोंशः । सर्वत्रोद्वेध ईरितः ॥ क्रोशस्यार्द्धं ततो मूले । प्रांते सक्रोशयोजनं ॥ ४७ ॥ वेदिकावनखंडौ च । प्रत्येकं पार्श्वयोर्द्वयोः ॥ महानदीनां सर्वासां । दृष्टौ दृष्टजगत्त्रयैः ॥ ४८ ॥ तथोक्तं जंबूद्वीपप्रज्ञप्तिसूत्रे गंगावर्णने—उन्नउ पासिं दोहिं पउमवरवेइयाहिं दोहिं वणसंडेहिं संपरिक्खित्ता वेइयावणसंडवण्णउ जाणियव्वो. अथ गंगामहानद्या । यत्रांभोनिधिसंगमः ॥ तत्र तीर्थं मागधाख्यं । तस्येशो मागधः सुरः ॥४९॥ एवं सिंधुनदीवार्द्धि—योगे प्रभासनामकं ॥ एतयोरंतराले च । वरदामं पयोनिधौ ॥ ५० ॥ तथोक्तं जंबूद्वीपप्रज्ञप्तिवृत्तौ—गंगा मागधतीर्थस्थाने समुद्रं प्रविशति, तथा प्रभासं नाम तीर्थं, यत्र सिंधुनदी समुद्रं प्रविशति. तीर्थं नामावतरण—मार्गोंऽभोधौ तटाकवत् ॥ तीर्थस्यार्थो भाव्य एवं । शीताशीतोदयोरपि ॥ ५१ ॥ तदुक्तं स्थानांगवृत्तौ—तीर्थानि चक्रवर्त्तिनः समुद्रशीतादिमहानद्यवतारलक्षणानि तन्नामकदेवनिवासभूतानि. तत्र भरतैरवतयोस्तानि पूर्वदक्षिणापरसमुद्रेषु, विजयेषु तु शीताशीतोदामहानद्योः पूर्वादिक्रमेणैवेति तृतीये स्थानके.

एषां तीर्थसदृग्नाम्नां । देवानां स्वस्वतीर्थतः ॥ योजनेषु द्वादशसु । राजधान्यः पयोनि-

धौ ॥ ५२ ॥ कृताष्टमतपाश्चक्री । रथनाभिस्पृगंभसि ॥ स्थित्वा वार्द्धौ स्वनामांक–शरं मुक्त्वा जयत्यमून् ॥ ५३ ॥ प्रतीच्यतोरणेनाथ । ह्रदात्तस्माद्विनिर्गता ॥ गत्वा प्रतीच्यामावृत्ता । सिंध्वावर्त्तनकूटतः ॥ ५४ ॥ दक्षिणाभिमुखी शैला–त्कुंभे निपत्य निर्गता ॥ प्रत्यग्भागे तमिस्राया । भित्त्वा वैताढ्यभूधरं ॥ ५५ ॥ ततः पश्चिमदिग्भागे । विभिद्य जगतीमधः ॥ विशत्यंभोनिधिं सिंधु–र्गंगास्वसेव युग्मजा ॥ ५६ ॥ त्रिभिर्विशेषकं ॥ गंगावत्सर्वमस्याः स्या–द्वारभ्य ह्रदनिर्गमात् ॥ स्वरूपमब्धिसंगांतं । सिंधुनामविशेषितं ॥ ५७ ॥ वैताढ्यतो दक्षिणस्यां । सरितोः सिंधुगंगयोः ॥ बिलानि स्युर्नवनव । पूर्वपश्चिमकूलयोः ॥ ५८ ॥

उदीच्यामपि षट्त्रिंश–त्तथैव तटयोस्तयोः । कल्पांतेऽत्रादिबीजानां । स्थानानीति द्विसप्ततिः ॥ ५९ ॥ पंचस्वेवं भरतेषु । पंचस्वैरवतेषु च ॥ बिलानि भावनीयानि । द्विसप्ततिर्द्विसप्ततिः ॥ ६० ॥ उत्तराद्धतोरणेन । तस्मात्पद्मह्रदादथ ॥ निर्गता रोहितांशाख्यो–त्तराशाभिमुखी नदी ॥ ६१ ॥ द्वे योजनशते युक्ते । षट्सप्तत्या कलाश्च षट् ॥ पर्वतोपर्यतिक्रम्य । वज्रजिह्विकया नगात् ॥ ६२ ॥

रोहितांशाप्रपाताख्ये । कुंडे निपत्य हारवत् ॥ नदीन्यतोरणेनास्मा–न्निर्गतोत्तरसंमुखी ॥ ६३ ॥ मार्गे चतुर्दश नदी–सहस्रपरिवारिता ॥ तत्रत्यवृत्तवैताढ्यं । मुक्त्वा क्रोशद्वयांतरे
॥ ६४ ॥ स्थानात्ततः परावृत्य । प्रस्थिता पश्चिमामुखी ॥ पुनश्चतुर्दशनदी–सहस्रसेवितान्वि-
तः ॥ ६५ ॥ अष्टाविंशत्या सहस्रै–र्नदीभिरेवमन्विता ॥ द्वेधा विदधती हैम–वतस्यार्द्धं च प-
श्चिमं ॥६६॥ अधो विभिद्य जगतीं । याति पश्चिमवारिधिं ॥ गंगासिंध्वोः सपत्नीव । द्विगुणर्द्धिः प-
तिप्रिया ॥६७॥ सप्तभिः कुलकं ॥ कुंभाद्विनिर्गमं याव–दारभ्य हृदनिर्गमात् ॥ सार्द्धानि योजना-
न्यस्या विष्कंभो द्वादशोदितः ॥६८॥ गव्यूतमेकमुद्वेध–स्ततः कुंभोत्क्रमादनु ॥ प्रतियोजनमेकै-
क–पार्श्वे व्यासो विवर्द्धते ॥ ६९ ॥ कोदंडानि दशदशो–न्नयतस्तानि विंशतिः ॥ लवः पंचा-
शत्तमश्च । व्यासस्योद्वेध आदितः ॥ ७० ॥ योजनानां शतं चैवं । सपादमब्धिसंगमे ॥ व्या-
सोऽस्याः क्रोशदशक–मुद्वेधश्च प्रजायते ॥ ७१ ॥
व्यासायामौ जिह्विकायाः । सार्द्धा द्वादशयोजनी ॥ बाहल्यमस्या निर्दिष्ट–मेकक्रोशमि-
तं जिनैः ॥ ७२ ॥ सविंशं योजनशतं । कुंभस्यायतिविस्तृती ॥ द्वीपस्यायामविष्कंभौ । यो-

जनानीह षोमश ॥ ७३ ॥ अस्याः प्रपातकुंडस्यो–द्वेधो द्वीपस्य चोच्छ्रयः ॥ भवनस्य स्वरू-
पं च । ज्ञेयं गंगासमं बुधैः ॥ ७४ ॥ गिरेर्हिमवतोऽथास्य । प्राचीनपश्चिमांतयोः ॥ लवणो-
दजलस्पर्शा–द्वारभ्य किल निर्गता ॥ ७५ ॥ दाढैकैका विदिशासु । गजदंतसमाकृतिः ॥ ऐ-
शान्यामथ चाग्नेय्यां । नैर्ऋत्यां वायुकोणके ॥ ७६ ॥ युग्मं ॥ ऐशान्यां तत्र जगती–पर्यंता-
ल्लवणोदधौ ॥ दाढायां योजनशत–त्रयस्य समतिक्रमे ॥७७॥ द्वीप एकोरुकाख्योऽस्ति । यो-
जनानां शतत्रयं ॥ विष्कंभायामतः पद्म–वेदिकावनमंडितः ॥ ७८ ॥ किंचिदूनैकोनपंचा–श-
ता समधिका किल ॥ योजनानां नवशती । परिक्षेपोऽस्य कीर्त्तितः ॥ ७९ ॥ अस्य जंबूद्वी-
पदिशि । जलोपरि समुच्छ्रयः ॥ सार्द्धं द्वयं योजनानां । भागाश्चोपरि विंशतिः ॥ ८० ॥ पं-
चनवतिभक्तस्य । योजनस्य तथोच्छ्रयः ॥ लवणांभोधिदिश्यते । क्रोशद्वयमुदीरितः ॥ ८१ ॥
तत्रैव दाढायां तस्माद् । द्वीपाच्चतुःशतोत्तरः ॥ हयकर्णाभिधो द्वीप–श्चतुःशतायताततः ।८२।
शतानि द्वादश न्यून–पंचषष्टियुतानि च ॥ परिक्षेपोऽस्याब्धिदिशि । द्वौ क्रोशावुच्छ्रयो ज-
लात् ॥ ८३ ॥ योजनानां द्वयं सार्द्ध–मशीत्यंशैः समन्वितं ॥ अस्य जंबूद्वीपदिशि । ख्या-

तः खलु समुच्छ्रयः ॥ ८४ ॥ अत्रायमाम्नायः—

पूर्वद्वीपपरिक्षेपे । योजनानां त्रिभिः शतैः ॥ षोडशाढ्यैः संकलिते । परिक्षेपोऽग्रिमो भवेत् ॥ ८५ ॥ तथा—जंबूद्वीपदिशि जला—त्प्राग्द्वीपे यः समुच्छ्रयः ॥ स पांचनवतेयांश—सप्तत्या संयुतोऽग्रिमे ॥ ८६ ॥ जंबूद्वीपजगत्याश्च । द्वीपस्यास्य मिथोंतरं ॥ कर्णभूमिरूपमुक्तं । योजनानां चतुःशती ॥ ८७ ॥ तत्रैव दाढायां तस्माद्—द्वीपात्पंचशतांतरः ॥ आदर्शमुखमंज्ञोऽस्ति । द्वीपः पंचशतायतः ॥ ८८ ॥ तावदेव च विस्तीर्णो । जगत्यास्तावदंतरः ॥ सैकाशीतिः पंचदश—शती परिरयोऽस्य च ॥ ८९ ॥ जंबूद्वीपदिशि भवे—ज्जलादस्य समुच्छ्रयः ॥ सार्द्धा त्रियोजनी भागाः । पचषष्टिः पुरोदिताः ॥ ९० ॥ द्वौ क्रोशौ लवणादिशि । जलादस्य समुच्छ्रयः ॥ दाढायां पुनरत्रैवा—तीत्य योजनषट्शतीं ॥ ९१ ॥ षट्योजनशतायामविष्कंभोऽश्वमुखाभिधः ॥ द्वीपो भाति शतैः षड्भि—र्जगत्या दूरतः स्थितः ॥ ९२ ॥

योजनत्रितयोनानि । शतान्येकोनविंशतिः ॥ द्वीपस्यास्य परिक्षेपः । प्रोक्तः शास्त्रपरीक्षकैः ॥ ९३ ॥ सार्द्धां चतुर्योजनीं स—चत्वारिंशद्भवाधिकां ॥ द्वीपदिश्युन्नतोऽम्भसोऽब्धि-

−दिशि तु क्रोशयामलं ॥ ९३ ॥ सप्तभिर्योजनशतै−रस्ति द्वीपस्ततः परं ॥ अश्वकर्णाभिधः
सप्त−शतान्यायतविस्तृतः ॥ ९४ ॥ जगत्यास्तावता दूरे । जंबूद्वीपदिशि स्फुटः ॥ योजना-
न्यर्द्धषष्टानि । भागान् पंचदशोच्छ्रितः ॥ ९५ ॥ द्वौ क्रोशौ परितो व्यक्तः । परिक्षेपस्तथास्य
च ॥ द्वे सहस्रे द्वे शते च । योजनानि त्रयोदश ॥ ९६ ॥ अतीत्य योजनशता−न्यष्टौ द्वी
पात्ततः परं ॥ द्वीप उल्कामुखोऽस्त्यष्टौ । शतान्यायतविस्तृतः ॥ ९७ ॥ जगत्या दूरतोऽष्टा-
भि−र्योजनानां शतैः स्थितः ॥ अंभोनिधेर्दिशि जला−दुच्छ्रितः क्रोशयोर्द्वयं ॥ ९८ ॥ अर्द्ध
षष्टयोजनानि । पंचाशीतिं तथाधिकान् ॥ भागान् पांचनवतेयान् । जंबूद्वीपदिशि स्फुटः ॥
॥ ९९ ॥ एकोनत्रिंशदाढ्यानि । शतानि पंचविंशतिः ॥ योजनानि परिक्षेपो । द्वीपस्यास्य
निरूपितः ॥ १०० ॥

योजनानां नवशता−न्यतिक्रम्य ततः परं ॥ शतानि नव विस्तीर्णा−यतोऽस्ति घनदंत-
कः ॥ १ ॥ नवयोजनशत्यासौ । जगत्याः परिधिस्त्विह ॥ शतानि पंचचत्वारिं−शान्यष्टावि-
शतिः कलाः ॥ २ ॥ सार्द्धां षड्योजनीं तादृक् । षष्टिभागसमन्वितां ॥ जंबूद्वीपदिशि व्य-

कौ । द्विशयब्धेस्त्वर्द्धयोजनं ॥ ३ ॥ एवं च—एकोरुको १ हयकर्ण २—स्तथादर्शमुखोऽपि च
३ ॥ अश्वमुखा ४ श्वकर्णौ ५ ल्का—मुख ६ श्वघनदंतकः ७ ॥ ४ ॥ द्वीपाः सप्त यथैशान्यां
। दाढायां कथिता इमे ॥ तावदायामविष्कंभा—स्तावत्परस्परांतराः ॥ ५ ॥ जगत्यास्तावता
दूरे । तावद्वेवोच्छ्रिता जलात् ॥ तथैव सप्त सप्त स्यु—राग्नेय्यादिविदिक्त्रये ॥ ६ ॥
एषां क्रमे स्वरूपे च । न विशेषो मनागपि ॥ विशेषः केवलं नाम्नां । तान्येतानि यथा-
क्रमं ॥ ७ ॥ आग्नासिको गजकर्णौ । मेंढहस्तिमुखौ तथा ॥ हरिकर्णौ मेघमुखो । लष्टदंतो-
ऽग्निकोणके ॥ ८ ॥ वैषाणिकश्च गोकर्ण—स्तथायःसिंहतो मुखौ ॥ अकर्णौ विद्युन्मुखश्च । नै-
र्ऋत्यां गूढदंतकः ॥ ९ ॥ वायव्यां नांगोलिकाख्यः । शष्कुलीकर्ण इत्यपि ॥ गोमुखो व्याघ्रमु-
खश्च । कर्णप्रावरणाभिधः ॥ १० ॥ विद्युद्दंतक्षुद्रदंता—वष्टाविंशतिरित्यमी ॥ विराजतेंतरद्वीपा
। हिमवच्छिखरिनिश्रया ॥ ११ ॥ तावत एव शिखरि—गिरेर्दाढाचतुष्टये ॥ तथैव संस्थिता एवं ।
षट्पंचाशद्भवंत्यमी ॥ १२ ॥
प्रत्येकमेते सर्वेऽपि । वेदिकावनमंडिताः ॥ समानं च तयोर्मानं । जगतीवेदिकावनैः ॥

॥ १३ ॥ द्वीपेषु सर्वेष्वेतेषु । नरास्तिष्ठंति युग्मिनः ॥ अष्टचापशतोत्तुंगाः । पल्यासंख्यांशजीविनः ॥ १४ ॥ दिनान्यशीतिमेकोनां । विहितापत्यपालनाः ॥ चतुःषष्ट्या लसत्पृष्ट–करंडकैः सुशोभिताः ॥ १५ ॥ चतुर्थभक्ताहाराश्च । कल्पद्रुफलभोजिनः ॥ सुंदराकृतयो राग–द्वेषशोकरुजोज्झिताः ॥ १६ ॥ युग्मं सुतसुतारूपं । षण्मासशेषजीविताः ॥ प्रसूय यांति त्रिदिव–मेते मृत्वा समाधिना ॥ १७ ॥ एवं वक्ष्यमाणहैम–वतादियुग्मिनोऽपि हि ॥ षण्मासशेषे सुवते–ऽपत्यान्यायुषि नान्यथा ॥ १८ ॥ तथोक्तं प्रथमारकस्वरूपाधिकारे जंबूद्वीपप्रज्ञप्तौ, अंतरद्वीपाधिकारे जीवाभिगमे च––छम्मासावसेसाउया जुगलं पसवंतीति.

इति हिमवान् पर्वतः ॥ क्षेत्रं विभाति हिमव––महाहिमवदंतरे ॥ अविभक्तं द्रव्यमिव । द्वाभ्यां ताभ्यां सुरक्षितं ॥ १९ ॥ द्वाभ्यां पूर्वापरांताभ्यां । संस्पृष्टलवणार्णवं ॥ हारि हैमवताभिख्यं । वर्यं पर्यंकसंस्थितं ॥ २० ॥ ददाति हेम युग्मिभ्य । आसनादितया ततः ॥ यद्वा देवो हैमवतः । स्वामी हैमवतं ततः ॥ २१ ॥ द्वे सहस्रे योजनानां । शतं पंचोत्तरं तथा ॥ कलाः पंचैव विष्कंभः । क्षेत्रस्यास्य निरूपितः ॥ २२ ॥ तथा शतानि षट्त्रिंश–च्च-

तुरशीतिरेव च ॥ योजनानि चतस्रश्च । कलाः शार इह स्मृतः ॥ २३ ॥
सप्तत्रिंशत्सहस्राणि । योजनानां शतानि षट् ॥ चतुःसप्ततिरस्य ज्या–न्यूनाः कलाश्च षोडश ॥ २४ ॥ अष्टात्रिंशत्सहस्राणि । तथा सप्तशतानि च ॥ चत्वारिंशानि कोदंड–पृष्टमस्य कला दश ॥ २५ ॥ सहस्राः षट् सप्तशती । पंचपंचाशदन्विता ॥ तिस्रः कलाश्च बाहात्र । प्रत्येकं पार्श्वयार्द्वयोः ॥ २५ ॥ अत्र क्षेत्रफलं कोट्यः । षट् लक्षाणि द्विसप्ततिः ॥ त्रिपंचाशत्सहस्राणि । योजनानां शतं तथा ॥ २६ ॥ पंचचत्वारिंशदाढ्यं । कलाः पंच तथोपरि ॥ अष्टौ च विकलाः प्रोक्तं । खंमैर्योजनसंमितैः ॥ २७ ॥ सर्वरत्नमयो वृत्त–वैताढ्यो धरणीधरः ॥ मध्यभागे विभात्यत्र । पट्यवत्सर्वतः समः ॥ २८ ॥ जंबूद्वीपसंग्रहणीवृत्तौ तु–पंचवर्णरत्नमयः ॥ नाम्ना च शब्दापातीति । सहस्रयोजनोन्नतः ॥ शतान्यर्द्धतृतीयानि । स निमग्नो भुवोंतरे ॥ २९ ॥
सहस्रयोजनायाम–विष्कंभः परिवेषतः ॥ त्रयः सहस्रा द्वाषष्ट्या । योजनानां शतं युतं ॥ ३० ॥ अभितोऽयं गिरिः पद्म–वेदिकावनमंडितः ॥ प्रासादो भात्युपर्यस्य । स्वरूपं तस्य

पूर्ववत् ॥ ३१ ॥ स्वातिनामा सुरस्तस्य । स्वाम्येकपल्यजीवितः ॥ राजधान्यादिकं त्वस्य । सर्वं विजयदेववत् ॥ ३२ ॥ अयं क्षेत्रसमासाभिप्रायः, यत्तु जंबूद्वीपप्रज्ञप्त्यामत्र शब्दापातिनामा देव उक्तस्तन्नामांतरं वा मतांतरं वेति सर्वविद्वेद्यं. द्विधा विभक्तं गिरिणा–नेन हैमवतं किल ॥ पूर्वहैमवतं चैवा–परहैमवतं तथा ॥ ३३ ॥ पुनरेकैकमर्द्धं तत् । सरिद्भ्यां विहितं द्विधा ॥ रोहितांशारोहिताभ्यां । स्नुषाभ्यामिव मंदिरं ॥ ३४ ॥ दक्षिणार्द्धं चोत्तरार्द्ध–मिति जातं चतुर्विधं ॥ षट्पंचाशत्सहस्राणि । ह्युत्तराण्यत्र निम्नगाः ॥ ३५ ॥ क्षेत्रानुभावतस्तत्र । भूः शर्करादिजित्वरी ॥ चक्रिभोज्यजिदास्वाद–फलपुष्पाः सुरद्रुमाः ॥ ३६ ॥

येऽपि यूका मत्कुणाद्या । लोकसंतापकारिणः ॥ यक्षभूतामयाद्युग्रा । दोषास्तत्र न संति ते ॥ ३७ ॥ भवंत्यहिंसका व्याघ्र–सिंहाद्याः स्वर्गगामिनः ॥ उत्पन्नान्यपि धान्यानि । नराणां नोपभुक्तये ॥ ३८ ॥ मनुजास्तत्र गव्यूतो–त्तुंगाः पल्योपमायुषः ॥ उत्कर्षतो जघन्याच्च । देशोनपल्यजीविनः ॥ ३९ ॥ चतुःषष्टिः पृष्ठकरं–डकाः सुंदरभूघनाः ॥ दिनान्यशीतिमेकोनां । विहितापत्यपालनाः ॥ ४० ॥

सत्यपि स्वर्णरत्नादौ । ममत्वावेशवर्जिताः ॥ सतामपि गजादीना–मग्रहात्पादचारिणः ॥ ४१ ॥ विचक्षणाश्चारुवेषाः । प्रेष्यप्रेषकतोज्झिताः ॥ चतुर्थांते चामलक–फलप्रमितभोजिनः ॥ ४२ ॥ आद्यसंहननाः पृथ्वी–स्वर्द्रुपुष्पफलाशिनः ॥ प्रकृत्या प्रतनुद्वेष–रागाः स्वर्लोकयायिनः ॥ ४३ ॥ वर्ष्मस्नेह इवैतस्मिन् । कालः सुषमःदुःषमा ॥ सार्वदीनस्तत्स्वरूपं । दिष्टलोके प्रवक्ष्यते ॥ ४४ ॥ इति हैमवंतक्षेत्रं ॥ अस्योत्तरांते च महा–हिमवान्नाम पर्वतः ॥ सर्वरत्नमयो भाति । द्वियोजनशतोन्नतः ॥ ४५ ॥ अयं जंबूद्वीपप्रज्ञप्त्यभिप्रायः, बृहत्क्षेत्रविचारादौ तु अस्य पीतस्वर्णवर्णमयत्वमुक्तमिति मतांतरमवसेयं, अनेनैव च मतांतराभिप्रायेण जंबूद्वीपपट्टादौ अस्य पीतवर्णत्वं दृश्यते इति. पंचाशत योजनानि । स निमग्नो धरांतरे ॥ पूर्वापरांभोनिधिस्पृक् । प्रमिमासुरिवांतरं ॥ ४६ ॥ योजनानां सहस्राणि । चत्वार्यस्य शतद्वतं ॥ दशोनरं दश कला । विष्कंभोऽथ शरं ध्रुवे ॥ ४७ ॥

योजनानां सहस्राणि । सप्तैवाष्टौ शतानि च ॥ चतुर्नवत्युपेतानि । चतुर्दश तथा कलाः ॥ ४८ ॥ त्रिंचाशत्सहस्राणि । शतानि नव चोपरि ॥ एकत्रिंशद्योजनानि । ज्यास्य ॥

सार्द्धाश्च षट् कलाः ॥ ४९ ॥ सहस्राः सप्तपंचाश–त्रिनवत्यधिकौ शतौ ॥ महाहिमवति प्रोक्तं । धनुःपृष्टं कला दश ॥ ५० ॥ सहस्राणि नव शत–द्वयं षट्सप्ततिस्तथा ॥ सार्द्धा नव कलाः प्रोक्ता । वाहास्यैकैकपार्श्वतः ॥ ५१ ॥ एकोनविंशतिः कोट्यो । योजनानां समन्विताः ॥ अष्टपंचाशता लक्षै–रष्टषष्ट्या सहस्रकैः ॥ ५२ ॥ शतं च षडशीताढ्य । कला दश तथाधिकाः ॥ विकलाः पंच शैलेऽस्मिन् । गणितं प्रतरात्मकं ॥ ५३ ॥ शतान्येकोनचत्वारिं–शत्कोटीनां तथा पराः ॥ कोट्यः सप्तदश लक्षाः । षट्त्रिंशदथ चोपरि ॥ ५४ ॥

सप्तत्रिंशत्सहस्राणि । त्रिशती सहिताष्टभिः ॥ विकला द्वादशेत्युक्तं । महाहिमवतो घनं ॥ ५५ ॥ कूटान्यष्टौ पर्वतेऽस्मिन् । सिद्धायतनमादिमं १ ॥ महाहिमवदाह्वानं २ । तथा हैमवताभिधं ३ ॥ ५६ ॥ रोहिताख्यं ४ च ह्रीकूटं ५ । हरिकांताभिधं ६ तथा ॥ हरिवर्षं ७ च वैडूर्यं ८ । कूटानि हिमवद्गिरेः ॥ ५७ ॥ पूर्वापरायतश्रेण्या । स्थितिर्मानं च पूर्ववत् ॥ प्राग्वत्सिद्धायतने च । प्रासादः शाश्वतोऽर्हतां ॥ ५८ ॥ शेषेषु देवदेवीनां । प्रासादास्तेऽपि पूर्ववत् ॥ स्वरूपं राजधान्यश्च । प्राग्वत्तत्स्वामिनामपि ॥ ५९ ॥ महापद्मह्रदश्चास्यो–परि म-

३० ॥

ध्ये विराजते ॥ द्वे सहस्रे योजनाना–मायामेनोदितः स च ॥ ६० ॥
एकं सहस्र विस्तीर्णं । उद्विद्धो दशयोजनीं ॥ तस्य मध्ये पद्ममेकं । षट्परिक्षेपशोभितं
॥ ६१ ॥ पद्महृदाब्जतुल्यानि । पद्मान्येतानि सङ्ख्यया ॥ विष्कंभायामबाहल्यै–र्द्विगुणानि त-
तः पुनः ॥ ६२ ॥ तत्समानोच्छ्रितया । हृदस्यास्य कजान्यपि ॥ तावंतोच्छ्रितानि स्यु–रेव-
मग्रेऽपि जाग्रतां ॥ ६३ ॥ मूलपद्मे च भवनं । श्रीदेवीभवनोपमं ॥ ह्रीदेवी च वसत्यस्मि–
ल्लोकपल्योपमस्थितिः ॥ ६४ ॥ दाक्षिणात्यतोरणेन । महापद्महृदात्ततः ॥ निर्गता रोहिता ना-
म्नी । दक्षिणाभिमुखी नदी ॥ ६५ ॥ सहस्रयोजनानां षट्–शतीं पचसमन्वितां ॥ कलाः प-
च दक्षिणस्यां । सा गत्वा पर्वतोपरि ॥ ६६ ॥ वज्रजिह्विकया शैला–त्प्रवाहेण पतत्यधः ॥
सङ्ग्रोहिताप्रपाताख्ये । कुंभे रज्जुरिवावटे ॥ ६७ ॥ अत्रायमाम्नायः—
व्यास हृदस्य संशोध्य । गिरिव्यासेऽर्द्धिते च यत् ॥ तावन्नदीनां क्रमणं । गिरौ स्याद्द-
क्षिणोत्तर ॥ ६८ ॥ दाक्षिणात्यतोरणेन । तस्मान्निर्गत्य कुंभतः ॥ प्राच्यं हैमवतस्यार्द्धं । द्विधा
विदधती किल ॥ ६९ ॥ क्रोशद्वयेनासंप्राप्ता । शब्दापातिमहीधर ॥ आलीव रोहितांशाया ।

रुद्यागात्पूर्वसंमुखी ॥ ७० ॥ अष्टाविंशत्या सहस्रै–र्नदीभिः परिवारिता ॥ अधो विभिद्य जगतीं । पूर्वाब्धिं याति रोहिता ॥ ७१ ॥ प्रवाहजिह्विकाकुंभ–द्वीपादिषु भवेदिह ॥ विष्कंभदैर्घ्योद्वेधादि । रोहितांशासमं समं ॥ ७२ ॥ उत्तराहतोरणेन । महापद्महृदात्ततः ॥ हरिकांतेति तटिनी । निर्गतोत्तरसन्मुखी ॥ ७३ ॥ पूर्वोक्तमानमुल्लंघ्य । गिरिं सोत्तरसन्मुखं ॥ हरिकांताप्रपाताख्ये । कुंभे पतति जिह्वया ॥ ७४ ॥ उत्तराहतोरणेन । तस्मान्निर्गत्य कुंभतः ॥ अष्टाविंशत्या सहस्रै–र्नदीभिः पथि संगता ॥ ७५ ॥ गंधापातिनमप्राप्तां–तरितं योजनेन सा ॥ स्मृतप्रयोजनेवेतः । प्रस्थिता पश्चिमामुखी ॥ ७६ ॥ अष्टाविंशत्या सहस्रै–र्नदीभिः पुनराश्रिता ॥ एवं नदीनां षट्पंचा–शता सहस्रकैर्वृता ॥ ७७ ॥ हरिवर्षपश्चिमार्द्धं । द्वेधा विदधती किल ॥ अधो विभिद्य जगतीं । पतिता पश्चिमांबुधौ ॥ ७८ ॥ योजनानि ध्रुवं पंच–विंशतिर्हृदनिर्गमे ॥ विष्कंभोऽस्या योजनार्द्धं । चोद्वेधः कुंभसीमया ॥ ७९ ॥ ततश्च वर्द्धते व्यासो । धनूंषि प्रतियोजनं ॥ एकतो विंशतिश्चत्वा–रिंशच्चोभयतः पुनः ॥ ८० ॥

एव च द्वे शते सार्द्धे । योजनान्यब्धिसंगमे ॥ विष्कंभोऽस्यास्तत्र पुन–रुद्वेधः पंचयो-

जनी ॥ ८१ ॥ योजनायामबाहल्या । जिह्विकास्याः प्रकीर्त्तिता ॥ विष्कंभतः पुनः पंच–विं-
शतिर्योजनान्यसौ ॥ ८२ ॥ द्वे शते योजनानां च । चत्वारिंशत्समन्विते ॥ कुंडस्यायामवि-
ष्कंभा–बुद्वेधो दशयोजनी ॥ ८३ ॥ द्वीपस्यायामविष्कंभौ । द्वात्रिंशद्योजनानि च ॥ जला
त्समुच्छ्रयः क्रोश––द्वयं शेषं तु पूर्ववत् ॥ ८४ ॥ इति महाहिमवान् पर्वतः ॥ उत्तरस्यां ह-
रिवर्षं । महाहिमवतो गिरेः ॥ प्रौढपर्यंकसंस्थान–मंताभ्यां वारिधिं स्पृशत् ॥ ८५ ॥ व्यासो-
ऽस्याष्टौ सहस्राणि । योजनानां चतुःशती ॥ तथैकविंशतिश्चैका । कलात्राथ शरं ब्रुवे ॥८६॥
सहस्राः षोडश त्रीणि । योजनानां शतानि च ॥ युक्तानि पंचदशभिः । कलाः पंचदशोपरि
॥८७॥ त्रिसप्ततिः सहस्राणि । जीवा नवशतानि च ॥ एकोत्तराण्यथ कलाः । सार्द्धाः सप्तद-
शोपरि ॥ ८८ ॥ धनुःपृष्ठं सहस्राणि । चतुरशीतिरेव च ॥ षोडशाढ्यान्यथ कला–श्चतस्रः परि-
कीर्त्तिताः ॥ ८९ ॥ त्रयोदश सहस्राणि । त्रिशती चैकषष्टियुक् ॥ योजनानां षट् कलाश्च ।
सार्द्धा बाहैकपार्श्वतः ॥ ९० ॥ चतुःपंचाशच्च कोट्यो । योजनानां तथा पराः ॥ सप्तचत्वारिं-
शदेव । लक्षाः किल तथोपरि ॥ ९१ ॥ त्रिसप्ततिः सहस्राणि । सप्तत्याढ्याष्टशत्यथ ॥ कलाः

सप्तात्र सकलं । गणितं प्रतरात्मकं ॥९२॥ मध्येऽस्य गंधापातीति । वृत्तवैताढ्यपर्वतः ॥ स्व
रूपमस्य पूर्वोक्त–शब्दापातिसमं समं ॥ ९३ ॥ पद्मनामा सुरस्त्वस्य । स्वाम्येकपल्यजीवि-
तः ॥ स्वरूप सर्वमेतस्य । ज्ञेयं विजयदेववत् ॥ ९४ ॥

लक्षमेक सहस्राश्च । द्वादश ह्यधिका इह ॥ हरिवर्षाभिधक्षेत्रे । नद्यः प्रोक्ता जिनेश्व-
रैः ॥ ९५ ॥ क्षेत्रे पुनर्वसंत्यत्र । नरा युगलधर्मिणः ॥ क्रोशद्वयसमुत्तुंगाः । सल्लक्षणा विच-
क्षणाः ॥ ९६ ॥ आयुरुत्कर्षतस्त्वेषां । पूर्णं पल्योपमद्वयं ॥ पल्योपमासंख्यभाग–हीनं त-
च्च जघन्यतः ॥ ९७ ॥ तेऽसकृत्षष्ठभक्तांते । बदरप्रमिताशिनः ॥ अष्टाविंशं शतं तेषां । देहे
पृष्ठकरंडकाः ॥ ९८ ॥ चतुःषष्टिं च दिवसान् । विधायापत्यपालनां ॥ स्वर्लोकमेव ते यांति
। कालश्च सुखमान्वहं ॥ ९९ ॥ क्षेत्रानुभावः सर्वं च । बलसंहननादिकं ॥ अनंतगुणपर्या-
यं । ज्ञेयं हैमवतादिह ॥ ४०० ॥ इति हरिवर्षक्षेत्रं ॥

हरिवर्षस्योत्तरांते । निषधो नाम पर्वतः ॥ स चतुर्योजनशतो–त्तुंगो रक्तसुवर्णजः ॥१॥
योजनानां शतं भूमौ । मग्नोंतस्पृष्टवारिधिः ॥ दाक्षिणात्या भित्तिरिव । महाविदेहवेश्मनः ॥

॥ २ ॥ योजनानां सहस्राणि । षोडशाष्टौ शतानि च ॥ द्विचत्वारिंशदाढ्यानि । विष्कंभोऽस्य कलाद्वयं ॥ ३ ॥ त्रयस्त्रिंशत्सहस्राणि । सप्तपंचाशता युत ॥ शतमेकं सप्तदश । कलाश्च निषधे शरः ॥ ४ ॥ योजनानां सहस्राणि । चतुर्नवतिरेव च ॥ षट्पंचाशं शतमेकं । प्रत्यंचास्य कलाद्वयं ॥ ५ ॥ लक्ष चतुर्विंशतिश्च । सहस्राणि शतत्रयं ॥ षट्चत्वारिंशतोपेतं । धनुःपृष्ठं कला नव ॥ ६ ॥ विंशतिश्च सहस्राणि । पचषष्टियुतं शतं ॥ सार्द्धं कलाद्वयं ज्ञेयं । बाहास्यैकैकपार्श्वतः ॥ ७ ॥ कोटीनां शतमेकं द्वि-चत्वारिंशच्च कोटयः ॥ चतुःपंचाशच्च लक्षाः । षट्षष्टिश्च सहस्रकाः ॥ ८ ॥ सैकोनसप्ततिः पंच-शती तथाधिकाः कलाः ॥ अष्टदशास्य प्रतर-गणित मत्र कीर्त्तितं ॥ ९ ॥ सप्तपचाशत्सहस्राः । कोटीनां कोटयः पराः ॥ अष्टादश तथा लक्षाः । षट्षष्टिरथ चोपरि ॥ १० ॥

सहस्राणि योजनानां । सप्तविंशतिरेव च ॥ शतानि नव सैकोना-शीतीन्यत्र घनेद्धनं ॥ ११ ॥ सिद्धायतनकूट १ च । द्वितीयं निषेधाभिधं २ ॥ हरिवर्षाभिधं कूटं ३ । पूर्वविदेहसंज्ञकं ४ ॥ १२ ॥ हरिकूटं ५ धृतिकूटं ६ । शीतोदाकूट ७ मित्यपि ॥ अपरविदेहकूटं ८ ।

॥ ।

कूटं च रुचकाह्वयं ९ ॥ १३ ॥ निषधे नव कूटानि । श्रेण्या स्थितानि पूर्ववत् ॥ आद्ये चै-
त्यं देवदेव्यो-ऽन्येषु कूटसमाश्रयाः ॥ १४ ॥ तिगिंछिस्तु पौष्परज-स्तत्प्रधान इह ह्रदः ॥
तिगिंछिनामा चत्वारि । सहस्राण्ययमायतः ॥ १५ ॥ विस्तीर्णश्च द्वे सहस्रे । उद्विद्धो दश
योजनीं ॥ पद्मह्रदसमसंख्यैः । पद्मैः संशोभितोऽभितः ॥ १६ ॥

विष्कंभादि तु पद्मस्य-स्तेभ्य एषां चतुर्गुणं ॥ यथात्र स्यान्मूलपद्मं । चतुर्योजनसंमि-
तं ॥ १७ ॥ भवनं मूलपद्मेऽत्र । श्रीदेवीभवनोपमं ॥ धीदेवी स्वामिनी तस्य । सैकपल्यो-
पमस्थितिः ॥ १८ ॥ दाक्षिणात्यतोरणेन । तिगिंछिह्रदतोऽमुतः ॥ तटिनी हरिसलिला । नि-
र्गता दक्षिणामुखी ॥ १९ ॥ योजनानां सहस्राणि । सप्तोपरि शतानि च ॥ चत्वारि चैक-
विंशानि । कलां च पर्वतोपरि ॥ २० ॥ गत्वासौ हरिसलिला । कुंडे पतति पर्वतात् ॥ दक्षि-
णेन तोरणेन । तस्मान्निर्गत्य कुंडतः ॥ २१ ॥ हरिवर्षपूर्वभागं । विभजंती द्विधा किल ॥
एकेन योजनेनार्वाक् । गंधापातिधराधरात् ॥ २२ ॥ चलिता प्राङ्मुखीभूय । विशति प्राच्य-
वारिधौ ॥ षट्पंचाशत्सहस्रजिनी-सहस्रैः परिवारिता ॥ २३ ॥ प्रमाणं जीह्विकाकुंड-द्वीपभवा-

ह्वृद्धिगं ॥ हरिकांतासमं सर्वं । ज्ञेयमत्राविशेषितं ॥ २४ ॥ उत्तराह्वतोरणेन । तिगिंछिह्रद-
तस्ततः ॥ शीतोदेति निर्झरिणी । निर्गतोत्तरसन्मुखी ॥ २५ ॥
प्रागुक्तमानमुल्लंध्य । क्षेत्र क्षितिधरोपरि ॥ शीतोदा कुंडे पतति । वज्रजिह्विकया नगा-
त् ॥ २६ ॥ कुंडादस्मादौत्तराह–तोरणेनोत्तरामुखी ॥ यांती कुरुह्रदान् पंच । खलेव कुर्वती
द्विधा ॥ २७ ॥ नदीसहस्रैश्चतुर–शीत्या पण्याश्रिता क्रमात् ॥ यांती देवकुरुप्रांते । त्र्यड्सा
लवनांतरे ॥ २८ ॥ यावद् द्वाभ्यां योजनाभ्यां । सुमेरुर्दूरतः स्थितः ॥ तावत्तत्संमुख याता
। कामुकीव रसाकुला ॥ २९ ॥ वक्षस्कारगिरेर्विद्यु–त्प्रभस्याधो विभागतः ॥ परावृत्ता पश्चि-
माशे । लज्जितेवाभिसारिका ॥ ३० ॥ द्वेधापरविदेहांश्च । कुर्वती सरितां श्रिता ॥ अष्टाविं-
शत्या सहस्रै–रेकैकविजयोद्गतैः ॥ ३१ ॥ श्रितांभोधिप्रवेशे च । मूलतः सर्वसंख्यया ॥ न-
दीनां पंचभिर्लक्षैः । सद्वात्रिंशत्सहस्रकैः ॥ ३२ ॥
अधो जयंतद्वारस्य । विभिद्य जगतीतट ॥ प्रविष्टा पश्चिमांभोधौ । शीतोदाख्या महा-
नदी ॥ ३३ ॥ नवभिः कुलकं ॥ पंचाशद्योजनान्यस्या । विष्कंभो ह्रदनिर्गमे ॥ एकं योज-
॥ ।

समुच्छ्रयः । स कुंडनिर्गमावधि ॥ ३४ ॥ व्यासेऽशीतिश्च वर्द्धते । धनूंषि प्रतियोजनं ॥ तत्पं-
चयोजनशत–व्यासेयं वार्द्धिसंगमे ॥ ३५ ॥ तत्रोच्छ्रेधो योजनानि । दशैतस्याश्च जिह्विका ॥
पंचाशद्विस्तृता द्वे च । योजने मेदुरायता ॥ ३६ ॥ चत्वारि योजनशता–न्यशीतिश्च तथो-
परि ॥ कुंडस्यायामविष्कंभौ । दशोच्छ्रयश्च कीर्त्तितः ॥ ३७ ॥ चतुःषष्टियोजनानि । द्वीपोऽ-
स्या विस्तृतायतः ॥ योजनार्द्धमुच्छ्रितोऽस्यां । गंगावद्भवनादिकं ॥ ३८ ॥ शीताप्येवं नी-
लवतो । निर्गता केसरिह्रदात् ॥ शीताकुंडे निपत्यातः । प्रस्थिता दक्षिणामुखी ॥ ३९ ॥
प्राग्वद्भिंदती द्वेधा । पंचोत्तरकुरुह्रदान् ॥ नदीसहस्रैश्चतुर–शीत्योदक्कुरुगैः श्रिताः ॥ ४० ॥
प्राप्तोत्तरकुरुप्रांते । भद्रशालवनं क्रमात् ॥ असंप्राप्ता योजनाभ्यां । द्वाभ्यां मंदरभूधरं ॥४१॥
गिरेर्माल्यवतोऽधस्ता–त्प्रस्थिता पूर्वसंमुखी ॥ द्वेधा विधती पूर्व–विदेहान् पथि चाश्रिता ॥
॥ ४२ ॥ अष्टाविंशत्या सहस्रै–रेकैकविजयोद्भवैः ॥ नदीनां पंचभिर्लक्षैः । सद्वात्रिंशत्सह-
स्रकैः ॥ ४३ ॥

सर्वाग्रेणेति संयुक्ता । विभिद्य जगतीतटं ॥ द्वारस्य विजयस्याधो–विशति प्राच्यवारि-

धिं ॥ ४४ ॥ षड्भिः कुलकं ॥ अस्या वार्द्धिप्रवेशांत–मारभ्य ह्रदनिर्गमात् ॥ शीतोदया समं सर्वं । ज्ञातव्यमविशेषितं ॥ ४५ ॥ इति निषधपर्वतः प्रसंगात् शीतास्वरूपं च ॥ हिमवता महता च कनीयसा । जलधिना निषधेन च ये त्रिधा ॥ तदिह दक्षिणपार्श्वमिहोदितं । बहुविधं नियतानियतारकैः ॥ ४६ ॥ विश्वाश्चर्यदकीर्त्तिकीर्त्तिविजयश्रीवाचकेंद्रांतिष–द्राजश्रीतनयोऽतनिष्ट विनयः श्रीतेजपालात्मजः ॥ काव्यं यत्किल तत्र निश्चितजगत्तत्त्वप्रदीपोपमे । सर्गो निर्गलितार्थसार्थसुभगः पूर्णः सुखं षोडशः ॥ ४७ ॥

॥ इति श्रीलोकप्रकाशे षोडशः सर्गः समाप्तः ॥ श्रीरस्तु ॥

॥ अथ सप्तदशमः सर्गः प्रारभ्यते ॥

मध्ये द्वयोः पर्वतयो–र्नीलवन्निषधाख्ययोः ॥ आत्यायतचतुरस्त्रं । क्षेत्रं महाविदेहकाः ॥ १ ॥ सर्वक्षेत्रगुरुत्वा–न्महाप्रमाणांगजनयुतत्वाद्वा ॥ इदमुत महाविदेहा–भिधसुयोगा–न्महाविदेहाख्यं ॥ २ ॥ गीतिः, त्रयस्त्रिंशद्योजनानां । सहस्राणि च षट्शती ॥ युक्ता चतुरशीत्यास्य । व्यासः कलाचतुष्टयं ॥ ३ ॥ वर्षवर्षधरादीना–मन्येषां तु जिनेश्वरैः ॥ अंत्यप्र-

देशपंक्तिर्या । सा जीवेति निरूपिता ॥ ४ ॥ अस्मिन् क्षेत्रे पुनर्मध्य–प्रदेशपंक्तिरायता ॥ सा प्रत्यंचा भवेत्पूर्ण–लक्षयोजनसंमिता ॥ ५ ॥

ततश्चापेक्ष्य तां जीवां । धनुःपृष्ठद्वयं भवेत् ॥ तत्रैकं दक्षिणाब्धिस्पृ–गुत्तराब्धिश्रितं परं ॥ ६ ॥ एवं शरोऽपि द्विविधो । दक्षिणोत्तरभेदतः ॥ पूर्वापरैवं बाहापि । प्रत्येकं द्विविधा भवेत् ॥ ७ ॥ लक्षार्द्धं योजनान्यस्य । विशिखौ दक्षिणोत्तरौ ॥ दाक्षिणात्येतरधनुः–पृष्ठमानमथ ब्रुवे ॥ ८ ॥ अष्टपंचाशत्सहस्रा–धिकं योजनलक्षकं ॥ शतं त्रयोदशयुतं । सार्द्धाः कलाश्च षोडश ॥ ९ ॥ सहस्राः षोडश शता–न्यष्टौ त्र्यशीतिरेकिका ॥ बाहा त्रयोदश कलाः । कलातुर्यांशसंयुताः ॥ १० ॥ शतानि त्रीणि कोटीनां । कोटयः सप्तविंशतिः ॥ लक्षाश्चतुर्दश तथा । सहस्राण्यष्टसप्ततिः ॥ ११ ॥ पंचत्रिंश्चान्यधिकानि । योजनानां शतानि षट् ॥ कलाद्वयं च विकला । एकादश तथोपरि ॥ १२ ॥ एतन्महाविदेहस्य । गणितं प्रतरात्मकं ॥ भव्यलोकोपकाराय । तत्वविद्भिर्निरूपितं ॥ १३ ॥ महाविदेहक्षेत्रं त–च्चतुर्द्धा वर्णितं जिनैः ॥ पूर्वापरविदेहाश्च । द्विविधाः कुरवस्तथा ॥ १४ ॥

भा

॥ ५

तत्र मेरोरुत्तरस्या–मुत्तराः कुरवः स्मृताः ॥ गंधमादनमाल्य–वतोरंतर्गिरिद्वयोः ॥
॥ १५ ॥ दक्षिणस्यां पुनर्देव–कुरवः सुरभूभृतः ॥ विद्युत्प्रभसौमनस–गजदंतनगांतरे ॥१६॥
मेरोश्च पूर्वतः पूर्व–विदेहाः परिकीर्त्तिताः ॥ तथापरविदेहाश्च। मेरोः पश्चिमतः स्मृताः ॥१७॥
शीतया सरिता पूर्व–विदेहा विहिता द्विधा ॥ कृताः शीतोदयाप्येवं । द्विधापरविदेहकाः ॥
॥ १८ ॥ अष्टौ पूर्वविदेहेषु । शीतोत्तरतटे किल ॥ भवंति विजयाश्चक्रि–जेयषट्खंडलक्षिताः
॥१९॥ अंतर्नदीभिस्तिसृभि–र्वक्षस्काराचलैस्तथा ॥ चतुर्भिः कृतसीमानो । भवंतीत्येवमष्ट ते
॥२०॥ शीताया दक्षिणतटे । तथैव विजयाष्टकं ॥ अष्टाष्टौ विजया एवं । शीतोदाकूलयोरपि
॥ २१ ॥ पूर्वार्द्धे च विदेहानां । मही करतलोपमा ॥ ततो नद्यद्रिविजयाः । समश्रेण्या स्थि-
ता इव ॥ २२ ॥ अपरार्द्धे तु धरणी । वियोगिनीव हीयते ॥ समभूमेः समारभ्य । पश्चि-
मायां क्रमात्ततः ॥ २३ ॥ विजये नलिनावत्यां । वप्राख्ये चांतवर्त्तिनः ॥ सहस्रं योजनान्युं-
ण्डा । ग्रामा भवंति केचन ॥२४॥ ततोऽधो लौकिकग्रामा । इति ते ख्यातिमैयरुः ॥ तेषामं-
ते स्थिता भूमि–भित्ती रोद्धुमिवार्णवं ॥२५॥ तत्रैव जगतीभित्ति–र्जयंतद्वारराजिता ॥ कु-

र्ध्वं स्थिताधोग्रामाणां । दिदृक्षुरिव कौतुकं ॥ २६ ॥ शीतोदापि स्वोस्वभावा–दिवाधोगामिनी क्रमात् ॥ योजनानां सहस्रेऽब्धि । याति भित्वा जगत्यधः ॥ २७ ॥ एवं च पश्चिमार्द्धस्य । क्रमनिम्ना क्षितिर्भवेत् ॥ कूपकोशसमाकर्षि–वृषगंतव्यभूरिव ॥ २८ ॥ ततो निम्ननिम्नतरा । भवंति समभूतलात् ॥ तत्रत्या विजयाः शैलाः । सरितश्च यथोत्तरं ॥ २९ ॥ माल्यवद्गजदंतस्य । पूर्वतो विजयो भवेत् ॥ कच्छाख्यस्तस्य पूर्वांते । सीमकृच्चित्रपर्वतः ॥ ३० ॥

ततः सुकच्छविजय–स्तस्यापि सीमकारिणी ॥ गाहावतीनाम नदी । महाकच्छस्ततः परं ॥ ३१ ॥ विजयस्यास्य पूर्वांते । ब्रह्मकूटाभिधो गिरिः ॥ कच्छावतीति विजय–स्ततः परमुदीरितः ॥ ३२ ॥ हृदावती नदी तस्य । मर्यादाकारिणी ततः ॥ आवर्त्तविजयोऽस्यांते नलिनीकूटपर्वतः ॥ ३३ ॥ मंगलावर्त्तविजय । एतस्मात्पूर्वतो भवेत् ॥ तस्य वेगवती नाम । नदी सीमाऽभिधायिनी ॥ ३४ ॥ विजयः पुष्कलस्तस्याः । पूर्वतस्तस्य सीमकृत् ॥ एकशैलगिरिस्तस्मा–द्विजयः पुष्कलावती ॥ ३५ ॥ विजयेऽस्मिन् विजयते । सीमंधरजिनोऽधुना ॥ जगद्दिनकरः पुण्य–प्रकर्षप्राप्यदर्शनः ॥ ३६ ॥ ततःपरं वनमुख–मित्येवं विजयाष्टकं ॥ शी-

ताया उत्तरतटे । पर्यंते वनराजितं ॥ ३७ ॥ तत्संमुखं वनमुखं । शीताया दक्षिणे तटे ॥
तस्मात्पश्चिमतो वत्स–नामा विजय आहितः ॥ ३८ ॥ बाहुनामा जिनः श्रीमान् । विजयेऽ-
स्मिन् विराजते ॥ सुरेश्वरकरामर्शी–रसकृन्मसृणक्रमः ॥ ३९ ॥ त्रिकूटः पर्वतोऽस्यांते । सु
वत्सविजयस्ततः ॥ तप्तानामांतरनदी । तस्य सीमाविधायिनी ॥ ४० ॥
ततो महावत्सनामा । विजयोऽस्य च सीमनि ॥ शैलो वैश्रमणकूट–स्तस्य पश्चिमतः
पुनः ॥ ४१ ॥ वत्सावतीति विजय–स्तस्य सीमाविधायिनी ॥ नदी मत्ता ततः प्रत्यग् । र-
म्याख्यो विजयस्ततः ॥ ४२ ॥ अंजनाद्रिमुख्यांते । रम्यको विजयस्ततः ॥ उन्मत्ताख्या न-
दी तस्या । विजयो रमणीयकः ॥ ४३ ॥ मातंजनगिरिस्तस्य । सीम्न्यथो मंगलावती ॥ वि-
जयोऽस्य च सीमायां । गिरिः सौमनसाभिधः ॥ ४४ ॥ अस्य पश्चिमतो देव—कुरवस्तदनं-
तरं ॥ गिरिर्विद्युत्प्रभनामा । गजदंताकृतिः स्थितः ॥ ४५ ॥ तस्य पश्चिमतः पद्म–विजयः
परिकीर्त्तितः ॥ ततोंकापाती क्षितिभृ–त्सुपद्मो विजयस्ततः ॥ ४६ ॥ ततः क्षीरोदाख्यनदी
। महापद्माभिधस्ततः ॥ विजयोंतेऽस्य च पद्म–पातीति क्षितिभृद्भवेत् ॥ ४७ ॥ पद्माव

तीति विजयः । कथितस्तदनंतरं ॥ शीतस्रोता नाम नदी । तस्य सीमाविधायिनी ॥ ४८ ॥ तस्याः पश्चिमतः शंख–विजयोंतेऽस्य राजते ॥ आशीविषगिरिस्तस्मा–द्विजयो नलिनोऽग्रतः ॥४९॥ नद्यंतर्वाहिनी तस्य । मर्यादाकारिणी भवेत् ॥ तस्याः पश्चिमतः ख्यातो । विजयः कुमुदाभिधः ॥ ५० ॥ सुखावहो गिरिस्तस्य । मर्यादाकारको भवेत् ॥ ततः परं च नलिनावतीति विजयो मतः ॥ ५१ ॥ नमस्यते सुकृतिभिः । सुबाहुर्जगदीश्वरः ॥ विजये विहरन्नस्मिन् । शतक्रतुशतस्तुतः ॥ ५२ ॥ शीतोदादाक्षिणतटा–श्रितं वनमुखं ततः ॥ तत्संमुखं वनमुख । शीतोदोत्तरकूलजं ॥ ५३ ॥ वनस्यैतस्य पूर्वस्यां । विजयो वप्रनामकः ॥ पूर्वतस्तस्य चंद्राख्यो । वक्षस्कारगिरिर्भवेत् ॥ ५४ ॥ विजये विहरत्यस्मिन् । युगंधरजिनेश्वरः ॥ अधुना देशनासारैः । पुनानो भव्यमंडलं ॥ ५५ ॥ ततः सुवप्रविजय–स्ततो नद्यूर्मिमालिनी ॥ ततो महावप्रनामा । विजयः कथितो जिनैः ॥ ५६ ॥ ततः सूरो नाम गिरि–स्ततो वप्रावती भवेत् विजयोंतेऽस्य गंभीर–मालिनी कथिता नदी ॥ ५७ ॥

ततश्च वल्गुविजय–स्ततो नागाभिधो गिरिः ॥ ततः सुवल्गुविजय–स्ततश्च फेनमालि-

नी ॥ ५८ ॥ स्यादंतरनदी तस्या । गंधिलो विजयः परः ॥ ततो गिरिर्देवनामा । ततश्च विजयः किल ॥ ५९ ॥ स्याद्गंधिलावती नाम्ना । ततश्च गंधमादनः ॥ गजदंतगिरिस्तस्मादुत्तराः कुरवः पराः ॥ ६० ॥ एवं च-कच्छः सुकच्छश्च महा-कच्छः कच्छावतीति च ॥ आवर्त्तो मंगलावर्त्तः । पुष्कलः पुष्कलावती ॥ ६१ ॥ वच्छः सुवच्छश्च महा-वच्छो वच्छावतीति च ॥ रम्यो रम्यकरमणी-यौ मंगलावतीति च ॥ ६२ ॥ पद्मः सुपद्मश्च महा-पद्मः पद्मावतीति च ॥ शंखश्च नलिनश्चैव । कुमुदो नलिनावती ॥ ६३ ॥ वप्रः सुवप्रश्च महा-वप्रो वप्रावती तथा ॥ वल्गुः सुवल्गुर्विजयो । गंधिलो गंधिलावती ॥ ६४ ॥ द्वात्रिंशदेते विजयाः । कच्छाद्याः सूचितः क्रमात् ॥ माल्यवद्गजदंताद्रे-रारभ्यागंधमादनं ॥ ६५ ॥ द्वाविंशतिः शतानीष-न्न्यूनानि च तयोदश ॥ योजनानीह विष्कंभः । सर्वेषु विजयेष्वथ ॥ ६६ ॥

सहस्राणि षोडशैषा-मायामः पंचभिः शतैः ॥ योजनानां द्वानवत्या । चाढ्यानि द्विकलाढ्यया ॥ ६७ ॥ अंतर्नदीनां सर्वासां । वक्षस्कारमहीभृतां ॥ सर्वेषामप्ययमेवा-यामो ज्ञेयो विचक्षणैः ॥ ६८ ॥ अत्रायमाम्नायः—शीताशीतोदयोर्वार्द्धि-प्रवेश एव यद्यपि ॥ वि-

ष्कंभः स्याद्योजनानां । पूर्णपंचाशतात्मकः ॥ ६९ ॥ हीनो हीनतरोऽन्यत्र । तथाप्युन्नयकूलयोः ॥ कच्छादीनां विजयानां । समीपे रमणोचितौ ॥ ७० ॥ द्वौ द्वौ तयोस्तो रमण-प्रदेशौ तदपेक्षया ॥ सर्वत्राप्यनयोर्व्यासो । भाव्यः पंचशतात्मकः ॥ ७१ ॥ ततो विदेहविष्कंभे । शीताव्यासेन वर्जिते ॥ अर्द्धितैर्नदीवक्ष-स्काराद्विविजयाततिः ॥ ७२ ॥ एते च विजयाः सर्वे । वैताढ्यैर्विहिता द्विधा ॥ पूर्वापरायततया । स्थितै रजतकांतिभिः ॥ ७३ ॥ स्वरूपतोऽमी भरत-वैताढ्यस्य सहोदराः ॥ आयामतश्च विजय-विष्कंभसदृशा इमे ॥ ७४ ॥ समक्षेत्रस्थितेश्चैषां । धनुर्बाहाद्यसंभवः ॥ मूलादूर्ध्वं योजनानां । दशानां समतिक्रमे ॥ ७५ ॥ एषु द्वे खचरश्रेण्यौ । तयोर्विद्याभृतामिह ॥ पुराणि पंचपंचाश-त्प्रत्येक पार्श्वयोर्द्वयोः ॥ ॥ ७६ ॥ ततः पुनर्योजनानां । दशानां समतिक्रमे ॥ शक्रेशानाभियोग्यानां । द्वे श्रेण्यौ पार्श्वयोर्द्वयोः ॥ ७७ ॥ तत्रापि-शीताया दक्षिणतटे । वैताढ्यविजयेषु ये ॥ तत्राभियोग्यश्रेण्यो या-स्ताः सौधर्मस्य वज्रिणः ॥ ७८ ॥ शीतायाश्चोत्तरतटे । वैताढ्यविजयेषु ये ॥ तत्राभियोग्यश्रेण्यो या-स्ता ईशानसुरेशितुः ॥ ७९ ॥ सर्वेऽप्यमी नवनव-कूटालंकृतमौलयः ॥

मानं स्वरूपं कूटाना–मुक्तवैताढ्यकूटवत् ॥ ७० ॥ पूर्वस्यां प्रथमं कूटं । सिद्धायतनसंज्ञितं ॥ ततः स्वस्वविजयार्द्ध—कूटं दक्षिणशब्दयुक् ॥ ७१ ॥

खण्डप्रपातकूट स्या–न्माणिभद्रं ततः परं ॥ वैताढ्यं पूर्णभद्रं च । तमिस्रगुहमित्यपि ॥ ७२ ॥ ततः स्वस्वविजयार्द्ध–कूटमुत्तरशब्दयुक् ॥ वैताढ्येष्वतिम कूट । इयं वैश्रमणाभिधं ॥ ७३ ॥ वैताढ्येषु हि सर्वेषु । कूट द्वितीयमष्टम ॥ स्याद्दक्षिणोत्तरस्वस्व–विजयार्द्धाभिधं क्रमात् ॥ ७४ ॥ यथा दक्षिणकच्छार्द्ध–कूट द्वितीयमष्टम ॥ भवेदुत्तरकच्छार्द्धं । कच्छवैताढ्यपर्वते ॥ ७५ ॥ अर्द्धे द्वे द्वे विजयानां । वैताढ्यगिरिणा कृते ॥ यथा दक्षिणकच्छार्द्धं । तथा कच्छार्द्धमुत्तर ॥ ७६ ॥ अर्द्धस्य तस्यैकैकस्य । सहस्राण्यष्ट दीर्घता ॥ योजनानां द्विशत्येक–सप्तत्याढ्या तथा कला ॥ ७७ ॥ नीलवन्निषधक्ष्माभृ–द्दक्षिणोदग्नितंबयोः ॥ शैलो वृषभकूटः स्या–द्विजयं विजयप्रति ॥ ७८ ॥ तस्य चाद्रेरुभयतः । कुण्डमेकैकमस्ति तत् ॥ सिंधुकुंड पश्चिमतो । गंगाकुण्डं च पूर्वतः ॥ ७९ ॥ त च षष्टिं योजनानि । विष्कंभायामतो मते ॥ किंचिदूनन्नवत्याढ्यं । शतं च परिक्षेपतः ॥ ८० ॥

योजनानि दशोद्विद्धे । विमलोदकपूरिते ॥ द्वीपेनैकैकेन रम्ये । स्वंदवीभ्नवनस्पृशा ॥
॥ ९१ ॥ एताभ्यामथ कुंडाभ्यां । सिंधुर्गंगा च निम्नगे ॥ दक्षिणेन तोरणेन । निर्गते दक्षि-
णामुखे ॥ ९२ ॥ अपांतरालेऽनेकाभि-र्नदीभिः पथि संश्रिते ॥ वैताढ्यसविधे सप्त-नदीस-
हस्रसेविते ॥ ९३ ॥ तमिस्रायाः पश्चिमतः । सिंधुर्वैताढ्यभूधरं ॥ गंगा खंडप्रपातायाः । प्रा-
ग्विभिद्य च निर्गते ॥ ९४ ॥ याम्यार्द्धेऽपि नदी सप्त-सहस्रसंश्रिते इति ॥ सरित्सहस्रकैः
प्रत्येकं । चतुर्दशभिरन्विते ॥ ९५ ॥ शीतानदीप्रविशतो । दक्षिणाभिमुखाध्वना ॥ ततो भ-
वंति षट्खंडाः । सर्वेऽपि विजया इमे ॥ ९६ ॥ पंचभिः कुलकं ॥ शीताया याम्यकूलेऽपि ।
विजयेष्वेवमष्टसु ॥ निषधस्योदग्नितंबे । एकैको वृषभाचलः ॥ ९७ ॥ तस्याप्युभयतः प्रा
ग्वत् । कुंडे द्वे द्वे तथाविधे ॥ प्रत्यग् रक्तवतीकुंडं । रक्ताकुंडं च पूर्वतः ॥ ९८ ॥ एताभ्या-
मपि कुंडाभ्यां । निर्गते उत्तरामुखे ॥ रक्तारक्तवती नद्यौ । भित्वा वैताढ्यभूधरं ॥ ९९ ॥
शीतानदीं प्रविशतः । स्वरूपं पुनरेतयोः ॥ पूर्वोक्ताभिर्नदीभिः स्या-न्निःशेषमविशेषितं ॥१००॥
शीतोदायाम्यकूलेऽपि । विजयेष्वेवमष्टसु ॥ निषधस्योदग्नितंबे । एकैको वृषभाचलः ॥

॥ १ ॥ तस्याप्युन्नयतः कुंडे । प्राग्वद् द्वे द्वे मनोरमे ॥ सिंधुकुंडं पश्चिमतो । गंगाकुंडं च पूर्वतः ॥ २ ॥ ताभ्यां गंगासिंधुनद्यौ । प्रव्यूढे उत्तराध्वना ॥ प्राग्वद्भित्त्वैताढ्ये । शीतोदां विशतो नदीं ॥ ३ ॥ इत्थमेवोत्तरतटे । शीतोदामरितः किल ॥ नितबे दक्षिणे नील-वतोऽस्ति वृषभाचलः ॥ ४ ॥ प्राग्वदृषभकूटस्य । गिरेरस्यास्ति पूर्वतः ॥ रक्ताकुंडं रक्तवती-कुंड पश्चिमतस्ततः ॥ ५ ॥ एताभ्यामपि कुंडाभ्यां । निर्गत्य दक्षिणामुखं ॥ रक्तारक्तवती-नद्यौ । भित्त्वा वैताढ्यभूधरं ॥ ६ ॥ शीतोदायां प्रविशतो । याम्येन ऋजुनाध्वना ॥ गंगा-सिंधुभवंतीभ्या-मिमाः सर्वात्मना समाः ॥ ७ ॥ तथाहुः क्षमाश्रमणमिश्राः-सीयाइउत्ते-सु । सीउया एय जम्मविजएसु ॥ गंगासिंधुनईउ । इयरेसु यरत्तरत्तवई ॥८॥ कुंडान्येवं चतुः-षष्टि-र्द्वात्रिंशदृषभाद्रयः ॥ स्वरूपमेषां भरत-वर्त्तिकुंडर्षभाद्रिवत् ॥ ९ ॥ चतुःषष्टेस्तथैवासां । नदीनां ह्रदनिर्गमात् ॥ आरभ्य शीताशीतोदा-वाहिनीसंगमावधि ॥ १० ॥ सर्वं स्वरूपं भरत-गंगासिंधुसरित्समं ॥ प्रत्येकं परिवारोऽपि । तावान् ज्ञेयो विशारदैः ॥ ११ ॥

गंगारक्तान्यतरस्याः । प्रवेशे मागधाभिधं ॥ शीताशीतोदयोरन्य-तरस्यां तीर्थमाहितं

॥ १२ ॥ एवं सिंधुरक्तवत्यो–र्योगे प्रन्नामनामकं ॥ तयोर्द्वयोरंतराले । वरदामं न्नवेदिह ॥
॥ १३ ॥ एवं तीर्थत्रयं ज्ञेय । विजयं विजयंप्रति ॥ स्वरूपमेषां न्नरत–तीर्थवत्परिन्नाव्यतां ॥
॥ १४ ॥ नत्तरार्द्धेषु शीतायाः । कछादिविजयेष्विमाः ॥ राजधान्यो दक्षिणार्द्ध–मध्यखंमेषु की-
र्त्तिताः ॥ १५ ॥ क्षेमा क्षेमपुरी चैवा–रिष्टा रिष्टवती पुरी ॥ खड्गीमंजूषौषधिश्च । पुरी च पुं-
मरीकिणी ॥ १६ ॥ शीताया दाक्षिणात्येषु । वत्सादिविजयेष्विमाः ॥ राजधान्य नुत्तरार्द्ध ।
मध्यखंडेषु वर्णिताः ॥ १७ ॥ सुसीमा कुंमला चैवा–पराजिता प्रन्नंकरा ॥ अंकावती पद्मम-
वती । शुन्नाश्च रत्नसंचया ॥ १८ ॥ शीतोदाया याम्यतटे । पद्मादिविजयेष्विमाः ॥ नुत्तरार्द्ध-
मध्यखंडे । राजधान्यो निरूपिताः ॥ १९ ॥ अश्वपुरी सिंहपुरी । महापुर्या विजयान्निधा ॥
अपराजिताऽपराख्या । शोका च वीतशोकिका ॥ २० ॥ शीतोदाया नदीच्येषु । वप्रादिवि-
जयेष्विमाः ॥ याम्यार्द्ध मध्यखंडेषु । राजधान्यो जिनैः स्मृताः ॥ २१ ॥

विजया वैजयंती च । जयंती चापराजिता ॥ चक्रपुरी खड्गपुर्य–वध्यायोध्येति नामतः
॥ २२ ॥ विजयेष्वेषु मनुजाः । पंचचापशतोन्नताः ॥ जघन्योत्कर्षतः पूर्व–कोटिक्षुल्लन्नवायु-

पः ॥ २३ ॥ नानासंहनना नाना–संस्थाना विविधाशयाः ॥ मृत्वा नानागतिं यांति । स्व-
स्वकर्मानुसारतः ॥ २४ ॥ कालः सदात्र सुषमा–दुःषमारंभसन्निभः ॥ सांप्रतीनभरतव–फ-
लापत्यावनाधिकं ॥ २५ ॥ आहारस्यांतरे माने । चानैयत्यं तथैव हि ॥ ततश्चतुःशतगुणं ।
मानं च स्यात्कूहादिषु ॥ २६ ॥ चित्राद्यान् देवशैलांस्तान् । वक्षस्कारगिरीन्विदुः ॥ चतुरश्च-
तुरः शीता–शीतोदयोस्तटद्वये ॥ २७ ॥ चित्रश्च ब्रह्मकूटश्च । नलिनीकूट इत्यपि ॥ एकशै-
लश्चेति शीतो–त्तरकूले धराधराः ॥ २८ ॥ त्रिकूटश्च वैश्रमणो–ंजनो मातंजनोऽपि च ॥ शी-
ताया दक्षिणतटे । वक्षस्कारचला इमे ॥ २९ ॥ अंकापाती पद्मपाती । आशीविषः सु-
खावहः ॥ शीतोदाया याम्यतटे । वक्षस्काराह्वयः श्रुताः ॥ ३० ॥ चंद्रः सूर्यश्च नागश्च । दे-
वश्चेति महीधराः ॥ शीतोदाया उदक्कूले । सर्वं एवं च षोडश ॥ ३१ ॥ एकतोऽमी नील-
वता । लग्यंते निषधेन वा ॥ द्वितीयांतेन शीतोदां । शीतां वा संस्पृशंति च ॥ ३२ ॥ यो-
जनानां पंचशता–न्येते विष्कंभतो मताः ॥ सर्वत्र सर्वे सदृशाः । सर्वरत्नमया अपि ॥ ३३ ॥
नीलवन्निषधक्ष्माभृ–त्समीपेऽमी समुन्नताः ॥ चतुःशतीं योजनानां । शतमेकं भुवोंतरे ॥

॥ ३४ ॥ ततश्च मात्रया वर्द्ध–मानाः सर्वे यथाक्रमं ॥ शीताशीतोदयोः पार्श्वे । जाताः पंचशतोन्नताः ॥ ३५ ॥ पंचविंशं योजनानां । शतं तत्र भुवोंतरे ॥ तुरंगस्कंधसंस्थान–सस्थिता इति वर्णिताः ॥ ३६ ॥ स्वस्वाह्वानसमाह्वानै–कैकवृंदारकाश्रिताः ॥ यथा चित्रगिरौ चित्रः । स्वाम्येवमपरेष्वपि ॥ ३७ ॥ अथ चत्वारि चत्वारि । कूटान्येषु किलाद्रिषु ॥ भवंत्येवं चतुःषष्टि–रेतानि सर्वसंख्यया ॥ ३८ ॥

अथ विवक्षितं गिरि–प्राग्वर्त्तिनिजयाख्यया ॥ नीलवन्निषधासन्नावर्णोः । समीपेऽन्यतरस्य तत् ॥ ३९ ॥ यः पश्चिमायां विजयो । द्वितयीकं तदाख्यया ॥ तृतीयं निजनाम्नैव । सिद्धायतनमंतिमं ॥ ४० ॥ वियच्चुम्बिचलत्केतु । सिद्धायतनबंधुर ॥ शीताशीतोदयोरन्य–तरस्याः सविधे च तत् ॥ ४१ ॥ कच्छासुकच्छयोर्मध्य–स्थिते चित्रगिरौ यथा ॥ आद्यं सुकच्छकूटं स्यात् । कच्छकूटं द्वितीयकं ॥ ४२ ॥ तृतीयं चित्रकूटं स्या–त्सिद्धायतनमंतिमं ॥ शीताशीतोदयोरेव–मुदग्भागेपि भाव्यतां ॥ ४३ ॥ त्रिकूटे च गिरौ वत्स–कूटं निषधसन्निधौ ॥ द्वितीयं तु सुवत्साख्यं । ततस्त्रिकूटसंज्ञितं ॥ ४४ ॥ तुर्यं च सिद्धायतनं । सर्वेष्वप्येवमद्रिषु ॥ शीताशी-

तोदयोर्याम्य–तटस्थेषु विज्ञाव्यतां ॥ ४५ ॥ एवं चतुर्णां चतुर्णां । सिद्धायतनशालिनं ॥ कूटानां श्रेणयः शीता–शीतोदोत्तरकूलयोः ॥ ४६ ॥ पिधानमालिनां दिव्य–कलशानामिवालयः ॥ शांत्यर्हदभिषेकाय । न्यस्तानामनुपूर्तये ॥ ४७ ॥ युग्मं ॥

सिद्धायतनवर्ज्जानि । स्वस्वतुल्याख्यनाकिना ॥ तान्याश्रितानि विजय–देववत्ते महर्द्धिकाः ॥ ४८ ॥ शीताशीतोदयोर्याम्यो–त्तरयोर्ये सुधाभुजः ॥ क्रमात्तेषां राजधान्यो । मेरुतो दक्षिणोत्तराः ॥ ४९ ॥ गाहावती ह्रदावती । तृतीया वेगवत्यपि ॥ शीताया उत्तरतटे । स्यु स्तिस्त्रोंतरनिम्नगाः ॥ ५० ॥ शीतायाम्यतटे तथा । मत्तोन्मत्तेति निश्चिताः ॥ क्षीरोदाशीतस्त्रोताख्यां–तर्वाहिनीति नामतः ॥ ५१ ॥ शीतोदाया याम्यतटे । तस्या उत्तरतः पुनः ॥ ऊर्मिमालिनीफेनिन्यौ । मालिन्योंतरनिम्नगाः ॥ ५२ ॥ द्वादशानामप्यमूषा—मेकैकं कुंडमीरितं ॥ स्वतुल्याख्यं नीलवतः । समीपे निषधस्य वा ॥ ५३ ॥ कुंडं पुनस्तदेकैक । विष्कंभायामतो मतं ॥ सपादं योजनशत–मुद्विद्धं दशयोजनीं ॥ ५४ ॥ परिक्षेपेण साशीति–योजनानां शतत्रयं ॥ मध्ये च द्वीप एकैको । नदीकुंडसमाह्वयः ॥ ५५ ॥

यथा ग्राहावतीनद्याः । कुंमं ग्राहावतीति च ॥ तत्र ग्राहावतीद्वीपो । भवत्येवं परेऽप्यमी ॥ ५६ ॥ योजनानि षोडशामी । विष्कंभायाममानतः ॥ सातिरेकाणि पंचाशत् । प्रक्षेपाः परिक्षेपतः ॥ ५७ ॥ किंच सर्वेऽप्यमी द्वीपा । द्वौ क्रोशावुच्छ्रिता जलात् ॥ पद्मवेदिकया सर्वे । वनेन च विराजिताः ॥ ५८ ॥ मध्ये च तेषां द्वीपाना–मेकैकं भवनं भवेत् ॥ नदीनामसदृशाम्न्या । देव्या योग्यमनुत्तरं ॥ ५९ ॥ अर्द्धक्रोशव्यासमेक–क्रोशायतं मनोहरं ॥ देशानक्रोशतुंगं स्व–देवीशय्याविभूषितं ॥ ६० ॥ युग्मं ॥ एताश्च ग्राहावत्याद्या । निमग्ना निखिला अपि ॥ पंचविंशं योजनानां । शतं विष्कंभतो मताः ॥ ६१ ॥ सार्द्धे द्वे योजने निम्ना । आरभ्य ह्रदनिर्गमात् ॥ शीताशीतोदाप्रवेश–पर्यंतं सर्वतः समाः ॥ ६२ ॥

यत्तु श्रीमलयगिरयः क्षेत्रसमासवृत्तौ जंबूद्वीपाधिकारे एताश्च ग्राहावतीप्रमुखा नद्यः सर्वा अपि सर्वत्र कुंडाद्विनिर्गमे शीताशीतोदयोः प्रवेशे च तुल्यप्रमाणविष्कंभोद्वेधा इति स्वयमुक्त्वा तस्मिन्नेव ग्रंथे धातकीखंडपुष्करार्द्धाधिकारयोस्तत्रत्यनदीनां द्विगुणविस्तारातिदेशं व्याख्यानयंतः प्रोचुः, यथा जंबूद्वीपे रोहितांशारोहितासुवर्णकूलारूप्यकुलानां ग्राहाव-

त्यादीनां च द्वादशानामंतरनदीनां सर्वाग्रेण षोडशानां नदीनां प्रवाहे विष्कंभो द्वादश योजनानि सार्द्धानि उद्वेधः क्रोशमेकं, समुद्रप्रवेशे ग्राहावत्यादीनां च महानदीप्रवेशे निष्कम्भो योजनानि ( १२५ ) उद्वेधो योजने ( २ ) क्रो २, तदभिप्रायं न विद्मः, किंचासां सर्वत्र समविष्कम्भकत्वे आगमवद्युक्तिरप्यनुकूला, तथाहि—

आसां विष्कम्भवैषम्ये उभयपार्श्ववर्त्तिनोर्विजययोरपि विष्कंभवैषम्यं स्यात्, इष्यते च समविष्कंभकत्वमिति, जगतीसन्निधौ शीता—शीतोदयोस्तटद्वये॥ स्यादेकैकं वनमुख—मेवं चत्वारि तान्यपि ॥ ६३ ॥ आद्यं वनमुखं शीता—नीलवद्भूधरांतरे ॥ द्वितीयं च वनमुखं । शीतां निषधमंतरा ॥ ६४ ॥ तृतीयं च वनमुखं । शीतोदानिषधांतरे ॥ शीतोदानीलवन्मध्ये । चतुर्थं परिकीर्त्तितं ॥ ६५ ॥ याम्योत्तरायतानां प्राक्—प्रत्यग्विष्कम्भशालिनां ॥ एषां विजयवद्दैर्घ्यं । सर्वेषामपि ज्ञाव्यतां ॥ ६६ ॥ एका कलैषां विष्कम्भो । नीलवन्निषधांतिके ॥ ततो जगत्या वक्रत्वा—द्वर्द्धते जगतीदिशि ॥ ६७ ॥ त्रिसहस्री योजनाना—मष्टसप्ततिवर्जिता ॥ शीताशीतोदयोः पार्श्वे । वर्द्धमानः क्रमादमूः ॥ ६८ ॥ अत्रायमाम्नायः—षोडशानां विजयानां ।

वक्षस्काराष्टकस्य च ॥ पञ्चामंतनिमग्नानां । करूणां गजदंतयोः ॥ ६९ ॥
नीलवन्निषधज्याभ्यां । विष्कंभे शोधिते स्थितं ॥ कलाद्वयं तत्सैकैका । विष्कंभो वन-
योर्द्वयोः ॥ ७० ॥ दैर्घ्येऽतीते योजनादौ । यावति व्यास इष्यते ॥ निहन्यते तद् द्वाविंशै—
रेकोनत्रिंशता शनैः ॥ ७१ ॥ पुनरेकोनविंशत्या—हत्य लक्षैस्त्रिभिर्भजेत् ॥ सहस्रपंचदशक-
सार्द्धद्विशतसंयुतैः ॥ ७२ ॥ लब्धं व्यासो योजनादिः । स्यादत्राभीप्सितास्पदे ॥ भाज्यभा-
जकयोरत्रो—पपत्तिर्लिख्यते स्फुटा ॥ ७३ ॥ परमव्यासरूपोऽत्र । सर्वत्र गुणको ध्रुवः ॥ तेन
हत्वैकोनविंश—त्याहतिस्तु कलाकृते ॥ ७४ ॥ आयाम एव परमो । भाजकोऽत्र ध्रुवो भवे-
त् ॥ भपरिस्थकलायुग्म—प्रक्षेपाय कलीकृतः ॥ ७५ अथोत्तरकुरूणां यौ । पर्वतौ सीमका-
रिणौ ॥ गंधमादनमन्माल्य—वंतौ तौ वर्णयाम्यहं ॥ ७६ ॥ तत्रोत्तरकुरूणां यः । पश्चिमायां
व्यवस्थितः ॥ वायव्यां मेरुतः सोऽयं । प्रज्ञप्तो गंधमादनः ॥ ७७ ॥ गंधः कोष्टपुटादिभ्यो ।
रम्यो यदिह पर्वते ॥ तथा क्षेत्रस्वभावेन । ततोऽयं गंधमादनः ॥ ७८ ॥
गंधमादननामा च । देवः पल्योपमस्थितिः ॥ स्वाम्यस्येति तथाख्यातो—ऽपरं च शा

श्वेताभिधः ॥ ७९ ॥ पीतरत्नमयश्चैव । मतांतरे हिरण्मयः ॥ शोभितः सप्तभिः कूटै–र्ना-
नारत्नोपशोभितैः ॥ ८० ॥ जंबूद्वीपप्रज्ञप्तिसूत्रे तु अयं ' सव्वरयणामए ' इति सर्वात्मना र-
त्नमय उक्तः. जंबूद्वीपसमासे तु कनकमय उक्तः, बृहत्क्षेत्रसमासे तु ' गिरि गंधमायणो
पीयत्ति अ ' पीतकः पीतमणिमय इत्येतद्वृत्तौ. तत्राद्यं मंदरासन्नं । वायव्यां मंदराचलात् ॥
कूटं सिद्धायतनाख्यं । तत्रोत्तुंगो जिनालयः ॥ ८१ ॥ कूटात्ततोऽपि वायव्यां । कूटं स्याद्गंध
मादन ॥ स्याद्गंधिलावतीकूट । वायव्याममुनो दिशि ॥ ८२ ॥ तुर्यं तूत्तरकुर्वाख्यं । स्याद्वा-
यव्यां तृतीयतः ॥ पंचमात्तद्दक्षिणस्यां । वक्रत्वेनास्य भूभृतः ॥ ८३ ॥ तुरीयादुत्तरस्यां च ।
पंचमं स्फटिकाभिधं ॥ अस्मादुत्तरतः षष्टं । लोहिताक्षाभिधं भवेत् ॥ ८४ ॥ लोहिताक्षादुत्त-
रस्यां । सप्तमं कूटमाहितं ॥ आनंदाख्यमिति सप्त । कूटानि गंधमादने ॥ ८५ ॥ भोगंकरा-
भोगवत्यौ । द्वयोः पंचमषष्टयोः ॥ दिक्कुमार्यावपरेषु । कुटतुल्याभिधाः सुराः ॥ ८६ ॥ ए-
तत्कूटाभिधदेव–देवीनां मंदराचलात् ॥ राजधान्योऽन्यत्र जंबू–द्वीपे वायव्यकोणके ॥ ८७ ॥

अथोदक्कुरुतः प्राच्यां । याम्यां नीलवतो गिरेः ॥ ऐशान्यां मंदरात्कच्छा–त्प्रतीच्यां मा

ल्यवान् गिरिः ॥ ८८ ॥ नानाकुसुमगुल्मानि । विधूतानि समीरणैः ॥ कुर्वंत्येनं कीर्णपुष्पं
। ततोऽयं माल्यवानिति ॥ ८९ ॥ महर्द्धिको वसत्यत्र । माल्यावान्नाम निर्जरः ॥ पल्योप-
मायुरिति वा । यद्वासौ शाश्वताभिधः ॥ ९० ॥ स वैडूर्यमयश्चायं । नवकूटोपशोभितः ॥
मेर्वासन्नं कूटमाद्यं । सिद्धायतनसंज्ञितं ॥ ९१ ॥ द्वितीयं माल्यवत्कूट । तृतीयं तु ततः परं
॥ भवेदुत्तरकुर्वाख्यं । तुर्यं कच्छाभिधं मतं ॥ ९२ ॥ पंचमं सागराभिख्यं । षष्ठ तु रजताभि-
धं ॥ शीताकूटं पूर्णभद्र–कूट हरिस्सहाभिधं ॥ ९३ ॥ ऐशान्यां मंदरात्पंक्त्या–स्थितं कूटच-
तुष्टयं ॥ तुर्यात्पंचममैशान्यां । षष्ठाद्दक्षिणतश्च तत् ॥ ९४ ॥ पंचमादुत्तरस्यां च । षष्ठ रज-
तमित्यथ ॥ दक्षिणोत्तरया पंक्त्या । शेषं कूटत्रयं ततः ॥ ९५ ॥

पूर्णभद्रादुत्तरस्यां । याम्यां नीलवतो गिरेः ॥ कूटं नाम्ना सहस्रांकं । ख्यातं हरिस्सहं
च तत् ॥ ९६ ॥ एतन्नीलवतो वर्ष–धरस्यासन्नमीरितं ॥ जात्यस्वर्णमयं दीप्र–प्रभापटलपिं-
जरं ॥ ९७ ॥ योजनानां सहस्रं त–त्तुंगं वृत्ताकृति ध्रुवं ॥ अध्यर्द्धयोजनशत–द्वयमुद्वेधतो
भवेत् ॥ ९८ ॥ तथोक्तं जंबूद्वीपप्रज्ञप्तिवृत्तौ–अवशिष्टं यमकगिरिप्रमाणेन नेतव्यं. तच्चेदं-

'अड्ढाइज्जाइं जोअणसयाइं उव्वेहेणं' सहस्रं योजनानां च । स्यान्मूले विस्तृतायतं ॥ मध्ये सार्द्धां सप्तशतीं । शतानि पंच चोपरि ॥ ९९ ॥ योजनानां त्रिसहस्री । सद्वापष्टिशतान्विता ॥ द्वे सहस्रे च द्विसप्त–त्यधिकत्रिशतांचिते ॥ १०० ॥ सहस्रं साधिकैकाशी–त्याद्यपंचशतान्वितं ॥ क्रमादस्य परिक्षेपा । मूले मध्ये तथोपरि ॥ १ ॥ शतानि पंच विस्तीर्णे । गजदंतगिराविदं ॥ सहस्रयोजनपृथु । कूट माति कथ ननु ॥ २ ॥ अत्रोच्यते–गजदंतगिरिं व्याप्य । निजार्द्धेन स्थित ततः ॥ गिरेरुन्नयतो व्योम्नि । शेषार्द्धेन प्रतिष्ठितं ॥ ३ ॥ तथोक्तं क्षेत्रसमासवृहद्वृत्तौ—

एवं हरिकूटहरिस्सहकूटयोरपि निजनिजाश्रयगिर्योर्यथारूपमुन्नयपार्श्वे आकाशमवरुद्ध्य स्थितत्वं परिज्ञावनीयमिति. आद्यकूटे जिनगृह । तथा पंचमषष्टयोः ॥ सुभोगाभोगमालिन्यौ । दिक्कुमार्ये निरूपिते ॥ ४ ॥ शेषेषु षट्सु कूटेषु । पल्योपमायुषः सुराः ॥ कूटानुरूपनामानो । महर्द्ध्या विजयोपमाः ॥ ५ ॥ एतेषां देवदेवीना–मैशान्यां मंदराद्गिरेः ॥ जंबूद्वीपेऽन्यत्र राज–धान्यो हरिस्सहं विना ॥ ६ ॥ हरिस्सहस्य तु ख्याता । राजधानी सु-

मेरुतः ॥ उत्तरस्यामन्यजंबू–द्वीपे हरिस्सहाभिधा ॥ ७ ॥ सहस्राश्चतुरशीति–योजनानां भवेदिह ॥ व्यासायामावपरं तु । तुल्यं चमरचंचया ॥ ८ ॥ इमावद्री योजनानां । दक्षिणोत्तरमायतौ ॥ त्रिंशत्सहस्रान् द्विशतीं । नवोत्तरां सषट्कलां ॥ ९ ॥

पूर्वापरं च विस्तीर्णौ । समीपे नीलवद्गिरेः ॥ शतानि पंच पर्यंते–गुणासंख्यांशविस्तृतौ ॥ १० ॥ चतुःशतीं योजनानां । गिरेर्नीलवतोंतिके ॥ अभ्युन्नतौ शतमेक–मवगाढौ भुवोंतरे ॥ ११ ॥ समीपे मंदरस्याथ । स्यातां पंचशतोन्नतौ ॥ निमग्नौ पंच गव्यूत–शतानि वसुधांतरे ॥ १२ ॥ नीलवत्पर्वतोपांता–द्वर्द्धमानाविमौ क्रमात् ॥ समुत्सेधावगाहाभ्यां । विस्तृत्या हीयमानकौ ॥ १३ ॥ पूर्वोक्तमानविस्तीर्णौ । द्विदेशावुपमंदरं ॥ नीलवच्छैलकरिणो । दशनाविव राजतः ॥ १४ ॥ प्रत्येकं च पद्मवर–वेदिकावनमंडितौ ॥ कुरुतस्तौ मिथो योगा–दधिज्यधनुराकृतिं ॥ १५ ॥ गंधमादनसन्माल्य–वतोः पर्वतयोरथ ॥ अभ्यंतरे स्थिताः कांत–भुजयोरिव कामिनी ॥ १६ ॥ मंदराद्रेरुत्तरस्यां । दक्षिणस्यां च नीलतः ॥ उत्तराः कुरवः ख्याता । अनुत्तरचिदाश्रयैः ॥ १७ ॥ युग्मं ॥

उदग्दक्षिणविस्तीर्णा—स्ताः पूर्वपश्चिमायताः ॥ अर्धेंदुमंडलाकारा । भुवो भालमिवाहि-
ताः ॥ १८ ॥ अत्रोत्तरकुरुर्नाम । देवः पल्योपमस्थितिः ॥ वसत्यतस्तथा ख्याता । यद्वेदं
नाम शाश्वतं ॥ १९ ॥ एकादश सहस्राणि । शतान्यष्ट तथोपरि ॥ योजनानां द्विचत्वारिं-
शत्कलाछिनयं तथा ॥ २० ॥ दक्षिणोत्तरविस्तार । एतासां वर्णितो जिनैः ॥ ज्ञातव्यात्रोपप-
त्तिश्च । पूर्वाचार्यप्रदर्शिता ॥ २१ ॥ महाविदेहविष्कंभे । मेरुविष्कंभवर्जिते ॥ अर्धीकृते कु-
रुव्यास—मानं भवति निश्चितं ॥ २२ ॥ त्रिपंचाशद्योजनानां । सहस्राणि भवेदिह ॥ प्रत्यंचा
नीलवत्पार्श्वे । सा चैवं परिभाव्यतां ॥ २३ ॥

भद्रशालवनायामो । द्विगुणो मंदरान्वितः ॥ गजदंतव्यासहीनः । कुरुजीवामितिर्भवे-
त् ॥ २४ ॥ योजनानां सहस्राणि । षष्टिः किंच चतुःशती ॥ अष्टादशाधिका शेषा । कला
द्वादश तद्धनुः ॥ २५ ॥ तत्रैव—आयाममानयोर्योगे । भद्रयोर्गजदंतयोः ॥ भवेत्कुरुधनुःपृ-
ष्ट—मानं मेरुसमीपतः ॥ २६ ॥ अत्यंतं रमणीयात्र । क्षितिरीतिविवर्जिता ॥ कल्पद्रुमा द-
शविधाः । पूरयंति जनेप्सितं ॥ २७ ॥ सदा युगलधर्माणो । जना ललितमूर्तयः ॥ गव्यूत-

त्रयमुत्तुंगाः । कलाकौशलशालिनः ॥ २८ ॥ दधानाश्चायुरुत्कर्षा—त्पूर्णं पल्योपमत्रयं ॥ पल्यासंख्येयभागोनं । पल्यत्रयं जघन्यतः ॥ २९ ॥ षट्पंचाशत्संयुते द्वे । शते पृष्ठकरंडकान् ॥ धारयंतः कोपमान—मायालोभाल्पताजुषः ॥ ३० ॥ ते षोढा स्युः पद्मगंधा १ । मृगगंधा २ स्तथासमाः ३ ॥ सहाश्च ४ तेजस्तलिनः ५ । शनैश्चारिण ६ इत्यपि ॥ ॥ ३१ ॥ चतुर्भिः कलापक ॥

सकृदष्टमभक्तांते । तुवरीकणमात्रया ॥ पृथ्वीकल्पद्रुमफल—भोजिनो मनुजाश्च ते ॥ ॥ ३२ ॥ एकोनपंचाशद्दस्र—विहितापत्यपालनाः ॥ कासजृंभादिभिस्त्यक्त—प्राणा यांति त्रिविष्टपं ॥ ३३ ॥ युग्मं ॥ अनंतगुणमाधुर्यो । हरिवर्षाद्यपेक्षया ॥ पृथ्वीपुष्पफलादीना—मास्वादस्तत्र वर्णितः ॥ ३४ ॥ तादृशा एव तिर्यंच—स्तत्र हिंसादिवर्जिताः ॥ पालयित्वा युग्मधर्मं । गच्छंति नियमाद्दिवं ॥ ३५ ॥ आहारयत्यमी षष्टां—तरमिच्छं यथागमं ॥ अन्ययुग्मितिरश्चाम—प्याहारांतरमूह्यतां ॥ ३६ ॥ पचेंद्रियतिरश्चां य—च्छ्जने परमांतरं ॥ भाषितं षष्ठरूपं त—द्देपासेव व्यपेक्षया ॥ ३७ ॥ तथोक्तं—' पंचिंदितिरिनराणं । मह्रविय छठअठमत्त ॥ ' इत्या

दि. कालः सदात्र सुषम–सुषमाख्यः प्रवर्त्तते ॥ वृद्धः साधुरिव क्षेत्र–परावृत्तिपराङ्मुखः ॥ ॥ ३८ ॥ क्षेत्रेऽस्मिंश्च नीलवतो । गिरेर्दक्षिणतः किल ॥ योजनानां शतान्यष्टौ । चतुस्त्रिंशतमेव च ॥ ३९ ॥ चतुरः स्नात्रिकान् न्नागा–नतिक्रम्य स्थिताविह ॥ यमकाख्यौ गिरी शीता–पूर्वपश्चिमकूलयोः ॥ ४० ॥ मिथस्तुल्यस्वरूपौ तौ । यमलभ्रातराविव ॥ तदेतौ यमकाभिख्यौ । कथितौ जिननायकैः ॥ ४१ ॥

अथवा यमकानाम–शकुन्याकृतिशालिनौ ॥ ततस्तथोदितौ स्वर्ण–मयौ गोपुच्छसंस्थितौ ॥ ४२ ॥ व्यासायामपरिक्षेप–तुंगत्वोच्छ्रितादिभिः ॥ हरिस्सहोपमौ पद्म–वेदिकावनमंडितौ ॥ ४३ ॥ तयोः पर्वतयोर्मौलौ । भूमिभागोऽतिबंधुरः ॥ प्रत्येकं तत्र चैकैकः । स्यात्प्रासादावतंसकः ॥ ४४ ॥ द्वाषष्टिं योजनान्यर्द्धा–धिकानि स समुच्छ्रितः ॥ योजनान्येकत्रिंशतं । क्रोशं च विस्तृतायतः ॥ ४५ ॥ तन्मध्ये सपरीवार–मस्ति सिंहासनं महत् ॥ यमकाख्यामरार्हं त–च्छेष विजयदेववत् ॥ ४६ ॥ मेरोरुत्तरतो जंबू–द्वीपेऽन्यत्र निरूपिते ॥ राजधान्यौ यमकयो–र्निःशेषं विजयोपमे ॥ ४७ ॥ यद्वक्तमतरं नील–वतोर्यमकभूभृतोः ॥ य-

मकाढ्याद्यह्रदयो–स्तावदेवांतरं जवेत् ॥ ४८ ॥ परस्परं ह्रदानां च । तावदेवोक्तमंतरं ॥ अं-
त्यह्रदात्तावतैव । क्षेत्रपर्यंतनूरपि ॥ ४ए ॥ एवं च —यमकह्रददीर्घत्वैः । समन्निश्च तथांतरैः
॥ यथोक्तमुत्तरकुरु–व्यासमानं प्रजायते ॥ ५० ॥ तडुक्तं—जावइयंमि पमाणंमि । होंति
जमगाउ नीलवंताउ ॥ तावइयमंतरं खलु । जमगदहाणं दहाणं च ॥ ५१ ॥ अथान्यां य-
मकाडिन्यां । दक्षिणस्यां समांतराः ॥ शीतायाः सरितो मध्ये । ह्रदाः पंच यथाक्रमं ॥५२॥
प्रथमो नीलवन्नामा । नीलवङ्गिरिसन्निन्नैः ॥ शोन्नितः शतपत्राद्यै–स्तत्तथा प्रथितान्निधः ॥
॥ ५३ ॥ यद्वा नागकुमारेंङो । नीलवान्नाम निर्जरः ॥ पालयत्यस्य साम्राज्य–मित्येवं प्रथि-
तान्निधः ॥ ५४ ॥

द्वितीयस्तूत्तरकुरु–संस्थानाज्जादिमत्तया ॥ तुल्याख्यव्यंतरावासा–द्वोत्तरकुरुह्रदः ॥५५॥
चंङान्नशतपत्रादि–मत्त्वाच्चंङान्निधो ह्रदः ॥ व्यंतरेंङचंङदेव–स्वामित्वाद्वा तृतीयकः ॥ ५६ ॥
ऐरावताकारहारि–पद्मादिमत्तयाथवा ॥ व्यंतरैरावताढ्यत्वा–त्तुर्यश्चैरावतो ह्रदः ॥ ५७ ॥ मा-
ल्यवत्पर्वताकारां–बुजादिमत्तयाथवा ॥ माल्यवद्व्यंतरावासात् । पंचमो माल्यवान् ह्रदः

॥ ५८ ॥ पद्महृदसमाकाराः । सर्वे सहोदरा इव ॥ तथैव पद्मवलयैः । षड्जातीयैरलंकृताः ॥ ५९ ॥ विशेषस्तु पद्महृदः । परिक्षिप्तः समंततः ॥ एकेन वनखंडेन । पद्मवेदिकयैकया ॥ ॥ ६० ॥ विभक्ताभ्यां प्रविश्यांत–र्विनिर्यांत्या च शीतया ॥ अमी पद्मवेदिकाभ्यां । वराभ्यां च परिष्कृताः ॥६१ ॥ याम्योत्तरायताश्चामी । पूर्वपश्चिमविस्तृताः ॥ सहस्रयोजनायामाः । शतानि पंच विस्तृताः ॥ ६२ ॥ तथाहुः—

सीयासीओयाण । बहुमज्झे हुंति पंचदहयाओ ॥ उत्तरदहदाहिणदीहा । पुव्वावरविछडा इणमो ॥ ६३ ॥ पद्माहृदादयो ये तु । परे वर्षधरा हृदाः ॥ ते स्युः पूर्वापरायामा । दक्षिणोत्तरविस्तृताः ॥ ६४ ॥ हृदाधिदेवतानां च । पंचानाममृताशिनां ॥ राजधान्योऽन्यत्र जंबू–द्वीपे मेरोरुदग्दिशि ॥ ६५ ॥ एकैकस्य हृदस्यास्य । पूर्वपश्चिमयोर्दिशोः ॥ योजनानि दशदश । मुक्त्वा तटभुवि स्थिताः ॥ ६६ ॥

शैलाः कांचननामानो । मूले लग्नाः परस्परं ॥ एकैकतो दश दश । क्षेत्रेऽस्मिन्निखिलाः शतं ॥ ६७ ॥ सर्वेऽपि योजनशतो–त्तुंगा रम्या हिरण्मयाः ॥ विष्कंभायामतो मूले ।

योजनानां शतं मताः ॥ ६८ ॥ मध्ये पंचसप्ततिं च । योजनानि प्रकीर्त्तिताः ॥ पंचाशतं योजनानि । मस्तके विस्तृतायताः ॥ ६९ ॥ शतत्रयं षोडशाढ्यं । किंचिद्विशेषतोऽधिकं ॥ योजनानि परिक्षेप–स्तेषां मूले प्रकीर्त्तितः ॥ ७० ॥ मध्ये विशेषाभ्यधिका । सप्तत्रिंशा शतद्वयी ॥ सातिरेकाष्टपंचाश–द्युक्तं शतमथोपरि ॥ ७१ ॥ वसुंधरावधूक्रीडा–स्वर्णसारिसमाः स्थिताः ॥ दक्षिणोत्तरपंक्त्यैते । वेदिकावनमंडिताः ॥ ७२ ॥ कांचनप्रत्नपाथोजा–द्यलंकृतजलाश्रयाः ॥ कांचनाख्यास्ततो यद्वा । कांचनाख्यैः सुरैः श्रिताः ॥ ७३ ॥

सर्वेऽप्येकैकप्रासादा–वतंसाश्रितमौलयः ॥ प्रासादास्ते च यमक–प्रासादसदृशा मताः ॥ ७४ ॥ सपरिच्छदमेकैकं । तत्र सिंहासनं स्फुरत् ॥ ऐश्वर्यं भुंजते तेषु । निर्जराः कांचनाभिधाः ॥ ७५ ॥ ऋद्धिश्चैषां विजयव–दायुःपल्योपमं स्मृतं ॥ मेरोरुदग् राजधान्यो । जंबूद्वीपेऽपरत्र च ॥ ७६ ॥ अथोत्तरकुरुक्षेत्र–स्थिता जंबूर्निरूप्यते ॥ सुदर्शनाख्या यन्नाम्ना । जंबूद्वीपोऽयमुच्यते ॥ ७७ ॥ उत्तराः कुरवो द्वेधा । विभक्ताः शीतया किल ॥ पूर्वापरार्द्धभावेन । सीमंतेनालका इव ॥ ७८ ॥ तत्र च—दक्षिणस्यां नीलगिरे–रुदीच्यां मंदराचलात् ॥ पश्चि-

मायां माल्यवतः । शीतायाः प्राक्तने तटे ॥ ૭૯ ॥ उदक्कुरुप्राक्तनार्द्ध—मध्यभागे निरूपितं ॥ जांबूनदमयं जंबू—पीठं नम्रसुरासुरैः ॥ ૮૦ ॥ युग्मं ॥

शतानि पंच विष्कंभा—यामौ परिधिरस्य च ॥ एकाशीत्यधिकं सार्द्ध—सहस्रं किंचनाधिकं ॥ ૮૧ ॥ पीठस्यास्य मध्यभागे । बाहल्यं परिकीर्त्तितं ॥ योजनानि द्वादशांत्य—भागेषु क्रोशयोर्द्वयं ॥ ૮૨ ॥ तदेकया पद्मवर—वेदिकया वनेन च ॥ समावृतं तन्मानादि । जगतीवेदिकादिवत् ॥ ૮૩ ॥ दिक्षु पूर्वाद्यासु तस्य । जंबूपीठस्य तीर्थपैः ॥ एकैकं द्वारमुक्तं त्रि—सोपानप्रतिरूपकं ॥ ૮૪ ॥ तदेकक्रोशविस्तीर्णं । क्रोशद्वयसमुच्छ्रितं ॥ वज्ररत्नमयैर्भूमि—मूलभागैर्मनोहरं ॥ ૮૫ ॥ भूमेरूर्ध्वं प्रतिष्ठान—भूतैश्च रिष्टरत्नजैः ॥ प्रदेशैः शोभितं वर्य—वैडूर्यस्तंभबंधुरं ॥ ૮૬ ॥ सुवर्णरूप्यफलकै—र्वैडूर्यसंधिबधुरैः ॥ रत्नालंबनबाहाभी—रत्नालंबनकैर्युतं ॥ ૮૭ ॥ आदितश्चतुर्भिः कलापकं ॥

द्वारेषु तेषु सर्वेषु । प्रत्येकं तोरणं भवेत् ॥ रत्नस्तंभसन्निविष्टं । वृषभाश्वादिचित्रयुक् ॥ ૮૮ ॥ तोरणानामुपर्यैशा—मुत्तरंगेषु संति वै ॥ अष्टावष्टौ मंगलानि । तथा तत्तोरणोपरि ॥

॥ ८९ ॥ दंडा वज्रमयाः पंच-वर्णाश्च चामरध्वजाः ॥ पताकातिपताकाश्च । छत्रातिछत्रका-
णि च ॥ ९० ॥ भूयांसि घंटायुग्मानि । भूयांस उत्पलोच्चयाः ॥ भूयांसः पद्मकुमुद-निक-
राः संति रत्नजाः ॥ ९१ ॥ मध्यभागेऽस्य पीठस्य । स्याच्चतुर्योजनोन्नता ॥ योजनान्यष्ट
विस्तीर्णा-पतैका मणिपीठिका ॥ ९२ ॥ उपर्यस्याः पीठिकाया । जंबूवृक्षोऽस्ति वेष्टितः ॥
वेदिकाभिर्द्वादशभिः । प्राकाराकारचारुभिः ॥ ९३ ॥ अथास्य जंबूवृक्षस्य । मूलं वज्रमयं
मतं ॥ मूलादुपरि यः कंदो । भूमध्यस्थः स रिष्टजः ॥ ९४ ॥ स्कंधः कंदादुच्छ्रितो यः । स
तु वैडूर्यरत्नजः ॥ सुवर्णमय्यस्तच्छाखाः । प्रशाखा जातरूपजाः ॥ ९५ ॥ शाखानां दिक्प्रसृ-
तानां । मध्ये स्कंधात्समुच्छ्रिता ॥ योर्ध्वशाखा विडिमाख्या । सोक्ता रजतनिर्मिता ॥ ९६ ॥
पत्राणि तस्य वैडूर्य-मयानि जगदुर्जिनाः ॥ तपनीयवृंतवंति । गुच्छा जांबूनदोद्भवाः ॥ ९७ ॥
रजतोद्भास्तत्प्रवालां-कुराः पुष्पफलावली ॥ नानारत्नमयी जंबू-तरुरीदृग् श्रुतः श्रुते ॥ ९८ ॥
शाखाप्रभवपर्यंतः । स्कंधः कंदाद्य ऊर्ध्वगः ॥ द्वे योजने स उत्तुंगो । विस्तीर्णः क्रोशयोर्द्व-
यं ॥ ९९ ॥ या दिक्प्रसृतशाखांत-र्जाता शाखोर्ध्वगामिनी ॥ विडिमापरपर्याया । सोत्तु

गा योजनानि षट् ॥ ३०० ॥

एवं च कदादारभ्य । सर्वाग्रेणाष्टयोजनीं ॥ जंबूतरुः समुत्तुंगो । भूमग्नः क्रोशयोर्द्वयं ॥ ॥ १ ॥ या तस्य प्रसृता स्कंधा–च्छाखा दिक्षु चतसृषु ॥ पूर्वादिषु किलैकैका । शिष्यशाखा गुरोरिव ॥२॥ क्रोशेनोनानि चत्वारि । योजनान्यायताश्च ताः ॥ प्रत्येकं चित्रकृत्पत्र—फल-पुष्पाद्यलंकृताः ॥ ३ ॥ एवं चोन्नयतः शाखा–दैर्घ्ये स्कंधोरुतान्विते ॥ विष्कंभायामतः सोऽय । भवे-पूर्णाष्टयोजनः ॥ ४ ॥ शाखायाः प्रसृतायाः प्राक् । मध्यभागे विराजते ॥ अना-दृतस्य देवस्य । भवनं रत्ननिर्मितं ॥ ५ ॥ अनेकरत्नस्तंभाढ्यं । क्रोशमायामतो मतं ॥ वि-ष्कंभतस्तु क्रोशार्द्धं । देशोनं क्रोशमुन्नतं ॥ ६ ॥ धनुःपंचशतोत्तुंगं । तदर्द्धं पृथुलं क्रमात् ॥ प्राच्युदीचीदक्षिणासु । द्वारमेकैकमत्र च ॥ ७ ॥ धनुःपंचशतायाम–विष्कंभा मणिपीठिका ॥ तदर्द्धमानबाहल्या । तत्र शय्या विराजिता ॥ ८ ॥ शेषशाखासु तिसृषु । स्युः प्रासादा-वतंसकाः ॥ प्राक्शाखाभाविभवना–नुकाराः सर्वमानतः ॥ ९ ॥ सर्वरत्नमया दीप्र–प्रभा-पटलभासुराः ॥ अनादृतस्वर्गियोग्य–सिंहासनविभूषिताः ॥ १० ॥ यद्यपि विषमायामवि

ष्कंभं भवनं श्रीदेव्यादिभवनवत् समायामविष्कंभः प्रासादो विजयादिप्रासादवदिति भवनप्रासादयोर्विशेषमामनंति, तथापि श्रीजंबूद्वीपप्रज्ञप्तिसूत्र श्रीजिनभद्रगणिक्षमाश्रमणकृतक्षेत्रसमासवृत्तिउमास्वातिवाचककृतजंबूद्वीपसमासश्रीसोमतिलकसूरिकृतनव्यबृहत्क्षेत्रसमासादिष्वेतेषां वक्ष्यमाणवनगतानां च प्रासादतया व्यपदिष्टत्वात्क्रोशायामक्रोशार्द्धविष्कंभत्वस्य चोक्तत्वाज्जंबूप्रकरणे प्रासादा अपि विषमायामविष्कंभा इति ध्येयमित्यर्थत उ० श्रीशांतिचंद्रोपज्ञजंबूद्वीपप्रज्ञप्तिवृत्तौ.

जीवाभिगमसूत्रे त्वेषामपि समायामविष्कंभत्वमेव दृश्यते. तथा च तद्ग्रंथः—तच्छ जे दाहिणिल्ले साले एछ णं एगे महं पासायावडिंसए पसत्ते, कोसं च उह्ढं उच्चत्तेणं अद्धकोसं आयामविक्खंभेणं, इति शेषप्रासादसूत्राण्यपि अस्यैव सूत्रस्यातिदेशेनोक्तानीति ज्ञेयं. चतुर्दिग्गतशाखांतः । शाखा या विडिमाभिधा ॥ तस्या मौलौ मध्यभागे । सिद्धायतनमुत्तमं ॥११॥

विष्कंभायामतश्चैत—त्प्राक्शाखाभवनोपमं ॥ देशोनक्रोशमुत्तुंग—पृथुद्वारत्रयान्वितं ॥ १२ ॥

तस्य मध्ये महत्येका । शोभते मणिपीठिका ॥ धनुःपंचशतायाम—व्यासा तदर्द्धमेदुरा ॥

॥ १३ ॥ तत्पर्यंस्या महानेको । देवच्छदक आहितः ॥ पंचचापशतायाम–विष्कंन्नः सर्वरत्नजः ॥ १४ ॥ सातिरेकधनुःपंच–शतोत्तुंगोऽत्र तत्र च ॥ अष्टाधिक जिनार्चानां । शतं वैताढ्यचैत्यवत् ॥ १५ ॥ एवमुक्तस्वरूपोऽय । जबूवृक्षः समततः ॥ त्रात्यष्टाग्रेण जंबूनां । शतेन परिवेष्टितः ॥ १६ ॥ अमी आद्यपरिक्षेप–गता जबूमहीरुहः ॥ मूलजंबूतरोरर्द्ध–माना त्नवति सर्वथा ॥ १७ ॥

यथा द्वादशन्निः पद्म–वेदिकान्निः स वेष्टितः ॥ तथामी निखिलाः षड्भि–र्वेदिकान्निरलंकृताः ॥ १८ ॥ श्रीदेवीपद्मवच्चैते । सर्वेऽनायतनाकिनः ॥ स्वीयान्नरणसर्वस्वनिक्षेपवापणगापणाः ॥ १९ ॥ एतेषु च ( १७८ ) जबूवृक्षेषु श्रीजंबूद्वीपप्रज्ञप्तिश्रीजीवान्निगमक्षेत्रविचारादौ सूत्रकृन्निर्वृत्तिकृन्निश्च जिनन्नवनप्रासादचिता न कापि चक्रे, बहवो बहुश्रुताः श्राद्धप्रतिक्रमणचूर्णिकारादयः शाश्वतजिनस्तोत्रकर्तृश्रीजयानंदसूरिप्रन्नृतयश्च मूलजंबूवृक्षवत्प्रथमवलयजबूवृक्षप्रथमवनखंडगतकूटाष्टकजिनन्नवनैः सह जंबूवृक्षे सप्तदशोत्तर जिनन्नवनानां शत मन्यमाना इहाप्येकैकं सिद्धायतनं पूर्वोक्तमान मेनिरे, ततोऽत्र तत्त्वं केवलिनो विदुरिति,

जंबूद्वीपप्रज्ञप्तिवृत्तौ. मूलजंबूतरोस्तस्मा–द्यथाक्रमं दिशां त्रये ॥ वायव्यामुत्तरस्यां चै–शा-
न्यां च तुल्यनाकिनां ॥ २० ॥

जंबू सहस्राश्चत्वार–स्तावतां कीर्त्तिता जिनैः ॥ जंबूश्चतस्रः पूर्वस्यां । महिषीणां चत-
सृणां ॥ २१ ॥ सहस्राण्यष्ट चाग्नेय्यां । जंब्वोऽभ्यंतरपर्षदां ॥ जंबूसहस्राणि दश । याम्यां
मध्यमपर्षदां ॥ २२ ॥ ता द्वादश सहस्राणि । नैर्ऋत्यां बाह्यपर्षदां ॥ प्रत्यक् च सप्त सेना-
न्यां । परिक्षेपे द्वितीयके ॥ २३ ॥ जंबूसहस्राश्चत्वारः । प्रत्येक दिक्चतुष्टये ॥ सहस्राः षो-
डशेत्यात्म–रक्षकाणां तृतीयके ॥ २४ ॥ यद्यप्युक्त वलययो–र्मानं नैवानयोः स्फुटं ॥ पूर्वा-
चार्यैरुच्चनादः । प्राज्ञैर्ज्ञेयास्तथापि हि ॥ २५ ॥ श्रीदेवीपद्मदृष्टांता–त्प्रथमाद्वलयादिह ॥ अ-
र्धार्धमानका जंब्वो–ऽनयोर्वलययोर्द्वयोः ॥ २६ ॥ तथाहुर्जिनभद्रगणिपादाः क्षेत्रसमासे—
पउमद्दहे सिरीए । जो परिवारो कमेण निद्दिट्ठो ॥ सो चेव य नायव्वो । जंबूए णाढियसुरस्स
॥ २७ ॥ तथैव जंबूद्वीपप्रज्ञप्तिवृत्तौ ॥

अत्राप्येकैकया पंक्त्या । परिक्षेपे विवक्षिते ॥ न जंबूनामवकाशः । श्रीदेवीपद्मवद्भवेत्

॥ २८ ॥ तदिहापि परिक्षेप–जातयस्तिस्र इत्यहो ॥ ज्ञेयं जंबूपंक्तयस्तु । यथायोगमनेकशः ॥ २९ ॥ स चैवं मपरीवारो । जंबूवृक्षः समंततः ॥ काननैर्योजनशत––मानैस्त्रिभिः समावृतः ॥ ३० ॥ आंतरेण मध्यमेन । बाह्येन च यथाक्रमं ॥ तत्रादिमे वने पूर्वा–दिषु दिक्षु चतसृषु ॥ ३१ ॥ पचाशतं योजनानि । वगाह्यात्रांतरे महत् ॥ एकैकं भवनं जंबू–शाखाभवनसन्निभं ॥ ३२ ॥ भवनेष्वेषु सर्वेषु । प्रत्येकं मणिपीठिका ॥ तत्रानादृतदेवस्य । शयनीयं श्रमापहं ॥ ३३ ॥ तस्मिन्नेवादिमवन–खण्डेऽखण्डश्रियोज्ज्वले ॥ पंचाशतो योजनाना–मैशान्यां समतिक्रमे ॥ ३४ ॥ अत्रांतरे पुष्करिण्य–श्चतस्रः स्युश्चतुर्दिशं ॥ प्राच्यां पद्मा दक्षिणस्यां । पद्मप्रभेति नामतः ॥ ३५ ॥ कुमुदाख्या पश्चिमाया–मुदीच्यां कुमुदप्रभा ॥ सर्वाः क्रोशार्द्धविष्कम्भा । एकक्रोशायताश्च ताः ॥ ३६ ॥ धनुःपंचशतोद्वेधा । सचतुर्द्वारतोरणाः ॥ वृताः पद्मवेदिकया । वनखडेन चान्विताः ॥ ३७ ॥ तासां चतसृणां मध्ये । प्रासादः परिकीर्त्तितः ॥ स च जंबूवृक्षशाखा–प्रासादसदृशोऽन्वितः ॥ ३८ ॥

एवमस्मिन्नेव वने । वायव्यां दिशि योजनैः ॥ पंचाशता पुष्करिण्य–श्चतस्रः स्युश्चतुर्दि-

स्याकुल्पला पश्चिमाया-
शं ॥ ३९ ॥ प्राच्यामुत्पलगुल्माख्या । याम्यां च नलिनाभिधा ॥ स्याकुल्पला पश्चिमाया-
मुदीच्यामुत्पलोज्ज्वला ॥४०॥ अयं जंबूद्वीपप्रज्ञप्तिसूत्रजीवाभिगमसूत्राभिप्रायः, बृहत्क्षेत्रस-
मासे तु-'उप्पलगुम्मानलिणु-प्पलुप्पला उप्पला य बीयंमि' इति वचनात् तृतीयतुर्ययोर्नाम्नि
व्यत्ययः, प्रथमाया नाम्नि विशेषश्च दृश्यते इति ज्ञेयं. उक्तपुष्करिणीतुल्या। एता अपि प्रमा-
णतः ॥ मध्ये तत्रैव प्रासादो । जंबूप्रासादसन्निभः ॥ ४१ ॥ वनेऽस्मिन्नेव नैर्ऋत्यां । पंचाश-
द्योजनोत्तराः ॥ यथाक्रमं पुष्करिण्यः । प्राच्यादिदिक्चतुष्टये ॥ ४२ ॥ भृंगा भृंगनिभा किं
चां-जनाथ कज्जलप्रभा ॥ मध्ये प्रासाद एतासां। सर्वं मानं तु पूर्ववत् ॥ ४३ ॥ आग्नेय्यां च
योजनानां । पंचशतो व्यतिक्रमे ॥ वनेऽत्रैव पुष्करिण्यो । दिक्चतुष्के यथाक्रमं ॥ ४४ ॥
श्रीकांता श्रीमहिता च । श्रीचंद्रा च ततः परं ॥ श्रीनिलयाख्येति शेषं । प्रासादादि तु पूर्व-
वत् ॥ ४५ ॥ प्रासादेष्वेषु चैकैक—मस्ति सिंहासनं महत् ॥ अनादृतस्य देवस्य । क्रीडा-
र्हं सपरिच्छदं ॥ ४६ ॥

अत्र जंबूद्वीप प्रज्ञप्तिसूत्रे 'सीहासणा सपरिवारा' इति. जीवाभिगमे च 'सीहास-

णं अपरिवारं ' इति. अस्मिन्नेव वने पूर्व-दिकूभावि भवनात्किल ॥ उदीच्यां दक्षिणस्यां चै-शानीप्रासादशेखरात् ॥ ४७ ॥ एकः कूटो द्वितीयस्तु । प्राग्भाविभवनादितः ॥ दक्षिणस्यामुदीच्यां चा-ग्नेयीप्रासादपुंगवात् ॥ ४८ ॥ पश्चिमायामथाग्नेयी-प्रासादात्पूर्वतोऽपि च ॥ दाक्षिणात्याद्भवनतः । कूटोऽत्रास्ति तृतीयकः ॥ ४९ ॥ दाक्षिणात्यभवनतो-ऽपरस्यां पूर्वतोऽपि च ॥ प्रासादान्नैर्ऋतीनिष्ठा-त्तुर्यः कूटो भवेदिह ॥ ५० ॥ प्रासादान्नैर्ऋतीसस्था-दुदीच्या-मथ याम्यतः ॥ प्रतीचीनभवनतः । कूटो भवति पंचमः ॥ ५१ ॥ प्रतीचीनभवनत । उदीच्यामथ याम्यतः ॥ वायव्यकोणप्रासादात् । षष्ठः कूटो निरूपितः ॥ ५२ ॥ वायव्यकोणप्रासादा-त्प्राच्यां पश्चिमतोऽपि च ॥ उदग्भवनतस्तत्र । कूटो भवति सप्तमः ॥ ५३ ॥ उदग्भवनतः प्राच्या-मथ पश्चिमतोऽपि च ॥ ऐशानकोणप्रासादा-दत्र कूटोऽष्टमो मतः ॥ ५४ ॥

एवमष्टाप्यमी कूटा । जात्यस्वर्णमयाः स्मृताः ॥ द्वे योजने भूनिमग्ना । योजनान्यष्ट चोच्छ्रिताः ॥ ५५ ॥ विष्कंभायामतो मूले । योजनान्यष्ट कीर्त्तिताः ॥ मध्ये षडूर्ध्वं चत्वारि । गोपुच्छाकृतयस्ततः ॥ ५६ ॥ एषां मूले परिक्षेपो-ऽधिकानि पंचाविंशतिः ॥ मध्येऽष्टादश

मौलौ च । योजनान्यर्कसंख्यया ॥ ५७ ॥ तथा—पणविसद्धारस बा-रसेव मूले अ मज्झि
उवरिं च ॥ सविसेसाइं परिरउ । कूडस्स इमस्स बोधव्वो ॥ ५८ ॥ अयं जंबूद्वीपप्रज्ञप्तिसू-
त्राभिप्रायः, जिनभद्रगणिक्षमाश्रमणैस्तु ' उसहकूडसरिसा । सव्वे जंबूणाया भणिया ' इ-
त्यस्यां गाथायां ऋषभकूटसमत्वेन भणितत्वात्, मूले द्वादश योजनानि अष्टौ मध्ये चत्वारि
चोपर्यायामविष्कम्भेत्यादि ऊचे, तथैव मलयगिरिपादैर्व्याख्यातमपि. जीवाभिगमसूत्रेऽपीद-
मेवैषां मानं दृश्यते इति, तत्वं बहुश्रुतगम्यमिति ध्येय. प्रत्येकमेषामुपरि । चैकैकं सिद्धमं-
दिरं ॥ एतच्च जंबूविभिमा–सिद्धायतनसन्निभं ॥ ५९ ॥ अष्टाप्येते पद्मवर–वेदिकावनसंस्थिताः
॥ दिगंगनानामष्टानां । क्रीडायै निर्मिता इव ॥ ६० ॥ एवमुक्तस्वरूपाया । अस्यां जंब्वा म-
हातरोः ॥ नामानि द्वादशैतानि । प्रज्ञप्तानि जिनेश्वरैः ॥ ६१ ॥ सुदर्शना तथामोघा । सुप्र-
बुद्धा यशोधरा ॥ भद्रा विशाला सुमनाः । सुजाता नित्यमंडिता ॥ ६२ ॥ विदेहजंबूर्नियता
। सौमनस्येति कीर्त्तिता ॥ रत्नमय्या अप्यमुष्या । द्रुमेषु मुख्यतां विदुः ॥ ६३ ॥ तथोक्तं ब-
हुश्रुताध्ययने—जहा साहू माणपरा । जंबूनामसुदंसणा ॥ अणाढीयस्स देवस्स । एवं हव-

इ वहुस्सुए ॥ ६४ ॥ जंबूद्वीपपतिर्देवो । वसत्यस्यामनादृतः ॥ जंबूस्वामिपितृव्यो यः । प्रा-
ग्भवे सोऽधुनास्त्यसौ ॥ ६५ ॥

चतुःसामानिकसुर—सहस्रसेवितक्रमः ॥ महिषीभिश्चतसृभिः । स्नेहिनीभिः कटाक्षितः
॥ ६६ ॥ पर्षद्भिस्तिसृभिर्जुष्टः । सप्तभिः सैन्यसैन्यपैः ॥ उदायुधैः षोडशभिः । सहस्रैश्चात्म-
रक्षिणां ॥ ६७ ॥ व्यंतराणां व्यंतरीणा—मन्येषामपि भूयसां ॥ अनाहतराजधानी—वास्त-
व्यानामधीश्वरः ॥ ६८ ॥ मेरोरुदीच्यामन्यत्र । जंबूद्वीपे महर्द्धिकः ॥ पुर्यामनाहताख्यायां
। साम्राज्यं पालयत्यसौ ॥ ६९ ॥ यौ सीमाकारिणौ देव—कुरूणां धरणीधरौ ॥ सौमनसवि-
द्युत्प्रभा—भिधौ तौ वर्णयाम्यथ ॥ ७० ॥ निषधाद्रेरुत्तरस्या—माग्नेय्यां मंदराचलात् ॥ प्रती-
च्यां मंगलावत्या । योऽसौ सौमनसाभिधः ॥ ७१ ॥ देवा देव्यो वसंत्यत्र । यतः प्रशांतचेत-
सः ॥ ततः सौमनसो यद्वा । सौमनसाख्यभर्तृकः ॥ ७२ ॥ तुरंगस्कंधसंस्थानो । गजदंतस-
मोऽपि सः ॥ मनोहरो रूप्यमयः । सप्तकूटोपशोभितः ॥ ७३ ॥

सिद्धायतनमाद्यं स्यात् । पर सौमनसाभिधं ॥ सन्मंगलावतीकूटं । देवकुर्वभिधं परं ॥

॥ ७४ ॥ विमलं कांचनं चैव । वासिष्टं कूटमंतिमं ॥ प्रमाणं ज्ञेयमेतेषां । हिमवद्गिरिकूटवत् ॥ ७५ ॥ आग्नेय्यामादिमं कूटं । मंदरासन्नमाहितं ॥ तस्याग्नेय्यां द्वितीयं तु । तस्याप्याग्नेयकोणके ॥ ७६ ॥ कूटं तृतीयमित्येत–त्कूटत्रयं विदिक्स्थितं ॥ अथो तृतीयादाग्नेय्या–मुत्तरस्यां च पंचमात् ॥ ७७ ॥ कूटं चतुर्थं प्रज्ञप्त–मेतस्मात्कूटतः परं ॥ दक्षिणोत्तरया पंक्त्या । शेषं कूटत्रयं भवेत् ॥ ७८ ॥ वत्सामित्रासुमित्राख्ये । षष्टपंचमकूटयोः ॥ दिक्कुमार्यौ कूटसमा–निधा देवाश्चतुर्षु च ॥ ७९ ॥ अत्र जंबूद्वीपप्रज्ञप्तिसूत्रे बृहत्क्षेत्रसमासे 'सिरिनिलय' इति क्षेत्रसमासादिषु च सौमनसपंचमषष्टकूटवासिन्यौ सुवत्सावत्समित्राख्ये एव दिक्कुमार्यौ उक्ते. यत्तु जंबूद्वीपप्रज्ञप्तिसूत्र एव जिनजन्माधिकारे अधोलोकवासिनीनां भोगंकरादीनामष्टादीनां दिक्कुमारीणां मध्ये पंचमी तोयधारा षष्ठी विचित्रा चेत्युक्तं तदयं लिखितदोषो नामांतरं वेति सर्वविद्वेद.

एतत्कूटाधिपदेव–देवीनां मंदराचलात् ॥ दक्षिणस्यां राजधान्यो । जंबूद्वीपेऽपरत्र वै ॥ ॥ ८० ॥ उत्तरस्यां निषधाद्रे–र्नैरृत्यां कनकाचलात् ॥ पूर्वस्यां पक्ष्मविजया–द्गिरिर्विद्युत्प्रभा-

भिधः ॥ ८१ ॥ तपनीयमयत्वेन । विद्युद्दीप्तिमत्तया ॥ विद्युत्प्रभेशयोगाद्वा । ख्यातो वि-
द्युत्प्रभाख्यया ॥ ८२ ॥ आद्यं सिद्धायतनाख्यं । विद्युत्प्रभं द्वितीयकं ॥ तृतीयं देवकुर्वाख्यं
। महाकूटं तुरीयक ॥ ८३ ॥ पंचमं कनकाभिख्यं । षष्टं सौवस्तिकाभिधं ॥ सप्तमं सीतोदा-
कूटं । स्याच्छतज्वलमष्टमं ॥ ८४ ॥ हरिकुंड तु नवम । कूटैरेभिरलंकृतः ॥ विभाति मानु
मानेष । वेदिकावनशोभितः ॥ ८३ ॥ नैर्ऋत्यां मंदराद् ज्ञेय—माद्यं कूटचतुष्टयं ॥ पश्चादुत्तर-
तस्तुर्या—नैर्ऋत्यां पंचमं मतं ॥ ८४ ॥ दक्षिणोत्तरया पंक्त्या । शेष कूटचतुष्टयं ॥ मानतोऽ-
प्यपि कूटानि । हिमवद्गिरिकूटवत् ॥ ८५ ॥ नवमं निषधासन्न । दक्षिणस्यां किलाष्टमात् ॥
सर्वथा माल्यवद्भावि—हरिस्सहसमं स तत ॥ ८६ ॥ ज्ञेया चमरचंचाव—देतत्कूटपतेर्हरेः ॥
मेरोरपाच्यां नगरी । जंबूद्वीपे परत्र रा ॥ ८७ ॥ तथोक्तं जंबूद्वीपप्रज्ञप्तिसूत्रे जहा मालवं-
तस्स हरिस्सहकूडे तह चेव हरिकूडे रायहाणी तह चेव दाहिणेणं चमरचंचारायहाणी तह
णायव्वा. क्षेत्रसमासवृत्तावपि सा चमरचंचाराजधानीवत्प्रत्येयेति. शेषकूटपतीनां तु । नगर्यो
विजयोपमाः ॥ जंबूद्वीपेऽन्यत्र मेरो—र्दक्षिणस्यां यथायथं ॥ ८८ ॥ दिक्कुमार्यौ निवसत—

स्तत्र पंचमषष्टयोः ॥ पुष्पमाला निंदिताख्ये । शेषेषु पूर्ववत्सुराः ॥ ८९ ॥ भोगंकरादिमा गध–मादनाद्यद्रिसानुषु ॥ वसंत्यो दिक्कुमार्योऽष्टौ । या एवमिह भाषिताः ॥ ९० ॥ शैलेष्वमीषु क्रीडार्थं । तासां वासो भवेद् ध्रुवं ॥ वसंति च स्वस्वगज–दंताधो भवनेष्विमाः ॥ ॥९१॥ एकैकगजदंताधो । द्वे द्वे स्तो भवने तयोः ॥ तिर्यग्लोकं व्यतिक्रम्या–सुरादिभवनास्पदे ।९२। अधोलोकनिवासिन्यो–ऽत एवामूः श्रुते मताः ॥ भूशुद्धिसूतिवेश्मादि–नियुक्ता जिनजन्मनि ।९३। यद्यप्युत्तरकुरुवक्षस्कारयोर्यथायोग सिद्धहरिस्सहकूटवर्जकूटाधिपराजधान्यो यथाक्रमं वायव्यामैशान्यां च यथा प्रागभिहितास्तथा देवकुरुवक्षस्कारयोर्यथायोगं सिद्धहरिकूटवर्जकूटाधिपराजधान्यो यथाक्रममाग्नेय्यां नैर्ऋत्यां च वक्तुमुचितास्तथापि प्रस्तुतसूत्रसंबंधि यावदादर्शेषु पूज्यश्रीमलयगिरिकृतक्षेत्रविचारवृत्तौ च तथा दर्शनाभावात्, अस्माभिरपि राजधान्यो दक्षिणेनेत्यलेखि, इति श्रीजंबूद्वीपप्रज्ञप्तिवृत्तौ. अनयोर्नगयोर्दैर्घ्य–व्यासोच्चत्वादिकं सम ॥ गंधमादनसन्माल्य–वतोरिव विभाव्यतां ॥ ९४ ॥ संत्यथाभ्यां पर्वताभ्या–मंकपालीकृता इव ॥ मेरोर्दक्षिणतो देव–कुरवो निषधावधि ॥ ९५ ॥

अत्र देवकुरुर्नाम । देवः पल्योपमस्थितिः ॥ वसत्यतस्तथा ख्याता । यद्वेदं नाम शाश्वतं ॥ ९६ ॥ धनुःपृष्टव्यासजीवा–दिकं मानं तु धीधनैः ॥ अात्राप्युत्तरकुरुव–द्विज्ञेयमविशेषित ॥ ९७ ॥ किंत्वत्र निषधासन्ना । जीवा कल्प्या विचक्षणैः ॥ विद्युत्प्रभसौमनसा–यामानुसारतो धनुः ॥ ९८ ॥ शतान्यष्ट योजनानां । चतुस्त्रिंशद्युतानि च ॥ चतुरः साप्तिकान् भागान् । व्यतीत्य निषधाचलात् ॥ ९९ ॥ शीतोदायाः पूर्वतटे । विचित्रकूटपर्वतः ॥ चित्रकूटः परतटे । सामस्त्याद्यमकोपमौ ॥ ४०० ॥ किंत्वेतत्स्वामिनोर्नूनं । विचित्रचित्रदेवयोः ॥ जंबूद्वीपेऽन्यत्र पुर्यो । मेरोर्दक्षिणतो मताः ॥ १ ॥ अथैताभ्यां पर्वताभ्या–मुत्तरस्याममी स्मृताः ॥ ह्रदाः पंचोत्तरकुरु–ह्रदतुल्याः स्वरूपतः ॥ २ ॥ निषधाचलसंकाश–शतपत्रादिशोभितः ॥ निषधाख्यसुरावासः । प्रथमो निषधह्रदः ॥ ३ ॥ स देवकुरुसंस्थान–शतपत्राद्यलंकृतः ॥ देवकुर्वमरावासो । ह्रदो देवकुरुः परः ॥ ४ ॥ सूरनामा तृतीयस्तु । ह्रदः सूरसुराश्रितः ॥ सुलसस्वामिकस्तुर्यो । ह्रदः स्यात्सुलसान्निधः ॥ ५ ॥ भूषितः शतपत्राद्यै–र्विद्युदुद्योतपाटलैः ॥ विद्युत्प्रभः पंचमःस्या–द्विद्युत्प्रभाधिदैवतः ॥ ६ ॥

पद्मपद्मपरिक्षेप—तत्संख्यान्नवनादिकं ॥ अत्रापि पद्महृदव—द्विज्ञेयमविशेषतः ॥ ७ ॥
पूर्वपश्चिमविस्तीर्णा—स्ते दक्षिणोत्तरायताः ॥ प्राक् प्रत्यक् च दशदश । कांचनाचलचारवः
॥ ८ ॥ कांचनाद्रिहृदेशाना—मेषां विजयदेववत् ॥ समृद्धानां राजधान्यो । दक्षिणस्यां सुमे-
रुतः ॥ ९ ॥ विचित्रचित्रौ निषधा—द्यावदूरं व्यवस्थितौ ॥ विचित्र चित्रशैलाभ्यां । तावता
निषधो हृदः ॥ १० ॥ द्वितीयादिहृदानाम—प्येवमन्योऽन्यमंतरं ॥ तुल्यं तथांतिमहृद—क्षेत्रपर्य-
तयोरपि ॥ ११ ॥ एताः शीतास्पर्द्धयैव । शीतोदया द्विधाकृताः ॥ पूर्वापरार्द्धभावेन । सदेव-
कुरवोऽपि हि ॥ १२ ॥ शीतोदायास्तु यन्प्राच्यां । तत्पूर्वार्द्धमिहोच्यते ॥ शीतोदायाः प्रती-
च्यां य—दपरार्द्धं तदीरितं ॥ १३ ॥ तत्रैतासामपरार्द्ध—मध्यभागे निरूपितः ॥ समानः शा-
ल्मलीवृक्षो जंबूवृक्षेण सर्वथा ॥ १४ ॥ किंचैतच्छाल्मलीपीठं । ख्यातं रजतनिर्मितं ॥ प्रासा-
दभवनांतःस्थाः । कूटा अप्यत्र राजताः ॥ १५ ॥ शिखराकृतिमत्त्वेन । ख्यातोऽयं कूटशा-
ल्मली ॥ वेणुदेवाख्यः सुपर्ण—जातीयोऽस्य च नायकः ॥ १६ ॥ तथोक्तं स्थानांगसूत्रद्विती-
यस्थानके—तत्थणं दो महती महालया महद्दुमा पण्णत्ता यावत् कूटसामली चेव जंबूचेव सु-

दंसगा, तछगं दो देवा महिड्ढिया जाव महासोरका पलिउवमछितीया परिवसंति, तं गरुले चेव वेणुदेवे अणाढीए चेव जंबूदीवाहिवती, एतद्वृत्तावपि, गरुमः सुपर्णकुमारजातीयो वेणुदेवो नाम्ना इत्यादि. एवं च नाय सुपर्णकुमाराणां दाक्षिणात्य इंद्रः संभाव्यते, किंत्वन्य एव, तस्य हि इंद्रत्वेन सार्धपल्योपमरूपाया उत्कृष्टस्थितेर्न्याय्यत्वात्, अयं तु पल्योपमस्थितिक इति, मतांतरे तु—

क्रीडास्थानमयं वृक्षः । स्यात्सुपर्णकुमारयोः ॥ वेणुदेववेणुदालि–सुरयोरुत्तयोरपि ॥ ॥१७॥ तथा चाह सूत्रकृतांगचूर्णिकृत् शाल्मलीवृक्षवक्तव्यतावसरे —' तह वेणुदेवे वेणुदालीय वसइ ' तयोर्हि तत्क्रीडास्थानमिति. स्वरूपमुत्तरकुरु–नृतिरश्चां यदीरितं ॥ आयुःशरीरमानादि । तदत्राप्यनुवर्त्तते ॥ १८ ॥ कुरवो द्विविधाः समा इमाः । सुषमाद्भिः सुतमां परस्पर ॥ मिलिताः कलहाय मेरुणा । प्रविभक्ता इव मध्यवर्त्तिना ॥ १९ ॥ विश्वाश्चर्यदकीर्त्तिकीर्त्तिविजयश्रीवाचकेंद्रांतिष–द्राजश्रीतनयोऽतनिष्ट विनयः श्रीतेजपालात्मजः ॥ काव्यं यत्किल तत्र निश्चितजगत्तत्त्वप्रदीपोपमे । सर्गः सप्तदशः समाप्तिमगमद्विद्वत्प्रमोदप्रदः ॥ २० ॥

॥ इति श्रीलोकप्रकाशे सप्तदशः सर्गः समाप्तः ॥ श्रीरस्तु ॥

॥ अथ अष्टादशः सर्गः प्रारभ्यते ॥

पार्श्वं शंखेश्वरगोत्तमं । नत्वा तत्वाववोधदं ॥ स्वरूपं स्वर्णशैलस्य । यथाश्रुतमथोच्यते ॥ १ ॥ उत्तरस्यां स्थितो देव-कुरुभ्यः कनकाचलः ॥ उत्तराभ्यः कुरुभ्यश्च । दक्षिणस्यां प्रतिष्ठितः ॥ २ ॥ प्रत्यक्पूर्वविदेहेभ्यः । प्राक् पश्चिमविदेहतः ॥ रत्नप्रभाचक्रनाभि-रिव मध्येऽस्त्यवस्थितः ॥ ३ ॥ निमित्तहेतोर्भुवन-पर्यायभांडसंभवे ॥ भ्रमतः कालचक्रस्य । भ्रमिदंड इवोच्छ्रितः ॥ ४ ॥ मानदंड इवोदस्तो । जंबूद्वीपमिमीषया ॥ तथैव स्थापितो धात्रा । मेयं मत्वाभितोऽव्ययकं ॥ ५ ॥ स्निग्धयोर्ध्वीकृतो धात्री-मात्रा स्वांकेऽतिकौतुकात् ॥ नीलचूलो बाल इव । प्रभावलयचोलकः ॥ ६ ॥ चंद्रार्कग्रहनक्षत्र-तारावृन्दसंततेः ॥ भ्रमंत्या मनुजक्षेत्रे । मेढीदंड इवाहितः ॥ ७ ॥ नीलवन्निषधोन्मत्त-दंतिनोर्युद्ध्यतोर्मिथः ॥ मध्ये सीमास्तंभ इव । गजदंताद्रिदंतयोः ॥ ८ ॥ तिर्यग्लोकमहाब्जस्य । स्पष्टाष्टाशादलश्रियः ॥ बीजकोश इवांतःस्थः । परागभरपिंजरः ॥ ९ ॥ जंबूद्वीपारुपोतस्य । मुक्तस्य लवणार्णवे ॥

कूपस्तंभ इवोत्क्षिप्तः । प्रभासितनपटांचितः ॥ १० ॥
न्यस्तपादो भद्रशाल–काननास्तरणोपरि ॥ पश्यन्निवोर्ध्वदमोऽयं । नगेंद्रः सेविनो नगान्
॥ ११ ॥ नरक्षेत्रकटाहेऽस्मिन्–नानापदार्थपायस ॥ पचतो विधिसूदस्य । दर्वीदंड इवोन्नतः ॥
॥ १२ ॥ प्रादुश्चूनः सौमनसो–त्तरीयांशुजलप्लुतः ॥ देवार्चक इवोन्नंदि–नंदनारामधौति-
कः ॥ १३ ॥ एकादशभिराढ्यकुलकं ॥ स चैकया पद्मवर–वेदिकया परिष्कृतः ॥ वनेन चा-
ञ्चितो नाना–रत्नज्योतिःप्रभासुरः ॥ १४ ॥ सहस्रान्नवनवतिं । योजनानां स उन्नतः ॥ यो-
जनानां सहस्रं चा–वगाढो वसुधांतरे ॥ १५ ॥ लक्षयोजनमानोऽसौ । सर्वाग्रेण भवेदिति ॥
चत्वारिंशदधिकानि । चूलाया योजनानि तु ॥ १६ ॥ योजनानां सहस्राणि । दशान्या नव-
तिस्तथा ॥ योजनस्यैकादशांशा । दश मूलेऽस्य विस्तृतिः ॥ १७ ॥
अयं जंबूद्वीपप्रज्ञप्तिसूत्रबृहत्क्षेत्रसमासाभिप्रायः, श्रीसमवायांगे तु ' मंदरेण पव्वए मू-
ले दसजोअणसहस्साइं विक्खंभेणं पण्णत्ते ' इति ज्ञेयं. एकत्रिंशत्सहस्राणि । शता नव दशा-
धिकाः ॥ योजनानां त्रयश्चैका–दशांशाः परिधिस्त्विह ॥१८॥ योजनानां सहस्राणि । दशा-

स्य समभूतले ॥ सहस्रमेकं शिखरे । व्यासश्चूलोपलक्षिते ॥ १९ ॥ एकविंशत्सहस्राणि । योजनानां शतानि षट् ॥ त्रयोविंशत्यधिकानि । परिधिः समभूतले ॥ २० ॥ ऊर्ध्वं च परिविस्तरस्य । योजनानां भवेत्क्रिरः ॥ सहस्राणि त्रीणि चैकं । द्वाषष्ट्यग्न्यधिकं शतं ॥ २१ ॥ अथ सर्वत्र विष्कंभज्ञानाय करणं–सहस्रयोजनव्यासा–न्मेरोरुपरिभागतः ॥ यत्रोत्तीर्य योजनादौ । विष्कंभो ज्ञातुमिष्यते ॥ २२ ॥

तद्योजनप्रभृत्येका–दशभिः प्रविभज्यते ॥ लब्धे सहस्रसंयुक्ते । व्यासोऽस्य वांछितास्पदे ॥ २३ ॥ यथाधो नवनवतिं । सहस्राण्यूर्ध्वभागतः ॥ अतीत्यात्र प्रदेशे चे–द्विष्कंभं ज्ञातुमिच्छसि ॥ २४ ॥ तदेतैर्नवनवति–सहस्रै रुद्रभाजितैः ॥ सहस्रान्नव संप्राप्तान् । सहस्रसहितान् कुरु ॥ २५ ॥ एवं दश सहस्राणि । जातानि धरणीतले ॥ विष्कंभो मेरुशैलस्य । सर्वत्रैवं विभाव्यतां ॥ २६ ॥ अथवा प्रकारांतरेणेदमेव करणं. मूलाद्यत्र योजनाद्या—वुत्पत्य ज्ञातुमिष्यते ।. व्यासस्तस्मिन् योजनादौ । विभक्ते रुद्रसंख्यया ॥ २७ ॥ यल्लब्धं तन्मूलमत्का–द्विस्तागाद्बोधयेद्बुधः ॥ यच्छेषं तन्मितस्तस्य । व्यासोऽभीष्टस्थले यथा ॥ २८ ॥ कं-

द्दात्सहस्त्रमुत्पत्य । व्यासं जिज्ञाससे यदि ॥ सहस्रमेकादशघ्नि—घ्नंज लब्धमिदं पुनः ॥२९॥
नवतिर्योजनान्यंशा । दश चैकादशात्मकाः ॥ कंदव्यासाद्विशोधयेदं । ततः शेषाणि यानि तु
॥३०॥ योजनानां सहस्राणि । दशैनावान्महीतले ॥ विष्कंभः स्वर्णशैलस्य । सर्वत्रैवं विभा-
व्यतां ॥ ३१ ॥ व्यासानुसारेण सर्वत्रोच्चत्वज्ञानाय करणं—यावान् यत्रास्य विस्तारो । निश्चि-
तो भूनलादिषु ॥ तस्मिन्मूलस्य विस्तारा—द्वोधिते यत्तु शिष्यते ॥ ३२ ॥ गुण्यं तदेकादश-
भि—र्यद्भवेत्तत्प्रमाणतः ॥ उच्चत्वमस्य विष्कंभ—स्यानुसारेण तद्यथा ॥ ३३ ॥ योजनानां स-
हस्राणि । दश व्यासोऽस्य भूतले ॥ मूलविष्कंभतस्तेषु । विशोधितेष्वदः स्थितं ॥ ३४ ॥
नवतिर्योजनान्यंशा । दश चैकादशात्मकाः ॥ अस्मिन्नेकादशगुणे । सहस्राण्ययमुच्चता ॥३५॥
मूलभूतलयोर्मध्ये । सर्वत्रैवं विभाव्यतां ॥ विस्तारस्यानुसारेण । तुंगत्वमीप्सितास्पदे ॥३६॥
अथ सर्वत्र विष्कंभवृद्धिहानिज्ञानाय करणं—उपरितने विस्तारे—ऽधस्तनविस्तारतः कृते दूरं
॥ तन्मध्यवर्त्तिशैलो—च्छ्रयेण शेषे हृते विदुषा ॥ ३७ ॥ यल्लब्धं तदुन्नयतो । वृद्धिर्गिरिमौ-
लितो ह्यधःपतने ॥ तावत्येव च हानि—र्मौलावारोहणेऽधस्तः ॥ ३८ ॥ तथाहि—

साहस्रे ( १००० ) मौलिविष्कंभे । कंदव्यासाद्विशोधिते ॥ १००९० भाग १० । ११ ।
शेषं नवत्यधिकानि । शतानि नवतिः स्थितं ९० ९० भाग १० । ११ ॥ ३९ ॥ अंशा दशै-
कादशोच्छा-श्चैषां कर्त्तुं सवर्णनं ॥ योजनानां राशिमेका-दशभिर्गणयेद्बुधः ॥ ४० ॥ भागान्
दशोपरितनान् । क्षिपेज्जाता इमे ततः ॥ लक्षं ( १००००० ) भाज्यराशिमेनं । क्वचित्संस्था-
पयेद्बुधः ॥ ४१ ॥ नगोच्छ्रयो लक्षरूपो । भाजको रुद्रसंगुणः ॥ लक्षाण्येकादश जात-स्तं
भागाधमधो न्यसेत् ॥ ४२ ॥ १ शू० ५ अल्पत्वेन विभाज्यस्य । भूयस्त्वाद्भाजकस्य च ॥
भागाप्राप्त्यापवर्त्येते । लक्षेण ११ शू० ५ भाज्यभाजकौ ॥ ४३ ॥ उपर्येकः स्थितोऽधस्ता-
देकादश स्थितास्ततः ॥ लब्ध एकादश भागो १|११ । योजनं योजनंप्रति ॥ ४४ ॥ यद्वा
भाज्यभाजकयो-रुभयोर्लक्षरूपयोः ॥ १ शू० ५ राशिर्भाज्योंशरूपोऽस्ति । भाजको योज-
नात्मकः ॥ ४५ ॥ प्रतियोजनमेकोंश-स्तत्सुखेनैव लभ्यते ॥ १ शू० ११ इयं मेरोरुन्नयतो ।
वृद्धिहानी निरूपिते ॥ ४६ ॥ ज्ञातुमिष्टे वृद्धिहानी । तत्र यद्येकपार्श्वतः ॥ द्वाविंशतिविभक्त-
स्य । योजनस्य लवस्तदा १ ॥ ४७ ॥ ततोऽयं भावः—

यावदुत्पत्यते कंदा-दंगुलयोजनादिकं ॥ एकादशस्तस्य ज्ञागो। कंदव्यासात्क्षयं व्रजेत् ४१ ॥ ४८ ॥ तथाहि—एकादशस्वंगुलेषु। समुत्क्रांतेषु मूलतः ॥ क्षीयते मूलविष्कंज्ञात्। संपूर्णमेकमंगुलं ॥ ४९ ॥ योजनेष्वपि तावत्सु। समुद्यातेषु मूलतः ॥ क्षीयते मूलविष्कंज्ञा—त्संपूर्णमेकयोजनं ॥ ५० ॥ एवं योजनशतसहस्रेष्वपि ज्ञाव्यं. अत एव योजनानां। सहस्रे मूलतो गते ॥ नवतिर्योजनान्यंशा। एकादशोज्ञवा दश ॥ ५१ ॥ एतावानेकादशोंशः। सहस्रस्य क्षय गतः ॥ ततः सहस्राणि दश। विष्कंज्ञो धरणीतले ॥ ५२ ॥ एकादशस्वेकादश—स्वतिक्रांतेषु ज्ञूमितः ॥ सहस्रेषु किलैकैकं। सहस्र व्यासतो'हमेत् ॥ ५३ ॥ एवं च नवनवतेः। सहस्राणामतिक्रमे ॥ शिरोज्ञागेऽस्य विष्कंज्ञः। सहस्रमवशिष्यते ॥ ५४ ॥ यद्वा कदायोजनानां। लक्षेऽतीते शिरस्तले ॥ लक्षस्यैकादशो ज्ञाग। एतावान् परिहीयते ॥५५॥

नगतिर्योजनशता—न्यधिका नवतिस्तथा ॥ अंशा दशैकादशोत्थाः। सहस्रं शिष्यते ततः ॥ ५६ ॥ प्रत्येक परितः पच—शतविस्तृतयोर्ननु ॥ नंदनसौमनसयोः। मज्ञावान्मेखलाद्वये ॥ ५७ ॥ योजनानां सहस्रस्य। हिर्नवेद्युगपत्त्रुटिः ॥ कथमेकादशज्ञाग—हानिस्तदुपपद्य-

ते ॥ ५८ ॥ युग्मं ॥ अत्रोच्यते कर्णगत्या । समाधेयमिदं बुधैः ॥ का कर्णगतिरित्येवं । यदि पृछसि तच्छृणु ॥ ५९ ॥ कंदादारज्य शीखरं । यावत्तदुन्नयस्पृशि ॥ दत्तायां दवरिकायां । स्थिरहस्तेन धीमता ॥ ६० ॥

अपांतराले यत्क्वापि । कियदाकाशमास्थितं ॥ तत्समग्रं कर्णगत्या । मेरोराज्ञाव्यमित्यतः ॥ ६१ ॥ तत्प्रकल्प्य मेरुतया । प्राहुर्गणितकोविदाः ॥ सर्वत्रैकादशज्ञाग–परिहाणिं यथोदितां ॥ ६२ ॥ अयं चार्थः श्रीजिनज्ञद्रगणिक्षमाश्रमणपूज्यैरपि विशेषणवत्यां लवणोदधिघनगणितनिरूपणावसरे दृष्टांतद्वारेण ज्ञापित एवेति. अतोऽयं मेखलायुग्मा–विवक्षया क्रमात्तनुः ॥ मूले च विस्तृतः सुष्टू–दस्तगोपुछसंस्थितः ॥ ६३ ॥ अथात्र त्रीणि कांमानि । वर्त्तंते कनकाचले ॥ कांडं विज्ञागो नियत–विशिष्टपरिणामवान् ॥ ६४ ॥ चतुर्विधं कांडमाद्यं । मृत्तिकाबहुलं क्वचित् ॥ पाषाणबहुलं वज्र–बहुलं शार्करामयं ॥ ६५ ॥

कांड द्वितीयमप्येवं । चतुर्द्धास्य निरूपितं ॥ अंकजं स्फाटिकं क्वापि । सौवर्णं राजतं तथा ॥ ६६ ॥ जात्यजांबूनदमयं । तृतीयं कांममीरितं ॥ त्रयाणामपि कांडानां । परिमाण-

मत्रोच्यते ॥ ६७ ॥ सहस्रयोजनोन्मान–माद्यमारभ्य कंदतः ॥ त्रिषष्टिश्च सहस्राणि । द्वितीयं समभूतलात् ॥ ६८ ॥ ततस्तृतीयं षट्त्रिंश–त्सहस्रावधि कीर्त्तितं ॥ एवं कांडैस्त्रिभिस्तस्य । लक्षमेक समाप्यते ॥ ६९ ॥

अयं जंबूद्वीपप्रज्ञप्तिसूत्राभिप्रायः, समवायांगे तु अष्टत्रिंशत्तमे समवाये द्वितीयविभागोऽष्टात्रिंशद्योजन सहस्राण्युच्चत्वेन भवतीत्युक्तमिति ज्ञेयं. चतुर्विधत्वे नन्वेव–माद्यद्वितीयकांडयोः ॥ मृत्तिकादिविभागानां । न पृथक्कांडता कथं ॥ ७० ॥ अत्रोच्यते—पृथ्व्यादिवस्तुजत्वेऽपि । नैयत्येनोक्तकांडयोः ॥ पृथ्व्यादिरूपभागाना–मविवेकान्न कांडता ॥ ७१ ॥ चतुर्भिश्चायमभितो । वनखंडैरलंकृतः ॥ दानशीलतपोभावै–जैनधर्म इवोन्नतः ॥ ७२ ॥ तत्र भूमौ भद्रशालं । क्रमान्मेखलयोर्द्वयोः ॥ नंदनं सौमनसं च । शिखरे पंडकं वनं ॥ ७३ ॥ तत्राद्यं भद्रशालाख्यं । मेरोः पश्चिमपूर्वतः ॥ द्वाविंशतिर्द्वाविंशतिः । सहस्राण्यायतं मतं ॥७४॥ सार्द्धे द्वे योजनशते । दक्षिणोत्तरविस्तृतं ॥ स्थितं मेरुं परिक्षिप्य । वलयाकृतिनात्मना ।७५। अत्रेयमुपपत्तिः—पूर्वस्यां पश्चिमायां वा । य आयामोऽस्य वर्णितः ॥ सोऽष्टाशीत्या विभक्तः

सन् । विस्तारोऽस्यैकपार्श्वतः ॥ ७६ ॥ किंच—

उदीच्यो दाक्षिणात्यो वा । विस्तारोऽस्य वनस्य यः ॥ सोऽष्टाशीत्या ताडितः स–न्ना-
यामोऽस्यैकपार्श्वतः ॥ ७७ ॥ भद्रशालवनं चैत–दष्टधा विहितं किल ॥ शीतोदया शीतया
च । गजदंताद्रिमेरुभिः ॥ ७८ ॥ तथाहि—एको भागो मंदरस्य । प्राच्यां पश्चिमतः परः ॥
विद्युत्प्रभसौमनस–मध्येऽपाच्यां तृतीयकः ॥ ७९ ॥ तुर्यश्चोत्तरतो माल्य–वद्गंधमादनांतरे ॥
भागाः सर्वेऽप्यमी शीता–शीतोदाभ्यां द्विधाकृताः ॥ ८० ॥ तच्चैवं–उदीच्यांशो द्विधा चक्रे
। शीतया प्राक्प्रवृत्तया ॥ प्राचींप्रति प्रस्थितया । प्राक्खंडोऽपि द्विधा कृतः ॥ ८१ ॥

शीतोदया याम्यखंडो । द्विधोदग्गतया कृतः ॥ द्विधा पश्चिमखंडोऽपि । कृतः प्रत्यक्-
प्रवृत्तया ॥ ८२ ॥ इत्येवमष्टभागेऽस्मिन् । मेरोर्दिक्षु चतसृषु ॥ सिद्धायतनमेकैकं । पंचाश-
द्योजनोत्तरं ॥ ८३ ॥ उक्तान्येतानि हिमव–चैत्यतुल्यानि सर्वथा ॥ स्वरूपतो मानतश्च । से-
वितानि सुरासुरैः ॥ ८४ ॥ विदिक्षु पुनरेकैकः । प्रासादस्तावदंतरे ॥ योजनानां पंच शता–
न्युच्चोऽर्ध्वं विस्तृतायतः ॥ ८५ ॥ चतुर्दिशं चतसृभि–स्ते वापीभिरलंकृताः ॥ योजनानि द-

शोद्दिश—स्ताः षोडशापि वापिकाः ॥ ८६ ॥ पंचाशद्योजनायामा । आयामार्द्धं च विस्तृताः ॥ स्वरूपतो नामतश्च । जंबूवापीसमाः समाः ॥ ८७ ॥ आग्नेय्यामथ नैर्ऋत्यां । यौ प्रासादौ प्रतिष्ठितौ ॥ तौ सौधर्मसुरेंद्रस्य । तदर्हासनशालिनौ ॥ ८८ ॥ वायव्यामथ चैशान्यां । यौ प्रासादौ प्ररूपितौ ॥ तावीशानसुरेंद्रस्य । तद्योग्यासनशोभिनौ ॥ ८९ ॥ अष्टौ दिग्गजकूटानि । वनेऽस्मिन् जगदुर्जिनाः ॥ गजाकृतीनि कवयो । यान्याहुर्दिग्गजा इति ॥ ९० ॥ पद्मोत्तरो नीलवांश्च । सुहस्त्यथांजनागिरिः ॥ कुमुदश्च पलाशश्च । वतंसो रोचनागिरिः ॥९१॥ अन्ये तु रोचनागिरिस्थाने रोहणागिरिं पठंति. मेरोरुत्तरपूर्वस्यां । शीतायाः सरितः पुनः ॥ गच्छंत्याः प्रागभिमुख—मुत्तरस्यामिहादिमः ॥ ९२ ॥ प्रादक्षिण्यक्रमेणाथ । मेरोर्दक्षिणपूर्वतः ॥ शीतायाः प्राक् प्रवृत्ताया । दक्षिणस्यां च नीलवान् ॥ ९३ ॥ मेरोर्दक्षिणपूर्वस्यां । शीतोदायाश्च पूर्वतः ॥ मेरोर्दक्षिणदिक्स्थायाः । सुहस्ती नाम दिग्गजः ॥ ९४ ॥ अंजनो नाम दिग्नागो । नैर्ऋत्यां मेरुभूधरात् ॥ शीतोदायाः पश्चिमतः । प्रत्यांत्या उत्तरांप्रति ॥ ९५ ॥

दिग्नागः कुमुदोऽप्येव । नैर्ऋत्यामेव मेरुतः ॥ शीतोदाया दक्षिणतः । प्रयांत्या वारुणीं

प्रति ॥ ९६ ॥ उत्तरापरतो मेरोः । पलाशोनाम दिग्गजः ॥ पश्चिमाभिमुखं यांत्याः । शीतोदाया उदक् च सः ॥ ९७ ॥ अश्वावतंसकोऽप्येवं । वायुकोणे सुमेरुतः ॥ स शीतायाः पश्चिमतः । प्रयांत्या दक्षिणांप्रति ॥ ९८ ॥ मेरोरुत्तरपूर्वस्या–मष्टमो रोचनाचलः ॥ दक्षिणाभिमुखं यांत्याः । शीतायाः पूर्वतश्च सः ॥ ९९ ॥ एकैकस्यां विदिश्येवं । द्वौ द्वौ कूटौ निरूपितौ ॥ प्रासादसिद्धायतनां–तरालेषु किलाष्टसु ॥ १०० ॥ तथाहि वृद्धसंप्रदायः–भद्रशालवने मेरो–श्चतसृोऽपि दिशः किल ॥ नदीप्रवाहै रुद्धास्त–द्दिक्ष्वेवार्हद्गृहाणि न ॥ १ ॥ किंतु नद्यंतिकस्थानि । भवनानि किलार्हतां ॥ गजदंतसमीपस्थाः । प्रासादाश्च त्रिभौजसां ॥ २ ॥ तदंतरालेष्वष्टासु । करिकूटा यथोदिताः ॥ दर्शितः स्थाननियम–स्तत्राप्येष विशेषतः ॥३॥

बहिरुत्तरकुरुभ्यो । मेरोरुत्तरपूर्वतः ॥ शीताया उत्तरदिशि । प्रासादः परिकीर्त्तितः ॥ ॥ ४ ॥ मेरोः प्राच्यां दक्षिणतः । शीतायाः सिद्धमंदिरं ॥ एतस्योभयतः कूटौ । द्वौ प्रज्ञप्तौ जिनेश्वरैः ॥ ५ ॥ बहिर्देवकुरूणां च । मेरोर्दक्षिणपूर्वतः ॥ शीताया दक्षिणदिशि । प्रासादः कीर्त्तितो जिनैः ॥ ६ ॥ मध्ये देवकुरूणां वै । शीतोदायाश्च पूर्वतः ॥ मेरोर्दक्षिणतः सिद्धा–य-

तनं स्मृतमागमे ॥ ७ ॥ अस्याप्युन्नयतः कूटौ । समश्रेण्या व्यवस्थितौ ॥ धुर्यौ युगंधरस्ये-
व । महींद्रस्येव चामरौ ॥ ८ ॥

शीतोदाया दक्षिणतो । नैर्ऋत्यां स्वर्णभूभृतः ॥ बहिर्देवकुरूणां च । प्रासादः प्राग्वदाहि-
तः ॥ ९ ॥ शीतोदाया उत्तरतः । पश्चिमायां सुमेरुतः ॥ सिद्धानां सदनं कूटौ । तस्याप्युन्न-
यतः स्थितौ ॥ १० ॥ शीतोदाया उत्तरतो । वायुकोणे सुमेरुतः ॥ बहिरुत्तरकुरुभ्यः । प्रा-
सादः सुरभूभृतः ॥ ११ ॥ पूर्वस्यामथ शीताया । उदीच्यां मंदराचलात् ॥ उत्तरासां कुरू-
णां च । मध्येऽस्ति सिद्धमंदिरं ॥ १२ ॥ कूटौ द्वौ तदुन्नयतो । मेरोः सर्वेऽप्यमी स्थिताः ॥
विहारकूटप्रासादाः । पंचाशद्योजनांतरे ॥ १३ ॥ योजनानां पंच शता–न्युच्चैस्त्वेन भवंत्य-
मी ॥ गव्यूतानां पंचशतीं । निमग्नाश्च धरोदरे ॥ १४ ॥ मूले पंचयोजनानां । शतान्यायत-
विस्तृताः ॥ मध्ये त्रीणि पचसप्त–त्यधिकानि शतानि च ॥ १५ ॥ उपर्यर्द्धतृतीयानि । श-
तानि विस्तृतायताः ॥ कूटा इमे वर्षधर–गिरिकूटसमा इति ॥ १६ ॥ सर्वेऽमी वनखंडेन ।
पद्मवेदिकयान्विताः ॥ सिंहासनाढ्यस्वस्वेश–प्रासादभ्राजिमौलयः ॥ १७ ॥ द्वाषष्टिं योजना-

न्येते । प्रासादा विस्तृतायताः ॥ एकत्रिंशद्योजनोच्चा । रम्या विविधरत्नजाः ॥ १८ ॥ एकप-
ल्यायुषस्तेषु । स्वस्वकूटसमाभिधाः ॥ क्रीडंति नाकिनः स्वैरं । दिक्कुंभिकूटनायकाः ॥१९॥
स्वस्वकूटविदिक्ष्वेषां । राजधान्यः प्रकीर्त्तिताः ॥ जंबूद्वीपेऽन्यत्र यथा–योगं विजयदेववत् ॥
॥ २० ॥ एतेषु करिकूटेषु । पूर्वाचार्यैश्चिरंतनैः ॥ पश्यते जिनचैत्यानि । स्तोत्रेषु शाश्वतार्ह-
तां ॥ २१ ॥ जंबूद्वीपप्रज्ञप्त्यादि–सूत्रे तूपलभामहे ॥ न सांप्रतं तत्र तत्वं । जानंति श्रुत-
पारगाः ॥ २२ ॥ अत एवोक्तं रत्नशेखरसूरिभिः स्वोपज्ञक्षेत्रविचारे–करिकूडकुंडनइदह–कुरु-
कंचणजमलसमविअट्टेसु ॥ जिणभवणविसंवाओ। जो तं जाणंति गीअत्था ॥ २३ ॥ भद्रशाल-
वनस्यास्य । समभूमेरुपर्यथ ॥ स्यात्पंचयोजनशता–तिक्रमे नंदनं वनं ॥ २४ ॥ योजनानां
पंचशता–न्येतद्विष्कंभतो मतं ॥ स्थितं मेरुं परिक्षिप्य । वलयाकृतिनात्मना ॥ २५ ॥ बा-
ह्याभ्यंतररूपं हि । विष्कंभद्वितयं भवेत् ॥ गिरीणां मेखलाभागे । ततोऽत्र द्वयमुच्यते ॥
॥ २६ ॥ एक एकादशभागो । योजनस्यापचीयते ॥ प्रतियोजनमेवं च । पचशत्या व्यतिक्र-
मे ॥ २७॥ लभ्यानि पंचचत्वारिं–शद्योजनानि पंचभिः ॥ एकादशांशैर्युक्तानि । त्यज्यंते मू-

त्वविस्तृते: ॥ २८ ॥ दशसहस्ररूपाया—स्तदैतदवशिष्यते ॥ शतानि नवनवति—श्चतुष्पंचाशदेव च ॥ २९ ॥

एकादशांशाः पट् बाह्यो । व्यासोऽयं तत्र न्नून्नृतः ॥ दक्षिणोत्तरयोः पूर्वा—परयोर्वा वनांतयोः ॥ ३० ॥ एकत्रिंशद्योजनानां । सहस्राणि चतुःशती ॥ एकोनाशीतिरधिका । परिक्षेपोऽत्र वाह्यतः ॥ ३१ ॥ बाह्ये च गिरिविष्कंभे । सहस्रयोजनोनिते ॥ स्यादंतर्गिरिविष्कंभः । स चायं परिभाव्यते ॥ ३२ ॥ सहस्राणि योजनाना—मष्टौ नव शतानि च ॥ चतुःपंचाशत्रयांशाः । षडेकादशनिर्मिताः ॥ ३३ ॥ सहस्रा योजनान्यष्टा—विंशतिस्त्रिशती तथा ॥ षोडशाढ्या तथा भागा । अष्टावेकादशोद्धिताः ॥ ३४ ॥ अंतः परिरयोऽयं च । भवेदस्मिन्न वने गिरेः ॥ वनमेतदथो पद्म—वेदिकावनवेष्टितं ॥ ३५ ॥ एवं चत्वार्यपि वनानि ज्ञेयानि. सिद्धायतनमेकैकं । पूर्वादिदिक्चतुष्टये ॥ सुवर्णशैलतः पंचा—शद्योजनव्यतिक्रमे ॥ ३६ ॥

विदिक्षु तावतैवास्मात् । प्रासादा भद्रशालवत् ॥ तेषां चतुर्दिशं वाप्यः । प्रत्येकमिति पोग्दश ॥ ३७ ॥ नंदोत्तरा तथा नंदा । सुनंदा वर्द्धनापि च ॥ ऐशान्यां विदिशि प्राहु—र्वापी

नामानि सत्तमाः ॥ ३८ ॥ नंदिषेणा तथा मोघा । गोस्तूपा च सुदर्शना ॥ आग्नेय्यां विदिशि प्राहु-र्वापीनामानि सत्तमाः ॥ ३९ ॥ भद्रा विशाला कुमुदा । तथा च पुंडरीकिणी ॥ नैर्ऋत्यां विदिशि प्राहु-र्वापीनामानि सत्तमाः ॥ ४० ॥ विजया वैजयंती चा-पराजिता जयंत्यपि ॥ वायव्यां विदिशि प्राहु-र्वापीनामानि सत्तमाः ॥ ४१ ॥ स्युश्चतस्रश्चतस्रस्ताः । पूर्वादिदिगनुक्रमात् ॥ स्थिताः परीत्य परितः । प्रासादांस्तान् विदिग्गतान् ॥ ४२ ॥

आग्नेय्यामथ नैर्ऋत्यां । प्रासादौ शक्रभर्तृकौ ॥ वायव्यामथ चैशान्यां । तावीशानसुरेशितुः ॥ ४३ ॥ कूटा नव भवंत्यत्र । नंदनाख्यं च मंदरं ॥ निषधाख्यं च हिमव-त्कूटं रजतनामकं ॥ ४४ ॥ रुचकं सागरचित्रं । कूटं वज्रबलाभिधं ॥ पंचाशता योजनैः स्यु-र्मेरोरेतानि नंदने ॥ ४५ ॥ पौरस्त्यसिद्धायतनै-शानीप्रासादयोः किल ॥ अंतरे नंदनं कूटं । तत्र मेघंकरा सुरी ॥ ४६ ॥ जंबूद्वीपेऽपरत्रास्या । राजधानी सुमेरुतः ॥ ऐशान्यां विदिशि प्रोक्ता । यथार्हं विजयादिवत् ॥ ४७ ॥ पौरस्त्यसिद्धायतना-ग्नेयीप्रासादयोः किल ॥ अंतरे मंदरं कूटं । तत्र मेघवती सुरी ॥ ४८ ॥ राजधानी पुनरस्याः । पूर्वस्यां मेरुतो मता ॥ जं-

बूद्वीपेऽन्यत्र यथा—स्थानं विजयदेववत् ॥ ४९ ॥ अपाच्यसिद्धायतना—ग्नेयीप्रासादयोः कि-
ल ॥ अपांतराले निषधं । सुमेधा तत्र देवता ॥ ५० ॥ मेरोर्दक्षिणतस्तस्या । राजधानीं ज-
गुर्बुधाः ॥ सहस्रान् द्वादशातीत्य । जम्बूद्वीपेऽपरत्र वै ॥ ५१ ॥ अपाच्यसिद्धायतना—त्प्रती-
च्यां पूर्वतः पुनः ॥ प्रासादान्नैर्ऋतीनिष्ठा—त्कूटं हैमवतं स्थित ॥ ५२ ॥
शोभते स्वामिनी तत्र । देवता मेघमालिनी ॥ जंबूद्वीपेऽन्यत्र तस्या । मेरुतो राजधा-
न्यपाक् ॥ ५३ ॥ मेघमालिनीस्थाने हेममालिनीति जंबूद्वीपप्रज्ञप्तिसूत्रे. दक्षिणस्यां प्रतीची-
ना—त्सिद्धायतनतस्तथा ॥ प्रासादान्नैर्ऋतीनिष्ठा—दुदीच्यां रजताभिधं ॥ ५४ ॥ सुवत्सा देव-
ता तत्र । प्रतीच्यां कनकाचलात् ॥ जंबूद्वीपेऽन्यत्र तस्या । राजधानी निरूपिता ॥ ५५ ॥
उत्तरस्यां प्रतीचीनात् । सिद्धायतनतस्तथा ॥ वायव्यकोणप्रासादा—दपाच्यां रुचकाभिध ॥
॥ ५६ ॥ वत्समित्रा तत्र देवी । पश्चिमायां सुमेरुतः ॥ जंबूद्वीपेऽन्यत्र तस्या । राजधानी
जिनैः स्मृता ॥ ५७ ॥
एवं च जंबूद्वीपप्रज्ञप्तिसूत्रवृत्तिबृहत्क्षेत्रसमाससूत्रवृत्तिसिरिनिलयक्षेत्रसमाससूत्रवृत्त्याद्य-

न्निप्रायेण सौमनसगजदंतसंबंधिपंचमकूटषष्ठकूटवासिन्यौ नंदनवनपंचमषष्ठकूटवासिन्यौ च दिक्कुमार्यौ तुल्याख्ये एव. स्थानांगसूत्रकल्पांतर्वाच्यटीकादिषु तु ऊर्ध्वलोकवासिनीषु वत्सावत्सामित्रास्थाने तोयधाराविचित्रे दृश्येते. नदीच्यसिद्धायतना–त्प्रतीच्यामथ पूर्वतः ॥ प्रासादाद्वायुकोणस्था–त्कूटं सागरचित्रकं ॥ ५८ ॥ बलाहका तत्र देवी । मेरोरुत्तरतः पुनः ॥ जंबूद्वीपेऽन्यत्र तस्या । राजधानीं जिना जगुः ॥ ५९ ॥ उदीच्यसिद्धायतना–त्प्राच्यां वायव्यकोणजात् ॥ प्रासादात्पश्चिमायां च । वज्रकूटमिहांतरे ॥ ६० ॥ वज्रसेना तत्र देवी । राजधानी सुमेरुतः ॥ उत्तरस्यामन्यजंबू–द्वीपे ज्ञेया यथागमं ॥ ६१ ॥

अयं तावत्क्षेत्रसमासबृहद्वृत्त्यभिप्रायः, जंबूद्वीपप्रज्ञप्तिसूत्रे च सागरचित्रकूटे वज्रसेना-देवी, वज्रकूटे बलाहका देवी पठ्यते इति ज्ञेयं. तथा क्षेत्रसमाससूत्रे ' वारिसेणेति ' पाठः, किरणावल्यादावपि वारिसेणेति, जंबूद्वीपप्रज्ञप्तिसूत्रे ' वइरसेणेति ' बृहत्क्षेत्रसमासवृत्तौ च वज्रसेनेति नामेति ज्ञेयं. एता अष्टाप्यूर्ध्वलोक–वासिन्यो दिक्कुमारिकाः ॥ सुगंध्यंबुपुष्पवृष्टिं । कुर्वंते जिनजन्मनि ॥ ६२ ॥ भद्रशालवनकूट–तुल्यत्वेन भवंत्यमी ॥ मूले पंचयोज-

वनेऽपि पंचशतिके । पंचाशद्योजनोत्तरं ॥ स्थितरे-
नाना । शतान्यायतविस्तृताः ॥ ६३ ॥ अत्रैव नंदनवने । सुधाशनधराधरात् ॥ ए
पां स्थितिः किंचि-दाकाशे बलकूटवत् ॥ ६४ ॥ तथोक्तं जंबूद्वीपप्रज्ञप्तिसूत्रे-' मंदरस्स-
शान्यां विदिशि प्रोक्तं । बलकूटं जिनेश्वरैः ॥ ६५ ॥ णंदणवणे बलकूडे णामं कूडे पण्णत्ते ' इत्यादि. विदिशो-
णं पव्वयस्स उत्तरपुरत्थिमेणं, एत्थणं णंदणवणे बलकूडे णामं कूडे पण्णत्ते ' इत्यादि. विदिशो-
ऽपि विशालाः स्यु-र्महतो वस्तुनः किल ॥ तद्धटेतावकाशोऽत्र । प्रासादबलकूटयोः ॥ ६६ ॥
अर्द्धेन नंदनवने । कूटमेतदवस्थितं ॥ अपरार्द्धेन चाकाशे । तदुक्तं पूर्वसूरिभिः ॥ ६७ ॥ आ-
ह—नंदनवने बलकूटं, नंदनवनं च पंचयोजनशतविस्तीर्णायां मेरोः प्रथममेखलायां, ततः
कथं तत्र माति? बलकूटेन पंचयोजनशतानि नंदनवनसत्कानि रुद्धानि, पंचयोजनशतानि
पुनर्मेरोर्बहिराकाशे, ततो न कश्चिद्दोषः, उक्तंच—
नंदनवणं रुंभित्ता । पंचसए जोअणाइ नीसरिउं ॥ आयासे पंचसए । रुंभित्ता ठाइ ब-
लकूडो ॥ १ ॥ इति क्षेत्रसमासवृत्तौ, जंबूद्वीपप्रज्ञप्तिसूत्रवृत्तौ तु—मेरुतः पंचाशद्योजना-
तिक्रमे ईशानकोणे ऐशानप्रासादः, ततोऽपीशानकोणे बलकूटमित्युक्तं, तदभिप्रायं न विद्मः.

माल्यवद्गिरिसंबंधि–हरिस्सहाख्यकूटवत् ॥ सर्वात्मनेदं विज्ञेयं । व्यासायामोच्चतादिभिः ॥
॥ ६९ ॥ बलनामा सुरस्तत्र । स्वामी तद्राजधान्यपि ॥ मेरोरुत्तरपूर्वस्यां । जंबूद्वीपेऽपरे
मता ॥ ७० ॥ बलाख्याया राजधान्याः । स्वरूपमखिलं खलु ॥ हरिस्सहायाः सदृशं । वि-
ज्ञेयमविशेषितं ॥ ७१ ॥ गच्छद्भिश्चैत्यनत्यर्थं । पांडुकेऽदो वनं पथि ॥ विश्रांत्यै श्रीयते विद्या-
चारणैर्मुनिचारणैः ॥ ७२ ॥ प्रत्यागच्छद्भिरानम्य । पांडुके शाश्वतान् जिनान् ॥ विश्राम्यद्भि-
र्भूष्यतेऽदो । जंघाचारणसाधुभिः ॥ ७३ ॥ अथास्य नंदनाभिख्य–वनस्य समभूतलात् ॥
योजनानां सहस्राणि । द्वाषष्टिं पंचभिः शतैः ॥ ७४ ॥ समन्वितान्यतीत्यास्ति । वनं सौ-
मनसाभिधं ॥ योजनानां पंचशतीं । विस्तीर्णं सर्वतोऽपि तत् ॥ ७५ ॥

अस्मिन्नपि परिक्षिप्य । स्थिते मेरुं समंततः ॥ वक्ष्ये बाह्यांतररूपौ । विष्कंभौ पूर्वन-
गिरेः ॥ ७६ ॥ योजनानां सहस्राणि । चत्वारि द्वे शते अपि ॥ द्विसप्तत्यधिके भागा । अ-
ष्टावेकादशोद्भवाः ॥ ७७ ॥ बहिर्वनाद्गिरेर्व्यास । एष पूर्वापरांतयोः ॥ दक्षिणोत्तरयोर्वापि । त-
त्रोपपत्तिरुच्यते ॥ ७८ ॥ मेरूच्चत्वस्यातीतानि । भुवः सौमनसावधि ॥ त्रिषष्टिर्योजनसह-

स्राणि रुद्रैर्नजैर्हुतः ॥ ७९ ॥ शतानि सप्तपंचाश–त्सप्तविंशानि तत्र च ॥ लब्धानि योज-
नान्यंशा–स्त्रयश्चैकादशोद्भवाः ॥ ८० ॥ अस्मिन् राशौ भूमिगता–न्मेरुव्यासाद्विशोधिते ॥
मानं यथोक्तं जायेत । बाह्याया गिरिविस्तृतेः ॥ ८१ ॥

व्यासो वनस्योन्नयतः । पंचपंचशतात्मकः ॥ बाह्यव्यासात्तन्महस्रे । शोधिते शेषमांत-
रः ॥ ८२ ॥ स्यायं–योजनानां सहस्राणि । त्रीणि किंच शतद्वयं ॥ त्रिसप्तत्यधिकं भागा
। अष्ट चैकादशोद्भवाः ॥ ८३ ॥ तथा–गिरेर्बाह्यः परिक्षेप–स्त्रयोदश सहस्रकाः ॥ एकादशाः
शताः पंच । षट् चैकादशजा लवाः ॥ ८४ ॥ अंतर्गिरिपरिक्षेपः । सहस्राणि दश त्रयः ॥
शतान्यैकोनपंचाशा–स्त्रयो भागाश्च रुद्रजाः ॥ ८५ ॥ एवमुक्ताभिलापेन । ज्ञेया वक्तव्यता-
खिला ॥ अत्रापि नंदनाभिख्य–वनवत्कूटवर्जिता ॥ ८६ ॥ तथैवैकैकमाशासु । विज्ञेयं सिद्ध-
मंदिरं ॥ विदिक्षु पुनरेकैकः । प्रासादो वापिकावृतः ॥ ८७ ॥ सुमनाः सौमनसा च । सौ-
मनाम्ना मनोरमा ॥ ऐशान्यां विदिशि प्रोक्ता । वाप्यः प्राच्यादिदिक्क्रमात् ॥ ८८ ॥ सदुत्त-
रकुरुर्देव–कुरुर्वह्निविदिश्यथ ॥ वाप्यश्चतस्रः क्रमतो । वारिषेणा सरस्वती ॥ ८९ ॥ विशा-

ला साधनन्दा चो—नयसेना च रोहिणी ॥ वाप्यश्चतस्रो नैर्ऋत्यां । ज्ञेयाः पूर्वाद्यनुक्रमात् ॥
॥ ९० ॥ नन्दोत्तरा तथा नन्दा । सुनन्दा च तथापरा ॥ नन्दावतीति वायव्य—कोणे वाप्यो य-
थाक्रमं ॥ ९१ ॥ आग्नेय्यामथ नैर्ऋत्यां । प्रासादौ शक्रभर्तृकौ ॥ ऐशान्यां वायव्यायां च ।
तावीशानसुरेशितुः ॥ ९२ ॥

एवं वनं सौमनसं । लेशतो वर्णितं मया ॥ वर्णयामि वनमथ । पांडुकं शिखरस्थितं
॥ ९३ ॥ अतीत्योर्ध्वं सौमनस—वनस्य समभूतलात् ॥ योजनानां सहस्राणि । षट्त्रिंशत-
मुपर्यधः ॥ ९४ ॥ मज्ञातं पंडकवन—मनेकसुरसेवितं ॥ चारणश्रमणश्रेणी—श्रितकल्पद्रुमा-
श्रयं ॥ ९५ ॥ चतुर्नवत्या संयुक्ता । योजनानां चतुःशती ॥ वनस्यास्य चक्रवाल—विष्कम्भो
वर्णितो जिनैः ॥ ९६ ॥ उपपत्तिश्चात्र मेरु—मौलेः सहस्रविस्तृतात् ॥ शोधयेच्चूलिकामूल—
व्यासं द्वादशयोजनीं ॥ ९७ ॥ अवशिष्टेऽर्धीकृते च । यथोक्तमुपपद्यते ॥ मानमस्य मरक-
त—मणिग्रैवेयकाकृतेः ॥ ९८ ॥ यथा मेरुं परिक्षिप्य । स्थिता पूर्ववनत्रयी ॥ परिक्षिप्य स्थि-
तमिह । तथेदं मेरुचूलिकां ॥ ९९ ॥ त्रिसहस्री योजनानां । द्वाषष्ट्या संयुतं शतं ॥ विशे-

षान्यधिकं किंचि–त्परिक्षेपोऽस्य वर्णितः ॥ १०० ॥
अस्मिन् मेरुचूलिकायाः । पंचाशद्योजनोत्तरं ॥ सिद्धायतनमेकैकं । प्राग्वद्दिशां चतुष्ट-
ये ॥ १ ॥ विदिक्षु पुनरेकैकः । प्रासादो वापिकावृतः ॥ नामान्यासां वापिकाना–मैशान्या-
दिविदिक्क्रमात् ॥ २ ॥ पुंड्रा पुंड्रप्रभाविव । सुरक्ताख्या तथापरा ॥ रक्तावतीति चैशान-
प्रासादे वापिका मताः ॥ ३ ॥ क्षीररसा चेक्षुरसा । तथामृतरसाभिधा ॥ वारुणीति किला-
ग्नेय–प्रासादे वापिकाः स्मृताः ॥ ४ ॥ शंखोत्तरा तथा शंखा । शंखावर्त्ता बलाहका ॥ प्रा-
सादे नैर्ऋतीसंस्थे । वापिकाः परिकीर्त्तिताः ॥ ५ ॥ पुष्पोत्तरा पुष्पवती । सुपुष्पा पुष्पमा-
लिनी ॥ वायव्यकोणे वाप्यः स्युः । सर्वाः पूर्वादितः क्रमात् ॥ ६ ॥ आग्नेयनैर्ऋत्यगतौ । प्रा-
सादौ स्तः शतक्रतोः ॥ वायव्यैशानसत्कौ ता–वीशानेंद्रस्य वर्णितौ ॥ ७ ॥ चैत्यप्रासादवा-
पीनां । मानं त्रिषु वनेष्वपि ॥ सप्तदशालवनव–च्छिज्ञेयमविशेषितं ॥ ८ ॥ अथास्मिन् पंड-
कवने–ऽभिषेकार्हाः स्वयंभुवां ॥ शिलाश्वतस्रः प्रक्षाभाः । स्नात्रोदकपवित्रिताः ॥ ९ ॥
आद्या पांडुशिलानाम्नी । द्वितीया पांडुकंबला ॥ तृतीया च रक्तशिला । चतुर्थी रक्तकं-

बला ॥ १० ॥ अमून्यासां नामानि जंबूद्वीपप्रज्ञप्तिसूत्रे, क्षेत्रसमासे तु पाडुकंबला १ अतिपांडुकंबला २ रक्तकंबला ३ अतिरक्तकंबला ४ एवमासां नामानि पठ्यंते. प्राच्यां मेरुचूलिकायाः । प्राक् पर्यंते वनस्य च ॥ भात्यर्जुनस्वर्णमयी । शिला पांडुशिलाभिधा ॥ ११ ॥ सा पूर्वापरविस्तीर्णा । तथोदग्दक्षिणायता ॥ आयामतो योजनानां । शतानि पंच कीर्त्तिता ॥ ॥ १२ ॥ शतान्यर्द्धतृतीयानि । मध्ये विष्कंभतो मता ॥ अर्द्धचंद्राकृतेस्तस्या । मध्ये परमविस्तृतिः ॥ १३ ॥ पूर्वापरः शरत्वेन । व्यासोऽस्याः परमो बुधैः ॥ जीवात्वेन च परमा—यामस्तु दक्षिणोत्तरः ॥ १४ ॥ परिक्षेपो धनुःपृष्ट—तया भाव्यो यथोचितः ॥ तत्तत्करणरीत्या वा । समानेयं शरादिकं ॥ १५ ॥

चतुर्योजनपिंडाया—मस्यां भाति चतुर्दिशं ॥ तोरणालंकृतं कम्रं । सोपानानां त्रयं त्रयं ॥ १६ ॥ अधिज्यचापाकारा या । वक्रता चूलिकादिशि ॥ ऋजुता स्वस्वदिक्क्षेत्रा—भिमुखास्या विभाव्यतां ॥ १७ ॥ अत्यंतकमनीयाया—मस्यां वृंदारकव्रजाः ॥ आसीनाश्च शयानाश्च । विंदंति परमां मुदं ॥ १८ ॥ वेदिकावनखंडाभ्यां । समंतादियमावृता ॥ कांचीदामनीलप-

रि—थालाभ्यामिव कामिनी ॥१९॥ दक्षिणस्यामुदीच्यां च । तस्यां सिंहासने स्थिते ॥ धनुः-
पंचशतव्यासा—यामे तदर्द्धमेदुरे ॥ २० ॥ ज्ञेये अर्धांतरालिंसहा—सनयोरिह वर्णकः ॥ अना-
वृतस्थलस्थाना—देवं चंद्रोदयं विना ॥ २१ ॥ तुल्यत्वादनयोर्व्यासा—यामाभ्यां चतुरस्रता ॥
चतुरस्रपीठबंध—रूपे ज्ञेये इमे ततः ॥ २२ ॥ उत्तरार्हे तत्र सिंहा—सने देवाश्चतुर्विधाः ॥
अभिषिंचंति कच्छादि—विजयाष्टकतीर्थपान् ॥ २३ ॥ सिंहासने दाक्षिणात्ये । विजयेषु किला-
ष्टसु ॥ वत्सादिकेषु संजातान् । स्नपयंति जिनेश्वरान् ॥ २४ ॥ अयं भावः—शिलायाः सं-
मुख स्तस्याः । पूर्वस्यां दिशि वर्त्तते ॥ क्षेत्रं पूर्वविदेहाख्यं । विजयास्तत्र षोडश ॥ २५ ॥ उ-
त्कर्षतोऽपि तत्र द्वौ । जायेते युगपज्जिनौ ॥ तत्र शीतोत्तराभावि—विजयाष्टकजो जिनः ॥
॥ २६ ॥ सिंहासने सुराधीशै—रौत्तराहेऽभिषिच्यते ॥ दाक्षिणात्ये दाक्षिणात्य—विजयाष्टक-
जो जिनः ॥ २७ ॥
एवं भाव्य पश्चिमाया—मपि सिंहासनद्वयं ॥ प्रत्यक्विदेहार्हद्योग्यं ॥ दक्षिणोत्तरयोर्दि-
शोः ॥ २८ ॥ तदेकैकं दाक्षिणात्यो—दीच्ययोः शिलयोः किल ॥ यद्भारतैरवतयो—रेकैकस्या-

हेतो जनिः ॥ २९ ॥ वनस्याग्नो दाक्षिणात्य—पर्यंते पांडुकंबला ॥ दक्षिणस्यां दिशि मेरु—चूलिकायाः प्रतिष्ठिता ॥ ३० ॥ दक्षिणोत्तरविस्तीर्णा । प्राक्पश्चिमायता च सा ॥ ऋजुतास्या दक्षिणस्यां । वक्रता चूलिकादिशि ॥ ३१ ॥ उपर्यस्या मध्यभागे । सिंहासनमनुत्तरं ॥ सुरेंद्रैस्तत्र भरत—जातो जिनोऽभिषिच्यते ॥ ३२ ॥ अमुष्या दक्षिणामुख्याः । सम्मुखं भरतं यतः ॥ ततस्तत्रत्यसार्वस्य । युक्तमत्राभिषेचनं ॥ ३३ ॥ शेषं तु मानसंस्थान—सोपानवेदिकादिकं ॥ सर्वासामपि वक्ष्य—मविशेषेण पांडुवत् ॥ ३४ ॥ वर्णतश्चोक्तरूपे द्वे । कुमुदोदरसोदरे ॥ वक्ष्यमाणे पुनः कोक—नदविद्रुमबंधुरे ॥ ३५ ॥

अयं तावज्जंबूद्वीपप्रज्ञप्तिसूत्रवृत्त्यभिप्रायः, बृहत्क्षेत्रसमाससूत्रवृत्तौ तु सर्वाः श्वेतसुवर्णमय्य उक्ता इति ज्ञेयं. वनपश्चिमपर्यंते । शिला रक्तशिलाभिधा ॥ प्रतीच्यां मेरुचूलाया—स्तपनीयमयी मता ॥ ३६ ॥ पूर्वपश्चिमविस्तीर्णा । सा दक्षिणोत्तरायता ॥ ऋजुतास्याः पश्चिमायां । वक्रता चूलिकादिशि ॥ ३७ ॥ स्यात्प्रतीचीसंमुखाया—मस्यां सिंहासनद्वयं ॥ जिनजन्माभिषेकार्हे । दक्षिणोत्तरयोर्दिशोः ॥ ३८ ॥ शीतोदोत्तरदिग्भावि—पद्मादिविजयाष्टके

॥ संजातोऽर्हन्नौत्तराह–सिंहासनेऽभिषिच्यते ॥ ३९ ॥ शीतोदादक्षिणाभावि–वप्रादिविजया-
ष्टके ॥ जातो जिनो दाक्षिणात्य–सिंहासनेऽभिषिच्यते ॥ ४० ॥ नदीच्यां मेरुचूलाया । नदी-
च्यांते वनस्य च ॥ रक्तस्वर्णमयी रक्त–कंबला वर्त्तते शिला ॥ ४१ ॥ दक्षिणोत्तरविस्तीर्णा ।
सा पूर्वपश्चिमायता ॥ उदग् ऋज्वी चूलिकातो । वक्रा तथोत्तरामुखी ॥ ४२ ॥ अस्यां सिंहा-
सनं मध्ये । मणिरत्नमनोहरं ॥ ऐरावतक्षेत्रजातो । जिनस्तत्राभिषिच्यते ॥ ४३ ॥ एवं मे-
रुगिरावस्मि–न्नभिषेकासनानि षट् ॥ अभिषेकस्तु युगप–च्चतुर्णामथवा द्वयोः ॥ ४४ ॥ पू-
र्वापरविदेहेषु । निशीथेऽर्हज्जनिर्यदा ॥ भरतैरवतक्षेत्रे । मध्याह्नः स्यात्तदा यतः ॥ ४५ ॥
शेषेष्वपि व्यवस्थेयं । तुल्या चतुर्षु मेरुषु ॥ सिंहासनान्यतस्त्रिंश–द्भवंति सर्वसंख्यया
॥ ४६ ॥ त्रिंशतस्तीर्थराजां तु । युगपन्न जनिर्भवेत् ॥ भरतैरावतविदे–हेषु कालविपर्ययात्
॥ ४७ ॥ युक्तैवोक्ता ततः प्राच्यै–रर्हतां युगपज्जनिः ॥ उत्कर्षाद्विंशतेरेव । दशानां च जघ-
न्यतः ॥ ४८ ॥ भारतेष्वैरावतेषु । कालस्य साम्यतो मिथः ॥ हीनाधिकानां पूर्वोक्त–संख्या-
तो न जनिर्भवेत् ॥ ४९ ॥ पांडुकाख्यवनस्यास्य । मध्यभागे सुनिश्चिते ॥ चकास्ति चूलि-

भा

विस्फुरत्पंमकवन–शरानांतः प्रतिष्ठितः ॥ यवारकस्तैव

का मेरो–र्वैर्यवैदूर्यरत्नजा ॥ ५० ॥ विस्फुरत्पंमकवन–शरानांतः प्रतिष्ठितः ॥ द्वादशैव यो-

श्व । भरतक्षेत्रजिनजन्मनि ॥ ५१ ॥ चत्वारिंशद्योजनानि । तुंगत्वेन भवेदसौ ॥ चत्वार्युपरि विस्तृता ॥

जनानि । मूले विष्कंभतो मता ॥ ५२ ॥ मध्ये च योजनान्यष्टौ । सातिरेकाणि किंच-

उदस्तातुञ्जगोपुछ–सुस्थसंस्थानशालिनी ॥ ५३ ॥ सप्तत्रिंशद्योजनानि । साधिका पचविंशतिः ॥ ५४ ॥

न ॥ मूलेऽस्याः परिधिर्मध्ये । साधिका पचविंशतिः ॥ ५४ ॥

साधिकानि द्वादशेष–त्परिक्षेप उपर्यथ ॥ व्यासानुसारतो भाव्यो–ऽन्यत्रापि परिधिर्बु-

धैः ॥ ५५ ॥ अथैतस्यां चूलिकाया–मुत्क्रांते योजनादिके ॥ मूलात्तत्पंचमलवः । हीयते मू-

लविस्तृतेः ॥ ५६ ॥ मेरोर्यथैकादशभि–र्योजनैर्योजनं हसेत् ॥ हीयते योजनं तद्व–त्पंचभि-

र्योजनैरिह ॥ ५७ ॥ उत्क्रांतायां मूलभागा–द्यथा योजनविंशतौ ॥ विंशतेः पंचमो भागः ।

स्याच्चतुर्योजनात्मकः ॥ ५८ ॥ तस्मिंश्च मूलविष्कंभा–दपनीते भवेदिह ॥ विष्कंभो योजना-

न्यष्टा–विंति सर्वत्र भावना ॥ ५९ ॥ यद्वा मौलेरतिक्रांत–मधो यद्योजनादिकं ॥ विभक्ते पंचभि-

स्तस्मिन् । लब्धे चतुर्भिरन्विते ॥ ६० ॥ जायतेऽभीप्सिते स्थाने । विष्कंभोऽत्र यथोर्ध्वतः

|| अपक्रांतौ योजनानां । विंशतेः स विज्ञाव्यते || ६१ || विंशतेः पंचभिर्भागे । योजनानां चतुष्टयी || लब्धा चतुर्भिर्युक्ताष्टौ । योजनानीति भावना || ६२ || असौ पद्मवेदिकया । परीता काननेन च || सहकारलतेवोच्चै–रालवालेन राजते || ६३ ||

एतस्याश्च शिरोभागे । कमनीयमहीतले || प्राप्नुवंति परां प्रीतिं । निर्जराः सुखनिर्भराः || ६४ || मध्येऽत्र सिद्धायतनं । तदेकं क्रोशमायतं || तथा क्रोशार्द्धविस्तारं । देशोनं क्रोशमुन्नतं || ६५ || अष्टोत्तरशतं तत्र । प्रतिमाः शाश्वतार्हतां || वैताढ्यचैत्यवत्सर्वं । वक्तव्यमिह वर्णनं || ६६ || अनेके सुरगंधर्वा–स्तत्र गायंति लीलया || शृण्वंति श्रोत्रसुभगं । जिनगीतं सुरेश्वराः || ६७ || जिनाग्रे तत्र नृत्यंत्यः । कुर्वंति त्रिदशांगनाः || मेरुमौलिस्थमरुतां । वंशारूढनटीभ्रमं || ६८ || किंचायं मंदरो १ मेरुः २ । सुदर्शनः ३ स्वयंप्रभः ४ || मनोरमो ५ गिरिराजो ६ । रत्नोच्चय ७ शिलोच्चयौ ८ || ६९ || लोकमध्यं ९ लोकनाभिः १० । सूर्यावर्त्तो ११ स्तसंज्ञितः १२ || दिगादिसूर्यावरणा–वतंसकनगोत्तमाः || ७० || एभिः षोडशभिः ख्यातो । नामभिर्भूधरो भुवि || स्पृशन्नभ्रमदभ्रांशुः । कलाभिरिव चंद्रमाः ||७१||

तत्रापि मंदर इति । मुख्यनामैषु नामसु ॥ मंदराख्यः सुरो ह्यत्र । स्वामी पल्योपमस्थितिः ॥ ७२ ॥ महर्द्धिको निवसति । ख्यातं तद्योगतो ह्रदः ॥ यद्वेदं शाश्वतं नाम । ज्ञरतैरवतादिवत् ॥ ७३ ॥ एवं महाविदेहानां । स्वरूपं लेशतो मया ॥ कीर्त्तितं कीर्त्तिविजय–गुरुक्रमकजालिना ॥ ७४ ॥

सततमहतमोर्कं न्यक्कलक्ष्मीनिधानं । जयति जयति वर्षं श्रीविदेहाभिधानं ॥ अविरहितमनेकैर्देवदेवैर्नृदेवै–रतिबलबलदेवैर्वासुदेवैः सदैव ॥ ७५ ॥ तत्र तीर्थंकरचक्रवर्त्तिनां । वासुदेवबलदेवयोरपि ॥ स्याज्जघन्यपदतश्चतुष्टयं । ब्रूमहेऽथ परमप्रकर्षतः ॥ ७६ ॥ द्वात्रिंशत्तीर्थनाथाः प्रतिविजयमिहैकैकज्ञावेन बोध्या । अष्टाद्याः विंशतिः स्यात्प्रबलहलज्नृतां शार्ङ्गिणां चक्रिणां च ॥ एकत्रोत्पत्त्य योगाद्धरिहलधरयोश्चक्रिभिः साकमेवं । व्यत्यासोऽन्योऽन्यमेषामकथि गणधरेंद्रैः प्रकर्षाप्रकर्षे ॥७७॥ विश्वाश्चर्यदकीर्त्तिकीर्त्तिविजयश्रीवाचकेंद्रांतिष–द्राजश्रीतनयोऽतनिष्ट विनयः श्रीतेजपालात्मजः ॥ काव्य यत्किल तत्र निश्चितजगत्तत्त्वप्रदीपोपमे । सर्गो निर्गलितार्थसार्थसुज्ञगः पूर्णोऽयमष्टादशः ॥ ७८ ॥

|| इति श्रीलोकप्रकाशेऽष्टादशः सर्गः समाप्तः || श्रीरस्तु ||

|| अथैकोनविंशः सर्गः प्रारभ्यते ||

अथो महाविदेहाना-मुदक्सीमाविधायकः || भूधरो नीलवान्नाम । स्याद्वैडूर्यमणीम-
यः || १ || स्वामिनो नीलवान्नाम्नो । योगात्पल्योपमस्थितेः || नीलवानित्यसौ ख्यातो । य-
द्वेदं नाम शाश्वतं || २ || जंबूद्वीपेऽन्यत्र चास्य । मेरोरुत्तरतः पुरी || वक्ष्यमाणसुराणाम
-प्येवं पुर्यायुरादिक || ३ || दक्षिणोत्तरविस्तीर्णः । स पूर्वपश्चिमायतः || सर्वमस्य निषधव-
द् । ज्ञेयं धनुःशरादिकं || ४ || किंतु जीवा दक्षिणस्या-मुत्तरस्यां शरासनं || दक्षिणाभि-
मुखो बाण । एवमग्रेऽपि भाव्यतां || ५ || दीप्रप्रभैरस्य कूटै-र्नवभिः शोभितोऽभितः || त्र-
ह्मव्रतश्रुतस्कंध । इव गुप्तिनिरूपणैः || ६ || तत्र सिद्धायतनाख्य । समुद्रासन्नमादिमं || द्वि-
तीयं नीलवत्कूट । नीलवत्पर्वतेशितुः || ७ || ततः पूर्वविदेहेश-सुपर्वैश्वर्यशालितं || कूटं पू-
र्वविदेहाख्य । तृतीयं परिकीर्तित || ८ || शीताकूटं तुरीयं च । शीतानदीसुरीश्रितं || नारी-
कांतं पंचमं त-न्नारीकांतासुरीश्रितं || ९ || केसरिह्रदवासिन्याः । कीर्त्तिदेव्या निकेतनं || ष-

ष्टं स्पष्टं जिनप्रष्टैः । कीर्त्तिकूटं प्रकीर्त्तितं ॥ १० ॥ तथापरविदेहाख्यं । कूटं सप्तममीरितं ॥

म्रदा परविदेहेश—निर्जरस्थानमुत्तमं ॥ ११ ॥ रम्यकक्षेत्रनाथेन । रम्यकाख्यसुधाभुजा ॥ अ-

धिष्ठितं यद्विशिष्टै—स्तन्निर्दिष्टकितमष्टमं ॥ १२ ॥ तथा चानवमज्ञानैः । कूटं नवममीरितं ॥ उ-

पदर्शनसंज्ञं त—दुपदर्शनदेवतं ॥ १३ ॥

एषामाद्ये जिनगृह । शेषेषु पुनरष्टसु ॥ तत्तत्कूटसमाख्यानां । प्रासादाः कूटनाकिनां

॥ १४ ॥ उक्तवक्ष्यमाणकूट—प्रासादचैत्यगोचरं ॥ स्वरूपं हिमवत्कूट—प्रासादाजिनसद्मवत् ॥

॥ १५ ॥ अस्योपरि महानेक—श्वकास्ति केसरिह्रदः ॥ निषधोपरिभागस्थ—तिगिंछेरिव सो-

दरः ॥ १६ ॥ अत्यंतसुंदराकार—केसरालीपरिष्कृतैः ॥ शोभते शतपत्राद्यैः । ख्यातोऽयं के-

सरी ततः ॥ १७ ॥ द्वे निम्नगे ह्रदादस्मा—न्निर्गते कन्यके इव ॥ शीता च नारीकांता च ।

दक्षिणोत्तरगे क्रमात् ॥ १८ ॥ दाक्षिणात्यतोरणेन । निर्गत्य दक्षिणामुखी ॥ शीता पूर्वविदे-

हांत—र्गत्वैति प्राक्पयोनिधिं ॥ १९ ॥ विशेषतोऽस्याः स्वरूपं च प्रागुक्तमेव. उत्तराहतोरणेन

। विनिर्गत्योत्तरामुखी ॥ नारीकांता स्वप्रपात—कुंडे निपत्य निर्गता ॥ २० ॥ दक्षिणार्द्धरम्य-

कस्य । विदधाना द्विधा खलु ॥ असंप्राप्ता योजनेन । माल्यवंतं नगं ततः ॥ २१ ॥ रम्यक-
स्यापरभागं । द्विधा कृत्वा पराम्बुधौ ॥ षट्पंचाशद्भिर्वलिनी—सहस्रैर्याति संश्रिता ॥ २२ ॥
अस्या वार्द्धिप्रवेशांतं । स्वरूपमाह्रदोद्गमात् ॥ विज्ञेय हरिसलिला—नद्या इवाविशेषितं ॥२३॥
ह्रदेऽस्मिन्मूलकमलं । चतुर्योजनसंमितं ॥ तदर्द्धार्द्धप्रमाणानि । पद्मानां वलयानि षट् ॥२४॥
पल्योपमस्थितिस्तत्र । कीर्त्तिता कीर्त्तिदेवता ॥ भवनादिस्थितिस्त्वस्याः । श्रीदेव्या इव भा-
व्यतां ॥ २५ ॥ इति नीलवान् पर्वतः ॥ उत्तरस्यां नीलवतो । दक्षिणस्यां च रुक्मिणः ॥
राजते रम्यकक्षेत्रं । रम्यकामरभर्तृकं ॥ २६ ॥ नानाकल्पद्रुमै रम्य—तयेदं रम्यकाभिधं ॥
स्वर्णमाणिक्यखचितै—र्भूप्रदेशैर्मनोरमैः ॥ किंत्वत्र सा दक्षिणस्या—मुत्तरस्यां शरा-
॥ २७ ॥ परमायामरूपास्य । प्रत्यंचा हरिवर्षवत् ॥ क्षेत्रानुभावकालादि—स्वरूपं तद्वदेव
सनं ॥ २८ ॥ इषुबाहा क्षेत्रफला—द्यपीह हरिवर्षवत् ॥ माल्यवानिति विख्यातो ।
च ॥ २९ ॥ क्षेत्रस्यास्य मध्यभागे । विभाजकोऽर्द्धयोर्द्वयोः ॥ सदा राजन्नुत्पलाद्यै
वृत्तवैताढ्यपर्वतः ॥ ३० ॥ माल्यवत्सदृशाकारै—स्तद्देवारुणप्रभैः ॥

—र्माल्यवानिति कीर्त्यते ॥ ३१ ॥ जंबूद्वीपप्रज्ञप्तिसूत्रे तु माल्यवत्पर्याय इति नाम दृश्यते. प्रन्नामाख्यसुरस्तत्र । स्वामी पल्योपमस्थितिः ॥ मेरोरुत्तरतस्तस्य । पुरी नीलवदादिवत् ॥ ॥ ३२ ॥ हरिवर्षस्थायिगंधा—पातिवैताढ्यशैलवत् ॥ ज्ञेयमस्यापि सकलं । स्वरूपमविशेषितं ॥ ३३ ॥ उदकुरम्यकवर्षस्या—पागूहैरण्यवतस्य च ॥ रुक्मी नाम्ना वर्षधरः । प्रज्ञप्तः परमर्षिभिः ॥ ३४ ॥ स पूर्वपश्चिमायामो । दक्षिणोत्तरविस्तृतः ॥ महाहिमवतो बंधु—रिवात्यंत समाकृतिः ॥ ३५ ॥ रुक्मं रूप्य तदस्यास्ती—त्यन्वर्थकलिताभिधः ॥ सर्वात्मना रूप्यमयो । रुक्मिनामसुराश्रितः ॥ ३६ ॥ इदं जंबूद्वीपप्रज्ञप्तिवृत्तौ. क्षेत्रसमासवृत्तौ तु रुक्मं श्वेतं हेम, तन्मयोऽयमुक्त इति ज्ञेयं. विशिष्टैरष्टभिः कूटैः । सोऽतितुंगैरलंकृतः ॥ दिगंगनानामष्टानां । क्रीडापर्वतकैरिव ॥ ३७ ॥ आद्यं पूर्वार्णवासन्नं । सिद्धायतनसंज्ञितं ॥ रुक्मिदेवाधिष्ठितं च । रुक्मिसंज्ञं द्वितीयकं ॥ ३८ ॥ रम्यकाधीश्वरस्थानं । तृतीयं रम्यकाभिधं ॥ तुर्यं नरकांतादेव्या । नरकांताभिधं च तत् ॥ ३९ ॥ तथा महापुंडरीक—हृदेशायाः शुभास्पदं ॥ बुद्धिकूटं बुद्धिदेव्याः । पंचमं परिकीर्त्तितं ॥ ४० ॥ रूप्यकूलानदीदेव्याः ॥ षष्टं कूटं तदाख्यया ॥

सप्तमं हैरण्यवतं । हैरण्यवतदेवनं ॥ ४१ ॥ मणिकांचनदेवाढ्यं । मणिकांचनमष्टमं ॥ आद्ये जिनालयोऽन्येषु । प्रासादाः स्वामिनाकिनां ॥ ४२ ॥ मानं स्वरूपं कूटानां । चैत्यनिर्जरसद्मनां ॥ हिमवद्गिरिवत्सर्वं । तथैवास्य गिरेरपि ॥ ४३ ॥ ह्रदो महापुंडरीको । महापद्मह्रदोपमः ॥ विज्ञाति सलिलैः स्वच्छै–र्निर्जयन्मानसं सरः ॥ ४४ ॥ अस्मिंश्च मूलकमलं । योजनद्वयसंमितं ॥ तदर्धार्धप्रमाणानि । शेषाब्जवलयानि षट् ॥ ४५ ॥

अत्राधिष्ठायिका बुद्धि–र्बोधिता बुद्धिदेवता ॥ स्नवनादिसमृद्ध्या सा । श्रीदेवतानुकारिणी ॥ ४६ ॥ ह्रदादस्मादापगे द्वे । दक्षिणोदग्मुखे क्रमात् ॥ विनिर्गते श्मश्रुलेखे । इवोत्तरौष्ठमध्यतः ॥ ४७ ॥ दाक्षिणात्यतोरणेन । निःसृत्य दक्षिणामुखी ॥ नरकांता स्वके कुंडे । गत्वा स्नात्वेव निर्गता ॥ ४८ ॥ रम्यकोदीच्यभागस्य । द्वैधीकारभयादिव ॥ अर्वाक् स्थिता योजनेन । माल्यवद्धरणीधरात् ॥ ४९ ॥ ततो वलित्वा स्निंदाना । पूर्वार्द्धं रम्यकस्य सा ॥ पूर्वाम्भोधौ याति नदी–षट्पंचाशत्सहस्रयुक् ॥ ५० ॥ उत्तराहतोरणेन । विनिर्गत्योत्तरामुखी ॥ रूप्यकूला स्वप्रपात–कुंडे निपत्य निर्गता ॥ ५१ ॥ दक्षिणार्द्धं च हैरण्य–वतस्य कु

र्वती द्विधा ॥ क्रोशद्वयेनासंप्राप्ता । विकटापातिनं गिरिं ॥ ५२ ॥ ततो निवृत्य हैरण्य-व-
तापरार्द्धभेदिनी ॥ अष्टाविंशत्या सहस्त्रैः । सरिद्भिराश्रिता पथि ॥ ५३ ॥ तादृक्क्षेत्रविभेदो
द्भ-पातकानुशयादिव ॥ पपात पश्चिमांभोधौ । तद्दुष्कृतजिघांसया ॥ ५४ ॥ इति रुक्मिप-
र्वतः ॥ क्षेत्र च हैरण्यवत-मुदीच्यां रुक्मिणो गिरेः ॥ दक्षिणस्यां शिखरिणो-र्द्वयोर्लीनमि-
वांतरे ॥ ५५ ॥ रूप्यं हिरण्यशब्देन । सुवर्णमपि बोध्यते ॥ ततो हिरण्यवंतौ द्वौ । तन्मय-
त्वाद्धराधरौ ॥ ५६ ॥ रुक्मी च शिखरी चापि । तद्धिरण्यवतोरिदं ॥ हैरण्यवतमित्याहुः ।
क्षेत्रमेतन्महाधियः ॥ ५७ ॥
प्रयच्छति हिरण्यं वा । युग्मिनामासनादिषु ॥ यत्संति तत्र बहवः । शिलापट्टा हिरण्य-
जाः ॥ ५८ ॥ प्रभूतं तन्नित्ययोगि । वास्यास्तीति हिरण्यवत् ॥ तदेव हैरण्यवत-मित्याहुर्मु-
निसत्तमाः ॥ ५९ ॥ हैरण्यवतनामा वा । देवः पल्योपमस्थितिः ॥ ऐश्वर्यं कलयत्यत्र । त-
द्योगात्प्रथितं तथा ॥ ६० ॥ क्षेत्रानुभावो मान च । नृतिरश्चामपि स्थितिः ॥ निखिलं हैम-
वतव-द्विज्ञेयमिह धीधनैः ॥६१॥ क्षेत्रस्यास्य मध्यभागे । चतुरंशविभाजकः ॥ वैताढ्यो वि-

कटापाती । रात्निकः पल्यसंस्थितः ॥ ६२ ॥ पद्मोत्पलशतपत्रा–दीनि संपत्यत्र संततं ॥ वि-
कटापातिवर्णानि । विकटापात्ययं ततः ॥ ६३ ॥ आस्ते देवोऽरुणाख्योऽत्र । स्वामी पल्यो-
पमस्थितिः ॥ जंबूद्वीपेऽन्यत्र नग–मुदीच्यामस्य मेरुतः ॥ ६४ ॥ शेषमस्य स्वरूपं तु । गं-
धापातिनगेंद्रवत् ॥ एवं चत्वारोऽपि वृत्त–वैताढ्या रात्निकाः समाः ॥ ६५ ॥ एवं च क्षेत्रवि-
चारसूत्रवृत्त्यभिप्रायेण हैमवते शब्दापाती, हैरण्यवते विकटापाती, हरिवर्षे गधापाती, रम्यके
माल्यवानिति वृत्तवैताढ्य नां व्यवस्था. जंबूद्वीपप्रज्ञप्त्यभिप्रायेण तु हैमवते शब्दापाती ह-
रिवर्षे विकटापाती, रम्यके गंधापाती, हैरण्यवते माल्यवानिति व्यवस्थेत्यत्र तत्वं सर्वविद्वे-
द्य. इति हैरण्यवतक्षेत्रं ॥

नदीभ्यां हैरण्यवता–दप्यैरवतादपि ॥ पश्चो वर्षधरः ख्यातः । शिखरी नाम पर्वतः ॥
॥ ६६ ॥ ज्ञेयः शिखरिशब्देन । वृक्षस्तदाकृतीनि च ॥ भूयांसि रत्नकूटानि । संत्यत्रेति शि-
खर्यसौ ॥ ६७ ॥ सत्येकादश कूटानि । वक्ष्यमाणानि यानि तु ॥ तेभ्योऽमून्यतिरिक्तानि ।
कूटानीति विभाव्यतां ॥ ६८ ॥ अन्यथा सर्वशैलानां । यथोक्तकूटयोगतः ॥ शिखरित्वव्यप-

देशः । संभवन्न् केन वार्यते ॥ ६९ ॥ स चैकादशभिः कूटैः । परितोऽलंकृतो गिरिः ॥ प्रतिमाभिरिव श्राद्ध–धर्मः शर्मददर्शनः ॥ ७० ॥ आद्यं सिद्धायतनाख्यं । पूर्ववारिधिसन्निधौ ॥ द्वितीयं शिखरिस्वर्गि–कूटं शिखरिसंज्ञकं ॥ ७१ ॥ तृतीयं हैरण्यवत–कूट तत्स्वामिदैवतं ॥ तुर्यं सुवर्णकूलाख्यं । तन्नदीदेवतास्पद ॥ ७२ ॥ दिक्कुमार्याः सुरादेव्याः । पंचमं च तदाख्यया ॥ षष्ठ रक्तावर्त्तनाख्य । लक्ष्मीकूटं च सप्तमं ॥ ७३ ॥ रक्तवत्यावर्त्तनाख्यं । प्रज्ञप्तं कूटमष्टमं ॥ इलादेव्या दिक्कुमार्या । नाम्ना च नवमं मतं ॥ ७४ ॥ दशमं चैरवताख्य–मैरावतसुराश्रितं ॥ स्यात्तिगिंछिह्रदेशाया–स्तिगिंछिकूटमंतिमं ॥ ७५ ॥

इदं जंबूद्वीपप्रज्ञप्तिसूत्राभिप्रायेण, क्षेत्रसमासेषु त्वत्र पंचमं श्रीदेवीकूटं, नवमं गंधापातीकूटमिति दृश्यते. आद्ये चैत्यं शेषकूट–दशके च सुधाभुजां ॥ तत्तत्कूटसमाख्यानां । स्युः प्रासादावतंसकाः ॥ ७६ ॥ पुंडरीकह्रदश्चात्र । पद्मह्रदसहोदरः ॥ अस्मिंश्च मूलकमल–मेकयोजनसंमितं ॥ ७७ ॥ तदर्द्धार्द्धप्रमाणानि । शेषाब्जवलयानि षट् ॥ लक्ष्मीदेवी वसत्यत्र । स्मृत्या श्रीदेवतेव सा ॥ ७८ ॥ हिमवद्गिरिवत्सर्वं । मानमत्रापि चिंत्यतां ॥ ज्याबा-

हाधनुरादीनां । केवलं दिग्विपर्ययः ॥ ७९ ॥ नद्यस्तिस्रो ह्रदादस्मा–न्निर्गतास्त्रिभिरध्वभिः ॥ नदी सुवर्णकूलाख्या । रक्ता रक्तवतीति च ॥ ८० ॥ दक्षिणेनाध्वना तत्र । निर्गत्य दक्षिणामुखी ॥ सुवर्णकूला पतति । कुंडे स्वसमनामनि ॥ ८१ ॥ ततो निर्गत्य हैरण्य–वतोत्तरार्द्धभेदिनी ॥ योजनार्द्धेन दूरस्था । विकटापातिभूधरात् ॥ ८२ ॥ प्राक् परावर्त्य हैरण्य–वतपूर्वार्द्धमादितः ॥ सूत्रधारस्येव रज्जु–र्द्विधा विदधती क्रमात् ॥ ८३ ॥ अष्टाविंशत्या सहस्रै–र्नदीभिः परिपूरिता ॥ गृहिणीव स्वामिगेहे । विशति प्राच्यवारिधौ ॥ ८४ ॥

अस्मादेव ह्रदात्प्राच्य–तोरणेन विनिर्गता ॥ रक्तानदी पूर्वदिशि । प्रवृत्ता पर्वतोपरि ॥ ॥ ८५ ॥ योजनानां पञ्चशती–मतिक्रम्य ततः परं ॥ रक्तावर्त्तनकूटस्या–धस्तादुत्तरतो व्रजेत् ॥ ८६ ॥ त्रयोविंशां पंचशतीं । योजनानां कलात्रयं ॥ सार्द्धं गत्वाधिकमुदक्–शिखरिक्ष्माधरोपरि ॥ ८७ ॥ वज्राजिह्विकयोत्तीर्य । कुंडे रक्ताप्रपातके ॥ शतयोजनप्रपाता । भुजंगीवाविशद्बिले ॥ ८८ ॥ उदीच्यतोरणेनास्मा–द्विनिर्गत्योत्तरामुखी ॥ नदीसप्तसहस्राढ्या । वैताढ्यगिरिसीमया ॥ ८९ ॥ दर्याः खंडप्रपातायाः । प्राच्यां वैताढ्यभूधर ॥ भित्त्वोदीच्यैः स-

त्तनदी—सहस्रैराश्रिताध्वनि ॥ ९० ॥ सहस्रैः सरितामेवं । चतुर्दशभिराश्रिता ॥ विभिद्य ज-
गतीं पूर्वा—र्णवेऽसौ विशति द्रुतं ॥ ९१ ॥ पश्चिमेन तोरणेन । ह्रदादस्माद्विनिर्गता ॥ रक्ता-
वती पश्चिमायां । प्रवृत्ता पर्वतोपरि ॥ ९२ ॥ अतिक्रम्य पंचशतीं । निजावर्तनकूटतः ॥ प-
र्वतोपर्युत्तरस्यां । व्यूढा तत्र व्यतीत्य च ॥ ९३ ॥

त्रयोविंशां पचशतीं । साग्रं मार्द्धकलात्रयं ॥ वज्रमय्या जिह्विकया । योजनैकशतोन्नता-
त् ॥ ९४ ॥ निपत्य पर्वताद्रक्ता—वती प्रपातकुंडके ॥ रोषावेशान्नरानिनीव । दत्तझंपा महा-
वेट ॥ ९५ ॥ उदीच्येनाध्वना तस्मा—दुदग्मुखी विनिर्गता ॥ आवैताढ्यांतिकं सप्त—न-
दीसहस्रसेविता ॥ ९६ ॥ कंदरायास्तमिस्रायाः । पश्चिमायां धराधरं ॥ द्रुतं विभिद्य वैताढ्य
—मुत्तरार्द्धं समागता ॥ ९७ ॥ उदीच्यैः सप्तभिः सिंधु—सहस्रैः सह गच्छति ॥ पश्चिमाब्धा-
विति नदी—चतुर्दशसहस्रयुक् ॥ ९८ ॥ इति शिखरीपर्वतः ॥ उत्तरस्यां शिखरिण । उदी-
च्यलवणार्णवात् ॥ दक्षिणस्यामैरवत—क्षेत्रं भाति मनोहरं ॥ ९९ ॥ ऐरावतः सुरो ह्यस्य ।
स्वामी पल्योपमस्थितिः ॥ वसत्यत्र ततः ख्यात—मिदमैरावताख्यया ॥ १०० ॥ भरतस्य

 प्रतिबिंब–मिवेदं संमुखेंबुधौ ॥ तत्प्रमाणं तेन तुल्यं । सदा तदनुवर्त्तते ॥ १ ॥ भानुना भा- 
सिते तस्मि–न्नेतेनेदमपि भासितं ॥ इन्दुना शोभिते तत्रा–दोऽपि स्यात्तेन शोभितं ॥ २ ॥
 तद्यदा षड्भिररकै–र्भिन्नां भिन्नां दशां श्रयेत् ॥ तथेदमपि सन्मित्र–मिव मित्रानुवृत्तिकृत् ॥
॥ ३ ॥ जिने तत्र जिनोऽत्रापि । चक्रयत्र तत्र चक्रिणि ॥ वासुदेवादिषु सत्सु । तत्रात्रापि
भवति ते ॥ ४ ॥ इदं दशाश्चर्ययुतं । स्यात्तत्राश्चर्यशालिनि ॥ हसतीव निजं मित्र । भरतं
तुल्यचेष्टया ॥ ५ ॥ मध्ये स्थितेन द्वेधेद । वैताढ्यगिरिणा कृत ॥ दाक्षिणात्यैरावतार्द्ध–मुदी-
च्यैरावतार्द्धकं ॥ ६ ॥ यद्गङ्गासिन्ध्वर्णवासन्न–मुत्तरार्द्धं तदुच्यते ॥ शिखरिक्ष्माधरासन्नं । दक्षि-
णार्द्धमुदीरित ॥ ७ ॥

क्षेत्राशापेक्षया ह्येषा । दक्षिणोदग्व्यवस्थितिः ॥ सूर्याशापेक्षया त्वस्य । याम्यार्द्धं वा-
र्द्धिसन्निधौ ॥ ८ ॥ उदीच्यार्द्धं नगासन्नं । व्यवहारस्त्वयं पुनः ॥ क्षेत्राशापेक्षया सर्वो। न ता- 
पदिगपेक्षया ॥ ९ ॥ उदीच्यार्द्धमस्य याम्य–भरतार्द्धेन सन्निभं ॥ तद्वज्जीवेषुचापानि । बा-
हाद्यपि न सम्भवेत् ॥ १० ॥ इतः प्रभृति याम्यार्द्ध–दिक्षु सर्वं विवर्द्धते॥ आविदेहार्द्धमिष्वा-

स–जीवावाहाद्यशादिकं ॥ ११ ॥ वैताढ्यस्याप्यत्र तत । उत्तरस्यां किलाल्पकः ॥ आयामो
दक्षिणस्यां च । वर्द्धमानः क्रमान्महान् ॥ १२ ॥ याम्यविद्याधरश्रेण्यां । विद्याधरपुराण्यतः
षष्टिर्भवंत्युदीच्यायां । श्रेण्यां पंचाशदेव च ॥ १३ ॥ शेषं सर्वमाभियोग्य–श्रेणिवदीवनादि-
कं ॥ ज्ञेयं भरतवैताढ्यो–पममुक्तानुसारतः ॥ १४ ॥ कूटान्येकादशात्रापि । तन्नामानि तथा
क्रमात् ॥ किंतु नाम्नि विशेषोऽस्ति । द्वितीयस्याष्टमस्य च ॥ १५ ॥ दक्षिणैरवतार्द्धाख्यं ।
द्वैतीयीक भवेदिह ॥ उत्तरैरावतार्द्धाख्यं । भवेच्च कूटमष्टमं ॥ १६ ॥ रक्तारक्तवतीस्रोत–स्वि-
नीभ्यां तस्थुषांतरे ॥ वैताढ्येन च षट्खंड–मिदमैरावतं कृतं ॥ १७ ॥ तत्र च—उत्तरार्द्ध
मध्यखंडे । उदीच्यलवणोदधेः ॥ दक्षिणस्यामुदीच्यां च । वैताढ्याभिधभूधरात् ॥ १८ ॥ च-
तुर्दशाधिकशतं । योजनानां कलास्तथा ॥ एकादशातिक्रम्याब्धि–वैताढ्याभ्यामिहांतरे ॥
॥ १९ ॥ नगरी स्यादयोध्याख्या । नवयोजनविस्तृता ॥ द्वादशयोजनायामा–ऽलंकृतोत्तमपू-
रुषैः ॥ २० ॥ शेषाः पंचापि खंडाः स्यु–रनार्या धर्मवर्जिताः ॥ अत्रापि चार्यदेशाना–मध्य-
र्द्धा पंचविंशतिः ॥ २१ ॥ एतेष्वेव हि देशेषु । जिनचक्यर्द्धचक्रिणां ॥ स्यादुत्तमनृणां

जन्म । प्रायो धर्मव्यवस्थितिः ॥ २२ ॥ एवं च जंबूद्वीपेऽस्मिन् । सप्तक्षेत्री विराजते ॥ म-
ध्ये महाविदेहाख्य–मपागुदक् त्रयं त्रयं ॥ २३ ॥ भरतैरावते तत्र । तुल्यरूपे निरूपिते ॥
समस्वरूपे हैरण्य–वते हैमवते अपि ॥ २४ ॥ रम्यकाख्यहरिवर्षे । भजे तुलाधृते इव ॥ पू-
र्वापरविदेहाना–मप्येवं तुल्यता मता ॥ २५ ॥ देवोत्तरकुरूणाम–प्येवं तुल्यत्वमाहितं ॥ वि-
ना भरतैरवत–विदेहानपराः पुनः ॥ २६ ॥ अकर्मभूमयः षट् स्युः । कृष्यादिकर्मवर्जिताः
॥ तिस्रो भरतैरवत–विदेहाः कर्मभूमयः ॥ २७ ॥ तथा चात्र वर्षधर–पर्वताः षट् प्रकीर्त्ति-
ताः ॥ विदेहेभ्यो दक्षिणस्या–मुदीच्यां च त्रयं त्रयं ॥ २८ ॥

हिमवच्छिखरी चैका–दशकूटौ मिथः समौ ॥ रुक्मिमहाहिमवता–वष्टकूटौ तथैव च ॥
॥ २९ ॥ नीलवन्निषधौ तुल्यौ । नवकूटौ परस्परं ॥ मेरुर्निरुपमः सोऽपि । नवकूटोपशोभि-
तः ॥ ३० ॥ भरतैरवतक्षेत्र–द्वात्रिंशद्विजयोद्भवाः ॥ वैताढ्याः स्युश्चतुस्त्रिंश–त्प्रत्येकमेकभा-
वतः ॥३१॥ सर्वेऽप्येते रूप्यवर्णा । नवकूटोपशोभिताः ॥ दशोत्तरशतश्रंगा–भियोग्यालिद्वयान्वि-
ताः ॥ ३२ ॥ चत्वारो वृत्तवैताढ्याः । समरूपाः परस्परं ॥ हरिवर्षहैमवत–हैरण्यवतरम्य-

के ॥ ३३ ॥ देवोत्तरकुरुस्थेषु । ह्रदेषु दशसु ध्रुवं ॥ प्राक् प्रत्यक् च दश दश । कांचनाचल-भावतः ॥ ३४ ॥ द्वे शते कांचननगाः । परस्परानुकारिणः ॥ स्थिता भोक्तु चतसृभिः । पंक्तिभिर्बांधवा इव ॥ ३५ ॥ गजदंतौ सौमनस–गंधमादनसंज्ञितौ ॥ रूप्यपीनरत्नमयौ । सप्तकूटोपशोभितौ ॥ ३६ ॥ विद्युत्प्रभमाल्यवंतौ । वैडूर्यतपनीयजौ ॥ नवकूटांचितौ तुल्या । इत्याकृत्या नगा अमी ॥ ३७ ॥ चतुःकूटाः षोमशापि । वक्षस्काराद्रयः समाः ॥ विचित्रचित्रयमकाः । समरूपाः परस्परं ॥ ३८ ॥ द्विशत्येकोनसप्तत्या–धिकेत्यत्र धराधराः ॥ हिमवच्छिखरिस्पृष्टा । दंष्ट्राश्चाष्टौ मिथः समाः ॥ ३९ ॥ वैताढ्येषु नव नव । कूटाः प्रत्येकमित्यतः ॥ सर्ववैताढ्यकूटानि । षडुत्तरं शतत्रयं ॥ ४० ॥

प्रतिवैताढ्यमेतेषु । कूटत्रयं तु मध्यमं ॥ सौवर्णं शेषकूटाश्च । रात्निका इति तद्विदः ॥ ॥ ४१ ॥ सक्रोशषड्योजनोच्चा–श्चैत्यप्रासादशोभिताः ॥ सर्वेऽपि भरतस्यापि–वैताढ्यकूटसोदराः ॥ ४२ ॥ कूटाः सप्त सौमनस–गंधमादनशैलयोः ॥ रुक्मिमहाहिमवतो–रष्टावष्टौ पृथक् पृथक् ॥ ४३ ॥ विद्युत्प्रभमाल्यवतो–र्नीलवन्निषधागयोः ॥ मेरोश्च नंदनवने । कूटा नवन-

वोदिताः ॥ ४४ ॥ हिमवच्छिखरिकूटा । एकादश पृथक् पृथक् ॥ षोम्शानां चतुःशष्टि—वक्ष-स्कारमहीभृतां ॥ ४५ ॥ हरिस्सहहरिकूट—बलकूटोज्झिता इमे ॥ शतं सर्वेऽष्टपंचाशं । हिमवत्कूटसन्निभाः ॥ ४६ ॥ योजनानां पंच शता—न्युच्चा राता मिथः समाः ॥ साहस्राः स्वर्णजास्तुल्या । हरिस्सहादयस्त्रयः ॥ ४७ ॥ एवं च गिरिकूटानां । त्रिविधानां प्रमाणतः ॥ सर्वसंख्या भस्रषष्ट्या । समन्विता चतुःशती ॥ ४८ ॥ द्वात्रिंशतिविजयेषु । भरतैरवताख्ययोः ॥ चतुस्त्रिंशद्विवृषभ—कूटास्तुल्याः परस्परं ॥ ४९ ॥ भद्रसालाभिधवने । जंबूशाल्मलिवृक्षयोः ॥ अष्टाष्टेत्यष्टपंचाश—द्भूमिकूटा मिथः समाः ॥ ५० ॥

एतेषां वक्तुमुचिते । पर्वतत्वेऽपि वस्तुतः ॥ कूटत्वव्यवहारोऽयं । पूर्वाचार्यानुरोधतः ॥ ॥ ५१ ॥ महाहृदाश्च षट् पद्म—पुंडरीकौ समाविह ॥ महापद्ममहापुंड—रीकावपि मिथः समौ ॥ ५२ ॥ तिगिंछिकेसरिणौ च । तुल्यौ द्विघ्नौ यथोत्तरं ॥ दश देवोत्तरकुरु—हृदाः पद्महृदोपमाः ॥ ५३ ॥ एवं हृदाः षोडशैते । षण्महाहृददेवताः ॥ श्रीह्रीधृतिकीर्त्तिबुद्धि—लक्ष्म्यः परस्परं समाः ॥ ५४ ॥ चतुर्दश महानद्यो । गंगाद्याः सपरिच्छदाः ॥ जंबूद्वीपशुभक्षेते । तु-

ल्या तुल्यया विभ्रांति याः ॥ ५५ ॥ गंगासिंधू रोहितांशा–रोहिता च तथापरा ॥ हरिकांता-
हरिनदी–शीतोदा चेति नामतः ॥ ५६ ॥ मेरोर्दक्षिणतः सप्त । ख्याता एता महापगाः ॥
मेरोरुत्तरतोऽप्येवं । शोभंते सप्त सिंधवः ॥ ५७ ॥ शीता च नारीकांता च । नरकांता तथा
परा ॥ रूप्यकूला स्वर्णकूला । रक्ता रक्तवतीति च ॥ ५८ ॥

हिमवत्पर्वतस्थायि–पद्महृदाद्विनिर्गताः ॥ गंगासिंधुरोहितांशा । नाम्न्यस्तिस्रो महाप-
गाः ॥ ५९ ॥ महाहिमवदद्रिस्थ–महापद्महृदात्पुनः ॥ रोहिता हरिकांतेति । निर्गते द्वे म-
हापगे ॥ ६० ॥ निषधाचलमौलिस्थ–तिगिंछिहृदमध्यतः ॥ समुद्भूते हरिनदी । शीतोदेति म-
हापगे ॥ ६१ ॥ नीलवत्पर्वतगत–केसरिहृदतः किल ॥ शीता च नारीकांता च । निर्गते द्वे
महापगे ॥ ६२ ॥ तथा महापुंडरीक–हृदाद्रुक्मिनगाश्रितात् ॥ नरकांता रूप्यकूले–त्युभे
निम्नगे गते ॥ ६३ ॥ शिखरिक्ष्माधरस्थायि–पुंडरीकहृदोद्भिताः ॥ रक्तारक्तवतीस्वर्ण–कूला
स्त्रिधा महापगाः ॥ ६४ ॥ एवं च–तिस्रो नद्यो हिमवत–स्तिस्रः शिखरिणो गिरेः ॥ शेष-
वर्षधरेष्वाश्च । महानद्योर्द्वयं द्वयं ॥ ६५ ॥ वर्षाण्याश्रित्य सरितः । प्रतिवर्षं द्वयं द्वयं ॥ द्वे

विदेहेष्वपाच्यां षट् । षडुदीच्यां ततो यथा ॥ ६६ ॥ गंगासिंधू च ज्ञरते । रोहितारोहितांशिके ॥ हैमवते हरिवर्षे । हरिकांताहरी ज्ञज्ञे ॥ ६७ ॥

शीताशीतोदे विदेह—क्षेत्रे तथा च रम्यके ॥ नारीकांतानरकांते । हैरण्यवतगे ज्ञज्ञे ॥ ॥ ६८ ॥ रूप्यकूलास्वर्णकूले । तथा चैरवतस्थिते ॥ नद्यौ रक्तारक्तवत्या—वेवमेताश्चतुर्दश ॥ ॥ ६९ ॥ गंगासिंधुरक्तवती—रक्तानां सरितामिह ॥ चतुर्दश सहस्त्राणि । परिवारः प्रकीर्त्तितः ॥ ७० ॥ रूप्यकूलास्वर्णकूला—रोहितारोहितांशिकाः ॥ अष्टाविंशत्या सहस्त्रैः । श्रोतस्विनीज्ञिराश्रिताः ॥ ७१ ॥ नारीकांता नरकांता । हरिकांता हरिस्तथा ॥ षट्पंचाशद्भिर्वाहिनी—सहस्त्रैः परिवारिताः ॥ ७२ ॥ शीताशीतोदयोर्नद्योः । प्रत्येकं च परिच्छदः ॥ पंचलक्षाः सहस्त्राणि । द्वात्रिंशत्परिकीर्त्तितः ॥ ७३ ॥ श्लोकक्रमेण सरिता—मिह श्लोकचतुष्टये ॥ द्विगुणं जिह्विकामान—विस्तारोद्विद्धतादिकं ॥ ७४ ॥ एकश्लोकोदितानां तु । सर्वं तुल्यं परस्परं ॥ गंगासिंधुरक्तवती—रक्तानां तुल्यता यथा ॥ ७५ ॥ दश लक्षाश्चतुःषष्टिः । सहस्त्राणि विदेहगाः ॥ नद्योऽपाच्यां लक्षमेकं । षण्णवतिसहस्त्रयुक् ॥ ७६ ॥ उदीच्यामपि तावंत्य । एवं च

सर्वसंख्यया । षट्पंचाशत्सहस्राढ्या । नदीलक्षाश्चतुर्दश ॥ ७७ ॥ जंबूद्वीपोऽन्वितो रुद्धः । स्वविरुद्धेन वार्द्धिना ॥ स्वमोक्षायेव दत्तेऽस्मै । कनीः शैवलिनीरिमाः ॥ ७८ ॥ चतुःषष्टिविजयगा । महानद्यश्चतुर्दश ॥ अनंतरनद्यो द्वादशाति–रिच्यंते नवतिस्त्वियं ॥ ७९ ॥ तथाहुः श्रीरत्नशेखरसूरयः स्वक्षेत्रसमासे—अडसयरि महाणइओ । बारस अंतरणइओ सेसाओ ॥ परिअरणईओ चवदस । लक्खा छप्पन्नसहस्साय ॥ १ ॥ श्रीमलयगिरयस्तु प्रवेशे च सर्वसंख्यया आत्मना सह चतुर्दशभिर्नदीसहस्रैः समन्विता स्रवंतीति क्षेत्रसमासवृत्तौ, कच्छविजयगतसिंधुनदीं वर्णयंतो महानदीनां न पृथग्गणनेति सूचयांचक्रुः, तथापि द्वादशांतरनद्योऽतिरिच्यंत एवेत्यत्र तत्वं बहुश्रुतगम्यमिति ज्ञेयं, तथापि पूर्वाचार्यानु–रोधात्संख्या तथोदिता ॥ नात्र पर्यनुयोगार्हा । वयं प्राच्यपथानुगाः ॥ ८० ॥ केचित्तु ' गाहावइमहानईपवूडासमाणीसुकच्छमहाकच्छविजए दुहावि न्नयमाणी अठ्ठाविसाए सलिलासहस्सेहिं समग्गा दाहिणेणं सीयं महानइं समप्पेइ ' इत्यादि जंबूद्वीपप्रज्ञप्तिवचनात्, तथा नद्यो विजयछेदिन्यो रोहितावत्कुंडाः स्वनामसमदेवीवासा अष्टाविंशतिनदीसहस्रानुगाः प्रत्येकं सर्वसर्वसमाः पंचविं-

शशतविस्तृता अर्द्धतृतीययोजनावगाहा गाहावती पंकवती, इत्याद्युमास्वातिवाचकवचनाच्च द्वादशानामंतर्नदीनामपि प्रत्येकमष्टाविंशतिसहस्ररूपं परिवारं मन्यमानाः षट्त्रिंशत्सहस्राधिकनदीलक्षत्रयेणांतर्नदीपरिवारेण सह द्विनवतिसहस्राधिकानि सप्तदश नदीलक्षाणि मन्यंते. उक्तं च—सुत्ते चउदसलक्खा। छप्पन्नसहस्स जंबूदीवंमि ॥ इति उ सत्तरस लक्खा। बाणवइ सहस्स मेलविया ॥ १ ॥ अन्ये तु यद्यतर्नदीष्वनेकानि परिवारनदीसहस्राणि प्रवेशेयुस्तदा कथं तासां क्रमेण परतः परतो गच्छंतीनां विस्तारविशेषो गंगानदीनामिव न संपद्येत? यस्तु परिवारः सिद्धांतेऽभिदधे, स तु यथाष्टाशीतिर्ग्रहाश्चंद्रस्यैव परिवारतया प्रसिद्धा अपि सूर्यस्यापि स एव परिवारः, न पुनः पृथक् प्रतीयते.

उक्तं च समवायांगवृत्तौ—अष्टाशीतिर्महाग्रहा एते यद्यपि चंद्रस्यैव परिवारोऽन्यत्र श्रूयते, तथापि सूर्यस्यापींद्रत्वादेत एव परिवारतयाऽवसेया इति. तथा गंगादिसंबंधीन्येवाष्टाविंशतिनदीसहस्राणि, अंतर्नदीनामपि परिवार इति. एवं चांतर्नदीनां पृथक्परिवारमनभ्युपगच्छंतो यथावस्थितामेव नदीसंख्यां मन्यते इत्यादिकं जंबूद्वीपसंग्रहणीवृत्तौ. तथा चाहुः श्रीह-

रिभद्रसूरयः—सीया सीओयाविय । बत्तीससहस्सपंचलक्खेहिं ॥ सव्वे चउदसलक्खा । छप्पन्नं
च सहस्स मेलविया ॥ १ ॥ दिक्पटोऽप्येवमाह—जंबूदीवे निराहिव—संखा सवनइ चउदह-
य लक्खा ॥ छप्पन्नं च सहस्सा । नवइनइउ कहंति जिणा ॥ २ ॥ कुंडोद्वेधस्तथा द्वीपो-
च्छ्रायस्तद्भवनस्य च ॥ परिमाणं समग्रासु । नदीषु सदृशं भवेत् ॥ ७१ ॥ शीता च हरिस-
लिला । गंगा सिंधू च रोहिता ॥ स्वर्णकूला नरकांता । नद्योऽमूर्दक्षिणामुखाः ॥ ७२ ॥ उ-
दक् याता रक्तवती । रक्ता च रूप्यकूलिका ॥ नारीकांता रोहितांशा । शीतोदा हरिकांतिका
॥ ७३ ॥ सिंधुं विना याः सरितो । दक्षिणां दिशमागताः ॥ ताः पूर्वाब्धिं गामिन्यः । सिंधु-
स्तु पश्चिमाब्धिगा ॥ ७४ ॥

उदक्याताश्च या नद्यो । विना रक्तामहानदीं ॥ ताः पश्चिमाब्धिगामिन्यो । रक्ता पूर्वा-
ब्धिगामिनी ॥ ७५ ॥ स्वकीयह्रदविस्तारे—ऽशीतिभक्ते यदाप्यते ॥ दक्षिणाभिमुखीनां सा ।
नदीनां मुखविस्तृतिः ॥ ७६ ॥ उत्तराभिमुखीनां तु । स्वकीयह्रदविस्तृतौ ॥ चत्वारिंशद्विभ-
क्तायां । यल्लब्धं तन्मिता मता ॥ ७७ ॥ व्यवस्थेयं दक्षिणस्यां । सरितां मंदराचलात् ॥ उ-

दक्षुयाम्योत्तरदिशा—न्निमुखीनां विपर्ययात् ॥ ८८ ॥ सर्वासां मुखविस्तारे । दशाघ्ने प्रांतवि-
स्तृतिः ॥ व्यासपंचाशत्तमांशः । सर्वत्रोद्वेध आहितः ॥ ८९ ॥ मुखपर्यंतविस्तार—विश्लेषे ग
तयोजनैः ॥ गुणिते पंचचत्वारिं—शत्सहस्रविज्ञाजिते ॥ ९० ॥ लब्धं यत्तदुन्नयतो । व्यासवृ-
द्धिरन्नीप्सिते ॥ योजनादौ गते सर्वा—स्वपि तस्यार्द्धमेकतः ॥ ९१ ॥ चतुःषष्टिर्विजयेषु । स-
न्नवर्या चतुर्दश ॥ द्वादशांतर्नदीनां च । कुंडानां नवतिस्त्वियं ॥ ९२ ॥ द्विघ्नाद्विप्रमाणा-
नि । कुंडानि जिह्विकादिवत् ॥ तुल्यान्यंतर्निम्नगानां । मिथो विजयगानि च ॥ ९३ ॥ प्रागु-
क्ताः पर्वताः कूटाः । कुंडानि च महापगाः ॥ सर्वे वृता वेदिकया । वनाढ्योन्नयपार्श्वया ॥९४॥
वेदिकावनखंडानां । सर्वत्राप्यविशेषितं ॥ स्वरूपं जगतीस्थायि—वेदिकावनखंडवत् ॥
प्रत्येकं त्रितिसन्नावा—त्तीर्थानां द्व्युत्तरं
॥ ९५ ॥ ऐरावते च न्नरते । विजयेष्वखिलेषु च ॥ श्रेण्यः शतं स्युः षट्त्रिंश—मष्ट-
शतं ॥ ९६ ॥ श्रेण्यश्चतस्रः प्रत्येकं । वैताढ्येषु गुहाद्वयं ॥ सप्तत्रिंशद्धतान्येवं । चत्वा-
रिंशानि तान्यपि ॥ ९७ ॥ दशोत्तरं पुरशतं । प्रतिवैताढ्यपर्वतं ॥ विजयाः स्युश्चतुस्त्रिंश
षष्टिश्च कंदराः ॥ ९८ ॥ द्वात्रिंशच्च विदेहस्था । न्नरतैरवते इति ॥

चतुस्त्रिंशद्राजधान्यो । द्वौ कुरुस्थौ महाद्रुमौ ॥ अस्यांतिकें-
—श्चक्रिजेतव्यभूमयः ॥ ९९ ॥ चतुस्त्रिंशद्राजधान्यो । द्वौ कुरुस्थौ महाद्रुमौ ॥ अस्यांतिकैं-
तरद्वीपाः । षट्पंचाशच्च वार्द्धिगाः ॥ १०० ॥ एवं च संग्रहद्वारा । यदुक्तमप्यनूदितं ॥ सु-
खाववोधोद्यतानां । तदस्माकं न दोषकृत् ॥ १ ॥ जिनैश्चक्रिभिः सीरिभिः शार्ङ्गिभिश्च । च-
तुर्भिश्चतुर्भिर्जघन्येन युक्तः ॥ सनाथस्तथोत्कर्षतस्तीर्थनाथै—श्चतुस्त्रिंशतायं भवेद् द्वीपराजः
॥ २ ॥ चक्रवर्त्तिबलदेवकेशवै—स्त्रिंशता परिचितः प्रकर्षतः ॥ भारतैरवतयोर्द्वयं तथा । ते प-
रे खलु महाविदेहगाः ॥ ३ ॥ जंबूद्वीपे स्युर्नदीनां शतानि । षड्युक्तानि त्रीणि सत्तामपे-
त्य ॥ षट्त्रिंशत्ते चक्रिभोग्या जघन्या—दुत्कर्षेण द्वे शते सप्ततिश्च ॥ ३ ॥ चक्री गंगाद्या-
पगानां मुखस्था—नेतानात्ताशेषषट्खंडराज्यः ॥ व्यावृत्तः सन्नष्टमस्य प्रभावा—त्साधिष्ठातॄना-
त्मसान्निर्मिमीते ॥ ४ ॥ पंचाकरतो द्विशतीदशाधिको—त्कर्षेण भोग्यात्र च चक्रवर्त्तिनां ॥
जघन्यतोऽष्टान्यधिकैव विंशति—रेकाकरत्नेष्वपि भाव्यतामिदं ॥ ५ ॥
द्वौ चंद्रौ द्वौ दिनेंद्राविह परिलसतो दीपकौ सद्मनीव । षट्सप्तत्या समेतं ग्रहशतम-
भितः कांतिमाविःकरोति ॥ षट्पंचाशच्च लक्षाण्यनिलपथपृथून्निदचंद्रोदयांत—र्मुक्ताश्रेण्याः

श्रयंति श्रियमतिविततश्रीन्नरैर्विश्रुतानि ॥ ६ ॥ एकं लक्षं सहस्राः सततमिह चतुस्त्रिंशदु-
द्योतहृद्या । न्यूनाः पंचाशतोच्चैर्दधति रुचिरतां तारकाकोटिकोठ्यः १३३९५० ॥ प्रोद्यत्प्रस्वेद-
बिंद्वावलय इव निशि व्योमलक्ष्मीमृगाक्ष्या । रत्यध्यासं विधातुं प्रियतमविधुना गाढमालिं-
गितायाः ॥ ७ ॥ कोटाकोटिपदेन केचन बुधाः कोटिं वदंत्यत्र यत् । क्षेत्रस्तोकतयावकाश-
घटना नैषां भवेदन्यथा ॥ अन्ये कोटय एव तारकततेरौत्सेधिकैरंगुलैः । कोटाकोटिदशां भ-
जंति घटिता इत्यूचिरे सूरयः ॥ ८ ॥ तथा च सग्रहणीवृत्तौ—इह द्वे मते, तत्रैके कोटीना-
मेव कोटीकोटीति संज्ञांतरं नामांतरं मन्यंते, क्षेत्रस्य स्तोकत्वेन, तथा पूर्वाचार्यप्रसिद्धेः. अ-
न्ये त्वाहुः—' नगपुढविमाणाइं । मिणसु पमाणंगुलेणं तु ' इति वचनात्ताराविमानानां
स्वरूपेण कोटय एव सत्यो यदौत्सेधांगुलेन सर्वतो मीयंते तदा कोटीकोटयो जायंते, तथो-
क्तं विशेषणवत्यां—

कोडाकोडीसन्नं—तरं तु मन्नंति केइ थोवतया ॥ अन्ने उस्सेहंगुल—माणं काऊण तारा-
णं ॥ १ ॥ जयति जगति जंबूद्वीपभूमीधवोऽयं । सततमितरवार्द्धिद्वीपसामंतसेव्यः ॥ सुर-

गिरिरपमुच्चैरंशुको नीलचूलः। अयति कनकदंडो यस्य राजध्वजत्वं ॥१०॥ विश्वाश्चर्यदकीर्त्तिकीर्त्तिविजय श्रीवाचकेंद्रांतिष-द्राजश्रीतनयोऽतनिष्ट विनयः श्रीतेजपालात्मजः ॥ काव्यं यत्किल तत्र निश्चितजगत्तत्त्वप्रदीपोपमे । सर्गः पूर्त्तिमितो युतोऽस्तुनगुणैरेकोनविंशः सुखं ॥ २११ ॥

॥ इति श्रीलोकप्रकाशे एकोनविंशतितमः सर्गः समाप्तः ॥ श्रीरस्तु ॥

॥ अथ विंशतितमः सर्गः प्रारभ्यते ॥

प्रणम्य परमज्ञान-प्रज्ञाप्रस्तावकं प्रभुं ॥ द्वीपेऽस्मिन्नथ सूर्येंदु-चाररीतिर्विज्ञाप्यते ॥ १ ॥ सर्वेषां कालमानाना-मादिरादित्य एव हि ॥ ततोऽस्य वक्तुमुचिता । पूर्वं चारनिरूपणा ॥ २ ॥ तथाहुः पंचमांगे-से केणट्ठेणं भंते एवं वुच्चइ सूरे आइच्चे? सूरे आइच्चे गो० सूराइयाणं समयाइवा आवलियाइ वा जाव व ओसप्पिणीती वा अवसप्पिणीति वा. ततोऽत्र बहुवाच्यापि । प्रथमं सैव तन्यते ॥ पंचानुयोगद्वाराणि । तस्यामाहुर्जिनेश्वराः ॥ ३ ॥ मडलानामिह क्षेत्र-प्ररूपणा ततः परं ॥ संख्याप्ररूपणा तेषां । तदबाधा प्ररूपणा ॥ ४ ॥ ततः परं मंडलाना-मंतरस्य प्ररूपणा ॥ चारप्ररूपणा चैषां । ज्ञाप्यंतेऽनुक्रमादिमाः ॥ ५ ॥

इह प्रकरणे यत्र । क्वाप्यंशा अविशेषतः ॥ कथ्यंते तत्रैकषष्टि–भिन्नांस्तान् परिचिंतयेत् ॥ ६ ॥

अभ्यंतरादिनिर्बाह्य–पर्यंतैः सूर्यमंडलैः ॥ आकाशं स्पृश्यते यत्त–न्मंडलक्षेत्रमुच्यते ॥
॥ ७ ॥ योजनानां पंचशती । दशोत्तरा तथा लवाः ॥ अष्टचत्वारिंशदस्य । विष्कंभश्चक्रवा-
लतः ॥ ८ ॥ तथाहि—अष्टचत्वारिंशदंशा । विष्कंभः प्रतिमंडलं ॥ मंडलानां च चतुर—
शीत्याढ्यं शतमीरितं ॥ ९ ॥ अष्टचत्वारिंशता सा । गुण्यते मंडलावली ॥ द्वात्रिंशानि श-
तान्यष्टा–शीतिभागा भवंति ते ॥ १० ॥ विभज्यते चैकषष्ट्या । योजनानयनाय ते ॥ पूर्वो-
दितानामंशाना–मेकषष्ट्यात्मकत्वतः ॥ ११ ॥ चतुश्चत्वारिंशमेवं । योजनानां शत भवेत् ॥
अष्टचत्वारिंशदंशाः । शेषमत्रावशिष्यते ॥ १२ ॥ मंडलामतराणि । स्युस्त्र्यशीत्यधिक शतं
॥ स्युः सर्वत्राप्यंतराणि । रूपोनान्यंगुलीष्विव ॥ १३ ॥ योजनद्वयमानं स्या–देकैकं मंडलां
तरं ॥ शत त्र्यशीत्याभ्यधिकं । द्विकेन गुण्यते ततः ॥ १४ ॥ शतानि त्रीणि षट्षष्ट्या–
भ्यधिकानि भवंत्यतः ॥ प्राग्यमत चतुश्चत्वा–रिंश प्रक्षिप्यते शतं ॥ १५ ॥

योजनानां पंचशती । दशोत्तरा तथा लवाः ॥ अष्टचत्वारिंशदेषा । मंडलक्षेत्रविस्तृतिः

॥ १६ ॥ इति सूर्यमंडलक्षेत्रं ॥ समाक्रम्य योजनाना–मशीतिसंयुतं शतं ॥ पंचषष्टिर्मंडलानि । जंबूद्वीपे विवस्वतः ॥ १७ ॥ विशेषश्चायमत्र–पंचषष्ट्या मंडलैः स्या–देकोनाशीतियुक् शतं ॥ योजनानामेकषष्टि–भागैर्नवभिरंचितं ॥ १८ ॥ ततः षट्षष्टितमस्य । मंडलस्य लवैः सह ॥ स्याद् द्विपंचाशताशीति–युक् योजनशतं ह्यदः ॥ १९ ॥ तथा–साष्टचत्वारिंश–द्भागां योजनशतत्रयीं त्रिंशां ॥ व्याप्याब्धौ मंडलशत–मर्कस्यैकोनविंशं स्यात् ॥ २० ॥ एवं च मंडलशतं । रवेश्चतुरशीतिमत् ॥ पूर्वोक्तं मंडलक्षेत्रं । समाक्रम्य व्यवस्थितं ॥ २१ ॥ अत्र जंबूद्वीपवर्त्तिनां पंचषष्टेर्मंडलानां विषयव्यवस्थायां संग्रहणीवृत्त्याद्युक्तोऽयं वृद्धसंप्रदायः. यथैकतो मेरुगिरे–स्त्रिषष्टिनिषधोपरि ॥ हरिवर्षजीवाकोट्यां । विज्ञेयं मंडलद्वयं ॥ २२ ॥ मेरोरपरतोऽप्यूर्ध्वं । त्रिषष्टिर्नीलवद्गिरेः ॥ रम्यकजीवाकोट्यां च । मंडले द्वे विवस्वतः ॥२३॥

इयं भरतैरवता–पेक्षया मंडलस्थितिः ॥ अग्निवायुस्थयोर्मेरो–र्ज्ञेया निषधनीलयोः ॥२४॥ प्राग्विदेहापेक्षया तु । मेरोरैशानकोणगे ॥ स्युस्त्रिषष्टिर्नीलवति । मंडलानीति तद्विदः ॥२५॥ एवं प्रत्यग्विदेहाना–मपेक्षया सुमेरुतः ॥ नैर्ऋतस्थायिनिषधे । विज्ञेया मंडलावली ॥ २६ ॥

किंच—विदिग्गतान्यां श्रेणीन्यां । मंडलाढ्यौ स्थिते इमे ॥ औदयिकक्षेत्रपरा—वर्त्तादयनयो-
र्द्वयोः ॥ २७ ॥ क्रांतिहान्याऽयने याम्ये—ऽर्वाग्वागागतौ रवी ॥ दृश्येते क्रांतिवृद्ध्या च । दू-
रतोऽप्युत्तरायणे ॥ २८ ॥ एवं हरिवर्षरम्यकजीवाकोट्योरपि भावना. तथाहुर्जंबूद्वीपप्रज्ञ-
प्तिसूत्रे—

जंबूद्दीवेणं भंते दीवे सूरिया उदीण पाईणमुग्गच्छपाईण दाहिणमागच्छंति १ पूर्वविदेहा-
पेक्षयेदं. पाईणदाहिणमुग्गच्छ दाहिणपडीणमागच्छंति २ भरतापेक्षयेदं. दाहिणपडीणमुग्गच्छ
पडीण उदीणमागच्छंति ३ पश्चिमविदेहापेक्षयेदं. पडीण उदीणमागच्छ उदीणपाईणमागच्छंति,
ऐरावतापेक्षयेद ४ ॥ या मंडलानां विषय—व्यवस्थेयमुदीरिता ॥ भारतादिमध्यभागा—पेक्ष-
या सा विभाव्यतां ॥ २९ ॥ अन्यत्र तु स्वस्वभानू—दयक्षेत्रे यथोदिता ॥ मंडलानां व्यवस्था
सा । व्यक्त्या वक्तुं न शक्यते ॥ ३० ॥ एवं च—येषामदृश्योऽदृश्यत्वं । दृश्यो वा यात्य-
दृश्यतां ॥ यत्र तत्रैवोदयास्तौ । तेषां भानुमतो नृणां ॥ ३१ ॥ नन्वेवं सति सूर्यस्यो—दया-
स्तमयने खलु ॥ स्यातामनियते बाढं । सत्यो ( सत्यं ) यदुक्तं पुरातनैः ॥ ३२ ॥ जह जह

समए समए। सुरत संचरइ नक्खगे गयणे ॥ तह तह इउवि नियमा । जायइ रयणीइ नावंत्तो
॥ ३३ ॥ एवं च मइनराणां । उदयत्थमणाइं होंत नियमाइं ॥ सइदेसकालजोए। कस्सइ किं-
चिव दिस्सए नियमा ॥ ३३ ॥ सइ चेव अनिदिठो । रुद्दमुहुत्तो कमेण सव्वेसिं ॥ केसिंची-
दाणिंपि य । विसयपमाणो रवी जेसिं ॥ ३४ ॥ भगवतीसूत्रशत प प्रथमोद्देशकवृत्तौ. इ-
ति सूर्यमंडलसंख्या प्रसंगात्तद्विषयव्यवस्था च. वाच्याथ मंडलाबाधा । त्रिविधा सा निरूपि-
ता ॥ उभयतो मंडलक्षेत्रा-बाधाधिकृत्य मंदरं ॥ ३५ ॥ मेरुमेवाधिकृत्यान्या । चाबाधा प्रति-
मंडलं ॥ मंडले मंडलेबाधा । तृतीया त्वर्कयोर्मिथः ॥ ३६ ॥ सहस्राणि चतुश्चत्वा-रिंशद-
ष्टौ शतानि च ॥ विंशानि मेरुतो दूरं । मंडलक्षेत्रमोघतः ॥ ३७ ॥ तथाहि जंबूद्वीपांतः ।
सर्वाभ्यंतरमंडलं ॥ साशीतियोजनशतं । स्थितं वगाह्य सर्वतः ॥ ३८ ॥ ततश्च द्वीपविष्कं-
भा-छ्ककरूपाद्वियोज्यते ॥ साशीतियोजनशतं । प्रत्येकं पार्श्वयोर्द्वयोः ॥ ३९ ॥ सहस्रा न-
वनवति-श्चत्वारिंशा च षट्शती ॥ ईदृग्रूपः स्थितो राशि-रस्मादप्यपनीयते ॥ ४० ॥
सहस्राणि दश व्यासो । मेरोस्ततोऽवशिष्यते ॥ नवाशीतिः सहस्राणि । चत्वारिंशा च

षट्शती ॥ ४१ ॥ एतावान्मंडलक्षेत्रे । मेरुव्यासो न यद्यपि ॥ तथापि भूतलगतो । व्यवहारादिहोच्यते ॥ ४२ ॥ तथाहुः श्रीमलयगिरिपादा बृहत्क्षेत्रसमासवृत्तौ—यद्यपि च नाम मंडलक्षेत्रे मेरोर्विष्कम्भो दशयोजनसहस्रात्मको न लभ्यते, किंतूनस्तथापि धरणितले दशयोजनसहस्रप्रमाणः प्राप्यते इति तत्रापि स तावान् व्यवहारतो विवक्ष्यते. अस्मिन्नाशावच्छिन्ने च । संपद्यते यथोदितं ॥ उभयतो मंडलक्षेत्रां—तरं मेरुव्यपेक्षया ॥ ४३ ॥ इति मेरुं प्रतीत्य मंडलक्षेत्राबाधा ॥ एतदेवांतरं मेरोः । सर्वांतर्मंडलस्य च ॥ अतः परं यदपरं । नास्ति मंडलमांतरं ॥ ४४ ॥ सर्वांतरानंतरे तु । द्वितीयमंडले ततः ॥ साष्टाचत्वारिंशदंशं । वर्द्धते योजनद्वयं ॥ ४५ ॥

इत्थं प्राग्मंडलादग्र्य—मंडले योजनद्वयं ॥ साष्टाचत्वारिंशदंश—मबाधायां विवर्द्धते ॥४५॥ एवं यावत्सर्वबाह्य—मंडलं मेरुतः स्थितं ॥ सहस्रैः पचचत्वारिं—शता त्रिंशैस्त्रिभिः शतैः ॥ ॥ ४६ ॥ इति मेरुं प्रतीत्य प्रतिमंडलमबाधा ॥ यदार्कौ चरतः प्राप्य । सर्वाभ्यंतरमंडलं ॥ तदा सूर्यस्य सूर्यस्य । स्यात्परस्परमंतरं ॥ ४७ ॥ सहस्रा नवनवति—श्चत्वारिंशाश्च षट्शती

॥ द्वीपव्यासाद्धुन्नयतो । मंमलक्षेत्र १८० कर्षणात् ॥ ४८ ॥ सर्वांतरानंतरं तौ । द्वितीयं मंडलं यदा ॥ नुपसंक्रम्य चरत–स्तदा मिथोंतरं तयोः ॥ ४ए ॥ सहस्रा नवनवति–योंजनानां च षट्शती ॥ पंचचत्वारिंशदाढ्या । पंचत्रिंशत्तथा लवाः ॥ ५० ॥ तथा ह्येकोऽप्यर्क इह । द्वितीयमडले व्रजन् ॥ साष्टाचत्वारिंशदंशे द्वे योजने व्यतिक्रमेत् ॥ ५१ ॥

एवं द्वितीयोऽपि ततो । वर्द्धते प्रतिमंडलं ॥ योजनानि पंच पंच–त्रिंशन्नागा मिथोंतरे ॥ ५२ ॥ एवं यावत्सर्ववाह्य–मंडले चरतस्तदा ॥ तयोर्मिथोंतरं लक्षं । सषष्टीनि शतानि षट् ॥ ५३ ॥ अंतर्विशंतौ तौ सर्व–बाह्यमंडलतः पुनः ॥ अर्वाचीने सर्ववाह्या–द्वर्त्तेते मंमले षदा ॥ ५४ ॥ तदार्कयोरंतरं स्या–ल्लक्षमेकं शतानि षट् ॥ चतुःपंचाशानि लवाः । षड्विंशतिः पुरोदिताः ॥ ५५ ॥ एवमंतः प्रविशतः । प्रतिमंडलमंतरं ॥ पंचभिर्योजनैः पंच–त्रिंशतांशैश्च हीयते ॥ ५६ ॥ एवं पूर्वोदितमेव । सर्वाभ्यंतरमंडले ॥ मिथोंतरं द्वयोर्भान्वोः । पुनस्तदवशिष्यते ए ए६४० ॥ ५७ ॥ इति मंडले मंडले सूर्ययोः परस्परमवाधा ॥ द्वे द्वे च योजने सूर्य–मंमलानां मिथोंतरं ॥ कथमेतदिति श्रोतुं । श्रद्धा चेत्श्रूयतां तदा ॥ ५८ ॥ सूर्य-

मंडलविष्कम्भे । स्फुरच्चतुरशीतिना ॥ शतेन गुणिते त्यक्ते । मंडलक्षेत्रविस्तृतेः ॥ ५९ ॥
शेषा स्थिता योजनानां । सषट्षष्टिः शतत्रयी ॥ सत्र्यशीतिशतेनास्यां । त्यक्तायामेत-
दंतरं ॥ ६० ॥ इति मंडलांतरप्ररूपणा ॥ कर्तव्या मंडलचार–प्ररूपणा च संप्रति ॥ सप्तानु-
योगद्वाराणि । तत्राहुस्तत्त्ववेदिनः ॥ ६१ ॥ प्रत्यब्दं मंडलचार–संख्याप्ररूपणादिवः ॥ वर्षांतः
प्रत्यहं रात्रि–दिनमानप्ररूपणा ॥ ६२ ॥ मंडले मंडले क्षेत्र–विभागेनाप्यहर्निशोः ॥ प्ररूप-
णा मंडलानां । परिक्षेपप्ररूपणा ॥ ६३ ॥ प्ररूपणा सप्तमी च । ख्याताऽर्धमंडलस्थितेः ॥ अ-
नुयोगद्वारमथ । प्रथमं परितन्यते ॥ ६४ ॥ चरतोऽर्कौ यदा सर्वा–तरानंतरमंडले ॥ सूर्यसं-
वत्सरस्यादौ । रातोऽयं प्रथमस्तदा ॥ ६५ ॥ त्र्यशीतियुक्तशततमे । द्वैतीयीकात्तु मंडलात्
॥ परिपाट्या सर्वबाह्य–मंडले तौ यदागतौ ॥ ६६ ॥ संपूर्णाः सूर्यवर्षस्य । षण्मासाः प्रथमे
तदा ॥ एतदेव च वर्षेऽस्मिन् । दक्षिणायनमुच्यते ॥ ६७ ॥
सर्वबाह्यार्वाक्तनेऽथ । मंडलेऽर्कौ यदा पुनः ॥ तदोत्तरायणस्यादौ । रात्रोऽयं प्रथमो त्र-
चेत् ॥ ६८ । त्र्यशीतियुक्तशततमे । बाह्यार्वाचीनमंडलात् ॥ यदा क्रमादभिप्राप्तौ । सर्वाभ्यं-

तरसंमले ॥ ६९ ॥ पूर्णा द्वितीयाः षण्मासाः । पूर्णं तथोत्तरायणं ॥ पूर्णं वर्षं सषट्पष्ठ्य-
होरात्रत्रिशतात्मकं ॥ ७० ॥ एवं च—सर्वांतरसर्वबाह्य-मंडलयोः किलैकशः ॥ प्रत्यब्दं सू-
र्यचारः स्या-त्सर्वेष्वन्येषु च द्विशः ॥ ७१ ॥ तथा चागमः—जयाणं सूरिए सव्वप्नंतराउ
मंमलाउ सव्वबाहिरं मंमलं उवसंकमित्ता चारं चरइ, सव्वबाहिराउ य मंमलाउ सव्वप्नंतरमं-
डलं उवसंकमित्ता चारं चरइ, एसणं अद्धा केवइएणं राइंदियग्गेणं आहियत्तिवएज्जातिनिन्हा-
वठ्ठे राइंदियसए राइंदियग्गेणं आहियत्तीवएज्जा, ता एयाएणं अद्धाए सूरिए कइमंडलाइं च-
रइता चुलसीयं मंडलसयं चारं चरइ बावीसं मंडलसयं दुक्खुत्तो चरइ, तं जहा—निक्कम-
माणे चेव पविसमाणे चेव दुवेय खलु मंमलाइं सयं चरइ, तं जहा—सव्वप्नंतरं चेव सव्व-
बाहिरं चेव मंमलं. ॥ इति मंमलाचारसंख्याप्ररूपणा ॥

आक्रमेते यदा भानू । सर्वाभ्यंतरमंडले ॥ अष्टादशमुहूर्तात्मा । सर्वोत्कृष्टो दिनस्तदा
॥ ७२ ॥ रात्रिः सर्वजघन्या तु । स्याद् द्वादशमुहूर्त्तिका ॥ अथ क्रमाद्धानिवृद्धि-र्भावनीया
दिनक्षतिः ॥ ७३ ॥ यदा तस्माद्विनिर्यातौ । सर्वाभ्यंतरमंडलात् ॥ आरभमाणौ नव्याब्द-

महोरात्रेऽस्य चादिमे ॥ ७४ ॥ संक्रम्य चरतः सर्वा–भ्यंतरानंतरस्थितं ॥ द्वितीयं मंडलं सू-
र्यौ । द्वीपमंदिरदीपकौ ॥ ७५ ॥ द्वाभ्यां मुहूर्त्तैकषष्टि–भागाभ्यां दिवसस्तदा ॥ हीयते वा-
सरेयी च । ताभ्यामेव विवर्द्धते ॥ ७६ ॥ अहोरात्रे द्वितीयेऽस्य । तृतीयमंडले यदा ॥ सं-
क्रांतौ तरणी सर्वा–न्तरानंतरमंडलात् ॥ ७७ ॥ मुहूर्त्तैकषष्टिभागै–श्चतुर्भिर्दिवसस्तदा ॥ ही-
यते वर्द्धते रात्रि–र्भागैस्तावद्भिरेव च ॥ ७८ ॥ एवं मुहूर्त्तैकषष्टि–भागौ द्वौ प्रतिमंडलं ॥
ह्रापयंतौ दिनक्षेत्रे । वर्द्धयंतौ निशादिशि ॥ ७९ ॥ अर्कौ यदा सर्वबाह्य–मंडले समुपस्थितौ
॥ अहोरात्रेऽस्य वर्षस्य । त्र्यशीतियुक्शतोन्मिते ॥ ८० ॥

तदा ताभ्यां मुहूर्तैक–षष्ट्यंशानां शतत्रयं ॥ सषट्षष्टिदिनाकृष्टं । रजन्यां चाभिवर्द्धि-
तं ॥ ८१ ॥ तावद्भिश्च मुहूर्त्तैक–षष्टिभागैर्यथोदितैः ॥ विभाजितैरेकषष्ट्या । मुहूर्त्तानि भवंति
षट् ॥ ८२ ॥ अहोरात्रेऽत्र तद्रात्रि–रष्टादशमुहूर्त्तिका ॥ उत्कृष्टाहश्चापकृष्टं । स्याद्द्वादशमुहू-
र्त्तकं ॥ ८३ ॥ याम्यायनस्य पूर्णस्या–होरात्रोऽयं किलांतिमः ॥ त्र्यशीतियुगहोरात्र–शतेनेदं
हि पूर्यते ॥ ८४ ॥ लोके तु–रसद्विनाड्योर्कपलाभृगे स्युः । सचापकुंभेष्टकृतैः पलैस्ताः ॥ अ-

लौचमीनेष्टयमाः सशंका । मेषे तुलायामपि त्रिंशदेव ॥ ८५ ॥ कन्यावृषेन्दूशिखिनोंगवेदाः । सार्कास्त्रिरामा मिथुने च सिंहे ॥ कर्के त्रिरामा वसुवेदयुक्ता । एषामिति संक्रमवासराणां ॥ ॥ ८६ ॥ ततश्च—

एकार्कपक्षद्विशरास्त्रिदंता—स्त्रिदंतपक्षद्विशराः कुसूर्याः ॥ मृगादिषट्केऽहनि वृद्धिरेवं । कर्कादिषट्केऽपचितिः पलाद्या ॥ ८७ ॥ प्रविशंतौ सर्वबाह्य—मंडलात्तरणी यदा ॥ संक्रम्य चरतः सर्व—बाह्यावार्चीनमंडले ॥ ८८ ॥ तदा द्वाभ्यां मुहूर्तैक—षष्टयंशाभ्यां विवर्द्धते ॥ दिवसः क्षीयते रात्रि—स्ताभ्योमव यथोत्तरं ॥ ८९ ॥ क्रमादेवं यदा प्राप्तौ । सर्वाभ्यंतरमंडले ॥ त्र्यशीतियुक्शततमे । बाह्यावार्चीनमंडलात् ॥ ९० ॥ तदोत्कृष्टं दिनमान—मष्टादशमुहूर्त्तकं ॥ रात्रिः सर्वजघन्या तु । स्याद् द्वादशमुहूर्त्तिका ॥ ९१ ॥ एतदेवोदगयन—स्यांत्यं दिनमुदीरितं ॥ पूर्णे चास्मिन्नहोरात्रे । संपूर्णः सूर्यवत्सरः ॥ ९२ ॥

अत्युत्कृष्टं चापकृष्टं । प्रत्यब्दमेकमेव हि ॥ दिनं रात्रिस्तथैवैका । सर्वोत्कर्षापकर्षभ्राक् ॥ ९३ ॥ रात्रिर्याम्यायनांतेति—गुर्वी लघुतमं दिनं ॥ दिनः सौम्यायनांतेति—गुरुर्निशा ल-

घीयसी ॥ ए४ ॥ तथा च राद्धांतः—इह खलु तस्सेवं आइच्चसंवच्छरस्ससइं अठारस मुहूत्ते दिवसे नवइ सइं अठ्ठारसमुहूत्ता राई नवइ, सइं डुवालसमुहूत्तो दिवसो नवइ, सयं डुवालसमुहुत्ता राइ नवइ, जंबूद्वीपे यदा मेरो—र्दक्षिणोत्तरयोर्दिनं ॥ चकितेव तदा रात्रिः । स्यात्पूर्वापरयोर्दिशोः ॥ एप ॥ सर्वोत्कृष्टं दिनमानं । दक्षिणोत्तरयोर्यदा ॥ रात्रिः सर्वजघन्या—स्या—त्पूर्वपश्चिमयोस्तदा ॥ ए६ ॥

सर्वोत्कृष्टं दिनमानं । पूर्वपश्चिमयोर्यदा ॥ रात्रिः सर्वजघन्या स्या—द्दक्षिणोत्तरयोस्तदा ॥ एउ ॥ किंच क्षेत्रेषु सर्वेषु । समं मानमहर्निशोः ॥ किंत्वेतयोरवस्थाने । यथोक्तः स्याद्विपर्ययः ॥ एण ॥ क्षेत्रे काले च सर्वस्मि—न्नहोरात्रो नवेद् ध्रुवं ॥ त्रिंशन्मुहूर्तप्रमाणो । न तु न्यूनाधिकः क्वचित् ॥ एए ॥ एवमहोरात्रे विशेषं वदंति, अत एव दक्षिणायनं देवानां रात्रिरुत्तरायणं तेषां दिनमिति शुभकार्यं तत्र विहितमिति मन्यंते.

ननु चाष्टादश मुहू—र्त्तात्माहर्नरते यदि ॥ स्यात्तदा च विदेहेषु । रात्रिः सर्वलघीयसी ॥ १०० ॥ तर्हि रात्रेर्द्वादशानां । मुहूर्त्तानां व्यतिक्रमे ॥ स्यात्क्षेत्रे तत्र कः काल । इति चेदु-

च्यते शृणु ॥ १ ॥ द्युरात्रिमानविश्लेषे । शेषार्द्धार्द्धं भवेद् द्वयोः ॥ सामान्यं क्षेत्रयो रात्रि–दिनपूर्वापरांशयोः ॥ २ ॥ तद्यथा–क्षणेभ्योऽष्टादशभ्यो द्वाद–शापकर्षणे स्थिताः ॥ षट् तदर्द्धं त्रयं साधा–रणं ज्येष्ठदिनोभयोः ॥ ३ ॥ एवं च–अष्टादशमुहूर्त्तात्मा । यदोत्कृष्टदिनस्तदा ॥ पश्चात्रिक्षणशेषेऽह्नि । भवेद्भानूदयोऽग्रतः ॥ ४ ॥ तथाहि–मुहूर्त्तत्रयशेषेऽह्नि । भरतैरवताख्ययोः ॥ भवेदभ्युदयो भानोः । पूर्वापरविदेहयोः ॥५॥ दिने त्रिक्षणशेषे च । पूर्वापरविदेहयोः ॥ स्याद्भारतैरवतयो–स्तरणेरुदयः खलु ॥ ६ ॥ एवं च–स्याद्भारतैरवतयो–रह्नोंत्यं यत्क्षणत्रयं ॥ ज्येष्ठेऽह्नि तदेवाद्यं । पूर्वापरविदेहयोः ॥ ७ ॥

दिने गुरौ यदेवाद्यं । पूर्वापरविदेहयोः ॥ तद्भारतैरवतयो–रह्नोंत्यं स्यात्क्षणत्रयं ॥ ८ ॥ तथा–अष्टादशमुहूर्त्ता स्या–द्यदोत्कृष्टा निशा तदा ॥ तन्मुहूर्त्तत्रयेऽतीते । भवेदर्कोदयः पुरः ॥ ८ ॥ तथाहि–पूर्वापरविदेहेषु । भानोरस्तात्त्रिभिः क्षणैः ॥ स्याद्भारतैरवतयो–स्तरणेरुदयः खलु ॥ ९ ॥ भारतैरवतयोश्च । भानोरस्तादनंतरं ॥ त्रिभिः क्षणैः स्यात्प्रत्यूषं । पूर्वापरविदेहयोः ॥ १० ॥ क्षणशब्दश्चात्र प्रकरणे मुहूर्त्तवाचीति ध्येयं. तथाच–भवेद्विदेहयोराद्यं ।

यन्मुहूर्त्तत्रयं निशः ॥ स्याज्ञारतैरवतयो–स्तदेवांत्यं क्षणत्रयं ॥ ११ ॥ स्याज्ञारतैरवतयो–र्यन्निशोंत्यं क्षणत्रयं ॥ त्नवेह्निदेहयो रात्र–स्तदेवांत्यं क्षणत्रयं ॥ १२ ॥

इह च प्राग्विदेहादि–क्षेत्राह्वानोपलक्षिताः ॥ पूर्वादिक्षेत्रदिग्मध्य–न्नागा ज्ञेया विवेकिन्निः ॥ १३ ॥ तेष्विदं कालनैयत्यं । ज्ञेयमन्मत्र तु स्फुट ॥ न्नाव्यमस्यानुसारेण–र्कोदयास्तविन्नावनात् ॥ १३ ॥ एवं च–अपाच्युदीच्योः प्रत्यूषा–न्मुहूर्त्तत्रितये गते ॥ लघोर्निशायाः प्रारंन्नः । स्यात्पूर्वापरयोर्दिशोः ॥ १४ ॥

अपराह्नत्रिमुहूर्त्यां । शेषायां चानयोर्दिशोः ॥ प्रत्यक् प्राक् च निशांतः स्या–देवं सर्वत्र न्नाव्यतां ॥ १५ ॥ इह गुरुदिने गुर्व्यां ! रात्रौ त्वस्याः क्षणत्रयं ॥ गते शेषे च कल्पाह्न–प्रांतावुक्तदिशोः क्रमात् ॥ १६ ॥ निशां चाह्नां मध्यमाना–मप्येवं स्तो यथोचितं ॥ विश्लेषशेषार्द्धे शेषे । याते चादिपरिक्षयौ ॥ १७ ॥ इति कृता वर्षमध्ये दिनरात्रिप्रमाणप्ररूपणा ॥ मंडलस्याज्यंतरस्य । दशात्र परिधेर्लवाः ॥ कल्पास्ततोद्योतयेत्तां–स्त्रीनेकोऽर्को दिने गुरौ ॥१८॥ त्रींश्च तत्संमुखानन्यः । पट्स्वंशेषु दिनं ततः ॥ मध्ये तयोर्लवौ द्वौ द्वौ । रजनीति लवा दश

॥१९॥ जघन्येऽह्नि च द्वौ द्वौ । भागौ दीपयतो रवी ॥ दिनं चतुर्षु भागेषु । निशापट्सु ल-
वेष्वतः ॥ २० ॥ प्रकाशं क्षेत्रतश्चैवं । दशांशौ दक्षिणायने ॥ हीयेते क्रमतस्तौ च । वर्द्धेते उ-
त्तरायणे ॥ २१ ॥ अत्रोपपत्तिः—ह्यन्यां किलाहोरात्राभ्या—मेकेनार्केन मंडलं ॥ पूर्यतेऽहो-
रात्रयोश्च । मुहूर्त्ताः षष्टिराहिताः ॥ २२ ॥ षष्टेश्च दशमो भागः । षट् ते च त्रिगुणीकृताः ॥
दशांशत्रयरूपाः स्युः । षष्टेरष्टादश क्षणाः ॥ २३ ॥ तदेभिरष्टादशभि—र्मुहूर्त्तैः परिधेरपि ॥
उत्कृष्टदिवसे युक्तं । दशांशत्रयदीपनं ॥ २४ ॥ दशांशद्वयरूपाश्च । षष्टेर्द्वादश निश्चिताः ॥
तत्तैर्द्वादशभिर्युक्तं । दशांशद्वयदीपनं ॥ २५ ॥ तथाहुः—इह उच्चिवदसभाए । जंबूदीवस्स दु-
न्नि दिवसयरा ॥ तार्विति दित्तलेसा । अभिंतरमंमले संता ॥ २६ ॥ चत्तारिय दसभाए । जं-
बूदीवस्स डुन्नि दिवसयरा ॥ तार्विति मंदलेसा । वाहिरए मंडले संता ॥ २७ ॥ एवं प्रका-
शक्षेत्रस्य । दशांशकल्पना बुधैः ॥ आपुष्करार्द्धं कर्त्तव्या । रवीनामथ तत्र च ॥ २८ ॥ दि-
शत्येकोनपंचाशा । चतुस्त्रिंशत्सहस्रकाः ॥ द्विचत्वारिंशच्च लक्षाः । कोट्येका परिधिर्भवेत् ॥
॥ २९ ॥ दशांशास्त्रितयं लक्षा । द्विचत्वारिंशदस्य च ॥ सप्ततिंशाश्चतुस्त्रिंश—त्सहस्राः पर-

मे दिने ॥ ३० ॥

तापक्षेत्रं तिर्यगेत–त्पुष्करार्द्धे विवस्वतां ॥ ततस्तदर्द्धे पश्यंति । तत्रत्याः सूर्यमुद्गतं ॥
॥ ३१ ॥ तथोक्तं––लक्खेहिं एगवीसाइ । साइरेगेहिं पुक्खरद्धंमि ॥ उदएपिछंति नरा । सूरं
उक्कोसए दिवसे ॥ ३२ ॥ सर्वांतमंडलगत–सूर्ययोरातपाकृतिः ॥ ऊर्ध्वास्यनालिका पुष्प–सं-
स्थानसंस्थिता मता ॥ ३३ ॥ मेरुदिश्यर्द्धवलया––कारा वारिनिधेर्दिशि ॥ शकटोर्ध्वीमूल-
भागा––नुकारेयं प्रकीर्त्तिता ॥ ३४ ॥ मेरोर्दिशि संकुचिता । विस्तृता चांबुधेर्दिशि ॥ प्रत्ये-
कमस्या आयामो । दक्षिणोत्तरयोर्दिशोः ॥ ३५ ॥ मेरोरन्ताद्योजनानां । सहस्राण्यष्टसप्ततिः
॥ शतत्रयं त्रयस्त्रिंशं । तृतीययोजनांशयुक् ॥ ३६ ॥ सहस्राः पंचचत्वारिं–शद्योजनानि त-
त्र च ॥ जंबूद्वीपे शेष ३३३३३८३ मब्धौ । द्वयोर्योगे यथोदितं ॥ ३७ ॥

मेरुणा यन्मते सूर्य–प्रकाशः प्रतिहन्यते ॥ तेषां मते मानमिदं । तापक्षेत्रायतेर्ध्रुवं ॥
॥ ३८ ॥ येषां मते मेरुणार्क–प्रकाशो नाभिहन्यते ॥ किंतु मेरुगुहादीना–मप्यंतः प्रथते म-
हः ॥ ३९ ॥ तेषां मते मंदरार्द्धा–दारभ्य लवणोदधेः ॥ षड्भागं यावदायाम–स्तापक्षेत्रस्य

निश्चितः ॥ ४० ॥ तदा च—योजनानां सहस्राणि । पंच राशौ पुरातने ॥ क्षिप्यंते मंदराद्रि-
स्य । ततो मानमिदं भवेत् ॥ ४१ ॥ योजनानां सहस्राणि । त्र्यशीतिस्त्रिशती तथा ॥ त्र-
यस्त्रिंशत्समाधिका । तृतीयोंशश्च योजनः ॥ ४२ ॥ सुपर्वपर्वतादेवं । पूर्वपश्चिमयोरपि ॥ ता-
पक्षेत्रस्य प्रत्येक । मायामो ज्ञायतामियान् ॥ ४३ ॥

सर्वेषु मंडलेष्वेव । चरतोर्भानुमालिनोः ॥ अवस्थितः सदा ताप—क्षेत्रायामः प्रकीर्त्ति-
तः ॥ ४४ ॥ विष्कम्भस्तु मेरुपार्श्वे । तस्यार्द्धवलयाकृतेः ॥ स्यान्मेरुपरिधेर्भागे । दशमे त्रि-
गुणीकृते ॥ ४५ ॥ तथा च —सहस्रा नव षडशी—त्यधिका च चतुःशती ॥ योजनानां दश
भिन्न—योजनस्य लवा नव ॥ ४६ ॥ विष्कंभोंभोधिपार्श्वे तु । तापक्षेत्रस्य निश्चितः ॥ अंत-
र्मंमलपरिधे—र्दशांशे त्रिगुणीकृते ॥ ४७ ॥ स चायं—योजनानां सहस्राणि । चतुर्नवतिरेव
च ॥ षट्त्रिंशा पंचशत्यंशाः । षष्टिजा द्व्यब्धि ४२ संमिताः ॥ ४८ ॥ नन्वेवमब्धेः षड्भा- ॥ ६
गं । यावद्व्याप्तिमुपेयुषः ॥ तापक्षेत्रस्य विष्कंभः । संभवेन्नाधिकः कथं ॥ ४९ ॥ तथाहि—
पूर्वोक्ततापक्षेत्रस्य । प्रांतेऽब्धौ परिधिस्तु यः ॥ तद्दशांशत्रयमितो । विष्कंभः संभवेन्न किं ॥

॥ ५० ॥ अत्रोच्यते—संभवत्येव किंत्वत्र । करणेनैष संवदन् ॥ चतुर्नवतिसहस्रा—दिक एव मतो बुधैः ॥ ५१ ॥ व्यक्तिस्तु करणस्यास्य । मुहूर्त्तगतिचिंतया ॥ कार्या दृग्गोचरस्यैव । साम्या दृक्पथतापयोः ॥ ५२ ॥ तथाहुः—अतोदयास्तांतरं प्रकाशक्षेत्रं तापक्षेत्रमित्येकार्थाः । विष्कंभस्त्वेष तापस्य । द्विविधोऽप्यनवस्थितः ॥ याम्येऽयने हीयमानः । सौम्ये वृद्धिमवाप्नुयात् ॥ ५३ ॥ मुहूर्त्तैकषष्टिभाग—द्वयगम्यं तु यद्भवेत् ॥ क्षेत्रं तावन्मिता वृद्धि—र्हानिश्च प्रतिमंडलं ॥ ५४ ॥ तथा मंडलैः सार्द्ध—त्रिंशतैकैकभानुमान् ॥ क्षेत्रं गम्यं मुहूर्त्तेन । वर्द्धयेद्वा क्षयं नयेत् ॥ ५५ ॥

मंडलानां त्र्यशीति—शतेनैवमनुक्रमात् ॥ वर्द्धितं क्षपितं ताभ्यां । सौम्ययाम्यायनांतयोः ॥ ५६ ॥ मुहूर्त्तैः षड्भिराक्रम्यं । क्षेत्रं स्यादेष एव च ॥ बाह्यांतरमंडलाभ्यां । दशांशो वृद्धिहानिभाक् ॥ ५७ ॥ युग्मं ॥ प्रकाशपृष्ठलग्नस्यां—धस्ये व तमसोऽप्यथ ॥ आकृतिश्चिंत्यते भान्वोः । सर्वांतर्मंडलस्थयोः ॥ ५८ ॥ अस्याप्याकृतिरूर्ध्वास्य—नालिकापुष्पसंस्थिता ॥ तापक्षेत्रवदायाम—मानं चास्याप्यवस्थितं ॥ ५९ ॥ अस्तं गते दिनपतौ । मेरोरपि गुहादि-

षु ॥ ध्वांतोपलब्धेरायाम–स्तमसोऽपि प्रकाशवत् ॥ ६० ॥ विष्कंभो मेरुसंलग्ने । स्यादेवं ध्वांतचोलके ॥ मंदराद्रिपरिक्षेप–दशांशे द्विगुणीकृते ॥ ६१ ॥ षट्योजनसहस्राणि । चतुर्विंशं शतत्रयं ॥ दशभागीकृतस्यैक–योजनस्य लवाश्च षट् ॥ ६२ ॥ लवणांभोधिदिशि तु । विष्कंभस्तमसो भवेत् ॥ अंतर्मंडलपरिधे–र्दशांशे द्विगुणीकृते ॥ ६३ ॥ स चायं–

योजनानां सहस्राणि–षष्टिः सप्तदशाधिकाः ॥ अष्टाचत्वारिंशदंशाः । षष्टिजास्तत्र मंडले ॥ ६४ ॥ इति कर्कसंक्रांतौ आतपक्षेत्रतमःक्षेत्रयोः स्वरूपं ॥ सर्वबाह्यमंडलं तु । प्राप्तयोरुष्णरोचिषोः ॥ तापांधकारयोः प्राग्व–त्संस्थानादिनिरूपणं ॥ ६५ ॥ किंत्वब्धिदिशि विष्कंभे । विशेषोऽस्ति भवेत्स च ॥ बाह्यमंडलपरिधे–र्दशांशे द्विगुणीकृते ॥ ६६ ॥ स्युस्त्रिषष्टिः सहस्राणि । सत्रिषष्टिश्च षट्शती ॥ तद्दशांशे त्रिगुणिते । ध्वांतव्यासोऽप्यसौ तदा ॥६७॥ सहस्राः पंचनवति–श्चत्वार्येव शतानि च ॥ चतुर्नवतियुक्तानि । त्रिंशदंशाश्च षष्टिजाः ॥६८॥

बाह्यांतर्मंडलस्थार्क–तापक्षेत्रानुसारतः ॥ वृद्धिहानिव्यतीहारः । प्रकाशतमसोर्भवेत् ॥ ॥ ६९ ॥ सामीप्याद्दीप्रतेजस्त्वा–त्सर्वांतर्मंडलेऽर्कयोः ॥ दिनातपक्षेत्रवृद्धि–र्घर्मस्तीव्रस्तमोऽ-

ल्पता ॥ ३० ॥ मंदतेजस्तया दूर–तया च बाह्यमंडले ॥ निशातमःक्षेत्रवृद्धि–स्तापक्षेत्राल्प-
ता हिमं ॥ ३१ ॥ यत्तु जंबूद्वीपप्रज्ञप्तिसूत्रे सर्वांतर्मंडलस्थे रवौ समुद्रदिशि तापक्षेत्रविष्कं-
म्भः चतुर्नवतिर्योजनसहस्राणि अष्टौ शतानि अष्टषष्ट्यधिकानि चतुरश्च दशभागान् योजन-
स्योक्तः, तथा ध्वांतविष्कंभश्च त्रिषष्टिर्योजनसहस्राणि द्वे च पंचचत्वारिंशदधिके योजनश-
ते षट् च दश भागा योजनस्यायमेव च सर्वबाह्यमंडलस्थे रवौ तापक्षेत्रध्वांतक्षेत्रयोर्विपर्य-
येण विष्कंभ उक्तः, स तु जंबूद्वीपपरिधेरेव, दशांशद्वयत्वपकल्पनयेति व्यामोहो न विधेयः,
यत्तु तत्र सर्वांतर्मंडले उभयतः समुदितं द्वीपसंबंधि षष्ट्यधिकं योजनशतत्रयं न्यूनतया न
विवक्षितं, यच्च सर्वबाह्यमंडले उभयतः समुदितानि समुद्रसंबंधीनि षष्ट्यधिकानि षट्योजन-
शतान्यधिकतया न विवक्षितानि तत्राविवक्षैव बीजमित्यादिकमर्थत उपाध्यायश्रीशांतिचंद्रो-
पज्ञजंबूद्वीपप्रज्ञप्तिवृत्तेरवसेयं.

तापक्षेत्रस्य च व्यासो । यावान् स्याद्यत्र मंडले ॥ करप्रसारस्तस्यार्द्धे । पूर्वतोऽपरतो-
ऽपि च ॥ ३२ ॥ मेरोर्दिशि तु मेर्वर्द्धे । यावत्तेजः प्रसर्पति ॥ पाथोधिदिशि पाथोधेः । षडू-

न्नागं यावदर्कयोः ॥ ७३ ॥ करप्रसार ऊर्ध्वं तु । योजनानां शतं मतः ॥ यत्तापयत एताव-
दूर्ध्वं निजविमानतः ॥ ७४ ॥ शतेष्वष्टासु सूर्याऽन्या-मधस्तात्समभूतलं ॥ सहस्रं च योज-
नाना-मधोग्रामास्ततोऽप्यधः ॥७५॥ तांश्च यावत्तापयतः । प्रसरंति करास्ततः ॥ विवस्वतो-
योजनाना-मष्टादश शतान्यधः ॥ ७६ ॥ सप्तचत्वारिंशदथ । सहस्राणि शतद्वयं ॥ त्रिषष्टि-
श्च योजनानां । षष्ट्यंशा एकविंशतिः ॥ ७७ ॥ करप्रसार एतावान् । सर्वांतर्मंडलेऽर्कयोः ॥
पूर्वतोऽपरतश्चाथ । दक्षिणोत्तरयोर्ध्रुवे ॥ ७८ ॥ सहस्राणि पंचचत्वा—रिंशत्स्वर्गिगिरेर्दिशि ॥
साशीतियोजनशतो—नान्यथाब्धेर्दिशि ध्रुवे ॥ ७९ ॥

त्रयस्त्रिंशत्सहस्राणि । तयस्त्रिंशं शतत्रयं ॥ योजनत्र्यंशयुक् वार्द्धौ । द्वीपेऽशीतियुतं श-
तं ॥ ८० ॥ सर्वबाह्यमंडले तु । चरतोरुष्णरोचिषोः ॥ करप्रसार एतावान् । स्यात्पूर्वापरयो-
र्दिशोः ॥ ८१ ॥ एकत्रिंशत्सहस्राणि । शतान्यष्टौ तथोपरि ॥ एकत्रिंशद्योजनानि । त्रिंशदं-
शाश्च षष्टिजाः ॥ ८२ ॥ मेरोर्दिशि योजनानां । वार्द्धौ त्रिंशं शतत्रयं ॥ द्वीपे च पंचचत्वा-
रिं-शत्सहस्रास्ततः परं ॥ ८३ ॥ त्रयस्त्रिंशत्सहस्राणि । सत्र्यंशं योजनत्रयं ॥ करप्रसारो न्ना-

न्वोः स्या–च्चरणाब्धौ शिखादिशि ॥ ७४ ॥ ऊर्ध्वं तु योजनशतं । तुल्यं सर्वत्र पूर्ववत् ॥ अष्टादशयोजनानां । शतान्यधस्तथैव च ॥ ७५ ॥ इति क्षेत्रविभागेन दिनरात्रिमानप्ररूपणा ॥ तत्प्रसंगादातपतमःसंस्थानादिप्ररूपणा च. कृता क्षेत्रविभागेन । दिनरात्रिप्ररूपणा ॥ परिक्षेपमिति ब्रूमः । सांप्रत प्रतिमडल ॥ ७६ ॥ वगाह्योन्नयतो द्वीपे । सर्वांतमंडलं स्थितं ॥ साशीतियोजनशतं । द्विघ्न कार्यमिदं ततः ॥ ७७ ॥ सषष्टियोजनशत–त्रयं जातमिदं पुनः ॥ द्वीपव्यासाल्लक्षरूपा–द्विशोध्यते ततः स्थितं ॥७८॥ विष्कंभायामतो नूनं । सर्वाभ्यंतरमंडलं ॥ सहस्रा नवनवति–श्चत्वारिंशा च षट्शती ॥७९॥ परिधिस्तु यथाम्नाय–मस्य लक्षत्रयं युतं ॥ सहस्रैः पंचदशभि–र्नवाशीतिश्च साधिका ॥ ८० ॥

सषष्टियोजनशत–त्रयं यत्प्रागपाकृतं ॥ तस्य वा परिधिः कार्यः । पृथगीदृग्विधस्तु सः ॥ ८१ ॥ एकादश शतान्यष्ट–त्रिंशान्येनं विशोधयेत् ॥ जम्बूद्वीपस्य परिधेः । स्यादप्येवं यथोदितः ॥ ८२ ॥ अथैकतः स्थितं सर्वा–तरानंतरमंडलं ॥ अष्टचत्वारिंशदंशान् । सर्वांतमंडलात्मकान् ॥ ८३ ॥ द्वे योजने च त्यक्त्वार्वाक् । परतोऽप्येवमेव तत् ॥ एवं पंचात्रिंशदंशं

। न्नवेयोजनपंचकं ॥ ९४ ॥ ततोऽर्कयुग्मांतरव—र्द्धते प्रतिमंडलं ॥ योजनानि पंच पंच । त्रिंशदंशाश्च विस्तृतौ ॥ ९५ ॥ ततस्तेषां परिक्षेपा । ज्ञेया व्यासानुसारतः ॥ सपंचात्रिंशदंशस्य । योजनपंचकस्य वा ॥ ९६ ॥ परिक्षेपः पृथक्कार्य । ईदृग्रूपः स जायते ॥ साधिकाष्टात्रिंशदंश—युक् सप्तदशयोजनी ॥ ९७ ॥

अष्टादश योजनानि । परंतु व्यवहारतः ॥ संपूर्णानि विवक्ष्यंते । ततोऽष्टादशयोजनीं ॥ ९८ ॥ प्राच्यप्राच्यमंडलस्य । परिक्षेपे नियोजयेत् ॥ ततोऽग्र्याग्र्यमंडलस्य । परिक्षेपमितिर्भवेत् ॥ ९९ ॥ एवं वृद्धिः परिक्षेपे । यावच्चरममंडलं ॥ ततो यथा वृद्धिहानि—रासर्वांतरमंडलं ॥ १०० ॥ एवं च परिधिः सर्वा—तरानंतरमंडले ॥ लक्षत्रयं पंचदश—सहस्राः सप्तयुक् शतं ॥ १ ॥ तार्त्तीयीके मंडले च । सर्वाभ्यंतरमंडलात् ॥ लक्षास्तिस्रः पंचदश । सहस्रास्तत्वयुक् शतं ॥ २ ॥ लक्षास्तिस्रोऽष्टादशैव । सहस्रास्त्रिशती तथा ॥ युक्तोनैः पंचदशभिः । सर्वांत्ये परिधिर्भवेत् ॥३॥ तथाहुः श्रीमलयगिरिपादाः क्षेत्रविचारबृहद्वृत्तौ——एवं मंडले मंडले आयामविष्कंभयोः पंच पंच योजनानि पंचत्रिंशदेकषष्टिभागाधिकानि परिरयेऽ-

ष्टादश २ योजनानि परिवर्द्धयता तावद्वक्तव्यं यावत्सर्वबाह्यमंडलं एकं योजनशतसहस्रं षट्शतानि षष्ट्यधिकानि आयामविष्कंभाभ्यां त्रीणि योजनशतसहस्राणि अष्टादशसहस्राणि त्रीणि शतानि पंचदशोत्तराणि किंचिदूनानि परिरय इति. अत्र च यद्यपि प्रतिपरिक्षेपं अष्टादश अष्टादशवृद्धौ त्र्यशीत्यधिकशतस्याष्टादशभिर्गुणने चतुर्नवत्यधिकानि द्वात्रिंशच्छतानि भवंति. एतेषां च सैकोननवतिपंचदशसहस्राधिकलक्षत्रयरूपप्रथममंडलपरिक्षेपेण सह योगे सर्वबाह्यमंडलपरिरयस्तिस्रो लक्षा अष्टादश सहस्रास्त्रिशतीत्र्यशीत्युत्तरा भवंति. परंतु प्रागुक्तानि सप्तदशयोजनानि साधिकयोजनसत्काष्टात्रिंशदेकभागाधिकानि प्रतिपरिरयवृद्धिरिति विभाव्यैव, न्यूनपंचदशाधिकशतत्रययुक्ताष्टादशसहस्राधिकलक्षत्रयरूपः सर्वबाह्यमंडलपरिधिरुक्त इति संभाव्यते. यद्यप्यत्रापि उपरितनं शतत्रयं चतुर्दशोत्तरमेव भवति, तथापि उपरितनानां अष्टात्रिंशतो भागानां साधिकत्वान्न्यूनानि पंचदशैव विवक्षितानीति सम्यग्विभावनीयं गणितज्ञैः. एवं कृता, मंडलानां । परिक्षेपप्ररूपणा ॥ गतिं प्रतिमुहूर्त्तं च । ब्रूमहे प्रतिमंडलं ॥ ४ ॥ एकैकं मंडलं ह्येक—मार्त्तंडे न समाप्यते ॥ द्वाभ्यां किलाहोरात्राभ्यां । मुहूर्त्ताः

षष्टिरेतयोः ॥ ५ ॥ ततः षष्ट्या विभज्यंते। परिक्षेपाः स्वकस्वकाः ॥ एवं सर्वमंडलानां । मुहूर्त्तगतिराप्यते ॥ ६ ॥ एवं च—

संक्रम्य चरतः सूर्यौ । सर्वांतमंडले यदा ॥ तदा प्रत्येकमेकैक–मुहूर्त्तेऽमौ गतिस्तयोः ॥ ७ ॥ नूनं पंच सहस्राणि । योजनानां शतद्वयं ॥ एकपंचाशमेकोन–त्रिंशदंशाश्च षष्टिजाः ॥ ८ ॥ द्वितीयादिमंडलेष्व–प्येवं परिरयैः स्वकैः ॥ मुहूर्त्तगतिरानेया । षष्ट्या भक्तैर्विवस्वतोः ॥ ९ ॥ यद्वा प्रतिपरिक्षेपं । योक्ताष्टादशयोजनी ॥ वृद्धिः षष्ट्या विभक्तुं ता–मूर्ध्वमस्तद्वयं न्यसेत् १८ ॥ १० ॥ राशिः षष्टेन दत्तेंशं । तत्राष्टादशलक्षणः ॥ ततोऽष्टादश षष्टिघ्नाः । स्युः सहस्रमशीतियुक् १०८० ॥ ११ ॥ तेषां षष्ट्या हृते भागे । लब्धा अष्टादश स्फुटं ॥ एतावंतः षष्टिभागाः । किंचिदूनास्तु निश्चयात् ६० ॥ ११ ॥ प्राच्यमंडलमुहूर्त–गतौ क्षिप्यंत इत्यतः ॥ यथोक्तं तत्परिमाणं । भवेदेवं यथोत्तरं ६० ॥ १२ ॥ एतद्याम्यायने सौम्या–यने तु प्रतिमंडलं ॥ अष्टादशांशाः क्षीयंते । मुहूर्त्तीयगतौ रवेः ॥ १३ ॥ एवं च–सर्वबाह्ये योजनानां । पंचोत्तरं शतत्रयं ॥ सहस्राणि पंच पंच । दश भागाश्च षष्टिजाः ॥ १४ ॥ स·

गंतीमार्वाचीने तु । त्रिशती चतुरुत्तरा ॥ सहस्राणि पंच सप्तपंचाशत् षष्टिजा लवाः ॥१५॥ मुहूर्त्तगतिरित्येवं । विवस्वतोर्निरूपिता ॥ अथ प्रपंच्यते दृष्टि–पथप्राप्तिप्ररूपणा ॥ १६ ॥

मुहूर्त्तगतिरर्कस्य । या विवक्षितमंडले ॥ यच्च तस्मिन् दिनमानं । द्वयमेतत्पृथग्न्यसेत् ॥ १७ ॥ मुहूर्त्तगतिरेषाथ । दिनमानेन गुण्यते ॥ एकार्कस्य तदैकाह्नः–प्रकाश्यं क्षेत्रमाप्यते ॥ १८ ॥ यावच्चैकाह्नःप्रकाश्यं । क्षेत्रमेकत्रमंडले ॥ तदर्द्धेन मनुष्याणां । भवेद् दृग्गोचरो रविः ॥ १९ ॥ अयं भावः–यावत्क्षेत्रं दिनार्द्धेन । भानुर्भावयितुं क्षमः ॥ दृश्यते तावतः क्षेत्रा–न्मंडलेष्वखिलेष्वपि ॥ २० ॥ यथा पंच सहस्राणि । योजनानां शतद्वयं ॥ एकपंचाशमेकोन–त्रिंशदंशाश्च षष्टिजाः ॥ २० ॥ मुहूर्त्तगतिरेषा या । प्रोक्ताभ्यंतरमंडले ॥ गुण्यते सा दिनार्द्धेन । मुहूर्त्तनवकात्मना ॥ २१ ॥ सप्तचत्वारिंशदेवं । सहस्राणि शतद्वयं ॥ त्रिषष्टिश्च योजनानां । षष्ट्यंशा एकविंशतिः ॥ २२ ॥ भक्तवन्नियतः क्षेत्रा–द्भानुरस्तमयन्नपि ॥ इहत्यैर्दृश्यते लोकैः । सर्वाभ्यंतरमंडले ॥ २३ ॥ ततश्चैतद् द्विगुणित–मुदयास्तांतरं भवेत् ॥ प्रकाशक्षेत्रमप्येता–वदेवोभयतोऽन्वितं ॥ २४ ॥ तथाहुः–रविणो उदयत्थंतर–चउणवइसहस्स प-

णलपवछविसा ॥ बायाणसहिन्नागा । कक्कडसंकंति दियहंमि ॥ २५ ॥ एवं च-

सहस्रैः सप्तचत्वारिं-शता द्वितीयमंमले ॥ सैकोनाशीतिनांहश्यो । योजनानां शतेन
च ॥ २६ ॥ सप्तपंचाशता षष्टि-न्नागैरेकस्य तस्य च ॥ अंशैरेकोनविंशत्या । विन्नक्तस्यैकष-
ष्ठिधा ४३ ७९×५७-६०-१९-६१-१-६० ॥ २७ ॥ एवं च—त्र्यशीतिर्योजनान्यंशा-स्त्रयो-
विंशतिरेव च ॥ षष्टिन्नक्तयोजनस्यै-कस्य पष्टिलवस्य च ॥ २८ ॥ एकषष्टिविन्नक्तस्य । द्वि-
चत्वारिंशदंशकाः ॥ हानिरत्रेयमाद्यात्स्या-त्पुरो हानौ ध्रुवोऽप्ययं ॥ २९ ॥ किंच—सर्वांत
र्मंमलात्तार्त्ति-यीकं यत्किल मंडलं ॥ तदेवाद्यं प्रकल्प्याग्रे । येषु येषु विन्नाव्यते ॥ ३० ॥ दृ-
ग्मार्गस्तरणे स्तत्र । तत्रैकद्व्यादिसंख्यया ॥ हत्वा षट्त्रिंशतं न्नाग-न्नागांस्तान् योजयेद् ध्रु-
वे ॥ ३१ ॥ युग्मं ॥ ततश्च—

पूर्वमंडलदृग्मार्ग-प्राप्तिस्तेन विवर्जिता ॥ खरांशोर्दृक्पथप्राप्ति-मानं स्यादिष्टमंडले ॥
॥ ३२ ॥ यथांतर्मंमलात्तार्त्ति-यीके तरणिमंमले ॥ षट्त्रिंशदेकेन गुण्या । स्थितो राशिस्तथै-
व सः ॥ ३३ ॥ ततः षट्त्रिंशदेवैते । त्र्यशीत्युपरिवर्त्तिषु ॥ योजिता न्नागन्नागेषु । जाता-

स्ते चाष्टसप्ततिः ॥ ३४ ॥ एकषष्ट्या लवैश्चैकः । षष्टिभागो भवत्स च ॥ योज्यते षष्टिभा-
गेषु । शेषाः सप्तदश स्थिताः ॥ ३५ ॥ एवं च—त्र्यशीतिर्योजनान्यंशाः । षष्टिजाता जिनै-
र्मताः ॥ सप्तदशैकषष्ट्यंशा । ऊोध्यराशिर्भवत्यसौ ॥ ३६ ॥ अनेन राशिना हीने । द्विती-
यमंडलाश्रिते ॥ दृग्गोचरे तृतीये स्या—न्मंडले दृक्पथो रवेः ॥ ३७ ॥ एवं च—सहस्रैः सप्त-
चत्वारिं—शता षण्णवतिं श्रितैः ॥ योजनानां षष्टिभागै—स्त्रयस्त्रिंशन्मितैस्तथा ॥ ३८ ॥ एक-
स्य षष्टिभागस्य । विभक्तस्यैकषष्टिधा ॥ भागद्वयेन चोष्णांशु—र्दृश्यस्तृतीयमंडले ॥ ३९ ॥
४७०९६×३३—६०—२—६१—१—६०

एवमुक्तप्रकारेण । बहिर्निष्क्रमतो रवेः ॥ दृक्पथप्राप्तिविषयात् । हीयते प्रतिमंडलं ॥
॥ ४० ॥ त्र्यशीतिः साधिका क्वापि । चतुरशीतिरेव च ॥ साधिका सा क्वापि पंचा—शी-
तिः साप्यधिका क्वचित् ॥ ४१ ॥ योजनानां हानिरेवं । ज्ञाप्या गणितपंडितैः ॥ पूर्वोक्तग-
णिताम्नाया—द्यावत्सर्वांत्यमंडलं ॥ ४२ ॥ तत्र चैकत्रिंशतैव । सहस्रैरष्टभिः शतैः ॥ एकत्रिं-
शैस्त्रिशता च । षष्ट्यंशैर्दृश्यते रविः ॥ ४३ ॥ यद्यपि आंतरतृतीयमंडलापेक्षया द्व्यशीत्य-

त्रिकशततमेऽस्मिन्मंडले पूर्वोक्तकरणप्रक्रियया शोध्यराशिः पंचाशीतिर्योजनानि एकादश षष्टिभागा एकस्य षष्टिभागस्य सत्काः षडेकषष्टिभागा ८५ ११ ६×६०—६१ एवंरूपो जायते, तथापि पूर्वोक्ताः षट्त्रिंशद्भागभागाः कलान्यूना अपि व्यवहारतः पूर्णा विवक्षिताः, तस्मिंश्च कलान्यूनत्वे अंत्यमंडले एकत्र पिंडित सति अष्टषष्टिरेकषष्टिभागास्त्रुट्यति, तदपसारेण पंचाशीतिर्योजनानि नवषष्टिभागा योजनस्य एकस्य षष्टिभागस्य सत्काः षष्टिरेकषष्टिभागा जायंते. ८५ ९ ६०×६०—६१

अयं च शोध्यराशिः सर्वबाह्यार्वाचीनमंडलगतदृक्पथप्राप्तिपरिमाणाद्यदि शोध्यते, तदा यथोक्तं सर्वांत्यमंडले दृक्पथप्राप्तिपरिमाणं भवतीति ध्येयं. पूर्वोक्तध्रुवकाद्युपपत्तिस्तु श्रीशांतिचंद्रोपाध्यायकृतजंबूद्वीपप्रज्ञप्तिसूत्रवृत्तेरवसेया, ग्रंथगौरवभयान्नात्रोच्यत इति ज्ञेयं. यथा—पंचयोजनसहस्राः । पंचोत्तरं शतत्रयं ॥ षष्टिभागाः पंचदश—मुहूर्तगतिरत्र हि ॥ ॥ ४४ ॥ षण्मुहूर्तात्मना चैषा । दिवसार्धेन गुण्यते ॥ ततोऽप्येतद्दृक्पथाप्ति—मानं सर्वांत्यमंडले ॥ ४५ ॥ सर्वबाह्यार्वाक्तने तु । चतुरशीतिवर्जितैः ॥ द्वात्रिंशता योजनानां । सहस्रै-

दृश्यते रविः ॥ ४६ ॥ अंशैश्चैकोनचत्वारिं—शता षष्टिसमुद्भवैः ॥ एकस्य षष्टिभागस्य । ष-
ष्ट्यंशैश्चैकषष्टिजैः ॥ ४७ ॥ ३१९ १६३९×६०—६७—६१—१—६१ पंचाशीतिर्योजनानि । नव-
भागाश्च षष्टिजाः ॥ षष्ट्यंशस्यैकस्य भागाः । षष्टिस्तथैकषष्टिजाः ॥ ४८ ॥ सर्वान्त्यमंडलाद-
र्वा—चीनद्वितीयमंडले ॥ एषा वृद्धिस्ततो वृद्धौ । पुरतो ध्रुवकोऽप्यसौ ॥ ४९ ॥

सर्वबाह्या तृतीयादि—मंडलेष्वथ दृक्पथं ॥ ज्ञातुं गुणितया षट्त्रिं—शतैकद्व्यादिसंख्य-
या ॥ ५० ॥ ध्रुवांके न्यूनितेऽसौ स्यात् । क्षेप्यराशिरनेन च ॥ प्राच्यमंडलदृग्मार्गो । युक्तः
स्यादिष्टमंडले ॥ ५१ ॥ तथाहि—तृतीये मंडले बाह्यात् । षट्त्रिंशदेकताडिता ॥ ध्रुवकात्तद-
वस्थैव । विशोध्यते ततः स्थितं ॥ ५२ ॥ पंचाशीतिर्योजनानि । षष्टिजाश्च लवा नव ॥ ष-
ष्ट्यशस्यैकस्य लवा—श्चतुर्विंशतिरेव च ॥ ५३ ॥ द्वितीयमंडलस्याक्षि—गोचरेऽनेन संयुते ॥
तृतीयमंडले दृष्टि—पथमानं भवेदिदं ॥ ५४ ॥ योजनानां सहस्राः स्यु—र्द्वात्रिंशत्सैकयोजनाः
॥ भागा एकोनपंचाश—द्योजनस्य च षष्टिजाः ॥ ५५ ॥ एकषष्टिविभक्तस्यै—कस्य षष्टिलव-
स्य च ॥ त्रयोविंशतिरेवांश । एवं सर्वत्र भावना ॥ ५६ ॥

एवमंतः प्रविशतः । सूर्यस्य बाह्यमंडलात् ॥ पूर्वोक्तरीत्या दृग्मार्ग–प्रमाणे वर्द्धते रवेः
॥ ५७ ॥ पंचाशीतिः सातिरेका । संपूर्णा सैव कुत्रचित् ॥ साधिका चतुरशीतिः क्वापि सा
केवला क्वचित् ॥ ५८ ॥ त्र्यशीतिः साधिका क्वापि । योजनानां यथायथं ॥ सर्वांतर्मंडलं
याव–न्नाव्यं तच्च प्रदर्शितं ॥५९॥ यद्यपि बाह्यतृतीयमंडलाद् द्व्यशीत्यधिकशततमे सर्वाभ्यं-
तरमंडले यथोक्तकरणेन त्र्यशीतियोंजनानि द्वाविंशतिः षष्टिभागा योजनस्य एकस्य षष्टि-
भागस्य सत्काः पंचत्रिंशदेकषष्टिभागाः २२×६०–३५×६१ एवंरूपः क्षेप्यराशिर्भवति. तथा-
पि येऽत्र ध्रुवकात् षट्त्रिंशद्यथोक्तरूपाः शोधितास्ते कलया न्यूना अपि पूर्णा एव विवक्षिताः,
ततः किंचिदधिकं निर्गतं, तच्चाधिकं सर्वाभ्यंतरे मंडले एकत्र पिंडितं सत् अष्टषष्टिरेकषष्टि-
भागा भवंति, ततस्ते भूयः क्षेप्यराशौ क्षिप्यते, ततो जातः क्षेप्यराशिः यो० ८३ षष्टिभा०
२३×६० एकस्य षष्टिभागस्य एकषष्टिभा० ४२×६१ अस्मिंश्च राशौ सर्वाभ्यंतरानंतरद्वितीय-
मंडलगतदृक्पथपरिमाणे योजिते सति यथोक्तं सर्वाभ्यंतरमंडले दृक्पथपरिमाणं भवतीति
ज्ञेयं. कथं चैवं योजनानां । सहस्रैर्दूरगावपि ॥ आसन्नाविव दृश्येते । तरणी उदयास्तयोः

॥ ६२ ॥ मध्याह्ने तु योजनाना–मष्टशत्यां स्थितावपि ॥ दूरस्थाविव दृश्येते । कथमुष्णत्विषौ ननु ॥ ६३ ॥ अत्रोच्यते—दूरत्वेन प्रतिघाता–त्स्वबिंबमहसां रवी ॥ आसन्नौ सुखदृश्यत्वाद् । ज्ञायेते उदयास्तयोः ॥ ६४ ॥ मध्याह्ने चासन्नतया । प्रसर्पत्तीव्ररश्मिभिः ॥ ज्ञायेते दुर्निरीक्ष्यत्वा–दासन्नावपि दूरगौ ॥ ६५ ॥ तथा चागमः—'लेस्सापडिघाएणं उग्गमणमुहुत्तंसि दूरे अमूले अदीसंति ' अत्र दूरे चेति दृष्टृस्थानापेक्षया विप्रकृष्टे, मूले चेति दृष्टृप्रतीत्यपेक्षया आसन्ने, इति भगवतीशत० ८ उ० ८ । दूरत्वादेव भूलग्ना–विव तावुदयास्तयोः ॥ नैकट्यादेव दृश्येते । मध्याह्ने खाग्रगाविव ॥ ६६ ॥

उच्चत्वं तु सर्वदापि । समानमेव सूर्ययोः ॥ योजनानां ह्यष्टशत्या । नार्वाग् न परतश्च तौ ॥ ६७ ॥ एवं दृष्टिपथप्राप्ति–प्ररूपणा प्रपंचिता ॥ अथ प्ररूपणां भान्वोः । कुर्मोऽर्धमंडलस्थितेः ॥ ६८ ॥ एकं मंडलमेकेना–होरात्रेण समाप्यते ॥ द्वाभ्यामभिमुखस्थाभ्यां । रविभ्यां प्रतिवादिवत् ॥ ६९ ॥ मेरोर्दक्षिणपूर्वस्यां । यदा प्रथममेव हि ॥ एकः सूर्यः प्रविशति । सर्वाभ्यंतरमंडलं ॥ ७० ॥ पश्चिमोत्तरदिग्भागे । तदैवान्योऽपि भास्करः ॥ समकालं

स्पर्द्धयेन । सर्वांतर्मंडले विशेत् ॥ ७१ ॥ इत्थं ताभ्यां प्रविशद्भ्यां । व्याप्तं यत्प्रथमक्षणे ॥
क्षेत्रं व्यपेक्षया तस्य । कल्प्यमांतरमंडलं ॥ ७२ ॥ प्रथमात्तु क्षणादूर्ध्वं । विवस्वतौ शनैः
शनैः ॥ क्रमादपसरतौ च । सर्वाभ्यंतरमंडलात् ॥ ७३ ॥ अनंतरबहिर्भावि—मंडलाभिमुखं
किल ॥ सर्पंतौ चरतश्चारं । ततश्च प्रथमक्षणे ॥ ७४ ॥ स्पृष्टं क्षेत्रं यदेताभ्यां । तदपेक्ष्य प्र-
कल्पितं ॥ ज्ञेयं मंडलतुल्यत्वा—न्मंडलं न तु तात्त्विकं ॥ ७५ ॥ तथाहुः —

रविदुगभमणवसाओ । निप्पज्जइ मंडलं इहं एगं ॥ तं पुण मंडलसरिसंति । मंडलं वु-
च्चइ तहाहि ॥ ७६ ॥ गिरिनिसिढनीलवंतेसु । उग्गयाणं रवीणकक्कंमि ॥ पढमाउ चेव स-
मया—दुसरणेणं जत्तु भमणं ॥७७॥ तो नो निच्छयरूवं । निप्पज्जइ मंडलं दिणयराणं ॥ चंदा-
णवि एवंचिय । निच्छयओ मंडलाभावो ॥ ७८ ॥ मेरोर्दक्षिणपूर्वस्या—मेकोऽभ्यंतरमंडले ॥ सं-
क्रम्य याम्यदिग्भागं । यदा मेरोः प्रकाशयेत् ॥ ७९ ॥ तदापरोत्तरदिशि । प्राप्तोऽभ्यंतरमंडलं
॥ अन्यो मेरोरुदग्भागं । प्रकाशयति भानुमान् ॥ ८० ॥ दक्षिणोत्तरयोर्मेरोः । सर्वोत्कृष्टं दि
नं तदा ॥ रात्रिः सर्वजघन्यैषो—ऽहोरात्रो वत्सरैतिमः ॥ ८१ ॥ अहोरात्रे नवाब्दस्य । चरतः

प्रथमे यदि ॥ द्वितीयस्मिन् मंडलेऽर्कौ । निष्क्रम्यांतरमंडलात् ॥ ८२ ॥ दाक्षिणात्यस्तदा सू-
र्यः । सर्वांतर्मंडलाश्रितात् ॥ विनिर्गत्य दक्षिणार्द्ध–छायव्यां सुरभूभृतः ॥ ८३ ॥ द्वितीयस्य
मंडलस्यो–त्तरार्द्धमाश्रितश्चरन् ॥ मेरोरुत्तरदिग्भागं । प्रकाशयति दीपवत् ॥ ८४ ॥ औत्तरा-
हः पतंगस्तु । सर्वांतर्मंडलाश्रितात् ॥ औत्तरार्द्धाद्विनिर्गत्य । मेरोर्दक्षिणपूर्वतः ॥ ८५ ॥ द्वि-
तीयस्य मंडलस्य । दक्षिणार्द्धमुपाश्रितः ॥ मेरोर्दक्षिणदिग्भागं । प्रकाशयति लीलया ॥८६॥
क्षेत्रमाभ्यां च यत्स्पृष्टं । तस्याह्नः प्रथमक्षणे ॥ द्वितीयं मंडलं बुद्ध्या । कल्प्यते तद-
पेक्षया ॥ ८७ ॥ एवं च—एकैकस्मिन्नहोरात्रे । एकैकमर्द्धमंडलं ॥ संक्रम्य संचरंतौ ता–व-
न्योन्यव्यवहारतः ॥ ८८ ॥ प्रत्येकं द्वौ मुहूर्त्तैकं । षष्टिभागौ दिने दिने ॥ क्षपयंतौ सर्वबा-
ह्य–मंडलावधिगच्छतः ॥ ८९ ॥ तस्मिन् पुनः सर्वबाह्या–र्वाचीनमंडलस्थितात् ॥ दक्षिणा-
र्द्धाद्विनिर्गत्य । सर्वांत्यमंडलाश्रितं ॥ ९० ॥ उत्तरार्द्धं स विशति । यः प्रकाशितवान् पुरा ॥
रविर्मेरोर्याम्यभागं । सर्वाभ्यंतरमंडले ॥ ९१ ॥ यस्तु तत्रोत्तरभाग–मदिदीपद्रविः पुरा ॥ स
सर्वबाह्यार्वाचीन–मंडलस्योत्तरार्द्धतः ॥ ९२ ॥ निर्गत्य दीपयेद्याम्य–मर्द्धं सर्वांत्यमंडले ॥ आ-

र्धं संवत्सरस्यार्द्ध-मेवमाद्यां समाप्यते ॥ ९३ ॥ ततस्तौ द्वावपि रवी । सौम्यायनादिमक्षणे ॥ अनंतरं सर्वबाह्याद्-द्वितीयं मंडलं श्रितौ ॥ ९४ ॥

उत्तरार्द्धं योऽदिदीप-त्सर्वांत्यमंडलाश्रितं ॥ दीपयेत्सोऽत्र याम्यार्द्ध-मुत्तरार्द्धं ततः परं ॥ ॥ ९५ ॥ एवं पुनर्मंडलार्द्ध-मेकैकं व्यतिहारतः ॥ एकैकस्मिन्नहोरात्रे । आक्रमंतौ दिवाकरौ ॥ ॥ ९६ ॥ प्रत्येकं द्वौ मुहूर्तैक-षष्टिभागौ दिने दिने ॥ वर्द्धयंतौ क्रमात्प्राप्तौ । सर्वाभ्यंतरमंडले ॥ ९७ ॥ मंडलेऽस्मिन्नहोरात्रे । गताब्दस्यांतिमे रवी ॥ यथादिदीपतामर्द्धं । पुनर्दीपयतस्तथा ॥ ९८ ॥ इत्यर्द्धमंडलस्थितिः ॥ सूर्यवक्तव्यता चैवं । यथाम्नायं प्रपंचिता ॥ एवं प्रपंचयामोऽथ । चंद्रचारप्ररूपणां ॥ ९९ ॥

आदौ क्षेत्रं मंडलानां १ । तदबाधा २ तदंतरं ३ ॥ तच्चारश्च ४ वृद्धिहानि-प्रतिभासप्ररूपणा ॥ ३०० ॥ अत्रानुयोगद्वाराणि । पंचाहुस्तत्ववेदिनः ॥ तत्रादौ मंडलक्षेत्र-परिमाणं प्रतन्यते ॥ १ ॥ मंडलानि पंचदश । चंद्रस्य सर्वसंख्यया ॥ षट्पंचाशद्योजनैक-षष्टिभागपूर्णन्यतः ॥ २ ॥ गुणिताः पंचदशभिः । षट्पंचाशद्भवंति ते ॥ अष्टौ शतानि चत्वारिं-शान्ये

कषष्टिजा लवाः ॥ ३ ॥ एकषष्ट्या विभज्यंते । योजनानयनाय ते ॥ त्रयोदश योजनानि । लब्धान्ये तच्च शिष्यते ॥ ४ ॥ सप्तचत्वारिंशदंशा । योजनस्यैकषष्टिजाः ॥ मंडलानां पुनरेषा—मंतराणि चतुर्दश ॥ ५ ॥

पंचत्रिंशद्योजनानि । त्रिंशत्तथैकषष्टिजाः ॥ लवा एकस्यैकषष्ट्यं—शस्य क्षुल्लस्य सप्तधा ॥ ६ ॥ भागाश्चत्वार एकैक—मेतावदंतरं भवेत् ॥ शीतद्युतिमंडलेषु । तत्रोपपत्तिरुच्यते ॥ ७ ॥ चंद्रमंडलविष्कंभे । प्राग्वत्पंचदशाहते ॥ शोधिते मंडलक्षेत्रा—द्योजनानां चतुःशती ॥ ८ ॥ शेषा सप्तनवत्याढ्या । द्व्येकोंशश्चैकषष्टिजः ॥ विभज्यते ते च चतु—र्दशभिर्मंडलांतरैः ॥ ९ ॥ पंचत्रिंशद्योजनानि । लब्धान्युद्धरिते हते ॥ एकषष्ट्यैकषष्ट्यंशे । नैकेन च समन्विते ॥ १० ॥ अष्टाविंशा चतुःशत्ये—तस्याश्च भजने सति ॥ चतुर्दशभिराप्यंते । त्रिंशदंशाः पुरोदिताः ॥ ११ ॥ शेषा अष्टौ स्थिता भाज्या । भाजकाश्च चतुर्दश ॥ भागाप्राप्त्यापवर्त्येते । ततो द्वाभ्यामुभावपि ॥ १२ ॥

भागभागास्ततो लब्धा—श्चत्वारः सप्तिका इति ॥ एतच्चतुर्दशगुणं । कर्त्तव्यं प्रथमं त्वि-

ह ॥ १३ ॥ पंचत्रिंशद्योजनानि । चतुर्दशगुणानि वै ॥ शतान्यन्नूवंश्चत्वारि । नवत्याढ्यानि येऽपि च ॥ १४ ॥ त्रिंशदेकषष्टिन्नागा–श्चतुर्दशगुणीकृताः ॥ जाताः शतानि चत्वारि । विंशत्याढ्यानि ते त्वथ ॥ १५ ॥ एकषष्ट्या विभज्यते । योजनप्राप्तये ततः ॥ लब्धा षट्योजनी शेषा–श्चतुःपंचाशदंशकाः ॥ १६ ॥ सप्तन्नक्तस्यैकषष्टि–न्नागस्य या चतुर्लवी ॥ चतुर्दशगुणा सापि । षट्पंचाशन्नवंत्यमी ॥ १७ ॥ अष्टावेकषष्टिन्नागा । जायंते सप्तन्नाजिताः ॥ द्वाषष्टिरेते स्युः प्राच्य–चतुःपंचाशता युताः ॥ १८ ॥ एकषष्ट्येषां च न्नागे । प्राप्तं सैकांशयोजनं ॥ योज्यतेंशश्चांशराशौ । योजन योजनेषु च ॥ १९ ॥ एवं च–

योजनानां पंचशती । दशोत्तरैकषष्टिजाः ॥ अष्टचत्वारिंशदंशा । मंडलक्षेत्रसंमितिः ॥ ॥ २० ॥ कृतैवं मंडलक्षेत्र–परिमाणप्ररूपणा ॥ संख्याप्ररूपणा त्वेषा–माहुः पंचदशात्मिकां ॥ २१ ॥ तत्र पंच मंडलानि । जंबूद्वीपे जिना जगुः ॥ शेषाणि तु दशान्नोधौ । मंडलान्यमृतद्युतेः ॥ २२ ॥ अबाधा तु त्रिधा प्राग्वत् । तत्राद्या मेर्वपेक्षया ॥ उन्नयतो मंडलक्षेत्रा–बाधान्या प्रतिमंडलं ॥ २३ ॥ तृतीया तु मिथोऽबाधा । शशिनोः प्रतिमंडलं ॥ तत्रौघतोऽर्कव-

न्मेरो–र्मंडलक्षेत्रमीरितं ॥ २४ ॥ चतुश्चत्वारिंशतैव । सहस्रैरष्टभिः शतैः ॥ विंशत्याढ्यैर्योजनाना–मियतैवाद्यमंडलं ॥ २५ ॥ षट्त्रिंशद्योजनान्येक–षष्ट्यंशाः पंचविंशतिः ॥ एकस्यैकषष्टिजस्य । चत्वारः सप्तजा लवाः ॥ २६ ॥ वर्द्धतेंतरमेताव–त्प्रतिमंडलमादिमात् ॥ सर्वांत्यमंडलं याव–त्ततो द्वितीयमंडलं ॥ २७ ॥ सत्सहस्रैश्चतुश्चत्वा–रिंशता चाष्टभिः शतैः ॥ षट्पंचांशैरेकषष्टि–भागैस्तत्त्वमितैस्तथा ॥ २८ ॥ एकस्यैकषष्टिजस्य । चतुर्भिः सप्तजैर्लवैः ॥ स्यान्मंदराद्व्यवहित–मेकालोऽपरतोऽपि च ॥ २९ ॥ सर्वबाह्यमंडलं तु । स्थितं दूरं सुमेरुतः ॥ सहस्रैः पंचचत्वारिं–शता त्रिंशैस्त्रिभिः शतैः ॥ ३० ॥ योजनानां योजनैक–षष्टिभागाष्टकोन्नितैः ॥ अथो मिथोंतरं वक्ष्ये । शशिनोः प्रतिमंडलं ॥ ३१ ॥ इंद्वोर्मिथोऽर्कवत्सर्वां–तरंगमंडलेंतरं ॥ सहस्रा नवनवति–श्चत्वारिंशा च षट्शती ॥ ३२ ॥ इतश्च—

द्वासप्ततिर्योजनाना–मेकपंचाशदंशकाः ॥ एकषष्टिभवाः सप्त–भक्तस्यास्य लवोऽपि च ॥ ३३ ॥ एतावदंतरे ग्लावो । वर्द्धते प्रतिमंडलं ॥ बहिर्निष्क्रमतोरंत–र्विशतोः परिहीयते ॥ ३४ ॥ एतच्च यत्पुरा प्रोक्तं । प्रतिमंडलमेकतः ॥ अंतरं तद् द्विगुणितं । भवेत्पार्श्वद्वयोद्भ-

वं ॥ ३५ ॥ एवं च—सहस्रा नवनवति–योजनानां शतानि च ॥ द्वादशोपेतानि सप्त–वि-
भागाश्चैकषष्टिजाः ॥ ३६ ॥ एकपंचाशदेकोंश । एकषष्टिलवस्य च ॥ सप्तभागीकृतस्यैतद् ।
द्वितीयमंडलेंतरं ॥ ३७ ॥ सर्वांतिमेंतरं लक्षं । सषष्टीनि शतानि षट् ॥ योजनानामेकषष्टि–
भागैः षोडशभिर्विना ॥ ३८ ॥ अष्टांशोरुव्यासमिंदु–मंडलं भानुमंडलात् ॥ अष्टाष्टावर्कक्षे-
त्रभागा । आभ्यां रुद्धास्ततोऽधिकाः ॥ ३९ ॥ ततः षोडशभिर्भागै–र्न्यूनं परममंतरं ॥ सर्वा-
भ्यमंडले ग्लावो–रर्कयोः परमांतरात् ॥ ४० ॥ एवं कृता चंद्रमसो–र्मिथोऽबाधाप्ररूपणा ॥
सांप्रतं मंडलचार–प्ररूपणा प्रपंच्यते ॥ ४१ ॥

परिक्षेपा मंडलानां १ । मुहूर्त्तगतिरत्र च २ ॥ मंडलार्द्धमंडलयोः । कालसंख्याप्ररूप-
णा ३ ॥ ४२ ॥ साधारणासाधारण–मंडलानां प्ररूपणा ४ ॥ एवं चत्वार्यनुयोग–द्वाराण्यत्र
जिना जगुः ॥ ४३ ॥ विष्कंभायामतस्तत्र । सर्वाभ्यंतरमंडलं ॥ सहस्रा नवनवति—श्चत्वा-
रिंशा च षट्शती ॥ ४४ ॥ तिस्रो लक्षाः पंचदश । सहस्रा योजनान्यथ ॥ नवाशीतिः प-
रिक्षेपो–ऽधिकोऽभ्यंतरमंडले ॥ ४५ ॥ भावना तूभयोरपि सूर्याभ्यंतरमंडलवत् ॥ द्वितीय-

मंडलव्यासं । विज्ञाव्योक्तानुसारतः ॥ ज्ञावनीयः परिक्षेपः । स चायमुपपद्यते ॥ ४४ ॥ ति-
स्रो लक्षाः पंचदश । सहस्राणि शतत्रयं ॥ योजनान्येकोनविंशं । साधिकं किंचनाथवा ॥
॥ ४५ ॥ पूर्वमंडलविष्कंजा—त्परमंडलविस्तृतौ । द्वासप्ततियोजनानि । वृद्धिः प्राक् प्रत्यपा-
दि या ॥ ४६ ॥ तस्याः पृथक् परिक्षेपः । कर्त्तव्यः कोविदैर्बुधा ॥ द्वे शते त्रिंशदधिके । यो-
जनानां जवेदसौ ॥ ४७ ॥ पूर्वपूर्वपरिक्षेपे । यद्ययं क्षिप्यते तदा ॥ परापरपरिक्षेपा । ज्ञाव-
नीया यथोत्तरं ॥ ४८ ॥ इयमिंडुमंडलानां । परिक्षेपप्ररूपणा ॥ मुहूर्त्तगतिमाख्यामि । संप्र-
ति प्रतिमंडलं ॥ ४९ ॥ उपसंक्रांतयोरिंद्वोः । सर्वाभ्यंतरमंमले ॥ पच पंच सहस्राणि । यो-
जनानां त्रिसप्ततिः ॥ ५० ॥ सहस्रैस्त्रयोदशज्ञिः । सतत्वैः सप्तज्ञिः शतैः ७२५ ॥ ज्ञिन्नस्य
योजनस्यांश—शताश्च सप्तसप्ततिः ॥ ५१ ॥

चतुश्चत्वारिंशदाढ्या ५०७३ । ७७४४×१३७२५ । मुहूर्त्तगतिरेषिका ॥ जिज्ञास्यतेऽस्या-
श्चेद्बीजं । श्रूयतां तर्हि ज्ञावना ॥ ५२ ॥ इहैकैकोऽप्यमृतांशु—रेकैकमर्द्धमंडलं ॥ एकेनाहोरा-
त्रेणैक—मुहूर्त्ताधिक्यशालिना ॥ ५३ ॥ शताभ्यामेकविंशाभ्यां । द्वाभ्यां ज्ञिन्नस्य निश्चितं ॥

मुहूर्त्तस्यैकादशभिः । भाद्भैर्भागैः प्रपूरयेत् ॥ ५४ ॥ युग्मं ॥ एवं शशी द्वितीयोऽपि । द्वितीयमर्द्धमंडलं ॥ कालेनैतावतैव शक् । भ्रमणेन प्रपूरयेत् ॥ ५५ ॥ संपूर्णस्य मंडलस्य । पूर्त्तिकालो यदेष्यते ॥ अहोरात्रद्वयं द्वाभ्यां । मुहुर्त्ताभ्यां युतं तदा ॥ ५६ ॥ एकविंशत्यधिकाभ्यां शताभ्यां चूर्णितस्य च ॥ त्रयोविंशतिरंशानां । मुहूर्त्तस्य विनिर्दिशेत् ॥ ५७ ॥ दि० २ मु० २ अं० २३ छे० २२१ ॥ मंडले पूर्त्तिकालेऽत्र । प्रत्ययः केन चेदिति ॥ त्रैराशिकेन तदपि श्रूयतां यदि कौतुक ॥ ५८ ॥ भानुर्लघुविमानत्वा—च्छीघ्रगामितयापि च ॥ षष्ट्या मुहूर्त्तैरेकैकं । मंडलं परिपूरयेत् ॥ ५९ ॥ तद्वैपरीत्या द्वाषष्ट्या । साग्रया तैर्विधुस्तु तत् ॥ साष्टषष्टिः सप्तदश—शती तानि युगे ततः ॥ ६० ॥ एकचंद्रापेक्षयार्द्ध—मंडलानि भवंति हि ॥ तावंत्येव च पूर्णानि । द्वयोरिंद्वोरपेक्षया ॥ ६१ ॥ ततश्च—

साष्टषष्टिः सप्तदश—शतमानार्द्धमंडलैः ॥ युगांतर्भाविभी रात्रिं—दिवानां यदि लभ्यते ॥ ६२ ॥ अष्टादशशतीत्रिंशा । तदा ननु किमाप्यते ॥ द्वाभ्यामर्द्धमंडलाभ्या—मिति राशित्रयं लिखेत् ॥ ६३ ॥ १७ ६८ १८ ३० २ । अंत्येन राशिना राशौ । मध्यमे गुणिते सति ॥

जातः शतानि षट्त्रिंश—त्सषष्टीन्येव जन्यते ॥ ६४ ॥ साष्टषष्टिसप्तदश—शतात्मकाद्यराशि-
ना ॥ अहोरात्रद्वयं लब्धं । चतुर्विंशं शतं स्थितं ॥ ६५ ॥ अहोरात्रस्य च त्रिंश—न्मुहूर्त्ता
इति ताडितं ॥ त्रिंशताम्नूद्विंशतीयुक् । सप्तत्रिंशच्छतात्मकं ॥ ६६ ॥ अस्मिन् साष्टषष्टिस-
प्त—दशशत्या हृते द्वयं ॥ लब्धं मुहूर्त्तयोः शेषं । शतं चतुरशीतियुक् ॥ ६७ ॥ १८४×१७६८
भागाप्राप्त्यापवर्त्यें ते । अष्टभिर्भाज्यभाजकौ ॥ त्रयोविंशतिराकोऽन्य—श्चैकविंशं शत-
द्वयं ॥ ६८ ॥ एषा मुहूर्त्तद्वाषष्टिः । सवर्णनाय गुण्यते ॥ एकविंशाभ्यां शताभ्यां । ये चो-
परितना लवाः ॥ ६९ ॥ त्रयोविंशतिरुक्ताः प्राक् । ते क्षिप्यंते भवेत्ततः ॥ त्रयोदश सहस्रा-
णि । सतत्वा सप्तशत्यपि १३७२५ ॥ ७० ॥ सर्वांतर्मंडलस्थस्य । परिधिर्यः पुरोदितः ॥ ए-
कविंशत्यधिकाभ्यां । शताभ्यां सोऽपि गुण्यते ॥ ७१ ॥ जातः षट् कोटयः षण्ण—वतिर्लक्षाः
स्वरूपतः ॥ चतुस्त्रिंशत्सहस्राणि । षट्शत्येकोनसप्ततिः ॥ ७२ ॥ सहस्रैस्त्रयोदशभिः । स-
तत्वैः सप्तभिः शतैः ॥ एषां भागे हृते लब्धा । मुहूर्त्तगतिरैंदवी ॥ ७३ ॥ योजनानां सहस्रा-
णि । पंचोपरित्रिसप्ततिभिः ॥ चतुश्चत्वारिंशान्यंश—शतानि सप्तसप्ततिः ॥ ७४ ॥ मुहूर्त्तग-

तिरित्येवं । न्नाव्येंद्वोः प्रतिमंडलं ॥ विन्नाज्योकन्नाजकेन । प्राग्वत्परिरयं निजं ॥ ७५ ॥ मुहूर्त्तीयगतौ यद्वा । वर्द्धेते प्रतिमंडलं ॥ त्रियोजनी पंचपंचां–शाश्च षसवतिः शताः ॥ ७६ ॥
न्नागा एकयोजनस्य । विन्नक्तस्य सहसूकैः ॥ त्रयोदशमितैः सप्त–शता च पंचविंशया ॥ ॥ ७७ ॥ अत्रोपपत्तिः–योजनद्विशती त्रिंशा । या वृद्धिः प्रतिमंडलं ॥ नक्ता परिरये गुणया । सा द्विशत्यैकविंशया ॥ ७८ ॥ न्नक्ता त्रयोदश सह–सूादिना राशिना च सा ॥ दत्ते त्रियोजनीं शेषा–नंशानपि यथोदितान् ॥ ७९ ॥ सर्वांतर्मंडले चंद्रौ । जनानां दृष्टिगोचरौ ॥ सहस्रैः सप्तचत्वारिं–शता त्रिषष्टियुक्तया ॥ ८० ॥ द्विशत्या च योजनानां । एकस्य योजनस्य च ॥ षष्ट्यंशैरकविंशत्या । तत्रोपपत्तिरुच्यते ॥ ८१ ॥ अंतर्मंडलपरिधे–र्दशांशे त्रिगुणीकृते ॥ इंद्वोः प्रकाशक्षेत्र स्यात् ॥ तापक्षेत्रमिवार्कयोः ॥ ८२ ॥

अर्द्धे प्रकाशक्षेत्रस्य । पूर्वतोऽपरतोऽपि च ॥ इंद्वोरपि दृष्टिपथ–प्राप्तिर्विवस्वतोरिव ॥ ॥ ८३ ॥ तथा च जंबूद्वीपप्रज्ञप्तिसूत्रं—' तयाणं इहगयस्स मणूसस्स सीयालीसाए जोअणसहस्सेहिं दोहियतेवट्ठेहिं जोअणसएहिं एगवीसाए सट्ठिन्नाएहिं जोअणस्स चंदे चख्खु-

फासं दवमागच्छइ ' एतद्वृत्तौ च—यत्तु षष्टीभागीकृतयोजनसत्कैकविंशतिभागाधिकत्वं तत्तु संप्रदायगम्यं, अन्यथा चंद्राधिकारे साधिकद्वाषष्टिमुहूर्त्तप्रमाणमण्डलपूर्त्तिकालस्य छेदराशित्वेन भणनात्सूर्याधिकारसत्कषष्टिमुहूर्त्तप्रमाणमंडलपूर्त्तिकालस्य छेदराशित्वेनानुपपद्यमानत्वात् इति दृश्यते, तदत्र तत्वं बहुश्रुतगम्यं. पंचयोजनसहस्राः । पंचविंशतियुक् शतं ॥ योजनस्य तथैकस्य । पचाविंशतिसंयुतैः ॥ ७४ ॥

त्रयोदशभिः सहस्रै—र्भक्तस्य सप्तभिः शतैः ॥ भागा नवत्यधिकानि । शतान्येकोनसप्ततिः ॥ ७५ ॥ मुहूर्त्तगतिरेषेंदोः । सर्वपर्यंतमण्डले ॥ अथात्रैव दृष्टिपथ—प्राप्तिर्विविच्यतेऽनयोः ॥ ७६ ॥ एकत्रिंशता योजन—सहस्रैरष्टभिः शतैः ॥ एकत्रिंशैः सर्वबाह्ये । दृश्येते मण्डले विधू ॥ ७७ ॥ अत्र सूर्याधिकारोक्तं ' तीसाए सट्ठिभाएहिं ' इत्यधिकं मंतव्यं, इतिजंबूद्वीपप्रज्ञप्तिवृत्तौ. अत्र सर्वाभ्यंतरसर्वबाह्यचंद्रमण्डलयोर्दृष्टिपथप्राप्तिता दर्शिता, शेषमण्डलेषु सा चंद्रप्रज्ञप्तिबृहत्क्षेत्रसमासजंबूद्वीपप्रज्ञप्तिसूत्रवृत्त्यादिग्रंथेषु पूर्वैः क्वापि दर्शिता नोपलभ्यते, ततोऽत्रापि न दर्शितेति ज्ञेयं.

भतिमंडलमित्येवं । मुहूर्त्तगतिरीरिता ॥ मंडलार्द्धमंमलयोः । कालमानमथ ब्रुवे ॥ ८८ ॥
नवशत्या त्रिन्नक्तस्य । चंचत्पंचदशाढ्यया ॥ विन्नागैर्मंडलार्द्धस्य । किलैकत्रिंशतोनितं ॥८९॥
अर्द्धमंमलमेकेना–होरात्रेण समाप्यते ॥ एकैकेन शशांकेन । यत्र कुत्रापि मंडले ॥ ९० ॥
द्विचत्वारिंशदधिकैः । शतैश्चतुर्न्निरेव च ॥ अहोरात्रस्य न्नक्तस्य । लवैकात्रिंशताधिकौ ॥९१॥
अहोरात्रौ पूर्त्तिकाल । एकस्मिन्मंमले विधोः ॥ रविस्तु पूरयेत्पूर्णा–होरात्रद्वितयेन तत् ॥
॥ ९२ ॥ मंडलार्द्धमंडलयो–रुक्तैवं कालसंमितिः ॥ साधारणासाधारण–मंडलानि ब्रवीम्य-
थ ॥ ९३ ॥ प्रथमं च तृतीयं च । षष्टं सप्तममष्टमं ॥ दशमैकादशे पंच–दशमित्यष्टमंडली
॥ ९४ ॥ नक्तत्रैरविरहिताः । सदापि तुहिनद्युतः ॥ मंडलेष्वेषु नक्तत्रा–एयपि चारं चरंति यत्
॥९५॥द्वितीयं च चतुर्थं च । पंचमं नवमं तथा ॥ त्रीणि च द्वादशादीनि । किलैषा सप्तमं-
मली ॥ ९६ ॥ ऋक्षैः सदा विरहिता । मंमलेष्वेषु नो न्नवेत् ॥ कदापि चारऋक्षाणा–मूषरे-
षु गवामिव ॥ ९७ ॥ प्रथमं तृतीयमेका–दशं पंचदशं तथा ॥ रविचंद्रोडुसामान्या । मंमला-
नां चतुष्टयी ॥ ९८ ॥ एतेषु मंडलेष्विंदु–र्नक्षत्राणि तथा रविः ॥ चारं चरंति सर्वेऽपि । रा-

जमार्गे जना इव ॥ ९९ ॥ षष्टादीनि पंच सूर्य—चारहीनानि सर्वथा ॥ शेषाणि मंडलानींदोः । किंचिद्भानुः स्पृशेदपि ॥ ४०० ॥ साधारणासाधारण—मंमलान्येवमूचिरे ॥ संप्रतींदोवृद्धिहानि—प्रतिभासः प्ररूप्यते ॥ १ ॥

अवस्थितस्वभावं हि । स्वरूपेणेंदुमंडलं ॥ सदापि हानिर्वृद्धिर्वा । प्रेक्ष्यते सा न तात्विकी ॥ २ ॥ केवल या शुक्लपक्षे । वृद्धिर्हानिस्तथा परे ॥ राहुविमानावरण—योगात्सा प्रतिभासते ॥ ३ ॥ तथाहि—ध्रुवराहुः पर्वराहु—रेवं राहुर्द्विधा भवेत् ॥ ध्रुवराहोस्तत्र कृष्ण—तमं विमानमीरितं ॥ ४ ॥ तच्च चंद्रविमानस्य । प्रतिष्ठितमधस्तले ॥ चतुरंगुलमप्राप्तं । चारं चरति सर्वदा ॥ ५ ॥ तेनापावृत्य चावृत्य । चरत्यधः शनैः शनैः ॥ वृद्धिहानिप्रतिभासः। पोस्फुरीतींदुमंडले ॥ ६ ॥ तथोक्तं—चंदस्स नेव हाणी । नवि वुड्ढी वा अवठिओ चंदो ॥ सुक्किलभावस्स पुणो । दीसइ वुड्ढीय हाणी य ॥ ७ ॥ किन्हं राहुविमाणं । निच्चं चंदेण होइ अविरहियं ॥ चउरंगुलमप्पत्तं । हिठ्ठा चंदस्स तं चरइ ॥ ८ ॥ तेणं वट्टइ चंदो । परिहाणी वावि होइ चंदस्स ॥ तत्र प्रकल्प्य भागांश्च । भागान् शशांकमंडले ॥ हियते पंचदशभि—र्ले-

न्यतेंशश्चतुष्टयं ॥ ९ ॥

एतावदाव्रियते त-त्प्रत्यहं भरणीभुवा ॥ अहोभिः पंचदशभि-रेवमाव्रियतेऽखिलं ॥१०॥
द्वौ भागौ तिष्ठतः शेषौ । सदैवानावृतौ च तौ ॥ एषा कला षोडशीति । प्रसिद्धिमगमद्भुवि
॥ ११ ॥ कल्प्यतेंशाः पंचदश । विमाने राहवेऽत्र सः ॥ जयत्येकैकांशवृद्ध्या । नीतिज्ञोऽरि-
मिवोडुपं ॥ १२ ॥ तच्चैवं—स्वीयपंचदशांशेन । कृष्णप्रतिपदि ध्रुवं ॥ मुक्त्वांशौ द्वावनावा-
र्यौ । शेषश्चेष्टः स्मितत्विषः ॥ १३ ॥ चतुर्भागात्मकं पंच-दशं भागं विधुंतुदः ॥ आवृणोति
द्वितीयायां । निजभागद्वयेन च ॥ १४ ॥ अष्टभागात्मकौ पंच-दशांशौ द्वौ रुणद्धि सः ॥ ष-
ष्टिं भागानित्यमायां । स्वैः पंचदशभिर्लवैः ॥ १५ ॥ त्रिभिर्विशेषकं ॥ ततः शुक्लप्रतिपदि । च-
तुर्भागात्मकं लवं ॥ एकं पंचदशं व्यक्ती-करोत्यपसरन् शनैः ॥ १६ ॥ द्वितीयायां द्वौ वि-
भागौ । पूर्णिमायामिति क्रमात् ॥ द्वाषष्टयंशात्मकः सर्वः । स्फुटीभवति चंद्रमाः ॥ १७ ॥
इंदोश्चतुर्लवात्मांशो । यावत्कालेन राहुणा ॥ पिधीयते मुच्यते च । तावत्कालमिता तिथिः
॥ १८ ॥ इंदोः पिधीयमानाः स्युः । कृष्णाः प्रतिपदादिकाः ॥ तिथयो मुच्यमानाः स्युः । शु-

ह्याः प्रतिपदादिकाः ॥ १९ ॥ तथाहुः—कालेण जेण हायइ । सोलसभागो तु सातिही हो-
इ ॥ तह चेव य वुड्ढीए । एवं तिहिणो समुप्पत्ती ॥ २० ॥ एकोनत्रिंशता पूर्णै-र्मुहूर्तैश्च द्वि-
षष्टिजैः ॥ द्वात्रिंशता मुहूर्तांशै-रेकैको रजनीपतेः ॥ २१ ॥ चतुर्दश षष्ट्यंशरूपो । राहुणा छा-
द्यते लवः ॥ मुच्यते च तदेताव-न्माना: स्युस्तिथयोऽखिलाः ॥ २२ ॥ एवं च—द्वाष-
ष्टिभक्ताहोरात्र-स्यैकषष्ट्या लवैर्मिता ॥ तिथिरेवं वक्ष्यते यद् । तद्युक्तमुपपद्यते ॥ २३ ॥
तिथिमानेऽस्मिंश्च हृते । त्रिंशता स्याद्यथोदितः ॥ मासश्चांद्र एवमपि । त्रिंशत्तिथिमितः
खलु ॥ २४ ॥ ननु राहुविमानेन । योजनार्द्धमितेन वै ॥ षट्पंचाशद्योजनैक-षष्टिभागमितं
खलु ॥ २५ ॥ कथमाच्छादितुं शक्यं । गरीयः शशिमंडल ॥ लघीयसा गरीयो हि । दुरा-
वारमिति स्फुटं ॥ २६ ॥ एवमुत्तरयंत्यत्र । केचित्प्राक्तनपंडिताः ॥ लघीयसोऽप्यस्य कांति-
जालैरत्यंतमेचकैः ॥ २७ ॥

आच्छाद्यते महदपि शशिबिंबं प्रसृत्वरैः ॥ दावानलोच्छलधूम-स्तोमैरिव नभोंगणं ॥२८॥
अन्ये त्वभिदधुर्धीरा । योजनार्द्धं यदुच्यते ॥ मानं ग्रहविमानस्य । तदेतत्प्रायिक ततः ॥२९॥

योजनायामविष्कंभं । तद् द्वात्रिंशांशमेदुरं ॥ स्वर्णाणुमंडलं तेन । विधुराव्रियते सुखं ॥३०॥ तथा चाहुः—आयामो विक्खंभो । जोअणमेगं तु तिगुणिअ परिही ॥ अड्ढाइज्जधणुसया । राहुस्स विमाणबाहल्लं ॥ ३१ ॥ संग्रहण्यादर्शे प्रक्षेपगाथेयं दृश्यते. भगवतीवृत्तावप्येतस्याश्चालनाया एवं प्रत्यवस्थानं—यदिदं ग्रहविमानमर्धयोजनप्रमाणमिति तत्प्रायिकं, ततश्च राहोर्ग्रहस्योक्ताधिकप्रमाणमपि विमानं संभाव्यते. अन्ये पुनराहुर्लघीयसोऽपि राहुविमानस्य महता तमिस्रजालेन तदाव्रियत इति भगवतीसूत्रवृत्तौ १२ शते पंचमोद्देशके, तत्त्वं तु केवलिनो विदंति. कदाचिद्ग्रहण इव । विमानमुपलभ्यते ॥ वृत्ताकृति ध्रुवराहोः । कदाचिन्न तथा च किं ॥ ३४ ॥ दिनेषु येषु तमसा—भिभूतः स्याद्भृशं शशी ॥ तेषूपलभ्यते वृत्तं । विमानमस्य येषु च ॥ ३५ ॥ शशी विशुद्धकांतित्वा—त्तमसा नाभिभूयते ॥ वृत्तं विमानं नैतस्य । दिनेषु तेषु दृश्यते ॥ ३६ ॥ तथोक्तं—वट्टछेअ कइवइ । दिवसे धुवराहुणो विमाणस्स ॥ दीसइ परं न दीसइ । जह गहणे पव्वराहुस्स ॥ ३७ ॥ आचार्य आह—अच्चत्थं न हि तमसा—भिभूय तेजं ससी विसुद्धंतो ॥ तेण न वट्टछेअ । गहणे उ तमोतमो बहुलो ॥ ३८ ॥ भगवती-

वृत्तौ–यदा तु लेश्यामावृण्वन् । पर्वराहुर्व्रजत्यधः ॥ पुष्पदंतमंडलयो–र्यथोक्तकालमाननः ॥
॥ ३९ ॥ तदा भवत्युपरागो । यथार्ह चंद्रसूर्ययोः ॥ जनैर्ग्रहणमित्यस्य । प्रसिद्धिः परिज्ञा-
प्यते ॥ ४० ॥ जघन्यतस्तत्र षण्णां । मासामंते शशिग्रहः ॥ उत्कर्षतो द्विचत्वारिं–शतो मा-
सामतिक्रमे ॥ ४१ ॥ मासैर्जघन्यतः षड्भि–र्जायते तरणिग्रहः ॥ संवत्सरैरष्टचत्वा–रिंशतोत्क-
र्षतः पुनः ॥ ४२ ॥ यदा स्वभ्राणुरागच्छन् । गच्छन् वा पुष्पदंतयोः ॥ लेश्यामावृणुयात्तर्हि ।
वदंति मनुजा भुवि ॥ ४३ ॥ चंद्रो रविर्वा तमसा । गृहीत इति यद्यथ ॥ लेश्यामावृत्य पा-
र्श्वेन । गच्छन्यर्कशशांकयोः ॥ ४४ ॥ तदा वदंति मनुजा । रविणा शशिनाथवा ॥ राहोः कु-
क्षिर्भिन्न इति । यदा पुनर्विधुंतुदः ॥ ४५ ॥ अर्केन्दुलेश्यामावृत्या–पसर्पति तदा भुवि ॥ वदं-
ति मनुजा वांतौ । राहुणा शशिभास्करौ ॥ ४६ ॥ यदा तु गच्छन् वागच्छन् । राहुश्चंद्रस्य वा
रवेः ॥ लेश्यामावृत्य मध्येन । गच्छत्याहुर्जनास्तदा ॥ ४७ ॥ राहुणा रविरिंदुर्वा । विभिन्न इ-
ति चेत्पुनः ॥ सर्वात्मना चंद्रसूर्य–लेश्यामावृत्य तिष्ठति ॥ ४८ ॥ वावदंतीह मनुजाः । पर-
मार्थाविदस्तथा ॥ राहुणा क्षुधितेनेव । ग्रस्तश्चंद्रोऽथवा रविः ॥ ४९ ॥ शृंगाटकश्च जटिलः

। कन्नकः खरकस्तथा ॥ दुर्द्धरः सगरो मत्स्यः । कृष्णसर्पश्च कच्छपः ॥ ५० ॥ इत्यस्य नव नामानि । विमानस्त्वस्य पंचधा ॥ कृष्णनीलरक्तपीत–शुक्लवर्णमनोरमाः ॥ ५१ ॥ भगवतीसूत्र शत १२ षष्ठोद्देशके.

संपूर्णसर्वावयवो विशिष्टा–लंकारमाल्यांबररम्यरूपः ॥ महर्द्धिको राजति राहुरेष । लोकप्रसिद्धो ननु मौलिमात्रं ॥ ५२ ॥ किंच —विधोरेकैकमयन–महोरात्रास्त्रयोदश ॥ चतुश्चत्वारिंशदहो–रात्रांशाः सप्तषष्टिजाः ॥ ५३ ॥ द्वाभ्यां चंद्रायणाभ्यां स्या–न्मासः सप्तविंशतिः ॥ अहोरात्राः सप्तषष्टि–भागास्तत्रैकविंशतिः ॥ ५४ ॥ अत्रोपपत्तिस्त्वेवं—सर्वोडूनां चंद्रयोगो । वक्ष्यमाणः समुच्चितः ॥ मुहूर्त्तानां शतान्यष्टै–कोनविंशान्यथो लवाः ॥ ५५ ॥ स्युः सप्तविंशतिः सप्त–षष्टिजास्त्रिंशता ततः ॥ मुहूर्त्तांके हृते लब्धा–होरात्रसप्तविंशतिः ॥ ५६ ॥ मुहूर्त्ता नव शिष्यते । भागाश्च सप्तविंशतिः ॥ मुहूर्त्ताः सप्तषष्टिघ्नाः । कार्याः कर्त्तुं सवर्णनं ॥ ५७ ॥ षट्शती त्र्युत्तरा स्यात्ता । सप्तविंशतिभागयुक् ॥ बभूव षट्शती त्रिंशा । भागोऽस्यास्त्रिंशता पुनः ॥ ५८ ॥ सप्तषष्टिर्नवा भागा । लभ्यंते एकविंशतिः । यथोक्ता

ऽयं भमासोऽस्या–र्छार्द्धे याम्योत्तरायणे ॥ ५९ ॥ चंद्रोत्तरायणारंभो । युगादिसमये भवेत् ॥ प्रागुत्तरायणपश्चा–द्याम्यायनमिति क्रमः ॥ ६० ॥ प्रवृत्तिः स्याद्यतो ज्योति–श्चक्रचारैकमूल-योः ॥ सूर्ययाम्यायनशीतां–शूत्तरायणयोः किल ॥ ६१ ॥ युगादावेव युगप–त्तत्रार्कदक्षिणा-यन ॥ पुष्पमप्तषष्टिजांश–त्रयोविंशत्यतिक्रमे ॥ ६२ ॥ युगादावभिजिद्योग–प्रथमक्षण एव तु ॥ चंद्रोत्तरायणारंभ–स्ततो युक्तं पुरोदितं ॥ ६३ ॥ तथोक्तं जंबूद्वीपप्रज्ञप्तिवृत्तौ——सकल-ज्योतिश्चारमूलस्य सूर्यदक्षिणायनस्य चंद्रोत्तरायणस्य च युगपत्प्रवृत्तिर्युगादावेव, साऽपि चं-द्रायणस्याभिजिद्योगप्रथमसमय एव, सूरायणस्य तु पुष्पस्य त्रयोविंशतौ सप्तषष्टिभागेषु व्यतीतेषु, तेन सिद्धं युगस्यादित्वमिति.

पुष्पस्य सप्तषष्ट्युत्थ–विंशत्यंशाधिके ततः ॥ मुहूर्त्तदशके भुक्ते । मुहूर्त्तैकोनविंशतौ ॥ ॥ ६४ ॥ भोग्यायां सप्तचत्वारिं–शदंशायां समाप्यते ॥ विधुनोदीच्यमयनं । याम्यमारभ्यते ऽपि च ॥ ६५ ॥ एवं च सर्वनक्षत्र–भोगार्द्धानुभवात्मके ॥ सामर्थ्यादवसीयेते । याम्योत्त-रायणे विधोः ॥ ६६ ॥ नत्वाद्यांत्यमंडलाभि–मुखप्रसरणात्मके ॥ याम्योत्तरायणे स्यातां ।

भानोरिव विधोरपि ॥ ६७ ॥ किंच—लोकप्रसिद्धमकर—कर्कराशिस्थितस्ततः ॥ उदीच्यं या-
म्यमयनं । विधुरारभते क्रमात् ॥ ६८ ॥ युगे युगे चतुस्त्रिंशं । शतं चंद्रायणानि वै ॥ त्रिंशा-
न्यष्टादशशता—न्येभिश्च युगवासराः ॥ ६९ ॥ युगातीतपर्वसंख्या । कार्या पंचदशाहता ॥ क्षि-
प्यंते तत्र तिथयः । पर्वोपरिगतास्ततः ॥ ७० ॥

राशेरस्माद्विभज्यंते—वमरात्रास्ततः परं ॥ इंदुमासार्द्धेन भागे । यल्लब्धं तद्विचार्यते ॥
॥ ७१ ॥ लब्धे समेंके विज्ञेय—मतीतं दक्षिणायनं ॥ विषमेंके पुनर्लब्धे । व्यतीतमुत्तरायणं
॥ ७२ ॥ शेषांस्तूद्धरितानंशान् । सप्तषष्ट्या हरेद्बुधः ॥ लब्धांकप्रमिता वर्त्त—मानायनदिना-
गताः ॥ ७३ ॥ तत्राप्युद्धरिता येंका—स्ते विज्ञेया विशारदैः ॥ दिनस्य सप्तषष्ट्यंशा । दर्श्य-
तेऽत्र निदर्शनं ॥ ७४ ॥ यथा युगादेरारभ्य । नवमासव्यतिक्रमे ॥ पंचम्यां केनचित्पृष्टं । किं-
चंद्रायणमस्ति भोः ॥ ७५ ॥ कुर्यात्पंचदशघ्नानि । पर्वाण्यष्टादशात्र च ॥ क्षिपेत्ततान् पंच
तिथीन् । त्यक्त्वावमचतुष्टयं ॥ ७६ ॥ एकसप्तत्या समेतं । संजातं शतयोर्द्वयं ॥ भाजकोऽ-
स्य भमासार्द्धं । पूर्णरूपात्मकं न तत् ॥ ७७ ॥ किंतु सप्तषष्टिभागैः । कियद्भिरधिकं ततः ॥

एष राशिः सप्तषष्ट्या । भागसाम्याय गुण्यते ॥ ७८ ॥ अष्टादश सहस्राणि । सप्तपंचाशताधिकं ॥ शतं जातमितश्चोडु–मासार्द्धदिवसा अपि ॥ ७९ ॥ सप्तषष्ट्या हृताः शेषै–र्वेदवेद ४४ लवैर्युताः ॥ जाताः पंचदशाढ्यानि । शतानि नव तैः पुनः ॥ ८० ॥ हृते भाज्यांकेऽ १८१५७ यनानि । लब्धान्येकोनविंशतिः ॥ शेषा भागसप्तशती । द्विसप्तत्यधिका स्थिता ॥ ॥ ८१ ॥ अस्या भागे सप्तषष्ट्या । लब्धा रुद्रमिता दिनाः ॥ शेषाः पंचत्रिंशदंशा–स्तिष्ठंति सप्तषष्टिजाः ॥ ८२ ॥ चंद्रायणान्यतीतानी–त्येवमेकोनविंशतिः ॥ अनंतरमतीतं य–त्तच्चंद्रस्योत्तरायणं ॥ ८३ ॥ वर्त्तमानस्य च याम्या–यनस्य वासरा गताः ॥ एकादश लवाः पंच–त्रिंशच्च सप्तषष्टिजाः ॥ ८४ ॥ अत्र पूर्णा भविष्यंति । समाप्ते पंचमे तिथौ ॥ एवमन्यत्रापि भाव्यं । करणं गणकोत्तमैः ॥ ८५ ॥ इंदुस्तत्परिचारश्च । रूपकांत्यादिभिर्भृशं ॥ सश्रीक इति विख्यातः । ससी प्राकृतभाषया ॥ ८६ ॥ मृगश्चिह्नं विमानेऽस्य । पीठिकायां प्रतिष्ठितं ॥ मृगांकितविमानत्वा–न्मृगांक इति वोच्यते ॥ ८७ ॥

तथा च पंचमांगे—' से केणट्ठेणं भंते एवं वुच्चइ? चंदे ससी चंदे ससीगो, चंदस्स

णं जोतिसिंदस्स जोतिसरस्सो मियंके विमाणेकंता देवाकंताउ देवीउ ' इत्यादि १७५ ॥ इ-
ति चंद्रस्वरूपनिरूपणं. एवं संक्षेपतश्चंद्र–निरूपणं यथा कृतं ॥ तथैव वर्णयामोऽथ। नक्षत्रा-
णां निरूपणं ॥ ८८ ॥ आदौ संख्या मंमलानां १ । तेषां क्षेत्रप्ररूपणा २ ॥ एकऋक्षविमा-
नानां । तथांतरं परस्परं ३ ॥ ८९ ॥ सुमेरोर्मंडलाबाधा ४ । विष्कंभादि च मंडले ५ ॥ मु-
हूर्त्तगतिरावेशः ६ । शशांकमंमलैः सह ७ ॥ ९० ॥ दिग्योगो ८ देवता ९ स्तारा–संख्यो १०
डूनां तथाकृतिः ११ ॥ सूर्येंदुयोगाद्धामानं १२ । कुलाद्याख्यानिरूपणं १३ ॥ ९१ ॥ अमावा-
स्या पूर्णिमानां । नक्षत्रयोगकीर्त्तनं १४ ॥ प्रतिमासमहोरात्र–समापकानि तानि च १५ ॥
॥ ९२ ॥ एभिश्च पंचदशभि–र्द्वारैः पूर्णोपुरैरिव ॥ गम्योडुपरिपाटीति । तामेव प्रथमं ब्रुवे ॥
॥ ९३ ॥ अभिजिच्छ्रवणं चैव । धनिष्ठाशततारिका ॥ पूर्वा भद्रपदा सैवो–त्तरादिकाश्च रेव-
ती ॥ ९४ ॥ अश्विनी भरणी चैव । कृतिका रोहिणी तथा ॥ मृगशीर्षं तथा चार्द्रा । पुन-
र्वसू ततः परं ॥ ९५ ॥ पुष्पोऽश्लेषा मघाः पूर्वा–फाल्गुन्युत्तरफाल्गुनी ॥ हस्ताश्चित्रा तथा
स्वाति–र्विशाखा चानुराधिका ॥ ९६ ॥ ज्येष्ठा मूलं तथा पूर्वा–षाढा सैवोत्तरापि च ॥ जि-

क्रम०

ण ॥

नप्रवचनोपज्ञो । नक्षत्राणामयं क्रमः ॥ ए७ ॥
अश्विन्याः कृत्तिकाद्या या । प्रसिद्धं लौकिकक्रमं ॥ नक्षत्रंध्यात्र प्रवचने । यदेतत्क्रमदर्शनं
॥ ए८ ॥ तत्रः हेतुः प्रथमतः । संयोगः शशिना समं ॥ युगस्यादावभिजितः । शेषाणां तु त-
तः क्रमात् ॥ एए ॥ कृत्तिकादिक्रमस्तु लोके सप्तशिलाकचक्रादिष्वेव स्थानेषूपयोगीश्रूयते.
आरभ्य नन्वभिजितो । नक्षत्रानुक्रमो यदि ॥ शेषोडूनामिव कथं । व्यवहार्यत्वमस्य न ॥१॥
अत्रोच्यतेऽस्य शशिना । योगो यदल्पकालिकः ॥ ऋक्षांतरानुप्रविष्ट—तयास्य तद्विवक्षणं ॥
॥ २ ॥ यदुक्तं समवायांगे सप्तविंशे समवाये ‘ जंबूदीवे दीवे अभीइवज्जेहिं सत्ताविसाहिं
णक्खत्तेहिं संववहारे वट्टइ ’ एतद्वृत्तिर्यथा—जंबूद्वीपेन धातकीखंडादौ अभिजिद्वर्जैः सप्त-
विंशत्या नक्षत्रैर्व्यवहारः प्रवर्त्तते, अभिजिन्नक्षत्रस्योत्तराषाढाचतुर्थपादानुप्रवेशनादिति. लो-
के तु—औत्तराषाढमंत्यांहि—चतस्रश्च श्रुतेर्घटीः ॥ वदंत्यभिजितो भोगं । वेधलत्ताद्यवेक्षणे ॥
॥ ३ ॥ अष्टावेव मंडलानि । स्युरष्टाविंशतेरपि ॥ उडूनां तत्र चारस्तु । नियते स्वस्वमंडले
॥ ४ ॥ इति मंडलसंख्या ॥ साशीतियोजनशते । द्वीपस्यांतरवर्त्तिनि ॥ उक्तं मुक्तिवधूकांतै

॥ ६ए

-नक्षत्रमंडलद्वयं ॥ ५ ॥ त्रिंशे च योजनशत-त्रये लवणवारिधेः ॥ षड् नक्षत्रमंडलानि।
दृष्टानि विष्टपेक्षिभिः ॥ ६ ॥ नक्षत्रमंडलं चक्र-वालविष्कंभतो भवेत् ॥ गव्यूतमेकं प्रत्येकं।
गव्यूतार्द्धं च मेदुरं ॥ ७ ॥ एवं नक्षत्रजातीय-मंडलक्षेत्रसंमितिः ॥ दशोत्तरा पंचशती। यो-
जनानां निरूपिता ॥ ८ ॥ नत्वेकैकस्य ऋक्षस्य। मंडलक्षेत्रसंभवः ॥ रवेरिवायनाभावा-त्स-
दाचारात्स्वमंडले ॥ ९ ॥ इति मंडलक्षेत्रं ॥ यत्र यत्र यानि यानि। वक्ष्यंते भानि मंडले ॥
स्यात्तदीयविमानानां। द्वे योजने मिथोंतरं ॥ १० ॥ मिथोंतरममूनां च-दिदमेव भवेत्तदा ॥
मंडलक्षेत्रमन्यत्स्या-द्भूशून्यं तच्च नेष्यते ॥ ११ ॥ यत्तु—' दो जोअणाइं णक्खत्तमंडलस्स
णक्खत्तमंडलस्स य अबाहाए अंतरे पण्णत्ते ' इत्येतज्जंबूद्वीपप्रज्ञप्तिसूत्रं, तत् अष्टास्वपि मंड-
लेषु यत्र यत्र मंडले यावंति नक्षत्राणां विमानानि तेषामंतरबोधकं यच्च अभिजिन्नक्षत्रविमा-
नस्य श्रवणनक्षत्रविमानस्य च परस्परमंतरं द्वे योजने इति उ० श्रीशांतिचंद्रगणिभिः स्वकृ-
तवृत्तौ व्याख्यायि तदभिप्रायं सम्यग् न विद्मः, यदपि उ० श्रीधर्मसागरगणिभिः स्वकृतवृत्तौ
एतत्सूत्रव्याख्याने द्वे योजने नक्षत्रस्य २ चाबाधया अंतरं प्रज्ञप्तमित्येव लिखितमस्ति तद-

प्यन्निप्रायशून्यमेव.

चतुश्चत्वारिंशतैव । सहस्रैरष्टभिः शतैः ॥ विंशैश्च योजनैर्मेरोः । सर्वांतरं भ्रमंडलं ॥
॥ १२ ॥ सहस्रैः पंचचत्वारिं–शता विंशैस्त्रिभिः शतैः ॥ योजनैर्मेरुतः सर्व–बाह्यं नक्षत्रमं-
डलं ॥ १३ ॥ इति सुमेरोरबाधा ॥ विष्कम्भायामपरिधि–प्रमुख मानमेतयोः ॥ रवेः सर्वांत-
रसर्व–बाह्यमंडलयोरिव ॥ १४ ॥ इति मंडलविष्कम्भादि ॥ सहस्राणि पंचशत–द्वयं च पंच-
षष्टियुक् ॥ योजनानि योजनस्य । भक्तस्यैकस्य निश्चितं ॥ १५ ॥ एकविंशत्या सहस्रैः । ष-
ष्ट्याढ्यैर्नवभिः शतैः ॥ विभागाश्च समधिकाः । पूर्वोक्तयोजनोपरि ॥ १६ ॥ अष्टादश सह-
स्राणि । शतद्वयं त्रिषष्टियुक् ॥ सर्वांतमंडलोडूनां । मुहूर्त्तगतिरेषिका ॥ १७ ॥ उपपत्तिश्चात्र–

नक्षत्रं सर्वमप्यत्र । पूरयेत्स्वस्वमंडलं ॥ मुहूर्त्तैरेकोनषष्ट्या । मुहूर्त्तस्य तथा लवैः ॥१८॥
सप्तषष्टित्रिंशत–विभक्तस्य त्रिभिः शतैः ॥ सप्तोत्तरैः प्रत्ययश्च । त्रैराशिकात्तदुच्यते ॥१९॥
नक्षत्रार्द्धमंडलानां । संपूर्णयुगवर्त्तिनां ॥ पंचत्रिंशत्समधिकै–र्यद्यष्टादशभिः शतैः ॥ २० ॥ अ-
ष्टादशशती त्रिंशा—होरात्राणामवाप्यते ॥ द्वाभ्यामर्द्धमंडलाभ्यां । किमाप्यते तदा वद ॥

॥ २१ ॥ १८ । ३५ । १८ । ३० । २ अत्रांत्यराशिना राशौ । मध्यमे गुणिते सति ॥ त्रिसहस्री षट्शती च । जाता षष्ट्यधिका किल ॥ २२ ॥ पंचत्रिंशत्समधिके— नाष्टादशशतात्मना ॥ आद्येन राशिना भागे । रात्रिंदिवमवाप्यते ॥ २३ ॥ अष्टादशशती शेषा । पंचत्रिंशतियुक् स्थिता ॥ मुहूर्त्तानयनायैषा । त्रिंशता गुणिताभवत् ॥ २४ ॥ चतुःपंचाशत्सहस्राः । सार्द्धा सप्तशतीति च ॥ एषां भागेऽष्टादशभिः । पंचत्रिंशद्युतैः शतैः ॥ २५ ॥ लब्धा मुहूर्त्ता एकोन—त्रिंशत्ततोऽपवर्त्तनं ॥ छेद्यछेदकयोः राश्योः । पंचभिस्तौ ततः स्थितौ ॥ २६ ॥ सप्ताढ्या त्रिशती भाज्यो । भाजकः सप्तषष्टियुक् ॥ त्रिशती येऽत्र लब्धाश्चै—कोनत्रिंशन्मुहूर्त्तकाः ॥ २७ ॥ त्रिंशन्मुहूर्त्तरूपेऽह्नो—रात्रे पूर्वागतेऽन्विताः ॥ ते मुहूर्त्ताः स्युरेकोन—षष्टी राशिरसौ पुनः ॥ २८ ॥ गुण्यते भागसाम्याय । सप्तषष्टिसमन्वितैः ॥ त्रिभिः शतैः क्षिप्यतेऽस्मिन् । सप्ताढ्यांशशतत्रयी ॥ २९ ॥ सषष्टिर्नवशत्येवं । सहस्राश्चैकविंशतिः ॥ अयं च राशिः परिधे—र्भाजकः प्रतिमंडलं ॥ ३० ॥ तिस्रो लक्षाः पंचदश । सहस्राणि तथोपरि ॥ नवाशीतिः परिक्षेपः । सर्वाभ्यंतरमंडले ॥ ३१ ॥

राशिर्योजनरूपोऽयं । भागात्मकेन राशिना ॥ कथं विभाज्योऽसदृश-स्वरूपत्वादसौ ततः ॥ ३२ ॥ तेनैवार्हति गुणनं । गुणितो येन भाजकः ॥ ततस्त्रिभिः शतैः सप्त-षष्ट्याढ्यैरेष गुण्यते ॥ ३३ ॥ जाता एकादश कोट्यः । षट्पंचाशच्च लक्षिकाः ॥ सप्तत्रिंशत्सहस्राणि । षट्शती च त्रिषष्टियुक् ॥ ३४ ॥ सहस्रैरेकविंशत्या । षष्ट्याढ्यैर्नवभिः शतैः ॥ भागेऽस्य राशेः प्रागुक्ता । मुहूर्त्तगतिराप्यते ॥ ३५ ॥ तथा—योजनानां त्रिपंचाश-च्छती सैकोनविंशतिः ॥ सहस्रैरेकविंशत्या । षष्ट्याढ्यैर्नवभिः शतैः ॥ ३६ ॥ भक्तस्य योजनस्यांश-सहस्राः षोडशोपरि ॥ सपंचषष्टिस्त्रिशती । गतिः सर्वांत्यमंडले ॥ ३७ ॥ तथाहि—

लक्षत्रयं योजनाना-मष्टादशसहस्रयुक् ॥ शतत्रयं पंचदशं । परिक्षेपोंत्यमंडले ॥ ३८ ॥ अयं त्रिभिः सप्तषष्टि-सहितस्ताडितः शतैः ॥ कोट्य एकादश लक्षा । अष्टषष्टिः किलाधिकाः ॥ ३९ ॥ सहस्रैरेकविंशत्या । शतैः षभिः सपंचभिः ॥ राशेरस्यैकविंशत्या । सहस्रैर्नवभिः शतैः ॥ ४० ॥ हृते षष्ट्यधिकैर्भागे । मुहूर्त्तगतिराप्यते ॥ नक्षत्राणां किल सर्व-बाह्यमंडलचारिणां ॥ ४१ ॥ इति मुहूर्त्तगतिः ॥ षट्सु शेषमंडलेषु । मुहूर्त्तगतिसंविदे ॥ सुखेन तत्त-

त्परिधि–ज्ञानाय क्रियतेऽधुना ॥ ४२ ॥ भमंडलानां सर्वेषां । मंडलेष्वमृतद्युतेः ॥ समवता-
रस्तत्राद्य–माद्ये शशांकमंडले ॥ ४३ ॥ भमंडलं द्वितीयं च । तृतीये चंद्रमंडले ॥ षष्ठे तृती-
यं विज्ञेयं । लवणोदधिभाविनि ॥ ४४ ॥ चतुर्थं सप्तमे ज्ञेयं । तथा पंचममष्टमे ॥ विज्ञेयं द-
शमे षष्ठ–मेकादशे च सप्तमं ॥ ४५ ॥ अष्टमं च पंचदशे । शेषाणि तु सदोडुभिः ॥ सप्त
चंद्रमंडलानि । रहितानि विनिर्दिशेत् ॥ ४६ ॥ एषां चंद्रमंडलानां । परिक्षेपानुसारतः ॥ पू-
र्वोक्तविधिना भानां । मुहूर्तगतिराप्यते ॥ ४७ ॥ इति चंद्रमंडलावेशः ॥ अभिजिच्छ्रवणाश्चैव
। धनिष्ठा शततारिका ॥ पूर्वोत्तरा भद्रपदा । रेवती पुनरश्विनी ॥ ४८ ॥ भरणी फाल्गुनी
पूर्वा । फाल्गुन्येव तथोत्तरा ॥ स्वातिश्च द्वादशैतानि । सर्वाभ्यंतरमंडले ॥ ४९ ॥ चरंति त-
न्मंडलार्द्धे । यथोक्तकालमानतः ॥ पूरयंति तदन्यार्द्धे । तथा तान्यपराण्यपि ॥ ५० ॥ पुनर्व-
सूमघाश्चेति । द्वयं द्वितीयमंडले ॥ तृतीये कृत्तिकास्तुर्ये । चित्रा तथा च रोहिणी ॥ ५१ ॥
विशाखा पंचमे षष्ठे–ऽनुराधा सप्तमे पुनः ॥ ज्येष्ठाष्टमे त्वष्ट भानि । सदा चरंति तद्यथा ॥
॥ ५२ ॥ आर्द्रा मृगशिरः पुष्यो–ऽश्लेषा मूलं करोऽपि च ॥ पूर्वाषाढोत्तराषाढे । इत्यष्टांतिम-

मंडले ॥ ५३ ॥ पूर्वोत्तराषाढयोस्तु । चतुस्तारकयोरिह ॥ द्वे द्वे स्तस्तारके मध्ये । बहिश्चाष्टममंडलात् ॥ ५४ ॥

अष्टानां द्वादशानां च । बाह्याभ्यंतरचारिणां ॥ सर्वेभ्योऽपि बहिर्मूलं । सर्वेभ्योऽभ्यंतरेऽभिजित् ॥ ५५ ॥ तथाहुः—' अह भरणिसाइउवरिं बहिमूलोभिंतरे अभिई ' यानि द्वादश रुक्षाणि । सर्वाभ्यतरमंमले ॥ तानि चंद्रस्योत्तरस्यां । संयुज्यंतेऽमुना समं ॥ ५६ ॥ एभिर्यदोडुभिः सार्द्धं । योगस्तदा स्वभावतः ॥ शेषेष्वेव मंमलेषु । भवेच्चारो हिमद्युतेः ॥ ५७ ॥ सर्वांतर्मंडलस्थाना–मेषामुत्तरवर्त्तिता ॥ चंद्राद्युक्ता तदेभ्यश्च । विधोर्दक्षिणवर्त्तिता ॥ ५८ ॥ मध्यमीयमंडलेषु । यान्युक्तान्यष्ट तेषु च ॥ त्रिना ज्येष्टां त्रिधा योगः । सप्तानां शशिना समं ॥ ५९ ॥ औत्तराहो दाक्षिणात्यो । योगः प्रमर्द्दनामकः ॥ आद्यो बहिश्चरे चंद्रे । द्वितीयोंतश्चरे स्वतः ॥ ६० ॥ प्रमर्द्दो भविमानानि । भित्वेंदोर्गछतो भवेत् ॥ योगः प्रमर्द्द एव स्या–ज्ज्येष्टायाः शशिना समं ॥ ६ ॥ भमून्याद्यानि षड् भेषु । बाह्यमंडलवर्त्तिषु ॥ इंदोर्दक्षिणदिक्स्थानि । संयुज्यतेऽमुना समं ॥ ६२ ॥ पूर्वोत्तराषाढयोस्तु । बाह्यताराव्यपेक्षया ॥

याम्यायां शशिनो योगः । प्रङ्गशः परमर्विभिः ॥ ६३ ॥ द्वयोर्द्वयोस्तारयोस्तु । चंद्रे मध्येन गच्छति ॥ भवेत्प्रमर्दयोगोऽपि । ततो योगोऽनयोर्द्विधा ॥ ६४ ॥

उदीच्यां दिशि योगस्तु । संभवेन्नानयोर्नयोः ॥ यदान्यां परतश्चारो । कदापींदोर्न वर्तते ॥ ६५ ॥ विभिन्नमंडलस्थानां । पृथक्मंडलवर्तिनां ॥ नक्षत्राणां चंद्रमसा । यथायोगस्तथोच्यते ॥ ६६ ॥ स्वस्वकालप्रमाणेना–ष्टाविंशत्या किलोडुभिः ॥ निजगत्या व्याप्यमानं । क्षेत्रं यावद्विभाव्यते ॥ ६७ ॥ तावन्मानमेकमर्द्ध–मंडलं कल्प्यते धिया ॥ द्वितीयोडुकदंबेन । द्वितीयमर्द्धमंडलं ॥ ६८ ॥ अष्टानवतिशताढ्यं । लक्षं संपूर्णमंडलेषु स्युः ॥ सर्वेष्वंशा एष च । विज्ञेयो मंडलच्छेदः ॥ ६९ ॥ ननु च—मंडलेषु येषु यानि । चरंत्युडूनि तेष्विदं ॥ चंद्रादियोगयोग्यानां । भांशानां कल्पनोचिता ॥ ७० ॥ सर्वेष्वपि मंडलेषु । सर्वोडुभागकल्पना ॥ इयर्त्ति कथमौचित्य–मिति चेत् श्रूयतामिह ॥ ७१ ॥ भानां चंद्रादिभिर्योगो । नैवास्ति नियते दिने ॥ न वा नियतवेलायां । दिनेऽपि नियते न सः ॥ ७२ ॥ तेन तत्तन्मंडलेषु । यथोदितलवान्मसु ॥ तत्तन्नक्षत्रसंबंधि–सीमाविष्कंभ आहिते ॥ ७३ ॥

प्राप्तौ सत्यां मृगांकादे–र्योगः स्यादुडुभिः सह ॥ एवमर्कस्यापि योगो । भिन्नमंडलव र्तिनः ॥ ૭૪ ॥ एवं मसीमानिष्कंभा–दिषु प्राप्तप्रयोजनः ॥ प्रागुक्तो मंडलच्छेद । इदानीमु पपद्यते ॥ ૭૫ ॥ त्रिविधानीह ऋक्षाणि । समक्षेत्राणि कानिचित् ॥ कियंति चार्द्धक्षेत्राणि । सार्द्धक्षेत्राणि कानिचित् ॥ ૭૬ ॥ क्षेत्रमुष्णत्विषा याव–दहोरात्रेण गम्यते ॥ तावत्क्षेत्रं याति भानि । चरति शशिना समं ॥ ૭૭ ॥ समक्षेत्राणि तानि स्यु—रर्द्धक्षेत्राणि तानि च ॥ अर्द्धं यथोक्तक्षेत्रस्य । यांति यानींदुना सह ॥ ૭૮ ॥ यथोक्तक्षेत्रमध्यर्द्धं । प्रयांति यानि चेंदुना ॥ स्युस्तानि सार्द्धक्षेत्राणि । वक्ष्यतेऽग्रेऽभिधानतः ॥ ૭૯ ॥ तत्र पंचदशाह्वानि । षट्कं षट्कं परद्वयं ॥ अहोरात्रः सप्तषष्टि–भागीकृतोऽत्र कल्प्यते ॥ ૮૦ ॥ ततः समक्षेत्रभानि । प्रत्येकं सप्तषष्टिधा ॥ कल्प्यानीति पंचदश । सप्तषष्टिगुणीकृताः ॥ ૮૧ ॥

जातं सहस्रपंचाढ्य–मर्द्धक्षेत्रेषु भेषु च ॥ सार्द्धस्त्रयस्त्रिंशदंशाः । प्रत्येकं कल्पनोचिताः ॥ ૮૨ ॥ ततश्च—षड्घ्नाः सार्द्धास्त्रयस्त्रिंश–ज्जातं सैकं शतद्वयं ॥ सार्द्धक्षेत्रेषु प्रत्येकं । भागाश्चार्द्धांशयुक् शतं ॥ ૮૩ ॥ सार्द्धक्षेत्राणि षडिति । त एते षड्गुणीकृताः ॥ सत्रीणि षट्-

शतान्येक–विंशतिश्चाग्निजिह्वराः ॥ ८४ ॥ अष्टादश शतान्येवं । त्रिंशानि सर्वसंख्यया ॥
एतावदंशप्रमितं । स्यादेकमर्द्धमंडलं ॥ ८५ ॥ तावदेवापरमिति । द्वाभ्यामिदं निहन्यते ॥
षष्ठ्याधिकानि षट्त्रिंश–च्छतानीत्यग्नवन्निह ॥ ८६ ॥ त्रिंशन्मुहूर्त्ता एकस्मि–न्नहोरात्र इति
स्फुटं ॥ सषष्टिषट्त्रिंशदंश—शतेषु कल्पनोचिताः ॥ ८७ ॥ त्रिंशा छिन्नागाः प्रत्येकं । गु-
ण्यते त्रिंशतेति त ॥ जातं लक्षमेकमष्टा–नवत्या सहितं शतैः ॥८८॥ एतस्मान्मंडलच्छेद—
मानादेव प्रतीयते ॥ शशांकभास्करोडूनां । गत्याधिक्यं यथोत्तरं ॥ ८९ ॥ तथाहि–एकैकेन
मुहूर्त्तेन । शशी गच्छति लीलया ॥ प्रक्रांतमंडलपरि–क्षेपांशानां यदा तदा ॥ ९० ॥ अष्टष-
ष्ट्या समधिकै–रधिकं सप्तभिः शतैः ॥ सहस्रमेकमर्कस्तु । मुहूर्त्तेनोपसर्पति ॥ ९१ ॥ त्रिं-
शान्यष्टादश शता–न्युमूनि संचरंति च ॥ पचत्रिंशत्समाधिका–न्यष्टादश शतानि वै ॥९२॥
ऋक्षैकभास्करोडूनां । गतिः प्राग् योजनात्मिका ॥ इयं त्वंशात्मिका चिंत्यं । पौनरुक्त्यं
ततोऽत्र न ॥९३॥ विशेषस्त्वनयोर्गत्योः । कश्चिन्नास्ति स्वरूपतः ॥ प्रत्ययः कोऽत्र यद्येवं । त-
त्रोपायो निशम्यतां ॥ ९४ ॥ स्वस्वमंडलपरिधि–मैर्मलच्छेदराशिना ॥ विभज्यते यल्लब्धं त–

त्सुधिया ताड्यते किल ॥ ९५ ॥ नक्षेद्धकोडुभागात्म—मुहूर्त्तगतिराशिभिः ॥ मुहूर्त्तगतिरेषां स्या—त्पूर्वोक्ता योजनात्मिका ॥ ९६ ॥ त्रैराशिकेन यद्वा । प्रत्ययोऽस्या विधीयतां ॥ किं तत्त्रैराशिकमिति । यदीच्छा तन्निशम्यतां ॥ ९७ ॥ स्यान्मंडलापूर्त्तिकालो । विधोः प्राग्वत्स वर्णितः ॥ पंचविंशाः शताः सप्त । सहस्राश्च त्रयोदश ॥ ९८ ॥

अस्योपपत्तिर्योजनात्मकमुहूर्त्तगत्यवसरे दर्शितास्ति, ततश्च—पंचविंशसप्तशत—त्रयोदशसहस्रकैः ॥ मुहूर्त्तांशैर्लक्षमष्टा—नवतिश्च शता यदि ॥ ९९ ॥ मंडलांशा अवाप्यंते । तूलाप्यंते तदा कति ॥ एकोनांतर्मुहूर्त्तेन । राशित्रयमिदं लिखेत् ॥ ६०० ॥ १३ ॥ ७२५ १०९८०० आद्यो राशिर्मुहूर्त्तांश—रूपोंत्यस्तु मुहूर्त्तकः ॥ सावर्ण्यार्थमेकविंश—द्विशत्यांत्यो निहन्यते ॥ १ ॥ एकविंशा द्विशती स्या—न्मध्यराशिरथैतया ॥ हतः कोटिद्वयं लक्षा । द्विचत्वारिंशदेव च ॥ ७ ॥ पंचषष्टिः सहस्राणि । शतान्यष्ट भवंत्यतः ॥ पंचविंशसप्तशत—त्रयोदशसहस्रकैः ॥ २ ॥ एषां भागे हृते लब्धा । मुहूर्त्तगतिरैंदवी ॥ भागात्मिका यथोक्ता च । सा रवेरपि भाव्यते ॥ ३ ॥

पूर्वोक्तो मंडलछेद–राशिः षष्ट्या मुहूर्त्तकैः ॥ यद्याप्यते मुहूर्त्तेन । तदैकेन किमाप्यते
॥ ४ ॥ ६० १० ९८०० १३ गुणितोंत्यनैकेकेन । मध्यराशिस्तथा स्थितः ॥ अष्टादशशती त्रिं-
शां । पञ्चत्याद्येन भाजितः ॥ ५ ॥ भमंडलपूर्त्तिकाल–मानं भवेत्सवर्णितं ॥ षष्टियुक्ता नव-
शती । सहस्राश्चैकविंशतिः ॥ ६ ॥ उपपत्तिरस्य योजनात्मकगत्यवसरे दर्शितास्ति, ततश्च–
एतावद्भिर्मुहूर्त्तांशै–र्मंडलछेदसंचयः ॥ प्रागुक्तश्चेल्लभ्यते त–न्मुहूर्त्तेन किमाप्यते ॥ ७ ॥ २१-
९६० १०९ ८०० १ मावर्त्या याद्यांतिमयो–र्गुण्यतेंतिम एककः ॥ सप्तषष्ट्या त्रिशत्या ।
ताद्रूपः स जायते ॥ ८ ॥ हतोऽनेन मध्यराशि–श्चतस्रः कोट्यो भवेत् ॥ द्वे लक्षे चाशी-
तिश्च । सहस्राः षट् शतानि च ॥ १० ॥ तस्याद्यराशिना भागे । लब्धा भानां लवात्मिका
॥ अष्टादशशती पंच–त्रिंशा मुहूर्त्तजा गतिः ॥ ११ ॥ इति दिग्योगः, तत्प्रसंगात्सीमाविष्कं-
भादिनिरूपणं च.

ब्रह्मा १ विष्णु २ र्वसु ३ श्चैव । वरुणा ४ जा ५ भिवृद्धयः ६ ॥ पुषा ७ श्वश्च ८ य-
मो ९ ऽग्निश्च १० । प्रजापति ११ स्ततः परं ॥ १२ ॥ सोमो १२ रुद्रो १३ दितिश्चैव १४ । बृ-

हस्पति १५ स्तथापरः ॥ सर्पो १६ परः पितृनामा १७ । भगो १८ ऽर्यमाग्निवोऽपि च १९ ॥ ॥ १३ ॥ सूर २० स्त्वष्टा २१ तथा वायु २२ –रिंद्राग्नी एकनायकौ २३ ॥ मित्रें २४ न्द्रनैर्ऋता २६ आपा २७ । विश्वे देवास्त्रयोदश २८ ॥ १४ ॥

अग्निवृद्धेरहिर्बुध्न । इत्याख्यान्यत्र गीयते ॥ सोमश्चंद्रो रविः सूर । इदृशाख्याः परे सुराः ॥ १५ ॥ बृहस्पतिरपि प्रसिद्धो ग्रह एव. अमी अग्निजिदादीना–मुडूनामधिपाः स्मृताः ॥ येषु तुष्टेषु नक्षत्र–तुष्टी रुष्टेषु तद्रुषः ॥ १६ ॥ देवनामप्युडूनां स्यु–र्यदधीशाः सुराः परे ॥ तत्पूर्वोपार्जिततप–स्तारतम्यानुभावतः ॥ १७ ॥

स्वामिसेवकभावः स्या–द्यत्सुरेष्वपि नृष्विव ॥ यथा सुकृतमैश्वर्य–तेजःशक्तिसुखादि च ॥ १८ ॥ विख्यातौ चंद्रसूर्यौ यौ । सर्वज्योतिष्कनायकौ ॥ तयोरप्यपरः स्वामी । परेषां तर्हि का कथा ॥ १९ ॥ तथा च पंचमांगं–' सक्कस्स देविंदस्स देवरण्णो सोमस्स महारण्णो इमे देवा आणा उववायवयणनिद्देसे चिट्ठंति, तं जहा–सोमकाइयातिवा सोमदेवकाइया वा विज्जुकुमारा विज्जुकुमारीउ, अग्गिकुमारा अग्गिकुमारीउ, वाउकुमारा वाउकुमारीउ चंदा

सूरा गहा एरकत्ता तारारूवा ' इत्यादि, इति देवताः । तिस्रस्तिसूः पंच शतं द्वे द्वे द्वात्रिंशदेव च ॥ तिसूस्तिसूः षट् पंच । तिसू एका च पंच च ॥ २० ॥

तिस्रः पच सप्त च द्वे । द्वे पंचैकैकिका द्वयोः ॥ पंच चतस्रस्तिस्रश्च । तत एकादश स्मृताः ॥ २१ ॥ चतस्रश्च चतसूश्च । तारासंख्याभिजित्क्रमात् ॥ ज्ञेयान्युडुविमानानि । तागशब्दाहुबैरिह ॥ २२ ॥ न पुनः पंचमज्योति–र्भेदगाः किल तारकाः ॥ विजातीयः समुदायी । विजातीयोऽन्वयान्न हि ॥ २३ ॥ प्रथीयांसि विमानानि । नक्षत्राणां लघूनि च ॥ तारकाणां ततोऽप्यैकयं । युक्तिः सा सहितानयोः ॥ २३ ॥

किंच कोटाकोटिरूपा । तारासंख्यातिरिच्यते ॥ अष्टाविंशतिरूपा च । ऋक्षसंख्या विलीयते ॥ २४ ॥ तद्द्वित्र्यादिविमानेशः । स्याद्देवोऽभिजिदादिकः ॥ गृहद्वयाद्यधिपति–र्यथा कश्चिन्महर्द्धिकः ॥ २५ ॥ एवं च न काप्युपपत्तिः तारासंख्याप्रयोजनं च. वारुण्यां दशमी त्याज्या । द्वितीया पौष्णभे तथा ॥ शेषोडुष्वशुभा स्वस्व–तारासंख्यासमा तिथिः ॥ २६ ॥ इति तारासंख्या ॥ गोशीर्षपुद्गलानां या । दीर्घा श्रेणिस्तदाकृति ॥ गोशीर्षावलिसंस्थान–

मभिजित्कथितं ततः ॥ २७ ॥ कासाराभं श्रवणभं । पङ्क्तिपंजरसंस्थिता ॥ धनिष्ठा शतता-
रा च । पुष्पोपचारसंस्थिता ॥ २८ ॥ पूर्वोत्तराभद्रपदे । अर्द्धद्विवापिकोपमे ॥ एतदर्द्धद्वययो-
गे । पूर्णा वाप्याकृतिर्भवेत् ॥ २९ ॥

पौष्णं च नौसमाकार-मश्वस्कंधाभमश्विनं ॥ भरणी भगसंस्थाना । क्षुरधारेव कृत्ति-
का ॥ ३० ॥ शकटोद्धीसमा ब्राह्मी । मार्गं मृगशिरः समं ॥ आर्द्रा रुधिरबिंद्वाभा । पुनर्व-
सू तुलोपमौ ॥ ३१ ॥ वर्द्धमानकसंस्थानः । पुष्योऽश्लेषाकृतिः पुनः ॥ पताकाया इव मघाः
। प्राकाराकारचारवः ॥ ३२ ॥ पूर्वोत्तरे च फाल्गुन्या-वर्द्धपल्यंकसंस्थिते ॥ अत्राप्येतद्द्वय-
योगे । पूर्णा पल्यंकसंस्थितिः ॥ ३३ ॥

हस्तो हस्ताकृतिश्चित्रा । संस्थानतो भवेद्यथा ॥ मुखमंडनरैपुष्पं । स्वातिः कीलकसं-
स्थिता ॥ ३४ ॥ विशाखा पशुदामाभा । राधैकावलिसंस्थिता ॥ गजदंताकृतिर्ज्येष्ठा । मूलं
वृश्चिकपुच्छवत् ॥ ३५ ॥ गजविक्रमसंस्थानाः । पूर्वाषाढाः प्रकीर्त्तिताः ॥ आषाढाश्चोत्तराः सिं-
हो-पवेशनसमा मताः ॥ ३६ ॥ लोके तु रत्नमालायां—तुरगमुखसदृक्षं योनिरूपं क्षुराभं ।

शकटसमम्रथैणस्योत्तमांगेन तुल्यं ॥ मणिगृहशरचक्रनाम्निशालोपमं त्नं । शयनसदृशमन्यच्चात्र पर्यंकरूपं ॥ ३७ ॥

हस्ताकारनिम्नं च मौक्तिकनिम्नं चान्यत्प्रवालोपमं । धिष्ण्यंतोरणवस्थितं मणिनिम्नं सत्कुंडलाम्नं परं ॥ क्रुद्ध्यत्केसरिविक्रमेण सदृशं शय्यासमानं परं । चान्यद्दंतिविलासवत्स्थितमतः शृंगाटकव्यक्ति च ॥ ३८ ॥ त्रिविक्रमाम्नं च मृदंगरूपं । वृत्तं ततोऽन्यद्यमलद्वयाम्नं ॥ पर्यंकरूपं मुरजानुकार—मित्येवमश्वादिन्नचक्ररूपं ॥ ३९ ॥ इत्याकृतिः ॥ समषष्टिलवैः सत–विंशत्याम्यधिकान्यथ ॥ योगो नवमुहूर्त्तानि । शशिनाम्निजितो मतः ॥ ४० ॥ ज्येष्ठाश्लेषाम्नरण्यार्द्रा । स्वातिश्च शततारिका ॥ मुहूर्त्तानि पंचदश । योग एषां सुधांशुना ॥ ४१ ॥ उत्तरात्रितयं ब्राह्मी । विशाखा च पुनर्वसू ॥ पंचचत्वारिंशदेषां । मुहूर्त्तान् योग इंदुना ॥ ॥ ४२ ॥ पंचदशानां शेषाणा–मुडूनां शशिना सह ॥ योगस्त्रिंशन्मुहूर्त्तानी–त्येवमाहुर्जिनेश्वराः ॥ ४३ ॥ प्रयोजनं त्वेषां–मृते साधौ पंचदश–मुहूर्त्तैनैव पुत्तकः ॥ एकत्रिंश–मुहूर्त्तैस्तु । द्वेप्यः शेषैस्तु नैरुन्नौ ॥ ४४ ॥ एतान्यर्द्धसार्द्धसम–क्षेत्राण्याहुर्यथाक्रमं ॥ अमीषां रविणा

योगो । यावत्कालं तदुच्यते ॥ ४५ ॥

मुहूर्त्तैरेकाविंशत्या–ढ्यानि रात्रिंदिवानि षट् ॥ अर्द्धक्षेत्राणामुडूनां । योगो विवस्वता सह ॥ ४६ ॥ सार्द्धक्षेत्राणां तु भानां । योगो विवस्वता सह ॥ त्रिभिर्मुहूर्त्तैर्युक्तानि । रात्रिंदिवानि विंशतिः ॥ ४७ ॥ समक्षेत्राणामुडूना–महोरात्रांस्त्रयोदश ॥ मुहूर्त्तैश्च द्वादशभि–रधिकान् रविसंगतिः ॥ ४८ ॥ रात्रिंदिवानि चत्वारि । षण्मुहूर्त्ताधिकानि च ॥ नक्षत्रमभिजिच्चारं । चरत्युष्णरुचा सह ॥ ४९ ॥ अत्रायमाम्नायः–सप्तषष्ट्युद्भवानंशा–नहोरात्रस्य यावतः ॥ यन्नक्षत्रं चरत्यत्र । रजनीपतिना सह ॥ ५० ॥ तन्नक्षत्रं तावतोऽहो–रात्रस्य पंचमान् लवान् ॥ भानुना चरतीत्यत्र । दृष्टांतोऽप्युच्यते यथा ॥ ५१ ॥

सप्तषष्टिलवानेक–विंशतिं शशिना सह ॥ चरत्यभिजिदर्केण । तावतः पंचमान् लवान् ॥ ५२ ॥ अहोरात्रस्येति शेषः. अथैकविंशतिः पंच–भक्ता दिनचतुष्टयं ॥ दद्यादेकोंशकः शेष–स्त्रिंशता स निहन्यते ॥ ५३ ॥ जाता त्रिंशदथैतस्याः । पंचभिर्भजने सति ॥ षण्मुहूर्त्ताः करं प्राप्ता । एवं सर्वत्र भावना ॥ ५४ ॥ तथाहुः—जं रिक्खं जावइए । वच्चइ चंदेण

भागसत्तठी ॥ स पणन्नागे राइं–दियस्स सुरेण तावइए ॥ ५५ ॥ सप्तषष्टिस्तदर्द्धं च ३३॥ । चतुस्त्रिंशं तथा शतं ॥ समाः १६२ सार्द्धक्षेत्रेषु । सप्तषष्टिलवाः क्रमात् ॥ ५६ ॥ इति सूर्ये-दुयोगाद्धामानं ॥

ऋक्षेषु येषु मासानां । प्रायः परिसमाप्तयः ॥ तानि माससमाख्यानि । स्युर्भकाणि कु-लाख्यया ॥ ५७ ॥ प्रायोग्रहणतश्चात्र । कदाप्युपकुलोडुभिः ॥ समाप्तिर्जायते मासां । भैः कु-लोपकुलैरपि ॥ ५८ ॥ कुलोडुभ्योऽधस्तनानि । भवंत्युपकुलान्यथ ॥ स्युः कुलोपकुलाख्या-नि । तेभ्योऽप्यधस्तनानि च ॥ ५९ ॥ तानि चैवमाहुः—कुलभान्यश्विनी पुष्यो । मघा मू-लोत्तरात्रयं ॥ द्विदैवतं मृगश्चित्रा । कृत्तिका वासवानि च ॥ ६० ॥ उपकुल्यानि भरणी । ब्रा-ह्मं पूर्वात्रयं करः ॥ ऐंद्रमादित्यमश्लेषा । वायव्यां पौष्णवैष्णवे ॥ ६१ ॥ कुलोपकुलभान्या-र्द्राभिजिन्मैत्राणि वारुणमिति, कुलादिप्रयोजनं त्विदं–पूर्वेषु जाता दातारः । संग्रामे स्थायि-नां जयः ॥ अन्येषु त्वन्यसेवार्त्ता–यायिनावसदाजयः ॥ ६२ ॥ इति कुलाद्याख्यानिरूपणं ॥

धनिष्ठार्द्रोत्तराभाद्र–पदाश्विनी च कृत्तिकाः ॥ मार्गः पुष्पश्चैव मघा । उत्तराफाल्गुनीति च

॥६३॥ चित्रा विशाखा मूलं चो–त्तराषाढा यथाक्रमं ॥ श्रावणादिमासराकाः । प्रायः समाप-
यंति यत् ॥ ६४ ॥ तत एव पूर्णिमानां । द्वादशानामपि क्रमात् ॥ एषामुडूनां नाम्ना स्यु–
र्नामधेयानि तद्यथा ॥ ६५ ॥ श्राविष्ठी च प्रौष्ठपदी । तथैवाश्वयुजीत्यपि ॥ कार्त्तिकी मार्ग-
शीर्षी च । पौषी माघी च फाल्गुनी ॥ ६६ ॥ चैत्री च वैशाखी ज्येष्ठी । मौलीत्याख्यया त-
था परा ॥ आषाढीत्यन्विता एताः । सदारूढाश्च कर्हिचित् ॥ ६७ ॥ श्रविष्ठा स्याद्धनिष्ठेति ।
तयेंदुयुक्तयान्विता ॥ श्राविष्ठी पौर्णमासी स्या–देवमन्या अपि स्फुटं ॥ ६८ ॥ यदा चोपकु
लाख्यानि । समापयंति पूर्णिमाः ॥ पाश्चात्यानि तदेतेभ्यः । श्रवणादीन्यनुक्रमात् ॥ ६९ ॥
राकास्त्विमाः समाप्यंते । कुलोपकुलभैर्यदा ॥ तदोपकुलपाश्चात्यै–रभिजित्प्रमुखैरिह ॥७०॥

यद्यप्यभिजिता क्वापि । राकापूर्त्तिर्न दृश्यते ॥ श्रुतियोगात्तथाप्येत–द्राकापूरकमुच्यते ॥
॥ ७१ ॥ यस्मिन्नृक्षे पूर्णिमा स्या–त्ततः पंचदशेऽथवा ॥ चतुर्दशेऽमावास्या स्या–द्गणने
प्रातिलोम्यतः ॥ ७२ ॥ तद्यथा—माघे राका मघोपेता–ऽमावास्या च सवासवा ॥ सवास-
वायां राकायां । श्रावणे सा मघान्विता ॥७३॥ एवमन्यत्रापि ज्ञाव्यं, इत्यमावास्यापूर्णिमा-

योगकीर्त्तनं ॥ यदा यदा यैर्नक्षत्रै–रस्तं यानैः समाप्यते ॥ अहोरात्रस्तानि वक्ष्ये । नामग्राहं यथाक्रमं ॥ ७३ ॥ तदा समाप्यते ऋक्षै–रात्रिरप्येभिरेव यत् ॥ उच्यते रात्रिनक्षत्रा–एयप्यमून्येव तद्बुधैः ॥ ७४ ॥ समापयति तत्राद्या–नहोरात्रांश्चतुर्दश ॥ नक्षोमास्युत्तराषाढा । सप्तैतान्यभिजित्तदा ॥ ७५ ॥

ततः श्रवणमप्यष्टा–वेकोनत्रिंशदित्यभूत् ॥ धनिष्ठाश्रावणस्यांत्य–महोरात्रं ततो नयेत् ॥ ७६ ॥ नयेद्धनिष्ठाहोरात्रान् । भाद्रस्याद्यांश्चतुर्दश ॥ ततः शतभिषक् सप्त । पूर्वा भद्रपदाष्ट च ॥ ७७ ॥ सोत्तरांत्यमहोरात्रं । सैवपस्य चतुर्दश ॥ ततः पौष्णं पंचदश । चरमं चैकमश्विनी ॥ ७८ ॥ अश्विन्येव कार्त्तिकस्य । नयत्याद्यांश्चतुर्दश ॥ अहोरात्रान् पंचदश । भरण्येकं च कृत्तिकाः ॥ ७९ ॥ समापयंति ता एव । सहस्याद्यांश्चतुर्दश॥ ब्राह्मी पंचदशांत्यं च । मृगशीर्षं समापयेत् ॥ ८० ॥ पौषस्यापि तदेवाद्या–नहोरात्रान् समापयेत् ॥ चतुर्दश तथार्द्राष्टौ । ततः सप्त पुनर्वसू ॥ ८१ ॥

पुष्पोऽस्यांत्यमहोरात्रं । माघेऽप्याद्यां चतुर्दश ॥ समापयेत्पंचदशा–श्लेषा तथांतिमं म-

घाः ॥ ७२ ॥ पूरयंति फाल्गुनस्य । मघा आद्यांश्चतुर्दश ॥ ततः पंचदश पूर्वा–फाल्गुनी सोत्तरांतिमं ॥ ७३ ॥ उत्तराफाल्गुनी चैते । नयत्याद्यांश्चतुर्दश ॥ ततो हस्तः पचदश । चित्राहोरात्रमंतिमं ॥ ७४ ॥ अहोरात्रांस्ततश्चित्रा । नयेच्चतुर्दशादिमान् ॥ वैशाखस्य पंचदश । स्वातिरंत्यं विशाखिका ॥ ७५ ॥ समापयत्यथ ज्येष्टे । विशाखाद्यांश्चतुर्दश ॥ सप्तानुराधा ज्येष्ठाष्टौ । मूलः पर्यंतवर्त्तिनं ॥ ७६ ॥ मूलः समापयत्याद्या–नाषाढस्य चतुर्दश ॥ पूर्वाषाढा पंचदशो–त्तराषाढांत्यवर्त्तिन ॥ ७७ ॥ संग्रहश्चात्र–

सत्तट्ठ अन्निसवणे । तह सयभिसए य पुवभद्दवए ॥ अट्ठ पुस्सवसूए । राहा जेट्ठाय अणुकमसो ॥ ७८ ॥ पन्नरसदिणे सेसा । रत्तिं विरामं कुणंति णक्खत्ता ॥ उत्तरसाढा आसाढ–चरिमदिवसा गणिज्जंति ॥ ७९ ॥ प्रयोजनं त्वेषां—यथा नक्षत्रश्चतुर्भाग–मारूढेऽर्के प्रतीयते ॥ प्रथमा पौरुषी मध्य–मह्नश्च व्योममध्यगे ॥ ८० ॥ चतुर्भागावशेषं च । नक्षःप्राप्तेत्यपौरुषी ॥ ज्ञायंते रजनीयामा । अप्येभिरुडुभिस्तथा ॥ ८१ ॥ तथाहुरुत्तराध्ययने—जसेइ जया रत्तिं । णक्खत्तं तंमि णह चउब्भागे ॥ संपत्ते विरमेज्जा । सज्झायपओसकालंमि ॥८२॥

तम्मेव य नरकत्ते । गयणचजप्रागसावसेसंमि ॥ विरत्तियंपि कालं । पमिलेहित्ता मुणी कुण-
इ ॥ ९३ ॥ ग्रंथांतरे च—दह तेरह सोलहमे । विसमेइ सूरियाउ नरकत्ता ॥ मह्यगयं-
मिणेयं । रयणी जा माणपरिमाणं ॥ ९४ ॥

शीतकाले च दिनाधिकमानायां रात्रौ सूर्यज्ञात् एकादशचतुर्दशसप्तदशैकाविंशतितमै-
र्नक्षत्रैर्नन्नोमध्यं प्राप्तैर्यथाक्रमं प्रथमादिप्रहरांतः स्यादिति संप्रदायः, लोके च—रविरिरकाउ
गणियं । सिररिरकं जाव सत्तपरिहीणं ॥ सेसं दुगुणं किच्चा । तीया राई फुडा हवइ ॥९५॥
इत्यादि वहुधा, इत्यहोरात्रसमापकनक्षत्रकीर्त्तनं, समाप्तं चेदं नक्षत्रप्रकरणं, विकालकोंगार-
कश्च । लोहितांकः शनैश्चरः ॥ आधुनिकः प्राधुनिकः । कणः कणक एव च ॥ ९६ ॥ नव-
मः कणकणक—स्तथा कणवितानकः ॥ कणसंतानकश्चैवं । सोमः सहित एव च ॥ ९७ ॥
अश्वसेनस्तथा कार्यो—पगः कर्बुरकोऽपि च ॥ तथाजकरको दुंदु—न्नकः शंखान्निघः परः ॥
॥ ९८ ॥ शंखनान्नस्तथा शंख—वर्णान्नः कंस एव च ॥ कंसनान्नस्तथा कंस—वर्णान्नो नी-
ल एव च ॥ ९९ ॥

नीलावभासो रूप्यी च । रूप्यावभासभस्मकौ ॥ भस्मराशितिलतिल–पुष्पवर्णदकाभि-
धाः ॥ ७०० ॥ दकवर्णस्तथा कायो । वंध्य इंद्राग्निरेव च ॥ धूमकेतुर्हरिः पिंग–लको बुद्धस्त-
थैव च ॥ १ ॥ शुक्रो बृहस्पती राहु–गस्तिमाणवकाः ॥ कामस्पर्शश्च धुरकः । प्रमुखो वि-
कटोऽपि च ॥ २ ॥ विसंधिकल्पः प्रकल्पः । स्युर्जटालारुणाग्नयः ॥ षट्पंचाशत्तमः कालो ।
महाकालस्ततः परः ॥ ३ ॥ स्वस्तिकः सौवस्तिकश्च । वर्द्धमानः प्रलंबकः ॥ नित्यालोको नि-
त्योद्योतः । स्वयंप्रभावभासको ॥ ४ ॥ श्रेयस्करस्तथा क्षेमं–कर आभंकरोऽपि च ॥ प्रभंक-
रो रजाश्चैव । विरजानाम कीर्त्तितः ॥ ५ ॥ अशोको वीतशोकश्च । विमलाख्यो वितप्तकः ॥
विवस्त्रश्च विशालश्च । शालः सुव्रत एव च ॥ ६ ॥

अनिवृत्तिश्चैकजटी । द्विजटी करिकः करः ॥ राजार्गलः पुष्पकेतु–र्भावकेतुरिति ग्रहाः
॥ ७ ॥ ग्रहास्तु सर्वे वक्राति–चारादिगतिभावतः ॥ गतावनियतास्तेन । नैतेषां प्राक्तनैः कृ-
ता ॥ ८ ॥ गतिप्ररूपणा नापि । मंडलानां प्ररूपणा ॥ लोकात्तु केषांचित्किंचि–त्रृत्यादि श्रू-
यतेऽपि हि ॥ ९ ॥ मेरोः प्रदक्षिणावर्त्तं । भ्रमंत्येतेऽपि मंडलैः ॥ सदानवस्थितैरेव । दिवा-

भा

॥ ७१

करशशांकवत् ॥ १० ॥ अवस्थायिमंडलत्वा—च्छशाद्ययोगचिंतनात् ॥ नापि चक्रे तारकाणां । संस्थादिनिरूपणं ॥ ११ ॥ तथोक्तं जीवाभिगमसूत्रे —' णरकत्ततारगाणं । अवठिया संठ्ठा मुणेयव्वा ॥ तेवि य पयाहिणाव—त्तमेव मेरुं अणुपरिंति ॥ १२ ॥ एवं रवींदुग्रहऋक्षतारा—चारस्वरूपं किमपि न्यगादि ॥ शेषं विशेषं तु यथोपयोगं । ज्योतिष्कचक्रावसरेऽभिधास्ये ॥ ॥ १३ ॥ विश्वाश्चर्यदकीर्त्तिकीर्त्तिविजयश्रीवाचकेंद्रांतिष—द्राजश्रीतनयोऽतनिष्ट विनयः श्रीतेजपालात्मजः ॥ काव्यं यत्किल तत्र निश्चितजगत्तत्त्वप्रदीपोपमे । सर्गो निर्गलितार्थसार्थसुभगो विंशः समाप्तः सुखं ॥ ०१४ ॥

॥ इति श्री लोकप्रकाशे विंशतितमः सर्गः समाप्तः ॥ श्रीरस्तु ॥

॥ अथैकविंशतितमः सर्गः प्रारभ्यते ॥

अथास्य जंबूद्वीपस्य । परिक्षेपकमंबुधिं ॥ कीर्त्तयामि कीर्त्तिगुरु—प्रसादप्रथितोद्यमः ॥ ॥ १४ ॥ तस्थुषो योगिन इवा—वेष्ट्यैनं द्वीपसंवधिं ॥ क्षारोदकत्वादस्याब्धे—र्लवणोद इति प्रथा ॥ १५ ॥ चक्रवालतया चैव । विस्तीर्णो लक्षयोर्द्वयं ॥ योजनानां परिक्षेप—परिमाणम-

श्रोच्यते ॥ १६ ॥ एकाशीतिसहस्राढ्या । लक्षाः पंचदशाथ च ॥ शतमेकोनचत्वारिं-शता-
ढ्यं किंचिदूनया ॥ १७ ॥ एषोऽस्य बाह्यपरिधि-र्धातकीखंडसन्निधौ ॥ जंबूद्वीपस्य परिधि-
र्यः स एवांतरः पुनः ॥ १८ ॥ पूर्वपूर्वद्वीपवार्द्धि-परिक्षेपा हि येंतिमाः ॥ त एवास्याग्रपा-
थोधि-द्वीपेष्वाभ्यंतरा मताः ॥ १९ ॥ अभ्यंतरबाह्यपरि-क्षेपयोगेऽर्द्धिते सति ॥ परिक्षेपा
मध्यमाः स्यु-र्विनाद्यं द्वीपवार्द्धिषु ॥ २० ॥ लक्षा नवाष्टचत्वारिं-शत्सहस्राणि षट्शती ॥
त्र्यशीतिश्च मध्यमोऽयं । परिधिर्लवणोदधौ ॥ २१ ॥ प्रवेशमार्गरूपो य-स्तटाकादिजलाश्रये
॥ नूप्रदेशः क्रमान्नीचः । सोऽत्र गोतीर्थमुच्यते ॥ २२ ॥

गोतीर्थं तच्च लवणां-बुधावुन्नयतोऽपि हि ॥ प्रत्येकं पंचनवतिं । सहस्रान् यावदाहितं
॥ २३ ॥ जंबूद्वीपवेदिकांतें-गुलासंख्यांशसंमितं ॥ गोतीर्थं धातकीखंड-वेदिकांतेऽपि तादृ-
शं ॥ २४ ॥ ततश्च-अब्धावुन्नयतो याव-न्मध्यतेंशांगुलादिकं ॥ न्नक्के तस्मिन् पंचनव-त्यासं
यत्तन्मितोंमता ॥ २५ ॥ यथा पंचनवत्यांशै-रतिक्रांतैः पयोनिधौ ॥ भुवोंशो हीयते पंच-न-
वत्यांगुलमंगुलैः ॥ २६ ॥ योजनैश्च पंचनव-त्यैकं योजनमप्यथ ॥ शतैः पंचनवत्या च ।

योजनानां शतं ह्रसेत् ॥२७॥ एवं च पंचनवति–सहस्रांते समक्षितेः ॥ निम्नतोन्नयतोऽप्यत्र
। जाता सहस्रयोजना ॥ २८ ॥ तथाहुः—जल्हिम्मि उव्वे । उग्गहिज्जाण लवणसलिलस्स
॥ पंचाणउ इविभत्ते । जं लद्धं सो उ उव्वेहो ॥ २९ ॥ ततश्च—

द्वयोर्गोतीर्थयोर्मध्ये । सहस्रयोजनोन्मितः ॥ स्यादुद्वेधः सहस्राणि । दश यावत्समा-
न्नतः ॥ ३० ॥ जंबूद्वीपवेदिकांते—गुलासंख्यांशसंमितं ॥ सलिलं धातकीखंड–वेदिकांतेऽ
पि तादृशं ॥ ३१ ॥ ततः पञ्चनवत्यांशै–र्वर्द्धते षोडशांशकाः ॥ अंगुलैः पंचनवत्या । वर्द्धते
षोडशांगुली ॥ ३२ ॥ अत्रायमाम्नायः–धातकीखंडतो जंबू–द्वीपतो वा पयोनिधौ ॥ जिज्ञा-
स्यते जलोच्छ्रायो । यावत्स्वंशांगुलादिषु ॥ ३३ ॥ पंचोनशतभक्तेषु । सत्सु तेषु यदाप्यते ॥
तत् षोडशगुणं याव–त्तावांस्तत्र जलोच्छ्रयः ॥ ३४ ॥ यथात्र पंचनवते–र्योजनानामतिक्रमे
॥ विभज्यंते योजनानि । पंचोनेन शतेन वै ॥ ३५ ॥ एकं योजनमाप्तं य–त्तत्षोडशभिराहृ-
तं ॥ योजनानि षोडशैवं । ज्ञातस्तत्र जलोच्छ्रयः ॥ ३६ ॥ तथाहुः क्षमाश्रमणमिश्राः—ज-
म्बुद्दीवे उस्सेहं । उगाहिज्जाण लवणसलिलस्स ॥ पंचाणउइविभत्ते । सोलसगणिए गणिय-

माहु ॥ ३७ ॥ एतच्च धातकीखंड–जंबूद्वीपांत्यभूमितः ॥ दत्वा दवरिकां मध्ये । शिखोपरितलस्य वै ॥ ३८ ॥ विवक्षित्वा मानमुक्तं । जलोच्छ्रयस्य निश्चितं । मेरोरेकादशभाग–परिहाणिरिवागमे ॥ ३९ ॥

तथाहुः श्रीमलयगिरिपादाः—इह षोडशसहस्रप्रमाणायाः शिखायाः शिरसि उभयोश्च वेदिकांतयोर्मूले दवरिकायां दत्तायां यदपांतराले किमपि जलरहितमाकाशं तदपि कर्णगत्या तदा भाव्यमिति सजलं विवक्षित्वाविवक्षितमुच्यमानमुच्चत्वपरिमाणमवसेयं, यथा मंदरपर्वतस्यैकादशभागपरिहाणिरिति, वस्तुतः पुनरुभयो–र्द्वीपयोर्वेदिकांततः ॥ प्रदेशवृद्ध्योन्नयतो । वर्द्धितंबु क्रमात्तथा ॥ ४० ॥ यथास्मिन् पंचनवति–सहस्रांते भवेज्जलं ॥ योजनानां सप्तशता–न्युच्छ्रितं समभूतलात् ॥ ४१ ॥ योजनानां सहस्रं चो–द्वेधोऽत्र समभूतलात् ॥ एवं सप्तदश शता–न्युद्वेधोऽत्र पयोनिधेः ॥ ४२ ॥

ततः परे मध्यभागे । सहस्रदशकातते ॥ जलोच्छ्रयो योजनानां । स्यात्सहस्राणि षोडश ॥ ४३ ॥ सहस्रमत्राप्युद्वेध । उच्छ्रयोद्वेधतस्ततः ॥ योजनानां सप्तदश । सहस्राण्युदको-

च्छ्रयः ॥ ४४ ॥ एवं जघन्योच्छ्रयोऽस्यां—गुलासंख्यांशसंमितः ॥ उत्कर्षतो योजनानां । सह-
स्राणि च षोडश ॥ ४५ ॥ मध्यमस्तूच्छ्रयो वाच्यो । यथोक्ताम्नायतोऽबुधैः ॥ तत्र तत्र विनि-
श्चित्य । जलोच्छ्रयमनेकधा ॥ ४६ ॥ अथास्य लवणांभोधे—र्गणितं प्रतरात्मकं ॥ घनात्मकं च
निर्णेतुं । यथागममुपक्रमे ॥ ४७ ॥ लवणांबुधिविस्तारा—त्सहस्राणि दश स्फुटं ॥ शोधयि-
त्वा शेषमर्द्धी—कृतं दशसहस्रयुक् ॥४८॥ जातं पंचसहस्राढ्यं । लक्षमेकमिदं पुनः ॥ अस्मिन्न
प्रकरणे कोटि—रित्येवं परिभाषितं ॥ ४९ ॥ अथैवंरूपया कोट्या । गणयेल्लवणांबुधेः ॥ म-
ध्यमं परिधेर्मानं । स्यादेवं प्रतरात्मकं ॥ ५० ॥ तच्चेदं—सहस्रा नव कोटीनां । तथा नव श-
तान्यपि ॥ एकषष्टिः कोटयश्च । लक्षाः सप्तदशोपरि ॥ ५१ ॥ सहस्राणि पंचदश । योजना-
नामिदं जनैः ॥ प्रतरं लवणे प्रोक्तं । सर्वक्षेत्रे फलात्मकं ॥ ५२ ॥ मध्यभागे सप्तदश । स-
हस्राणि यदीरितं ॥ जलमानं तदनेन । प्रतरेणाहतं घनं ॥ ५३ ॥ कोट्यः षोडश कोटीनां ।
लक्षास्त्रिनवतिस्तथा ॥ एकोनचत्वारिंशच्च । सहस्राणि ततः परं ॥ ५४ ॥ सपंचदशकोटीनि
। नवकोटीशतान्यथ ॥ परिपूर्णा योजनानां । लक्षाः पंचाशदेव च ॥ ५५ ॥

भाग

॥ ३

एतावद्धनगणितं । कथितं लवणार्णवे ॥ विलसत्केवलालोक–विलोकितजगत्त्रयैः ॥५६॥
नन्वेतावद्धनमिह । कथमुत्पद्यते यतः ॥ न सर्वत्र सप्तदश । सहस्राणि जलोच्छ्रयः ॥ ५७ ॥
किंतु मध्यभाग एव । सहस्रदशकावधि ॥ अत्रोच्यते सत्यमेत–त्तत्वमाकर्ण्यतां परं ॥ ५८ ॥
॥ युग्मं ॥ अब्धेः शिखाया उपरि । द्वयोश्च वेदिकांतयोः ॥ दत्तायां दवरिकाया–मृज्व्यामे-
कांततः किल ॥ ६० ॥ अंतराले यदाकाशं । स्थितमंबुधिवर्जितं ॥ तत्सर्वमेतदाम्नाय–मि-
त्यंबुधितयाखिलं ॥ ६१ ॥ विवक्षित्वा मानमेत–न्निरूपितं घनात्मकं ॥ एतद्विवक्षाहेतुस्तु ।
गम्यः केवलशालिनां ॥ ६२ ॥ तथाहुर्दुष्षमाध्वांत–निर्मग्नागमदीपकाः ॥ विशेषणवतीग्रंथे
। जिनभद्रगणीश्वराः ॥ ६३ ॥ ' एयं उभयवेइयंताउ सोलससहस्सुस्सेहस्स कन्नगईए जं ल-
वणसमुद्दाभवंजलसुन्नंपि खित्तं तस्स गणियं जहा मंदरस्स पव्वयस्स एक्कारसभागहाणीक-
न्नगइए आगासस्सवि तदा भवंति काऊण भणिया तहा लवणसमुद्दस्स वि ' मुखैश्चतुर्मुख
इव । द्वारैश्चतुर्भिरेष च ॥ जगत्यालिंगितो भाति । स्थितैर्दिक्षु चतसृषु ॥ ६४ ॥ पूर्वस्यां वि-
जयद्वारं । शीतोदायाः किलोपरि ॥ धातकीखंडपूर्वार्द्ध–दिशांत्यां लवणांबुधौ ॥ ६५ ॥

द्वाराणि वैजयंतादी—न्यप्येवं दक्षिणादिषु ॥ संत्यस्य दिक्षु तिसृषु । जंबूद्वीप इव क्रमा-
त् ॥ ६६ ॥ विजयाद्याश्च चत्वारो । द्वाराधिष्ठायकाः सुराः ॥ ज्ञेयाः प्रागुक्तविजय—सदृक्षाः
सकलात्मना ॥ ६७ ॥ एतेषां राजधान्योऽपि । स्मृताः सर्वात्मना समाः ॥ राजधान्या वि-
जयया । प्राक्प्रपंचितस्वरूपया ॥ ६८ ॥ एताः किंतु स्वस्वादिशि । क्षारोदकन्नयादिव ॥ असं-
ख्यद्वीपपाथोधी—नतीत्य परतः स्थिताः ॥ ६९ ॥ नाम्नैव लवणांभोधौ । रुचिरेक्षुरसोदके ॥
योजनानां सहस्राणि । वगाह्य द्वादश स्थिताः ॥ ७० ॥ सहस्राः पंचनवति—स्तिस्रो लक्षाः
शतद्वयं ॥ अशीतियुक् योजनानां । क्रोशो द्वारमिहांतरं ॥ ७१ ॥ द्वाराणां परिमाणं च ।
निःशेषरचनांचितं ॥ जंबूद्वीपद्वारगत—मनुसंधीयतामिह ॥ ७२ ॥ अथास्मिन्नंबुधौ वेला । व-
र्द्धते हीयते च यत् ॥ तत्रादिकारणीभूतान् । पातालकलशान् ब्रुवे ॥ ७३ ॥ सहस्रान् पंचन-
वतिं । वगाह्य लवणांबुधौ ॥ योजनानां स एकैको । मेरोर्दिक्षु चतसृषु ॥ ७४ ॥ एवं च—
पातालकुंभाश्चत्वारो । महालिंजरसंस्थिताः ॥ वैरं स्मृत्वाब्धिना ग्रस्ता । अगस्त्यस्येव पूर्व-
जाः ॥ ७५ ॥ वडवामुखनामा प्रा—गपाक्केयूपभंज्ञितः ॥ प्रतीच्यां यूपनामाय—मुदीच्यामीश्व-

राज्ञिवः ॥ ७६ ॥ दाक्षिणात्यकलशस्य बृहत्क्षेत्रसमासवृत्तौ केयूप इति नाम, प्रवचनसारोद्धारवृत्तौ केयूर इति, समवायांगवृत्तौ स्थानांगवृत्तौ च केतुक इति.

कालो महाकालनामा । वेलंबश्च प्रभंजनः ॥ क्रमादधीश्वरा एषां । पल्यायुषो महर्द्धिकाः ॥ ७७ ॥ समंततो वज्रमया—त्मनामेषां निरूपिताः ॥ बाहल्यतष्ठिक्करिकाः । सहस्रयोजनोन्मिताः ॥ ७८ ॥ योजनानां सहस्राणि । दश मूले मुखेऽपि च ॥ विस्तीर्णा मध्यभागे च । लक्षयोजनसंमिताः ॥ ७९ ॥ एकप्रादेशिकया । श्रेण्या मूलाच्चिवर्द्धमानाः स्युः ॥ मध्यावधिवक्त्रावधि । ततस्तथा हीयमानाश्च ॥ ८० ॥ इति प्रवचनसारोद्धारवृत्तौ, परमेतत्तदोपपद्यते यद्येषां मध्यदेशे दशयोजनसहस्राणि यावत् लक्षयोजनविष्कंभता स्याद्यतः प्रदेशवृद्ध्या ऊर्ध्वं पंचचत्वारिंशद्योजनसहस्रातिक्रम एव उभयतो मूलविष्कंभाधिकायां पंचचत्वारिंशत्सहस्ररूपायां विष्कंभवृद्धौ सत्यां यथोक्तलक्षयोजनरूपो विष्कंभः संपद्यते, एवं हानिरपि. सा त्वेषां मध्ये दशयोजनसहस्राणि यावल्लक्षयोजनविष्कंभता क्वाप्युक्ता न दृश्यते, तदत्र तत्वं बहुश्रुता विदंति. योजनानां लक्षमेक—मवगाढा भुवोंतरे ॥ रत्नप्रभामूलभागं । हष्टुमु-

त्कंठिता इव ॥ ८१ ॥ लक्षद्वयं योजनाना । सहस्राः सप्तविंशतिः ॥ सप्तत्याढ्यं शतमेकं । त्रयः क्रोशास्तथोपरि ॥ ८२ ॥ एतत्पातालकलश–मुखानामंतरं मिथः ॥ एतन्मूलविभागा-ना–मप्येतावदिहांतर ॥ ८३ ॥ उपपत्तिश्चात्र––एषां चतुर्णां वदन–विस्तारपरिवर्जिते ॥ प-योधिमध्यपरिधौ । चतुर्भक्ते मुखांतरं ॥ ८४ ॥ तथाब्धिमध्यपरिधे–रेतेषां मध्यविस्तृतौ ॥ शोधितायां चतुर्भक्ते । शेषे स्याज्जठरांतरं ॥ ८५ ॥ योजनानां लक्षमेकं । सप्तत्रिंशत्सहस्र-युक् ॥ सप्तत्याढ्यं शतं क्रोशा–स्त्रयस्तदिदमीरितं ॥ ८६ ॥ कुड्यंतैशास्त्वयोऽमीषां । स चै-कैकः प्रमाणतः ॥ त्रयस्त्रिंशत्सहस्राणि । त्रयस्त्रिंशं शतत्रयं ॥ ८७ ॥ योजनानां योजनस्य । तृतीयांशेन संयुतं ॥ अधस्तने तृतीयांशे । तत्र वायुर्विजृंभते ॥ ८८ ॥ मध्यमे च तृतीयां-शे । वायुर्वारि च तिष्ठतः ॥ तृतीये च तृतीयांशे । वर्त्तते केवलं जलं ॥ ८९ ॥

अन्येऽपि लघुपाताल–कलशा लवणांबुधौ ॥ संति तेषामंतरेषु । क्षुद्रालिंजरसंस्थिताः ॥ ९० ॥ तथोक्तं जीवाभिगमवृत्तौ–तेषां पातालकलशानामंतरेषु तत्र तत्र देशे यावत् क्षुद्रा-लंजरसंस्थानाः क्षुल्लाः पातालकलशाः प्रज्ञप्ता इति. अत्रायं संप्रदायः––जंबूद्वीपवेदिकांता

–द्तीत्य लवणांबुधौ ॥ सहस्रान् पंचनवतिं । तत्रायं परिधिः किल ॥ ९१ ॥ सल्लक्षद्वयनव-
ति–सहस्रविस्तृतेर्भवेत् ॥ नवलक्षाः सप्तदश । सहस्राणि च षट्शती ॥ ९२ ॥ अयं भावः
–पंचनवतिः सहस्राः समुद्रसंबधिन एकपार्श्वे तावंत एव द्वितीयपार्श्वे मध्ये चैकं लक्षं जंबू-
द्वीपसंबधि, एवं द्विलक्षनवतिसहस्रविष्कंभक्षेत्रस्य परिधिर्नव लक्षाः सप्तदश सहस्राः षट्-
शतीत्येवंरूपो भवतीति. चत्वारिंशत्सहस्रात्मा । शोध्यते मुखविस्तृतिः ॥ महापातालकुंभा-
ना–मस्माद्राशेस्ततः स्थितं ॥ ९३ ॥ अष्टौ लक्षाः षष्ट्यधिकाः । सहस्राः शतसप्ततिः ॥ भा-
ग चतुर्भिरेतेषां । लब्धं तत्रांतरं भवेत् ॥ ९४ ॥ लक्षद्वयं सहस्राणा–मेकोनविंशतिस्तथा ॥
सपंचषष्टिद्विशती । कुंभानां महतां पृथक् ॥ ९५ ॥ चतुर्ष्वप्यंतरेष्वेषु । पंक्तयो नव नव
स्थिताः ॥ लघुपातालकुंभाना–माद्यपंक्तौ च ते स्मृताः ॥ ९६ ॥ प्रत्येकं द्वे शते पंच–दशो-
त्तरे किलांतर ॥ पूर्वोक्तं गुरुकुंभाना–मेवमेभिश्च पूर्यते ॥ ९७ ॥ एकैकस्योदरव्यासः । सह-
स्रयोजनात्मक ॥ ततः शतद्वयं पंच–दशसहस्रताडितं ॥ ९८ ॥
सहस्रैः पंचदशभि–र्युक्तं लक्षद्वयं भवेत् ॥ लघुकुंभैरियद्रुद्ध–मेकैकस्यांतरस्य वै ॥९९॥

शेषं सहस्रांश्चत्वारो । द्विशती पंचषष्टियुक् ॥ रुद्धं कथंचित्तत्प्रौढ–कुंभांतरमिथोंतरैः ॥१००॥
परिधेर्वर्द्धमानत्वा–त्पंक्तौ पंक्तौ यथोत्तरं ॥ एकैककलशस्यापि । वृद्धिर्वाच्या वचस्विभिः ॥१॥
ततः पंक्तौ द्वितीयस्यां । द्वे शते षोडशोत्तरे ॥ पंक्तौ नवम्यामेवं स्यु–स्त्रयोविंशं शतद्वयं ॥
॥ २ ॥ एकसप्तत्युपेतानि । शतान्येकोनविंशतिः ॥ एकैकस्मिन्नंतरे स्यु–र्लघवः सर्वसंख्यया
॥ ३ ॥ चतुर्णामंतराणां च । मिलिताः सर्वसंख्यया ॥ स्फुरच्चतुरशीतीनि । स्युः शतान्यष्ट-
सप्ततिः ॥ ४ ॥ अयं च संप्रदायो ' विरंजय सेहरे ' त्यादिक्षेत्रसमासवृत्त्यभिप्रायेण, बृहत्क्षे-
त्रसमासवृत्तौ जीवाभिगमवृत्त्यादौ त्वयं न दृश्यते. लघुपातालकलशा । अमी सर्वेऽप्यधिष्टि-
ताः ॥ सदा महर्द्धिकैर्देवैः । पल्योपमार्द्धजीविभिः ॥ ५ ॥ अयं क्षेत्रसमासवृत्त्याद्यभिप्रायः,
जीवाभिगमसूत्रवृत्तौ च अर्द्धपल्योपमस्थितिकाभिर्देवताभिः परिगृहीता इत्युक्तं. शतयोजन-
विस्तीर्णा । एते मूले मुखेऽपि च ॥ मध्ये सहस्रविस्तीर्णाः । सहस्रं क्ष्मोदरे स्थिताः ॥ ६ ॥

दशयोजनबाहल्य–वज्रकुड्यमनोरमाः ॥ वायुवायूदकांभोभिः । पूर्णत्र्यंशत्रयाः क्रमा-
त् ॥ ७ ॥ सयोजनतृतीयांशं । त्रयस्त्रिंशं शतत्रयं ॥ तृतीयो भाग एकैक । एषां निष्टंकितो

बुधैः ॥ ८ ॥ लघवोऽपिमहांतोऽपि । यावन्मग्ना भुवोंतरे ॥ तत्तुंगास्तावदेव स्यु–र्भूमीतलस-
मानना: ॥ ९ ॥ एषां पातालकुंभानां । लघीयसां महीयसां ॥ मध्यमेऽधस्तने चैवं । त्र्यंशे
जगत्स्वभावतः ॥ १० ॥ समकालं महावाताः । संमूर्छंति सहस्रशः ॥ क्षुभितैस्तैश्चोपरिस्थं ।
बहिर्निस्सार्यते जलं ॥ ११ ॥ तेन निस्सार्यमाणेन । जलेन क्षुभितोंबुधिः ॥ वेलया व्याकुला-
त्मा स्या–द्दुद्भमन्निव वातकी ॥ १२ ॥ जगत्स्वाभाव्यत एव । शांतेषु तेषु वायुषु ॥ पुनः पा-
तालकुंभानां । जलं स्वस्थानमाश्रयेत् ॥ १३ ॥ जलेषु तेषु स्वस्थानं । प्राप्तेषु सुस्थितोदकः
॥ स्वास्थ्यमापद्यतेंभोधि–र्वातकीव कृतौषधः ॥ १४ ॥ मूर्छंति द्विरहोरात्रे । वाताः स्वस्थी-
भवंति च ॥ ततो द्विः प्रत्यहोरात्रं । वर्द्धते हीयतेंबुधिः ॥ १५ ॥ तथाह जीवाभिगमः—
लवणेणं भंते समुद्दे तीसाए मुहुत्ताणं कइखुत्तो अइरेगं वड्ढइ वा हायइ वा गो० दुक्खुत्तो अ-
इरेगं वड्ढइ वा हायइ वा, राकादर्शादितिथिषु । चातिरेकेण तेऽनिलाः ॥ क्षोभं प्रयांति मूर्छं-
ति । तथा जगत्स्वभावतः ॥ १६ ॥ ततश्च पूर्णिमामादि–तिथिष्वतितमामयं ॥ वेलया व-
र्द्धते वार्द्धि–र्दशम्यादिषु नो तथा ॥ १७ ॥ लोकप्रथानुसारेण त्वेवमवोचं—यथायथंदोर्निज-

नंदनस्य । कालक्रमप्राप्तकलाकलस्य ॥ आश्लिष्यतेऽब्धिर्मृदुभिः कराग्रै–स्तथा तथोद्वेलमुपैति वृद्धिं ॥ १८ ॥ दर्शे त्वपश्यन्नतिदर्शनीयं । निजांगजं शीतकरं पयोधिः ॥ विवृद्धवेलावलयच्छलेन । दुःखाग्नितप्तो भुवि लोलुठीति ॥ १९ ॥ योजनानामुन्नयतो । विमुच्य लवणांबुधौ ॥ सहस्रान् पंचनदाति । मध्यदेशे शिखेवते ॥ २० ॥

योजनानां सहस्राणि । दशेयं पृथुलान्वितः ॥ चकास्ति वलयाकारा । जलभित्तिरिव स्थिरा ॥ २१ ॥ सहस्राणि षोडशोच्चा । समभूमिसमोदकात् ॥ योजनानां सहस्रं च । तत्रोद्वेधेन वारिधिः ॥ २२ ॥ शिखामिषाद्दधद्योग–पट्टं योगीव वारिधिः ॥ ध्यायतीव परब्रह्म । जन्मजाड्योपशांतये ॥ २३ ॥ सुभगंकरणीं यद्वा । हारिहारलतामिमां ॥ श्यामोऽपि सुभगत्वेच्छु–र्धत्ते वार्धिः शिखोपधेः ॥ २४ ॥ जंबूद्वीपापाश्रयस्थान । मुनीनुत निनंसिपुः ॥ कृतोत्तरासंगसंगः । शिखावलयकैतवात् ॥ २५ ॥ पूर्णकुक्षि भृशं रत्नै–रुन्मदिष्णुतयाथवा ॥ पट्टबद्धोदर इव । विद्यादसकुवादिवत् ॥ २६ ॥ भाति भूयोऽब्धिभूपाल–वृतो दैवतसेवितः ॥ शिखामिषात्समुकुटो । दधद्वा वार्धिचक्रितां ॥ २७ ॥ त्रिभिर्विशेषकं ॥ पातालकुंभसंमुत्र–

॥

च्छायुर्विष्कोऽन्नयोगतः ॥ उपर्यस्याः शिखायाश्च । देशोनमर्द्धयोजनं ॥ २८ ॥ द्वौ वारौ प्रत्यहो-
रात्र–मुदकं वर्द्धतेतरां ॥ तत्प्रशांतौ शाम्यति च । ज्ञवेद्वेलेयमूर्ध्ध्वगा ॥ २९ ॥ तां च वेला-
मुच्छलंतीं । दर्व्याद्यग्रकराः सुराः ॥ शमयंति सदा नाग–कुमारा जगतः स्थितेः ॥ ३० ॥ त-
त्र जंबूद्वीपदिशि । शिखावेलां प्रसृत्वरीं ॥ द्विचत्वारिंशत्सहस्रा । धरंति नागनाकिनः ।३१।

धातकीखंडदिशि च । प्रसर्पंतीमिमां किल ॥ निवारयंति नागानां । सहस्राणि द्विसप्त-
तिः ॥ ३२ ॥ देशोनं योजनार्द्धं य–द्वर्द्धतेंबु शिखोपरि ॥ षष्टिर्नागसहस्राणि । सततं वारयं-
ति तत् ॥ ३३ ॥ लक्षमेकं सहस्राणि । चतुःसप्ततिरेव च ॥ वेलंधरा नागदेवा । ज्ञवंति सर्व-
संख्यया ॥ ३४ ॥ एषामुपक्रमेणैव । निरुद्धानावतिष्टते ॥ वेलेयं चपलातीव । महेलेव रसा-
कुला ॥ ३५ ॥ किंतु द्वीपस्थसंघार्ह–द्देवचक्र्यादियुग्मिनां ॥ पुण्याज्जगत्स्वज्ञावाच्च । मर्यादां
न जहाति सा ॥३६॥ इदं जीवाज्ञिगमसूत्रवृत्त्यज्ञिप्रायेण, पंचमांगे तद्वृत्तौ च–'जयाणं दिविज्ञ-
याईम्मिंणोणं तया सामुद्दयाईसिं जयाणं सामुद्दयाई सिंणोणतया दीविज्ञयाइसिं गोण तेसिं णं वा
याणं अन्नमन्नविवच्चासेणं लवणसमुद्दे वेलं नातिक्कमइ, अन्योन्यव्यत्यासेन यदैके पुरोवातादिविशे

षणा वांति तदेतरे न तथाविधा वांतीत्यर्थः ' वेलं नाइक्कमइत्ति ' तथाविधवायुद्वयसामर्थ्याद्वेलायास्तथास्वभावत्वाच्चेत्युक्तं. अत्र ईसिं पुरोवातादीनि विशेषणानि त्वेवं—' ईसिं पुरो वायत्ति ' मनाक् सस्नेहवाताः ' पच्छावायत्ति ' पथ्या वनस्पत्यादिहिता वायवः ' मंदावायत्ति ' मंदाः शनैः शनैः संचारिणोऽमहावाता इत्यर्थः ' महावायत्ति ' उद्दंडा वाता अनल्पा इत्यर्थः. वेलंधराणामेतेषां । स्युर्वत्यावासपर्वताः ॥ अस्मिन्नेवांबुधौ पूर्वा—दिषु दिक्षु चतसृषु ।३७। तथाहि—जंबूद्वीपवेदिकांता—त्पूर्वस्यां दिशि वारिधौ ॥ गोस्तूपः पर्वतो भाति । वेलंधरसुराश्रयः ॥ ३८ ॥ नानाजलाशयोद्भूतैः । शतपत्रादिभिर्युतः ॥ गोस्तूपाकृतिभृद्रम्यो । गोस्तूपोऽयं गिरिस्ततः ॥ ३९ ॥ जलं यत्रासयत्यष्ट—योजनीं परितोंशुभिः ॥ ततो नाम्नोदकभासो—ऽथा-ख्यां वेलंधराचलः ॥ ४० ॥ पश्चिमायां शंखनामा । नगः सोऽप्यन्विताभिधः ॥ शंखाभैः शतपत्राद्यै—र्जलाश्रयोद्भवैर्लसन् ॥ ४१ ॥ उत्तरस्यां दिशि वेलं—धरावासधराधरः ॥ दकसीमाभिधः शीता—शीतोदोदकसीमकृत् ॥ ४२ ॥ शीताशीतोदयोर्नद्यो: । श्रोतांसीह धराधरे ॥ प्रतिघातं प्राप्नुवंति । दकसीमाभिधस्ततः ॥ ४३ ॥ एवं च शीताशीतोदे । पूर्वपश्चिमयोर्दि-

शोः ॥ प्रविश्य वारिधौ याते । उदीच्यां इति निश्चयः ॥ ४४ ॥ गोस्तूपे गोस्तूपसुरो ! दक-
भासगिरौ शिवः ॥ शंखे शंखोदकसीम—पर्वते च मनःशिलः ॥ ४५ ॥ सामानिकसहस्रा-
णां । चतुर्णां च चतसृणां ॥ पट्टाभिषिक्तदेवीनां । तिसृणामपि पर्षदां ॥ ४६ ॥ सैन्यानां सै-
न्यनाथानां । सप्तानामप्यधीश्वराः ॥ आत्मरक्षिसहस्रैश्च । सेव्याः षोडशभिः सदा ॥ ४७ ॥
स्वस्वावासपर्वताना—माधिपत्यममी सदा ॥ पालयंति पूर्वजन्मा—र्जितपुण्यानुसारतः ॥४८॥
त्रिभिर्विशेषकं ॥ आज्ञाप्रतीक्षका एषां । संत्येतदनुयायिनः ॥ अनुवेलंधरास्तेषां । विदिक्ष्वा-
वासपर्वताः ॥ ४९ ॥ कर्कोटकाद्रिरैशान्यां । विद्युत्प्रभोऽग्निकोणके ॥ कैलाशो वायवीयायां ।
नैर्ऋत्यामरुणप्रभः ॥ ५० ॥ कर्कोटकः कर्दमकः । कैलाशश्चारुणप्रभः ॥ एषां चतुर्णामधी-
णा—मीशा गोस्तूपसश्रियः ॥ ५१ ॥ यथा स्वमेषामष्टानां । रम्या दिक्षु विदिक्षु च ॥ राज-
धान्यः स्वस्वनाम्ना । परस्मिन्न लवणार्णवे ॥ ५२ ॥ असंख्येयान्न द्वीपवार्धी—नतीत्य परतः
स्थितेः ॥ योजनानां सहस्राणि । वगाह्य द्वादश स्थिताः ॥ ५३ ॥ जंबूद्वीपवेदिकांता—दष्टा- ॥ ७२
पि स्वस्वदिक्ष्वमी ॥ द्विचत्वारिंशत्सहस्र—योजनातिक्रमेऽद्ययः ॥ ५४ ॥ सुवर्णांकरत्नरूप्य—

स्फटिकैर्घटिता: क्रमात् ॥ दिश्याश्चत्वारोऽपि शैला: । सर्वे विदिक्षु रत्नजा: ॥ ५५ ॥ अष्टाप्यमी योजनानां । सहस्रं सप्तभि: शतै: ॥ एकविंशै: समधिक–मुत्तुंगत्वेन वर्णिता: ॥ ५६ ॥

चतु:शतीं योजनानां । त्रिंशां क्रोशाधिकाममी ॥ वसुधांतर्गता: पद्म–वेदिकावनमंडिता: ॥ ५७ ॥ मूले सहस्र द्वाविंशं । सर्वेऽपि विस्तृता अमी ॥ त्रयोविंशानि मध्ये च । शतानि सप्त विस्तृता: ॥ ५८ ॥ योजनानां चतुर्विंशां । चतु:शतीमुपर्यमी ॥ विस्तृता: सर्वतो व्याम–ज्ञानोपायोऽत्र तन्यते ॥ ५९ ॥ योजनादिषु यावत्सू–त्तीर्णेषु शिखराग्रत: ॥ वेलंधरपर्वतानां । विष्कंभो ज्ञातुमिष्यते ॥ ६० ॥ अतिक्रांतयोजनादि–रूपं तं राशिमंजसा ॥ अष्टानवत्याभ्यधिकै र्गुणयेः पंचभि: शतै: ॥ ६१ ॥ जातं चैतेषां गिरीणा–मुच्छ्रयेण विभाजय ॥ यल्लब्धं तच्चतुर्विंश–चतु:शतयुतं कुरु ॥ ६२ ॥ कृते चैवं तत्र तत्र । विष्कंभोऽभीप्सितास्पदे ॥ वेलधरादिषु ज्ञेयो । दृष्टांत: श्रूयतामिह ॥ ६३ ॥ सप्तष्टीनि शतान्यष्ट । द्वौ क्रोशौ च शिरोऽग्रत: ॥ अतीत्य व्यामजिज्ञासा । चेदिदं गुणयेत्तदा ॥ ६४ ॥

अष्टानवत्याढ्यपंच–शत्यैवं पंचलक्षका: ॥ सहस्रा द्वि:सप्तपंच–शती सैकोनसप्तति: ॥

॥ ६१ ॥ जातास्ते च हृताः सप्त—दशशत्यैकविंशया ॥ शतद्वयीं नवनव—त्यधिकां ध्रुवमा-
र्पयत् ॥ ६६ ॥ ततश्च सा चतुर्विंशैः । शतैश्चतुर्भिरन्विता ॥ त्रयोविंशा सप्तशती । जातेयं
तत्र विस्तृतिः ॥ ६७ ॥ मध्यव्यासोऽयमेवैषां । सर्वत्रैव विभाव्यतां ॥ स्याद्भागयांतरमेत—न्म-
ध्यविष्कंभनिश्चये ॥ ६८ ॥ मूले मध्ये च विष्कंभौ । यौ तद्योगेऽर्द्धिते सति ॥ सर्वत्र मध्य-
विष्कंभो । लभ्योऽत भाव्यतां स्वयं ॥ ६९ ॥ एषां वेलंधराद्रीणां । मूलांशे परिधिं जिनाः
॥ जगुः शतानि द्वात्रिंश—न्सह द्वात्रिंशतोनया ॥ ७० ॥ मध्ये स षमशीतीनि । द्वाविंशतिः श-
तानि च ॥ किंचित्समतिरेकाणि । परिक्षेपो निरूपितः ॥ ७१ ॥ उपरिस्यात्परिक्षेपः । शता-
न्येषां त्रयोदश ॥ किंचिदूनैकचत्वारिं—शता युक्तानि सूत्रतां ॥ ७२ ॥ द्विसप्ततिः सहस्रा-
णि । शतमेकं चतुर्दशं ॥ योजनानामष्टभक्त—योजनस्य लवास्त्रयः ॥ ७३ ॥
अष्टानामेतदेतेषां । मूलभागे मिथोंतरं ॥ वेलंधरसुराद्रीणां । प्रत्ययश्चात्र दर्श्यते ॥७४॥
मध्यभागे यदेतेषा—मंतरं ज्ञातुमिष्यते ॥ एकादशा पंचशत्ये—तदर्धगा तदन्विता ॥ ७५ ॥
द्विचत्वारिंशत्सहस्रै—र्वार्द्धिगैरेकतो यथा ॥ क्रियते परतोऽप्येव—मित्येतद् द्विगुणीकुरु ॥७६॥

पंचाशीति सहस्राणि । द्वाविंशान्यन्नवन्निह ॥ मध्यस्थजंबूद्वीपस्य । लक्षमेकं तु मीव्यते ॥ ॥ ७७ ॥ एतेषां परिधिः पंच । लक्षा योजनसंख्यया ॥ पंचाशीतिः सहस्राणि । तथैकनवतिः पराः ॥ ७८ ॥ अष्टानामप्यथाद्दीणां । व्यासोऽस्मादपनीयते ॥ षट्सप्तत्याढ्यशतयुक्‌सहस्राष्टक ८१७६ संमितः ॥ ७९ ॥ अपनीतेऽस्मिंश्च पूर्व–राशिरीदृग्विधः स्थितः ॥ पंच लक्षाः सहस्राणि । षट्सप्ततिस्तथोपरि ॥ ८० ॥ नव पंचदशाढ्यानि । शतान्येषामथाष्टभिः ॥ भागे हृते लभ्यते य–त्तद्द्वीणां मिथोंतरं ॥ ८१ ॥ एषां समीपेंबुवृद्धि–र्जंबूद्वीपादिशि स्फुटं ॥ समन्यूनलतुल्यांशो–ऽपेक्षयोर्ध्वं पयोनिधौ ॥ ८२ ॥ नवोत्तरं योजनानां । शतत्रयं तथोपरि ॥ पंचत्वारिंशदंशाः । पंचोनशतभाजिताः ॥ ८३ ॥

निश्चयः पुनरेतस्य । त्रैराशिकात्प्रतीयते ॥ व्युत्पित्सूनां प्रमोदाय । तदप्यानन्य दर्श्यते ॥ ८४ ॥ यदि पंचसहस्रोन–लक्षेण वर्द्धते जलं ॥ योजनानां सप्तशतीं । तदा तद्वर्द्धते कियत् ॥ ८५ ॥ द्विचत्वारिंशत्सहस्रै–रिति राशित्रयं लिखेत् ॥ ९५००० ७०० ४२००० आद्यंतयोस्तत्र राश्योः । कार्यं शून्यापवर्त्तनं ॥ ८६ ॥ एनयोर्हि द्वयो राश्योः । सा जात्यादपवर्त्तनं ॥

घटते लाघवार्थं च । क्रियते गणकैरिदं ॥ ८७ ॥ मध्यराशिः सप्तशती । द्विचत्वारिंशदात्मना ॥ अंत्येन राशिना गुण्य–स्तथा चैवंविधो भवेत् ॥ ८८ ॥ नूनं सहस्राण्येकोन–त्रिंशत्पूर्णा चतुःशती ॥ ततः पंचनवत्यायं । भाज्यः प्रथमराशिना ॥ ८९ ॥ भागे हृते च यल्लब्धं । पानीयं तावदुच्छ्रितं ॥ जंबूद्वीपदिशयमीषां । समीपे तत्पुरोदितं ॥ ९१ ॥ जंबूद्वीपस्य दिश्येषां । गिरीणामतिके पुनः ॥ गोतीर्थे न धरोद्वेधः । स्यात्समोर्व्यपेक्षया । ९२ ॥ द्विचत्वारिंशदधिका । योजनानां चतुःशती ॥ दश पंच नवत्यंशा–स्त्रैराशिकात्तु निश्चयः ॥९३॥ ननु पंचसहस्रान–लक्षांते यदि लभ्यते ॥ भुवोऽवगाहः सहस्र–स्तदासौ लभ्यते कियान् ।९४।

द्विचत्वारिंशत्सहस्र–पर्यंत इति लिख्यते ॥ राशित्रय कार्यमाद्यां–त्ययोः शून्यापवर्त्तनं ॥ ९५ ॥ ९५ १००० ४२ मध्यराशिः सहस्रात्मा । द्विचत्वारिंशदात्मना ॥ हतोंत्येन द्विचत्वारिं–शत्सहस्राणि जज्ञिरे ॥ ९६ ॥ आद्येन पंचनवति–लक्षणेनाथ राशिना ॥ भागे हृते लभ्यतेऽय–मवगाहो यथोदितः ॥ ९७ ॥ योऽयं भूमेरवगाहो । यश्च प्रोक्तो जलोच्छ्रयः ॥ एतद् द्वयं पर्वताना–मुच्छ्रयादपनीयते ॥ ९८ ॥ अपनीतेऽवशिष्टं य–त्तावन्मात्रो जलोपरि ॥

जंबूद्वीपदिश्यमीषां । गिरीणामयमुच्छ्रयः ॥ ९९ ॥ योजनानां नवशती । सैकोनसप्ततिस्त-
था ॥ चत्वारिंशद्योजनस्य । पंचोनशतजा लवाः ।१००। अत्र चासर्गसपूर्त्ति । यत्र क्वाप्यविशे-
षतः ॥ वक्ष्यंतेंशा अमी सर्वे । पंचोनशतजाजिताः ॥ १ ॥ शिखराग्रादश्रेनाव–डुनीयं यदि
चिंत्यते ॥ अत्र प्रदेशे विष्कंभो । ज्ञेयोऽमीषामयं तदा ॥ २ ॥

षष्ट्याद्यानि योजनानां । शतानि सप्त चोपरि ॥ अशीतिर्योजनस्यांशाः । पंचोनशत-
संभवाः ॥ ३ ॥ तिर्यक्क्षेत्रेणेयता च । जलवृद्धिरवाप्यते ॥ किंचिदूनाष्टपंचाश–दंशाढ्या पं-
चयोजनी ॥ ४ ॥ जंबूद्वीपदिशि प्रोक्ता–त्पर्वतानां समुच्छ्रयात् ॥ स्यादस्यामपनीतायां ।
शिखादिशि नगोच्छ्रयः ॥ ५ ॥ सचायं–योजनानां नवशती । त्रिषष्ट्याभ्यधिका किल ॥ स-
प्तसप्ततिरंशाश्च । तथात्रस्याज्जलोच्छ्रयः ॥ ६ ॥ योजनानां पंचदशाः । शतास्त्रयोऽष्ट चांश-
काः ॥ चतुःशती च पंचाशा । दशांशाश्च घरोंडता ॥ ७ ॥ एवं वेलंधरावास–पर्वतानां य-
थामति ॥ स्वरूपं दर्शितं किंचि–ज्जीवाभिगमवर्णितं ॥ ८ ॥ सुमेरुतः पश्चिमायां । जंबूद्वी-
पांत्यभूमितः ॥ सहस्रान् द्वादशातीत्य । लवणांभोनिधाविह ॥ ९ ॥

योजनानां सहस्राणि । द्वादशायतविस्तृतः ॥ शोभते गौतमद्वीपः । स्थानं सुस्थितना-
किनः ॥ १० ॥ सप्तत्रिंशत्सहस्राणि । योजनानां शतानि च ॥ नवाष्टचत्वारिंशानि । द्वीपेऽ-
स्मिन् परिधिर्भवेत् ॥ ११ ॥ द्वे गव्यूते जलादूर्ध्व–मुच्छ्रितोऽब्धिशिखादिशि ॥ अतेऽस्यास्मि-
न्नंबुवृद्धि–स्त्रैराशिकात्प्रतीयते ॥ १२ ॥ तथाहि–सहस्रेषु द्वादशसु । द्वीपोऽयं तावदाततः ॥
॥ चतुर्विंशतिरित्येवं । सहस्रा वारिधेर्गताः ॥ १३ ॥ ततश्च—सहस्रपंचनवति–पर्यंते यदि ल-
भ्यते ॥ जलवृद्धिर्योजनानां । शतानि सप्त निश्चिता ॥ १४ ॥ चतुर्विंशत्या सहस्रैः । कियतीयं
तदाप्यते ॥ ९५००० ७०० २४००० राशित्रयं त्वाद्ययोश्च । कार्यं शून्यापवर्त्तनं ९५ ७०० २४
मध्यराशिः सप्तशती । गुणितोंत्येन राशिना ॥ चतुर्विंशतिरूपेण । सहस्राः षोडशाभवन् ॥
॥ १५ ॥ ततश्च पचनवति–रूपेणांत्येन राशिना ॥ विभज्यते ततो लब्धं । षट्सप्तत्यधिकं शतं
॥ १६ ॥ अशीतिः पचनवति–भागाश्चैतावती किल ॥ गौतमद्वीपपर्यंते । जलवृद्धिः शिखा-
दिशि ॥ १७ ॥ जंबूद्वीपदिश्यमुष्य । राशेरर्द्धं जलोच्छ्रयः ॥ युक्तश्चैष सहस्राणां । द्वादशाना-
मतिक्रमे ॥ १८ ॥ ततः पूर्वोक्तस्य राशे–रर्द्धं यदिदमास्थितं ॥ अष्टाशीतिर्योजनानि । चत्वा-

रिंशत्तथा लवाः ॥ १९ ॥ इयान् जंबूद्वीपदिशि । द्वीपस्यास्योच्छ्रयो जलात् ॥ शिखादिगु-
दितद्वीपो–च्छ्रयः क्रोशद्वयाधिकः ॥ २० ॥ त्रिंशत्पंचनवत्यंशाः । षड्विंशा शतयोजनी ॥
भूनिम्नतास्मिन् पर्यंते । द्विगुणा च शिखादिशि ॥ २१ ॥ एवं च—मूलादुच्चौ द्वीपदिशि ।
चतुर्दशं शतद्वयं ॥ क्रोशद्वयाधिकं पंच–नवत्यंशाश्च सप्ततिः ॥ २२ ॥ चतुःशती योजनाना–
मेकोनत्रिंशताधिका ॥ पंचचत्वारिंशदंशा । द्वौ क्रोशौ च शिखादिशि ॥ २३ ॥ वनाढ्यया
पद्मवेद्या । द्वीपोऽयं शोभतेऽभितः ॥ नीलरत्नालियुग्मुक्ता–मंडलेनेव कुंडलं ॥ २४ ॥

द्वीपस्य मध्यभागेऽस्य । रत्नस्तंभशतांचितं ॥ भौमेयमस्ति भवनं । क्रीडावासाभिधं
शुभं ॥ २५ ॥ द्वाषष्टिं योजनान्येतद् । द्वौ क्रोशौ च समुच्छ्रितं ॥ योजनान्येकत्रिंशतं । क्रो-
शाधिकानि विस्तृतं ॥ २६ ॥ एतस्यावसथस्यांत–र्भूमिभागे मनोरमे ॥ मध्यदेशे महत्येका ।
शोभते मणिपीठिका ॥ २७ ॥ योजनायामविष्कंभा । योजनार्द्धं च मेदुरा ॥ उपर्यस्याः श-
यनीयं । भोग्यसुस्थितनाकिनः ॥ २८ ॥ सुस्थितः सुस्थिताभिख्यो । लवणोदधिनायकः ॥
चतुःसामानिकसुर–सहस्राराधितक्रमः ॥ २९ ॥ परिवारयुजां चारु–रुचां चतसृणां सदा ॥

पट्टाभिषिक्तदेवीनां । तिसृणामपि पर्षदां ॥ ३० ॥ सप्तानां सैन्यसेनान्या-मात्मरक्षकनाकि-
नां ॥ षोडशानां सहस्राणा-मन्येषामपि भूयसां ॥ ३१ ॥ सुस्थिताख्यराजधानी—वास्त-
व्यानां सुधाभुजां ॥ भुंक्ते स्वाम्यं तत्र भूरि-सुराराधितशासनः ॥ ३२ ॥ चतुर्भिः कलापकं
॥ रत्नद्वीपादिपतयो । लवणांभोधिवासिनः ॥ देव्यो देवाश्च ते सर्वे-ऽप्यस्यैव वशवर्त्तिनः ।३३।
राजधानी सुस्थितस्य । लवणाधिपतेः किल ॥ प्रतीच्यां गौतमद्वीपा-दसंख्यद्वीपवा-
रिधीन् ॥ ३४ ॥ अतीत्य तिर्यगन्यस्मि-न्लवणांभोनिधौ भवेत् ॥ योजनानां सहस्रैर्वा-दश-
भिर्विजयोपमा ॥ ३५ ॥ जंबूद्वीपवेदिकांता-त्प्रतीच्यामेव मेरुतः ॥ योजनानां सहस्राणि ।
द्वादशातीत्य वारिधौ ॥ ३६ ॥ स्युश्चत्वारो रविद्वीपा । द्वौ जंबूद्वीपचारिणोः ॥ भान्वोर्द्वौ
चार्वाकूशिखाया । लवणांबुधिचारिणोः ॥ ३७ ॥ मेरोः प्राच्यां दिशि जंबू-द्वीपस्य वेदिकां-
ततः ॥ स्युर्योजनसहस्राणां । द्वादशानामनंतरं ॥ ३८ ॥ चत्वारोऽत्र शशिद्वीपा । द्वौ जंबू-
द्वीपचारिणोः ॥ इंद्वोर्द्वौ चार्वाकूशिखाया । लवणोदधिचारिणोः ॥ ३९ ॥ तथैव धातकीखं-
ड-वेदिकांतादतिक्रमे ॥ स्युर्योजनसहस्राणां । द्वादशानामिहांबुधौ ॥ ४० ॥ जंबूद्वीपस्थायि-

मेरोः । प्रतीच्यां दिशि निश्चितं ॥ अष्टौ दिनकरद्वीपा । दीपाइव महारुचः ॥ ४१ ॥ युग्मं ॥
बहिः शिखायाश्चरतो–र्द्वौ द्वीपावर्कयोर्द्वयोः ॥ षट् षसां धातकीखंडा–र्वाचीनार्धप्रकाशिनां
॥ ४२ ॥ तथैव धातकीखंड–वेदिकांतादनंतरं ॥ योजनानां सहस्त्रेषु । गतेषु द्वादशस्विह ॥
॥ ४३ ॥ प्राच्यां जंबूद्वीपमेरोः । संत्यष्टौ लवणोदधौ ॥ शशिद्वीपास्तत्र च द्वौ । शिखाया-
श्चरतोर्बहिः ॥ ४४ ॥ षडन्ये धातकीखंडा–र्वाक्तनार्धप्रचारिणां ॥ षणां हिमरुचामेव–मेते स-
र्वेऽपि संख्यया ॥ ४५ ॥ स्युश्चतुर्त्रिंशतिश्चंद्र–सूर्यद्वीपाः समेऽप्यमी ॥ गौतमद्वीपसदृशा ।
मानतश्च स्वरूपतः ॥ ४६ ॥ जलोच्छ्रयावगाहादि । सर्वं ततोऽविशेषितं ॥ गौतमद्वीपवद्वाच्यं ।
सर्वेषामपि सर्वथा ॥ ४७ ॥ किंतु तत्रास्ति भौमेय–मेषु प्रासादशेखरः ॥ वाच्यः प्रत्येकमेकैकै-
को । भौमेयसममानकः ॥ ४८ ॥ प्रतिप्रासादमेकैकं । सिंहासनमनुत्तरं ॥ तेषु चंद्राश्च सू-
र्याश्च । प्रभुत्वमुपभुंजते ॥ ४९ ॥ सुस्थितामरवत्सेव्याः । सामानिकादिभिः सुरैः ॥ वर्षल-
क्षसहस्राढ्य–पल्योपमायुषः क्रमात् ॥ ५० ॥ एतेषां राजधान्योऽपि । स्वस्वदिक्षु मनोरमाः
॥ स्युः सुस्थितपुरीतुल्याः । परस्मिंल्लवणार्णवे ॥ ५१ ॥ ये तु संत्यंतरद्वीपाः । षट्पंचाशदि-

ह्यंबुधौ ॥ निरूपितास्ते हिमव–च्छिखरिप्रकरणे यथा ॥ ५२ ॥
एवमेकाशीतिरस्मिन् । द्वीपा लवणवारिधौ ॥ वेलंधराचलाश्चाष्टौ । दृष्टा दृष्टागमाब्धि-
भिः ॥ ५३ ॥ महापातालकलशा–श्चत्वारो लघवश्च ते ॥ सहस्राः सप्त चतुर–शीतिश्चाष्टौ
शतानि च ॥ ५४ ॥ रत्नद्वीपादयो येऽन्ये । श्रूयंतेंऽभोनिधाविह ॥ द्वीपास्ते प्रतिपत्तव्याः । प्रा-
स्वरूपैर्यथागम ॥ ५५ ॥ सुधांशवोऽस्मिंश्चत्वार–श्चत्वारोऽर्काश्च तोयधौ ॥ संचरंति समश्रे-
ण्या । जंबूद्वीपेंदुभानुभिः ॥ ५६ ॥ यदा जंबूद्वीपगत–श्चारं चरति भानुमान् ॥ एको मेरो-
र्दक्षिणस्यां । तदाऽस्मिन्नंबुधावधि ॥ ५७ ॥ तेन जंबूद्वीपगेन । समश्रेण्या व्यवस्थितौ ॥ द-
क्षिणस्यामेव मेरो–र्द्वौ चारं चरतो रवी ॥ ५८ ॥ एकस्तत्रार्वाक् शिखायाः । समश्रेण्या स-
हामुना ॥ शिखायाः परतोऽन्योऽब्धा –वुदेव युगपत्त्रितः ॥ ५९ ॥ एवमुत्तरतो मेरो–र्यो ज-
बूद्वीपगो रविः ॥ द्वौ पुनस्तत्समश्रेण्या । चरतोऽर्काविहांबुधौ ॥ ६० ॥
तदा च चरतो जंबू–द्वीपे पीयूषरोचिषोः ॥ मेरोः प्राच्यां प्रतीच्यां च । समश्रेण्यांबु-
धावपि ॥ ६१ ॥ द्वौ द्वौ शशांकौ चरतः । पूर्वपश्चिमयोर्दिशोः ॥ अर्वाक् शिखाया एकैक ।

एकैकः परतोऽपि च ॥ ६२ ॥ एवं रवींदवो येऽग्रे । संति मर्त्योत्तरावधि ॥ जंबूद्वीपपुष्पदंत—
समश्रेण्या चरंति ते ॥ ६३ ॥ यथोत्तरं यदधिका—धिकक्षेत्राक्रमेऽपि ते ॥ पर्याप्नुवंति सह त-
च्छत्याधिक्यं यथोत्तरं ॥ ६४ ॥ दृश्यते भ्रमतां श्रेण्या । मेढीमनुगवामिह ॥ अर्वाचीनापेक्ष-
यान्य—गत्याधिक्यं यथोत्तरं ॥ ६५ ॥ एवं सर्वेऽनुवर्त्तंते । जंबूद्वीपेंदुभास्करौ ॥ मंमलांतरसं-
चारा—पनाहर्वृद्धिहानिभिः ॥ ६६

ततो जंबूद्वीप इव । मर्त्योत्तराचलावधि ॥ यदाहर्मेरुतोऽपाच्यां । तदैवोत्तरतोऽप्यहः ॥
॥ ६७ ॥ सहैवैवं निशा मेरोः । पूर्वपश्चिमयोर्दिशोः ॥ एवं जंबूद्वीपरीतिः । सर्वत्राप्यनुव-
र्त्तते ॥ ६८ ॥ उक्तं च सूर्यप्रज्ञप्तौ—' जयाणं लवणसमुद्दे दाहिणड्ढे दिवसे भवति, तयाणं
उत्तरड्ढेवि दिवसे भवति, तयाणं लवणसमुद्दे पुरिमपच्चत्थिमे राई भवइ, एवं जहा जंबूद्दीवे
दीवे तहेव. एवं धातकीखंडकालोदपुष्करार्द्धसूत्राण्यपि ज्ञेयानि. नन्वत्र षोडश सह—स्रोच्च-
या शिखयांबुधौ ॥ ज्योतिष्काणां संचरतां । व्याघातो न गतेः कथं ॥ ६९ ॥ ब्रूमोऽत्र ये
ज्योतिषिक—विमाना लवणांबुधौ ॥ ते भिंदंतः संचरंति । जलस्फटिकजा जलं ॥ ७० ॥ त-

दतेषां जलकृतो ! व्याघातो न गतेर्भवेत् ॥ जलस्फटिकरत्नं हि । स्वभावाज्जलभेदकृत् ॥
॥ ७१ ॥ ऊर्ध्वलेश्याकास्तथैते । विमाना लवणोदधौ ॥ ततः शिखायामप्येषां । प्रकाशः
प्रथतेऽन्वितः ॥ ७२ ॥
सामान्यस्फटिकोत्थानि । शेषेषु द्वीपवार्धिषु ॥ ज्योतिष्काणां विमानानि । नीचैः सर्प-
न्महांसि च ॥ ७३ ॥ तथाह विशेषणवती—सोलससाहस्सियाए सिहाए कहं जोइसियवि-
घातो न भवति? तह भन्नइ, जेणं सूरपन्नत्तीए भणियं—जोइसियविमाणाइं । सव्वाइं ह-
वंति फालियमयाइं ॥ दगफालियामया पुण । लवणे जे जोइसविमाणा ॥ १ ॥ जं सव्व दी-
वसमुद्देसु फालियामयाइं. लवणसमुद्दे चेव केवलं दगफालियामयाइं तत्थेदमेव कारणं मा उ-
दगेण विघाउ भवन्ति. ज सूरपन्नत्तीए चेव भणियं लवणतो जोइसिया उड्ढलेसा भवंति
णायव्वा, तेण परं जोइसिया अहेलेसागा णेयव्वा, तंपि उदगमालावभासणत्थमेव लोगठिईए-
सन्ति. एवं चत्वारोऽत्र सूर्या— श्चत्वारश्च सुधांशवः ॥ नक्षत्राणां शतमेकं । प्रज्ञसं द्वादशोत्तरं
॥ ७४ ॥ द्विपंचाशत्समधिकं । ग्रहाणां च शतत्रयं ॥ प्रमाणमथ ताराणां । यथाम्नायं निरू-

प्यते ॥ ७५ ॥ द्वे लक्षे सप्तषष्टिश्च । सहस्राणि शतानि च ॥ नवैव कोटाकोटीनां । प्रोक्ता-
नि तत्ववेदिभिः ॥ ७६ ॥ अत्रायमाम्नायः—यत्र द्वीपे समुद्रे वा । प्रमाणं ज्ञातुमिष्यते ॥ ग्र-
हनक्षत्रताराणां । तत्रत्यचंद्रसंख्यया ॥ ७७ ॥ एकस्य शशिनो गुण्यो । वक्ष्यमाणः परिच्छ
दः ॥ एवं ग्रहोडुताराणां । मानं सर्वत्र लभ्यते ॥ ७८ ॥ एकशशिपरिवारश्चायं—अष्टाशीति-
ग्रहा ऋक्षा—ण्यष्टाविंशतिरेव च ॥ शराश्वांकरसरसा ६६९७५—स्ताराणां कोटिकोटयः ॥
॥ ७९ ॥ लवणाब्धौ च कालोदे । स्वयंभूरमणेऽपि च ॥ भूयस्यो मत्स्यमकर—कूर्माद्या
मत्स्यजातयः ॥ ८० ॥

तत्रास्मिंल्लवणांभोधा—वुत्सेधांगुलमानतः ॥ योजनानां पंचशता—न्युत्कृष्टमत्स्यभूघनं ॥
॥८१॥ शतानि सप्त कालोदे । सहस्रमंतिमेंबुधौ ॥ गुर्वंगमानं मत्स्याना—मल्पमत्स्याः परे-
ऽब्धयः ॥ ८२ ॥ स्युर्योनिप्रभवा जाति—प्रधानाः कुल कोटयः ॥ लवणे सप्त मत्स्यानां । न-
व कालोदवारिधौ ॥ ८३ ॥ अर्द्धत्रयोदश तथा । मत्स्यानां कुलकोटयः ॥ स्वयंभूरमणांभो-
धौ । प्रज्ञप्ताः परमेष्ठिभिः ॥ ८४ ॥ तथा च जीवाभिगमे—' लवणेणं भंते समुद्दे कइ म-

ह्याजातिकुलकोमिजोणीपमुहसयसहस्सा पसत्ता? गो० लवणे सत्त, कालोए नव, सयंभूर-
मणे अद्धतेरसत्ति ' जबूद्वीपे प्रविशंति । मत्स्या लवणतोयधेः ॥ नवयोजनप्रमाणा । जग-
तीविवराध्वना ॥ ८५ ॥ एवं च—क्वचिदयमुदधिः सुधांशुचंद्रा—तपघनसारसमुज्ज्वलश्चका-
स्ति ॥ गतशिखशिरसः शिखान्निरामो । रहसि हसन्निव वारिधीनशेषान् ॥ ८६ ॥

क्वचिदुदयदमंदभानुतेजो । घुसृणरसप्रसरारुणांतरालः ॥ प्रकटामिव वहन्नदीषु रागं । हृ-
दि रमतः पतितासु वल्लभासु ॥ ८७ ॥ युग्मं ॥ क्वचिदनणुगुणैर्विभाति मुक्ता—मणिभिरुडु
प्रतिबिंबितैरिवांतः ॥ अविरतगतिखिन्नभानुभुक्तैः । क्वचन करप्रकरैरिव प्रवालैः ॥ ८८ ॥
क्वचन जलगजैर्नियुद्धसज्जै—रसकृदुदस्तकरोद्धुरैः करालः ॥ जगदुपकृतिकारिनीरपानो—पन-
तघनेषु धृतप्रतीभशंकैः ॥ ८९ ॥ स्थलचरसमसर्वजातिसत्त्वा—कृतिमदनेकझषौघपूर्णमध्यः
॥ प्रलयतरलितं जगद्दधानो । हरिरिवकुक्षिनिकेतने कृपार्द्रः ॥ ९० ॥ क्वचिदिह कमलायाः
कौतुकादारमंत्या । जलचरनरकन्यालीषु हल्लीसकेन ॥ अयमुपनयतीवापत्यरागैकगृह्यः । प
वनजवनवेलागार्जिवाद्यं विनोदात् ॥ ९१ ॥ तरलतरतुरंगोत्तुंगरंगत्तुरंगः । प्रसरदतुलवेलामत्त-

मातंगसैन्यः ॥ अतिविपुलमनोज्ञद्वीपदुर्गैरुदग्रः । कलयति नृपलक्ष्मीं वाहिनीनां विवोढा ॥
॥ ए२ ॥ स्वच्छोन्मूर्छदतुच्छमत्स्यपटलीपुच्छोच्छलच्छीकर–च्छेदोत्सेकितबुद्बुदार्बुदमिषोद्भिन्नश्रमांभः-
कणः ॥ हेलोत्प्लावितदुर्गपर्वतशतोत्सर्पत्तरंगोद्धतो । वीरंमन्य इवैष चिक्रमिषया दिग्भूभृतां
धावति ॥ ए३ ॥

क्रुद्धाखंडलवज्रमंडलगलज्ज्वालाकरालानल–त्रस्तानेकगिरींद्रकोटिशरणं कल्पद्रुमाणां व-
नं॥ तत्तद्वस्तुवदान्यतातरलितैरभ्यर्थितो निर्जरै–र्यो रत्नाकर इत्यनेककविभिर्नानाविकल्पैः स्तु-
तः ॥ ए४ ॥ निर्व्रीडक्रीडदंभःश्वरनरतरुणीकृप्तदीपोपचारै–र्नूनैरत्नैरयत्नोज्ज्वलघनघृणिभिः
क्वापि दीप्रांतरालः ॥ क्वापि प्राप्तप्रकर्षः पृथुमकरकराकृष्टपाठीनपीठ–त्रस्यन्नक्रप्रमोदोच्छलत-
नचलजलोत्सिक्तडिंडीरपिंडैः ॥ ए५ ॥ दशभिरादिकुलकं ॥ विश्वाश्चर्यदकीर्त्तिकीर्त्तिविजयश्री-
वाचकेंद्रांतिष–द्राजश्रीतनयोऽतनिष्ट विनयः श्रीतेजपालात्मजः ॥ काव्यं यत्किल तत्र नि-
श्चितजगत्तत्त्वप्रदीपोपमे । संपूर्त्तिं सुखमेकविंशतितमः सर्गो मनोज्ञोऽगमत् ॥ ए६ ॥

॥ इति श्रीलोकप्रकाशे एकविंशतितमः सर्गः समाप्तः ॥ श्रीरस्तु ॥

॥ अथ द्वाविंशतितमः सर्गः प्रारभ्यते ॥

अथास्माल्लवणांभोधे–रनंतरमुपस्थितः ॥ वर्ण्यते धातकीखंड–द्वीपो गुरुप्रसादतः ॥१॥ वृक्षेण धातकीनाम्ना । यदसौ शोभितः सदा ॥ वक्ष्यमाणस्वरूपेण । ततोऽयं प्रथितस्तथा ॥ ॥ २ ॥ चतुर्योजनलक्षात्मा । चक्रवालतयास्य च ॥ विस्तारो वर्णितः पूर्ण–ज्ञानालोकितविष्टपैः ॥ ३ ॥ परिक्षेपः पुनरस्य । कुक्षिस्थद्वीपवारिधेः ॥ त्रयोदशलक्षरूपः । क्षेत्रलब्धोऽयमीरितः ॥ ४ ॥ लक्षाः किलैकचत्वारिं–शत्सहस्राण्यथो दश ॥ योजनानां नवशती । किंचिदूनैकपष्टियुक् ॥ ५ ॥ अयं कालोदपार्श्वेऽस्य । परिधिश्चरमो भवेत् ॥ आद्यस्तु लवणांभोधे–रते यः कथितः पुरा ॥ ६ ॥ मध्यमः परिधिर्लक्षा–एयष्टाविंशतिरेव च ॥ षट्चत्वारिंशत्सहस्राः । पंचाशद्योजनाधिकाः ॥ ७ ॥ जंबूद्वीपवदेषोऽपि । द्वारैश्चतुर्भिरंचितः ॥ तेषां नामप्रमाणादि । सर्वं तद्वद्भवेदिह ॥ ८ ॥

किंत्वेतद्द्वारपालानां । विजयादिसुधाभुजां ॥ परस्मिन् धातकीखंडे । राजधान्यो निरूपिताः ॥ ए ॥ दश लक्षा योजनानां । सहस्राः सप्तविंशतिः ॥ पंचत्रिंशा सप्तशती । मिथो

द्वारामिहांतरं ॥ १० ॥ दक्षिणस्यामुदीच्यां च । द्वीपस्यैतस्य मध्यगौ ॥ इषुकारौ नगवरौ ।
जगदाते जगद्धितैः ॥ ११ ॥ योजनानां पंचशता—न्युच्चौ सहस्रविस्तृतौ ॥ चत्वारि योजना-
नां च । लक्षाण्यायामतः पुनः ॥ १२ ॥ अत एव स्पृष्टवंतौ । कालोदलवणोदधी ॥ आश्या-
सं गंतुमन्योऽन्यं । भुजाविव प्रसारितौ ॥ १३ ॥ कूटैश्चतुर्भिः प्रत्येकं । शोभितौ रत्नसानुभिः
॥ चैत्यमेकैकं च तत्र । कूटे कालोदपार्श्वगे ॥ १४ ॥ चतुर्भिः कुलकं ॥ आभ्यां द्वाभ्यामि-
षुकार—पर्वताभ्यामयं द्विधा ॥ द्वीपो निर्दिश्यते पूर्व—पश्चिमार्द्धविभेदतः ॥ १५ ॥ यच्च जंबू
द्वीपमेरोः । प्राच्यां पूर्वार्द्धमस्य तत् ॥ तस्य प्रतीच्यामर्द्धं य—त्तत्पश्चिमार्द्धमुच्यते ॥ १६ ॥
नयोरप्यर्द्धयोर्मध्य । एकैको मंदराचलः ॥ तयोरपेक्षया क्षेत्र—व्यवस्थात्रापि पूर्ववत् ॥ १७ ॥
तथाहि—अपाच्यामिषुकारो य—इहत्यमेर्वपेक्षया ॥ पूर्वतस्तस्य भरत—क्षेत्रप्रथमतो भवेत् ॥
॥ १८ ॥ ततो हैमवतक्षेत्रं । हरिवर्षं ततः परं ॥ ततो महाविदेहाख्यं । रम्यकाख्यं ततः परं
॥१८॥ ततश्च हैरण्यवत—मैरावतं ततस्ततः ॥ औत्तराह इषुकार । एषा पूर्वार्द्धसंस्थितिः ॥१९॥
पश्चिमायामपि तस्मा—द्दाक्षिणात्येषुकारतः ॥ प्रथमं भरतक्षेत्रं । ततो हैमवताभिधं ॥ २० ॥

एवं यावदुत्तराह–इषुकारधराधरः ॥ पूर्वार्द्धवत्क्षेत्ररीति–रेवं पश्चिमतोऽपि हि ॥ ७१ ॥ द्व-
योरप्यर्द्धयोरेषां । क्षेत्राणां सीमकारिणः ॥ षट् षट् वर्षधराः प्राग्वत् । सर्वेऽपि द्वादशोदिताः
॥ ७२ ॥ जंबूद्वीपवर्षधरा–द्विम्यो द्विगुणविस्तृताः ॥ तुंगत्वेन तु तैस्तुल्याः । सर्वे वर्षधराऽ-
यः ॥ ७३ ॥ आयामतश्चतुर्लक्ष–योजनप्रमिता अमी ॥ पर्यंतस्पृष्टकालोद–लवणोदधिवारयः
॥ ७४ ॥ तथाह्यत्र हिमवतो–र्गिर्योः शिखरिणोरपि ॥ विष्कंभोऽयं जिनैरुक्तः । पूर्वापरार्द्ध-
भाविनोः ॥ ७५ ॥ योजनानां शतान्येक–विंशतिः पंच चोपरि ॥ कलाः पंचैवाथ महा–हि-
मवतोश्च रुक्मिणोः ॥ ७६ ॥ अष्टावेव सहस्राणि । योजनानां चतुःशती ॥ एकविंशत्यभ्यधि-
का । तथैवैककलाधिका ॥ ७७ ॥ त्रयस्त्रिंशत्सहस्राणि । योजनानां शतानि षट् ॥ स्फुरच्चतु-
रशीतीनि । कलाश्चतस्र एव च ॥ ७८ ॥ विष्कंभोऽयं निषधयो–र्गिर्योर्नीलवतोरपि ॥ द्वाद-
शानामप्यमीषां । व्याससंकलना त्वियं ॥ ७९ ॥ लक्षमेकं योजनानां । षट्सप्ततिसहस्रयु-
क् ॥ शतान्यष्टौ द्विचत्वारिं–शता समधिकानि च ॥ ८० ॥ द्वे योजनसहस्रे च । विष्कंभ इ-
षुकारयोः ॥ तस्मिंश्च योजितेऽत्राद्रि–रुद्धं क्षेत्रमिदं भवेत् ॥ ८१ ॥

एकं लक्षं योजनानां । सहस्राण्यष्टसप्ततिः ॥ द्विचत्वारिंशदधिका—न्यष्टौ शतानि चो-
परि ॥ ३२ ॥ अथैतल्लवणांभोधि—परिधेरपनीयते ॥ द्वादशाढ्यां शताढ्यां च । तेन न्यूनः
स भज्यते ॥ ३३ ॥ लब्धानि योजनसह—स्राणि षट् षट् शतानि च ॥ चतुर्दशाढ्यानि
भागा—श्चैकोनत्रिंशकं शतं ॥ ३४ ॥ द्वादशाढ्यशतद्वंद्व-क्षुण्णैकयोजनोद्भवाः ॥ तत्रेयत्पृथवस्तें-
शा । द्विशती द्वादशाभवत् ॥ ३५ ॥ अथ चैतादृशैरंशै—र्यथास्वमुपकल्पितैः ॥ चतुर्दशानां
क्षेत्राणां । लभ्यते मुखविस्तृतिः ॥ ३६ ॥ भागकल्पना चैवं—एकैकोंशो भरतयो २—रत-
थैरवतयोरपि २ ॥ चत्वारो हैमवतयो ८—र्हैरण्यवतयोरपि ॥ ३७ ॥ हरिवर्षाख्ययोरेवं १६ ।
तथा रम्यकयोरपि १६ ॥ पूर्वापरार्द्धगतयो—रंशाः षोडश षोडश ॥ ३८ ॥ चतुष्षष्टिश्चतुष्ष-
ष्टि—र्विदेहक्षेत्रयोर्द्वयोः ॥ द्विशती द्वादशा चैवं । भागाः स्युः सर्वसंख्यया ॥ ३९ ॥ भरतै-
रवतेभ्यो वा । चतुर्घ्ना मुखविस्तृतिः ॥ विज्ञेया हैमवतयोः । हैरण्यवतयोरपि ॥ ४० ॥ षो-
डशघ्ना हरिवर्ष—रम्यकद्वयविस्तृतिः ॥ तथा चतुष्षष्टिगुणा । विदेहक्षेत्रयोर्द्वयोः ॥ ४१ ॥ ए-
वं च धातकीखंडे । मध्यमात्परिधेरपि ॥ पूर्वोदितादुक्तशैल—रुद्धक्षेत्रविनाकृतात् ॥ ४२ ॥ द्वा-

दशाढ्यशतखंड–विभक्तादुपकल्पितैः ॥ मुखविस्तृतिवद्भागै–र्जन्यैषां मध्यविस्तृतिः ॥ ४३ ॥
तथात्र कालोदाम्भो–पर्यंतपरिधेरपि ॥ नगरुद्धक्षेत्रहीनाद् । द्वादशद्विशताहृतात् ॥४४॥
मुखविस्तृतिवद्भागै–र्यथा स्वमुपकल्पितैः ॥ चतुर्दशानां क्षेत्राणां । लभ्या पर्यंतविस्तृतिः ॥
॥ ४५ ॥ एवं च वक्ष्यमाणायां । क्षेत्रविविधविस्तृतौ ॥ माभून्संमोह इत्येव । आम्नायः प्राक् प्रपंचितः ॥ ४६ ॥ किंच—कृत्वाद्रिरुद्धं क्षेत्रं त–त्सहस्रद्वितयोध्रितं ॥ कर्त्तव्याश्चतुरशीति–स्तस्याप्यंशा दिशानया ॥ ४७ ॥ एकैकोंशो हिमवतो–स्तथा शिखरिणोरपि ॥ अंशाश्चत्वारश्च महा–हिमवतोश्च रुक्मिणोः ॥ ४८ ॥ षोडशांशा निषधयो–र्नीलवन्नगयोरपि ॥ एवं चतुरशीत्यांशै–र्वर्षभूधरविस्तृतिः ॥ ४९ ॥ अत एव च वक्ष्यंते । भागाश्चतुरशीतिजाः ॥ वर्षाद्रिमानेऽस्मिन् पुष्क–रार्द्धेऽपि योजनोपरि ॥ ५० ॥
क्षेत्राण्येतानि दधति । चक्रारकांतराकृतिं ॥ क्षाराब्धिदिशि संकीर्णा–न्यन्यतो विस्तृतानि यत् ॥ ५१ ॥ जंबूद्वीपक्षारवार्द्धि–मध्यनाभिमनोहरे ॥ वर्षाचलेषुकाराद्रि–चतुर्दशारकांचिते ॥ ५२ ॥ अस्मिन् महाद्वीपचक्रे । कालोदायःप्रधिस्थिरे ॥ अरकांतरवद्भाति । क्षेत्राणी-

ति चतुर्दश ॥ ५३ ॥ क्षेत्राणामिह पर्यंत । एषां कालोदसन्निधौ ॥ मुखं च लवणांभोधि–स-
मीपे परिभाषितं ॥ ५४ ॥ ज्ञेयाः क्षेत्रप्रकरणे । सामान्येनोदिता लवाः ॥ द्वादश द्विशतक्षु-
ण्ण–योजनोद्धा बुधैरिह ॥ ५५ ॥ तत्रेह याम्येषुकार–हिमवत्पर्वतांतरे ॥ पूर्वार्द्धे प्रथमं भा-
ति । क्षेत्रं भरतनामकं ॥ ५६ ॥ चतुर्दशानि षट्षष्टि–शतानि विस्तृतं मुखे ॥ एकस्य यो-
जनस्यांशा–श्चैकोनत्रिंशकं शतं ॥ ५७ ॥ योजनानां सहस्राणि । मध्ये द्वादश विस्तृतं ॥
सैकाशीतिं पंचशतीं । तथा षट्त्रिंशतं लवान् ॥ ५८ ॥ अष्टादश सहस्राणि । योजनानां श-
तानि च ॥ पचैव सप्तचत्वारिं–शद्योजनाधिकान्यथ ॥ ५९ ॥ पंचपचाशदधिक–मंशानां
नियतं शतं ॥ एतावद्भरतक्षेत्रं । पर्यंत विस्तृतं मतं ॥ ५८ ॥ त्रैराशिकादिना भाव्यो । वि-
स्तारोऽन्यत्र तु स्वयं ॥ तादृक्क्षेत्राकृत्यभावा —द्भात्र ज्याधनुरादिक ॥ ५९ ॥ मध्यभागेऽ-
स्य वैताढ्य । उच्चत्वपृथुतादिभिः ॥ जंबूद्वीपस्थभरत—वैताढ्य इव सर्वथा ॥ ६० ॥ आया-
मतः किंतु चतु–र्लक्षयोजनसंमितः ॥ युक्तश्चोभयतः पंच–पंचाशता महापुरैः ॥ ६१ ॥
उत्तरार्द्धमध्यखडे । हिमवद्गिरिसन्निधौ ॥ जंबूद्वीपर्षभकूट–तुल्योऽस्त्र वृषभाचलः ॥६२॥

शेषा सर्वापि व्यवस्था । षट्खंभनवनादिका ॥ जंबूद्वीपभरतवद् । ज्ञेयात्राप्यविशेषिता ॥ ॥ ६३ ॥ तथात्र भरतादीनां । तैर्जंबूद्वीपगैः सह ॥ द्रव्यक्षेत्रकालभाव–पर्यायाः स्युः समाः क्रमात् ॥ ६४ ॥ परोऽस्माद् हिमवानद्रिः । पंचाद्यानेकविंशतिं ॥ शतांस्ततो लवान् द्वाविं–शतिं चतुरशीतिजान् ॥ ६५ ॥ ननु जबूद्वीपहैमवतो माने द्विगुणिते सति यथोक्ता योजनोपरि एकोनविंशतिजाः पंच भागा भवति, अत्र च चतुरशीतिजा द्वाविंशतिरुक्तास्ततः कथमस्य ततो द्वैगुण्य न व्याहन्यते? अत्रोच्यते—एषां भागानां द्वैविध्येऽपि विशेषः कोऽपि नास्ति, यतो यावदेकोनविंशतिजैः पंचभिर्भागैर्भवति तावदेव चतुरशीतिजैर्द्वाविंशत्यापि भवति, उभयत्रापि किंचिदधिकयोजनचतुर्थभागस्यैव जायमानत्वादिति. एवमग्रेऽपि भाव्यं.

पद्महृदाभिधानोऽस्य । मस्तकेऽस्ति महाहृदः ॥ योजनानां द्वे सहस्रे । दीर्घः सहस्रविस्तृतः ॥ ६६ ॥ दशयोजनरूपोऽस्यो–द्वेधोऽब्जवलयादि च ॥ जंबूद्वीपपद्महृद । इवेहापि विभाव्यतां ॥ ६७ ॥ एवं येऽन्ये वर्षधरा–चलेषु कुरुषु हृदाः ॥ तथा नदीनां कुंडानि । द्वीपाः कुंभगताश्च ये ॥ ६८ ॥ अविशेषेण ते सर्वे–ऽप्युद्वेधोच्छ्रयमानतः ॥ जंबूद्वीपस्थायि तत्वद् ।

द्वीपकुंडह्रदैः समाः ॥ ६९ ॥ ततस्तदुच्छ्रितादि । तथाब्जवलयादि च ॥ अनुच्यमानमप्यत्र । स्वयं ज्ञेयं यथास्पदं ॥ ७० ॥ विष्कंभायामतस्त्वेते । सर्वेऽपि द्विगुणास्ततः ॥ व्यासोद्वेधाभ्यां च नद्यो । व्यासैर्वनमुखान्यपि ॥ ७१ ॥ तथाहुः—वासहरकुरुसु दहा । नईण कुंडाइं तेसु जे दीवा ॥ उव्वेहुस्सेयतुल्ला । विक्खंभायामउ दुगुणा ॥ ७२ ॥ सव्वाउवि नईउ । विक्खंभोव्वेहदुगुणमाणाउ ॥ सीयासीउयाणं । वणाणि दुगुणाणि विक्खंभे ॥ ७३ ॥ एवं च—

गंगासिंधुरक्तवती–रक्तेत्याख्यास्पृशामिह ॥ षट्त्रिंशशतसंख्यानां । नदीनां ह्रदनिर्गमे ॥ ७४ ॥ अर्द्धाधिकानि योजनानि । विष्कंभो द्वादश स्मृतः ॥ पर्यंते च पंचविंशं । योजनानां शतं भवेत् ॥ ७५ ॥ आसां तावंति कुंडानि । विस्तृतान्यायतानि च ॥ विंशं हि योजनशतं । द्वीपाः षोडशयोजनाः ॥ ७६ ॥ स्वर्णकूला रूप्यकूला । रोहिता रोहितांशिका ॥ इत्यष्टादौ विस्तृताः स्युः । पंचविंशतियोजनीं ॥ ७७ ॥ अंते च सार्द्धां द्विशतीं । सर्वत्रैतावदेव च ॥ चतुर्विंशतिरप्यंत—नद्यः स्युरिह विस्तृताः ॥ ७८ ॥

चत्वारिंशा द्विशत्यासां । कुंडेष्वायतिविस्तृती ॥ द्वात्रिंशयोजनान्यासां । द्वीपा आ-

यतविस्तृताः ॥ ७९ ॥ नारीकांता नरकांता । हरिकांताभिधा नदी ॥ हरिसलिलेत्यष्टानां । सरितां मूलविस्तृतिः ॥ ८० ॥ पंचाशद्योजनान्यासां । पर्यंतविस्तृतिः पुनः ॥ योजनानां पंचशता—न्युक्तानि तत्ववेदिभिः ॥ ८१ ॥ आसां कुंडायतिव्यासा—वशीतियुक् चतुःशती ॥ चतुष्षष्टिर्योजनानि । द्वीपाश्चायतविस्तृताः ॥ ८२ ॥ शीताशीतोदाभिधानां । निम्नगानां च कुंतसृगां ॥ आद्यांतयोः क्रमाद्व्यासः । शतं सहस्रमेव च ॥ ८३ ॥ सषष्टिर्नवशत्यासां । कुंडेष्वायतिविस्तृती ॥ अष्टाविंशं शतं चासां । द्वीपा आयतविस्तृताः ॥ ८४ ॥ षट्त्रिंशं शतमष्टौ च । पुनरष्टौ चतुष्टयं ॥ चतुर्विधानामित्यासा—माद्यंतोद्विद्धता क्रमात् ॥ ८५ ॥

गव्यूतं योजने सार्द्धे । द्वौ क्रोशौ पंचयोजनी ॥ योजनं दश चैतानि । योजने द्वे च विंशतिः ॥ ८६ ॥ अतर्नदीनां सर्वासा—मपि प्रारभ्य मूलतः ॥ पर्यंतं यावदुद्वेध—स्तुल्यः स्यात्पंचयोजनी ॥ ८७ ॥ स्वकीयमूलविस्तृत्या । जिह्विकाविस्तृतिः समा ॥ मूलोद्वेधसमश्चासां । सर्वासां जिह्विकोच्छ्रयः ॥ ८८ ॥ उक्तशेषं तु स्वरूपं । सकलं वेदिकादिकं ॥ एतास्वप्यनुसंधेयं । जंबूद्वीपनदीगतं ॥ ८९ ॥

पूर्वाभिमुख्याः पूर्वार्द्धे । कालोदे यांति निम्नगाः ॥ क्षारोदपरोन्मुख्यो–ऽपरार्द्धे तु विपर्ययः ॥ ८० ॥ आसामित्युक्तो विशेषः । प्रसंगाल्लाघवाय च ॥ तत्र तत्र नाममात्रं । स्नानाशौन्याय वक्ष्यते ॥ ८१ ॥ अथ प्रकृतं —अथैतस्मात्पद्महृदा–न्नद्यस्तिस्रो विनिर्गताः ॥ गंगासिंधुरोहितांशाः । पूर्वापरोत्तराध्वभिः ॥ ८२ ॥ तत्र गंगा च सिंधुश्च । पूर्वपश्चिमयोर्दिशोः ॥ निर्गत्य स्वदिशोर्गत्वा । यथार्हं पर्वतोपरि ॥ ८३ ॥ स्वस्वावर्त्तनकूटाभ्यां । निवर्त्य दक्षिणामुखे ॥ कुंभे निपत्य विशतः । कालक्षारोदधी क्रमात् ॥ ८४ ॥ रोहितांशा तूत्तरस्यां । योजनानि नगोपरि ॥ द्विपंचाशां पंचशतीं । त्रिपंचाशल्लवाधिकां ॥ ८५ ॥ अतिक्रम्य निजे कुंडे । निपत्य योजनांतरा ॥ शब्दापातिगिरेः प्रत्यक् । प्रवृत्ता लवणेऽविशत् ॥ ८६ ॥ अथास्माद्धिमवच्छैला–दुत्तरस्यां व्यवस्थितं ॥ क्षेत्रं हैमवताभिख्य–माकृत्या भरतोपमं ॥ ८७ ॥ षड्विंशतिं सहस्राणि । योजनानां चतुःशतीं ॥ अष्टपंचाशां लवान् द्वा–नवतिं विस्तृतं मुखे ॥८८॥ पंचाशतं सहस्राणि । चतुर्विंशं शतत्रयं ॥ चतुश्चत्वारिंशमंश–शतं मध्ये च विस्तृतं ॥ ८९ ॥ योजनानां सहस्राणि । चतुःसप्ततिमं ततः ॥ नवत्याढ्यं शतं षस–वत्याढ्यं च शतं

मध्येऽस्य शब्दापातीति । वृत्तवैताढ्यपर्वतः ॥ सहस्रयोजनोत्तुंगः । सहस्रं
लवान् ॥ १०० ॥ अयं जंबूद्वीपशब्दा–पातिना सर्वथा समः ॥ तद्वत्समान्येऽपि वृत्त–वै-
विस्तृतायतः ॥ १ ॥ अद्रिरस्यांते च महा–हिमवान् योजनानि सः ॥ एकविंशानि
ताढ्या इह तत्समाः ॥ २ ॥ पूर्वोक्तमानांश्चतुरो । विस्तीर्णस्तस्य चोपरि ॥ पद्मैः
चतुर–शीतिशतान्यथांशकान् ॥ ३ ॥ योजनानां सहस्राणि । चत्वार्येवायमायतः
परिष्कृतो भाति । महापद्माभिधो ह्रदः ॥ ४ ॥ दक्षिणस्यामुदीच्यां च । नद्यौ द्वे नि-
॥ विष्कंभतो योजनानां । सहस्रद्वितयं भवेत् ॥ ५ ॥ योजनानां शतान् द्वात्रिं–श-
र्गते ततः ॥ रोहिता हरिकांता च । पर्वतोपर्युभे अपि ॥ ६ ॥ पततः स्वस्वकुं-
तं गत्वा दशोत्तरान् ॥ चतुश्चत्वारिंशतं च । भागान् जिह्विकया गिरेः ॥ ७ ॥ हरिकां-
ड्ऽथ । कालोदं याति रोहिता ॥ द्विधा कृत्वा हैमवतं । वैताढ्याद्योजनांतरा ॥ ८ ॥
ता च वैताढ्या–द्योजनद्वितयांतरा ॥ हरिवर्षं । विभजती । प्रयाति लवणोदधौ ॥ ९ ॥
अथोदीच्यां क्षेत्रमस्मा–द्धरिवर्षं विराजते ॥ सश्रीकमध्यं यद्गंधा–पाति वैताढ्यभूभृता
॥ १० ॥ त्रयस्त्रिंशाष्टपंचाश–च्छताढ्यां लक्षयोजनीं ॥ षट्पंचाशमंशशतं । विस्तीर्णमिदमा-

नने ॥ ११ ॥ द्वे लक्षे द्वादशशतीं । मध्येऽष्टानवतिं तथा ॥ योजनामंशशतं । द्विपंचाशं
च विस्तृतं ॥ १२ ॥ योजनानां षसवत्या । सहसूकैः समन्वितं ॥ लक्षद्वयं सप्तशतीं । त्रि-
षष्ठ्याऽभ्यधिकां तथा ॥ १३ ॥ अष्टचत्वारिंशमंश–शतं पर्यंत विस्तृतं ॥ शेषास्य जंबूद्वीप-
स्थ–हरिवर्षसमा स्थितिः ॥ १४ ॥ क्षेत्रस्यास्य च पर्यंते । निषधो नाम भूधरः ॥ त्रयस्त्रिं-
शत्सहस्राणि । योजनानां शतानि षट् ॥ १५ ॥ स्याद्विस्तीर्णः स चतुर–शीतीन्यंशाश्च
षोमश ॥ तिगिंछिनामा वर्वर्त्ति । महाहृदोऽस्य चोपरि ॥ १६ ॥ सहस्राणि योजनाना–म-
ष्टावायामतः स च ॥ विष्कंभतस्तु चत्वारि । सहस्राणि भवेदसौ ॥ १७ ॥ दक्षिणस्यामुदी-
च्यां च । हृदादस्मान्निरीय तु ॥ वाहिन्यौ हरिसलिला–शीतोदे ते नगोपरि ॥ १८ ॥ योज-
नानां सहस्राणि । चतुर्दश शतानि च ॥ अष्टौ द्विचत्वारिंशानि । परिक्रम्याष्ट चांशकान् ॥
॥ १९ ॥ स्वस्वजिह्विकया स्वस्व–कुंडे निपततस्ततः ॥ हरिः स्ववृत्तवैताढ्या–द्योजनद्वितयां-
तरा ॥ २० ॥

हरिवर्षाभिधं वर्षं । द्विधा विदधती सती ॥ कालोदाब्धौ निपतति । रमेवाच्युतवक्षसि

॥ ७१ ॥ शीतोदा च देवकुरु—भद्रसालविभेदिनी ॥ चतुर्भिर्योजनैर्मेरो—र्दूरस्था पश्चिमोन्मुखी ॥ ७२ ॥ प्रत्यग्विदेहविजय—सीमाकरणकोविदा ॥ गोत्रवृद्धेव मध्यस्था । यात्यंते लवणोदधिं ॥ ७३ ॥ शीताप्येवं नीलवतो । निर्गता केसरिह्रदात् ॥ कुर्मोत्तरकुरु—भद्रसालप्रभेदिनी ॥ ७४ ॥ चतुर्भिर्योजनैर्मेरो—र्दूरस्था पूर्वतोमुखी ॥ प्राग्विदेहान् विभजती । याति कालोदवारिधौ ॥ ७५ ॥ वाच्योदीच्यां रम्यकांता । तथैवैरवतादिका ॥ क्षेत्रत्रयी शिखर्याद्या । नीलांता च नगत्रयी ॥ ७६ ॥ यथेयं हरिवर्षांता । त्रिवर्षा भरतादिका ॥ उक्ता हिमवदाद्या च । निषधांता नगत्रयी ॥ ७७ ॥ तच्छ्रिधा क्षेत्रमान—मादिमध्यांतगोचरं ॥ तावदायामविस्तारा । ह्रदा वर्षधरोपरि ॥ ७८ ॥

तावदेवातिक्रमणं । नदीनां पर्वतोपरि ॥ सैवाकृतिर्नाममात्रे । विशेषः सोऽभिधीयते ॥ ॥ ७९ ॥ ऐरावतमुदीच्येषु—कागात्स्वस्वगिरेर्दिशि ॥ शिखरी पर्वतोंतेऽस्य । पुंडरीकह्रदांचितः ॥ ८० ॥ अस्मादुक्ता रक्तवती । स्वर्णकूला विनिर्ययुः ॥ रक्तैरवतमध्येन । याति कालोदवारिधिं ॥ ८१ ॥ लवणाब्धौ प्रविशति । तथैव रक्तवत्यथ ॥ स्वर्णकूला तु कालोदं । हैर-

एयवतमध्यगा ॥ ३२ ॥ परं शिखरिणः क्षेत्रं । हैरण्यवतनामकं ॥ विकटापातिना वृत्त—वै-
ताढ्येन सुशोभितं ॥ ३३ ॥ ततो रुक्मी नाम महा—पुंडरीकह्रदांचितः ॥ गिरिस्ततो रूप्य-
कूला—नरकांते विनिर्गते ॥ ३४ ॥ हैरण्यवतमध्येन । क्षाराब्धं रूप्यकूलिका ॥ कालोदं नर-
कांता च । याति रम्यकमध्यतः ॥ ३५ ॥ ततः परं रुक्मिगिरेः । क्षेत्रं राजति रम्यकं ॥ म-
ध्ये माल्यवता वृत्त—वैताढ्येन विभूषितं ॥ ३६ ॥ ततोऽपि परतो भाति । नीलवान्नाम पर्व-
तः ॥ महाह्रदः केसरीति । तस्योपरि विराजते ॥ ३७ ॥ शीता नदी तु पूर्वोक्त—रीत्या का-
लोदवारिधौ ॥ व्रजति प्राग्विदेहस्थ—विजयव्रजसीमकृत् ॥ ३८ ॥

शीता च नारीकांता च । ततो नद्यौ निरीयतुः ॥ नारीकांता रम्यकांत—र्व्यूढेति लवणो-
दधिं ॥ ३९ ॥ योजनं द्वे च विकटा—पातिमाल्यवतोर्भवेत् ॥ चत्वारि मेरोः स्वक्षेत्र—नदी-
द्व्यामंतरं क्रमात् ॥ ४० ॥ अथास्ति मध्ये नगयो—र्नीलवन्निषधाख्ययोः ॥ क्षेत्रं महाविदे-
हाख्यं । मंदरालंकृतांतरं ॥ ४१ ॥ त्रयोविंशत्या सहस्रै—र्योजनानां त्रिभिः शतैः ॥ चतुस्त्रि-
शैः समधिका । लक्षाश्चतस्र एव च ॥ ४२ ॥ द्वादशद्विशतक्षुण्ण—योजनस्य लवाः पुनः ॥ द्वि

शते विस्तीर्णमेत–ल्लवणांभोधिसन्निधौ ॥ ४३ ॥ ततं लक्षाणि मध्येऽष्टा–वेकपंचाशतं शता–
न् ॥ चतुर्नवत्याढ्यानंश–शतं चतुरशीतियुक् ॥ ४४ ॥ अंते चैकादश लक्षाः । सप्ताशीतिं
सहस्रकान् ॥ चतुष्पंचाशान् लवानां । साष्टषष्टिशतं ततं ॥ ४५ ॥

जातं चतुर्वैतदपि । जंबूद्वीपविदेहवत् ॥ देवकुरूत्तरकुरु–पूर्वापरविदेहकैः ॥ ४६ ॥ स्यु-
र्देवकुरवोऽपाच्या–मुदीच्यां कुरवः पराः ॥ मेरोः प्राच्यां प्राग्विदेहाः । प्रतीच्यामपरे पुनः
॥ ४७ ॥ शीताशीतोदानदीभ्यां । विदेहास्ते द्विधाकृताः ॥ प्राग्वदेव चतुर्ष्वंशे–ष्वष्टाष्ट वि-
जया इह ॥ ४८ ॥ तथैवोदक्कुरुप्राच्य–सीमकृन्माल्यवद्गिरिः ॥ आगंधमादनं सृष्टया । क्रम-
स्तैरेव नामभिः ॥ ४९ ॥ चतुर्ष्वंशेष्वंतरेषु । वक्षस्कारास्तथैव च ॥ चत्वारश्चत्वार एव ।
तिस्रस्तिस्रोंतरापगाः ॥ ५० ॥ विजयेष्वेषु वैताढ्या । नदीकुंडर्षभाद्रयः ॥ षट्खंडा राज-
धान्यश्च । तन्नामानस्तथा स्थिताः ॥ ५१ ॥ तथैव चत्वारोऽप्यंशाः । पर्यंते वनराजिताः ॥ के-
वलं परिमाणानां । विशेषः सोऽभिधीयते ॥ ५२ ॥

वक्षस्कारवनमुखां–तर्नदीमेरुकाननैः ॥ विष्कंभतः संकलितैः । स्याद्राशिर्विजयान् वि-

ना ॥ ५३ ॥ लक्षद्वयं षट्चत्वारिं—शत्सहस्राः शतत्रयं ॥ षट्चत्वारिंशतोपेतं । योजनाना-
मनेन च ॥ ५४ ॥ चतुर्लक्षात्मके द्वीप—विष्कंभे राशिनोध्द्रिते ॥ हृते षोडशभिर्मानं । लभ्यं
विजयविस्तृतेः ॥ ५५ ॥ योजनानां सहस्राणि । नव त्र्याढया च षट्शती ॥ षट् षोमृशां-
शाः प्रत्येकं । ज्ञेया विजयविस्तृतिः ॥ ५६ ॥ एवमिष्टान्यविष्कंभ—वर्जितद्वीपविस्तृतेः ॥ स्व-
स्वसंख्याविभक्ताया । लभ्यतेऽभीष्टविस्तृतिः ॥ ५७ ॥ तत्र च—विनाडीन् विजयादीनां ।
व्याससंकलना त्वियं ॥ तिस्रो लक्षा षण्णवतिः । सहस्रा योजनात्मकाः ॥ ५८ ॥ अनेन व-
र्जिते द्वीप—विष्कंभे विहृतेऽष्टभिः ॥ वक्षस्काराद्रिविष्कंभो । लभ्यः सहस्रयोजनः ॥५९॥
अंतर्नदीर्विना शेष—व्याससंकलना भवेत् ॥ लक्षास्तिस्रोऽष्टनवतिः । सहस्राः पंचशत्यपि ।६०॥
अनेन वर्जित द्वीप—विष्कंभे षड्भिराहृते ॥ सार्द्धे द्वे योजनशते । व्यासोंतः सरितामयं
॥ ६१ ॥ विदेहानां यत्र यावान् । स्याद्व्यासोंतमुखादिषु ॥ तस्मिन् सहस्रोरुशीता—शीतो-
दान्यतरोध्द्रिते ॥ ६२ ॥ शेषेऽष्टिभे तत्र तत्र । तावान् भाव्यो विवेकिभिः ॥ विजयांतर्नदीव-
क्ष—स्कारायामः स्वयं धिया ॥ ६३ ॥ द्वयोरप्यर्द्धयोरस्मिन् । द्वीपे वनमुखानि च ॥ वक्ष-

स्कारक्षितिभृतो । विजयाश्वांतरापगाः ॥ ६४ ॥ लवणोददिशि ह्रस्वाः । क्षेत्रसांकीर्ण्यतः स्मृ-
ताः ॥ दीर्घाः कालोदकक्षुन्नि । क्षेत्रबाहुल्यतः क्रमात् ॥ ६५ ॥ अष्टानां वनमुखानां । कले
द्वे विस्तृतिर्लघुः ॥ गुरुश्चतुश्चत्वारिंशा-ष्टपंचाशच्छती भवेत् ॥ ६६ ॥ तत्र द्वयोर्द्वयोः पूर्वा-
परार्द्धे वर्त्तिनोस्तयोः ॥ क्षाराब्ध्यासन्नयोः शीता-शीतोदासीम्नि सा लघुः ॥ ६७ ॥ गुरुस्तु
नीलनिषधां-तयोरेतच्च युक्तिमत् ॥ अमीषां वलयाकारं । क्षाराब्धिं स्पृशतां बहिः ॥ ६८ ॥
अपरेषां तु कालोद-वलयाभ्यंतरस्पृशां ॥ लघ्वी निषधनीलांते । गुर्वी सा सरिदंतिके ॥६९॥
तथोक्तं विरंजयक्षेत्रसमासवृत्तौ—तथा वनमुखानां विस्तारो द्विगुण उक्तः, परं लवणोदधि-
दिशि वनमुखपृथुत्त्वं विपरीतं संभाव्यते, यथा नद्यंते कलाद्वयं, गिर्यंते चतुश्चत्वारिंशदधि-
कान्यष्टपंचाशच्छतानि पृथुत्वमिति संप्रदाय इति. बृहत्क्षेत्रसमासवृत्तौ तु एषां जघन्यं मानं
नीलवन्निषधांते, शीताशीतोदोपांते चोत्कृष्टमुक्तं, न च कश्चिद्विशेषोऽभिहितः. अथ देवोत्तर-
कुरु-क्षेत्रसीमाविधायिनः ॥ गजदंताकृतीन् शैलान् । चतुरश्चतुरो ब्रुवे ॥ ७० ॥ तत्र देवकु-
रूणां यः । प्रत्यग् विद्युत्प्रभो गिरिः ॥ तथोत्तरकुरूणां च । प्रत्यग् यो गंधमादनः ॥ ७१ ॥

छावप्यायामत इमौ । षट्पंचाशत्सहस्रकाः ॥ लक्षास्तिस्रो योजनानां । सप्तविंशं शतद्वयं ॥ ७२ ॥ अथ देवकुरूणां प्रा–ग्गिरिः सौमनसोऽस्ति यः ॥ तथोत्तरकुरूणां प्राक् । पर्वतो माल्यवांश्च यः ॥ ७३ ॥ एतावायामतः पंच–लक्षा एकोनसप्ततिः ॥ सहस्राणि योजनानां । द्विशत्येकोनषष्टियुक् ॥ ७४ ॥ इदं प्रमाणं पूर्वार्द्धे । ज्ञावनीयं विचक्षणैः ॥ परार्द्धे क्षेत्रविस्तार–व्यत्यासेन विपर्ययः ॥ ७५ ॥ पूर्वार्द्धे हि ज्ञवेत्क्षेत्रं । प्राच्यां विस्तीर्णमन्यतः ॥ संकीर्णमपरार्द्धे तु । प्रत्यक् पृष्ठ्यन्यतोऽन्यथा ॥ ७६ ॥ ततः पूर्वार्द्धे यदुक्तं । मानं प्राचीनशैलयोः ॥ सौमनसमाल्यवतो–स्तत्प्रतीचीनयोरिह ॥ ७७ ॥ ज्ञेयं विद्युत्प्रज्ञगंध–मादनाढ्योः परार्द्धके ॥ यत्प्रतीचीनयोस्तत्र । मानं तत्प्राच्ययोरिह ॥ ७८ ॥ एते चत्वारोऽपि शैलाः । स्वस्ववर्षधरांतिके ॥ सहस्रयोजनव्यासा–स्तनवो मेरुसन्निधौ ॥ ७९ ॥ शेषवर्णविज्ञागादि । कूटवक्तव्यतादि च ॥ जंबूद्वीपगजदंत–गिरिवच्चिंत्यतामिह ॥ ८० ॥ अथ स्वस्वप्रतीचीन–प्राचीनगजदंतयोः ॥ आयाममानयोर्योगे । धनुर्मानं कुरु द्वये ॥ ८१ ॥

नवलक्षा योजनानां । सहस्राः पंचविंशतिः ॥ तथा शतानि चत्वारि । षडशीत्यधिका-

नि च ॥ ८२ ॥ भद्रसालायतिर्द्विघ्ना । मेरुविष्कंभसंयुता ॥ गजदंतद्वयव्यास—हीना ज्या कु-
रुषु स्फुटा ॥ ८३ ॥ त्रयोविंशत्या सहस्रै—रधिकं लक्षयोर्द्वयं ॥ योजनानामष्टपंचा—शता-
धिकं तथा शतं ॥ ८४ ॥ विदेहमध्यविष्कंभे । मेरुविष्कंभवर्जिते ॥ अर्धीकृते च प्रत्येकं ।
लभ्यते कुरुविस्तृतिः ॥ ८५ ॥ सा चेयं—त्रिलक्षी सप्तनवतिः । सहस्राण्यष्टशत्यपि ॥ सप्त-
प्तनवतिर्योज—नानां द्विनवतिर्लवाः ॥ ८६ ॥ अथापाच्यामुदीच्यां च । नीलवन्निषधाद्रितः ॥
प्रत्येकं यमकाद्री स्तो । जंबूद्वीपकुरुष्विव ॥ ८७ ॥ जंबूद्वीपयमकव—त्स्वरूपमेतयोरपि ॥
सहस्रयोजनोच्चत्व—विस्तारायामशालिनोः ॥ ८८ ॥ क्रमात्ततो ह्रदाः पंच । तन्नामानस्तथा
स्थिताः ॥ तटद्वये दश दश । कांचनाचलचारवः ॥ ८९ ॥ ह्रदाः पंचाप्यमी तादृक्—नाम-
भिः सेविताः सुरैः ॥ तद्वत्पद्मांचितास्तेभ्यो । द्विगुणायतविस्तृताः ॥ ९० ॥ तटद्वये दश द-
श । ये चात्र कांचनाद्रयः ॥ सश्रीकास्तेऽपि मानेन । तैर्जंबूद्वीपगैः समाः ॥ ९१ ॥ किंतु
संबद्धमूलास्ते—ऽमी तु व्यवहिता मिथः ॥ योजनानां शतेनैकादशेन नवमांशिना ॥९२॥ त-
थैवं—एषां दशानां पृथुत्वे । सहस्रे मिलिते भवेत् ॥ तत्सहस्रद्वयादेक—ह्रदायामाद्वियोज्यते ॥

॥ ९३ ॥ शेषं स्थितं सहस्रं य–न्नवभिस्तद्विभज्यते ॥ अंतरैः कांचनाद्रीणा–मेवं यथोक्तमं-
तरं ॥ ९४ ॥ जंबूद्वीपे तु ह्रदानां । सहस्रायामभावतः ॥ न किंचित्कांचनाद्रीणां । व्यवधा-
नं परस्परं ॥ ९५ ॥ यमकाद्रिह्रदायाम–वर्जितात्सप्तभिर्हृतात् ॥ लभ्यंते कुरुविष्कंभा–त्स-
प्तांतराणि तानि च ॥ ९६ ॥ यमकाद्योर्नीलवत–स्ताभ्यामाद्यह्रदस्य च ॥ क्रमाच्चतुर्णां ह्र-
दानां । केत्वांतस्यांतिमह्रदात् ॥ ९७ ॥ सहस्राः पंचपंचाश–द्योजनानां शतद्वयं ॥ एकसप्त-
त्याधिकं त–न्नवेदेकैकमंतरं ॥ ९८ ॥ आसूत्तरासु कुरुषु । नीलवद्गिरिसन्निधौ ॥ राजते धात-
कीवृक्षो । जंबूवृक्ष इवापरः ॥ ९९ ॥ माने स्वरूपे त्वनयो–र्विशेषोऽस्ति न कश्चन ॥ किंतु
तस्यानादृतव–दस्य देवः सुदर्शनः ॥ १०० ॥ उदीचीनासु कुरुषु । पश्चार्द्धेऽप्येवमीदृशः ॥
स्यान्महाधातकी वृक्षः । प्रियदर्शनदेवतः ॥ १ ॥ उत्तरासां कुरूणां य–त्स्वरूपमिह वर्णितं ॥
तदेव देवकुरुषु । विज्ञेय मर्द्धयोर्द्वयोः ॥ २ ॥ किंत्वासु नीलवत्स्थाने । वक्तव्यो निषधाचलः ॥
गिरी चित्रविचित्राख्यौ । वाच्यौ च यमकास्पदे ॥ ३ ॥ पूर्वापरार्द्धयोर्देव–कुरुषु स्तो यथा-
स्पदं ॥ प्राग्वच्छाल्मलिनौ वेणु–देवान्निधसुराश्रयौ ॥ ४ ॥ तथोक्तं स्थानांगद्वितीयस्थानकवृ-

तौ—' दो देवकुरुमहाडुमत्ति ' द्वौ कूटशाल्मलिवृक्षावित्यर्थः, द्वौ तद्वासिदेवौ वेणुदेवावि-
त्यर्थः, शेषं तु हृदनामादि । यदत्र नोपदर्शितं ॥ तज्जंबूद्वीपवद् ज्ञेयं । विशेषो ह्यत्र दश्यते
॥ ५ ॥ मध्येऽत्र मेरुश्चतुर–शीतिं तुंगः सहस्रकान् ॥ योजनानां सहस्रं चा–वगाढो वसुधां-
तरे ॥ ६ ॥ शतानि पंचनवतिं । मूले भूमिगते पृथुः ॥ चतुर्नवतिमेव क्ष्मा–तले शतानि
विस्तृतः ॥ ७ ॥

यत्रोत्तीर्य योजनादौ ! व्यासोऽस्य ज्ञातुमिष्यते ॥ तस्मिन् दशहृते लब्धे । सहस्राढ्ये
च तत्र सः ॥ ८ ॥ तथाद्रि–शिरोऽग्राच्चातुरशीतेः । सहस्राणामतिक्रमे ॥ व्यासे जिज्ञासित
एतान् । सहस्रान् दशभिर्भजेत् ॥ ९ ॥ लब्धान्येवं च चतुर–शीतिः शतानि तान्यथ ॥ स-
हस्राढ्यानि पूर्वोक्तो । विष्कम्भोऽस्य भुवस्तले ॥ १० ॥ मूलाद्यदोर्ध्वगमने । विष्कंभो ज्ञातु-
मिष्यते ॥ तदा यावद्यातमूर्ध्वं । तत्संख्यां दशभिर्भजेत् ॥ ११ ॥ लब्धे च मूलविष्कंभा–
च्छोधिते यत्तु तिष्ठति ॥ तत्र तावत्प्रमाणोऽस्य । विष्कंभो लभ्यते गिरेः ॥ १२ ॥ यथोर्ध्वं च-
तुरशीतौ । सहस्रेषु भुवस्तलात् ॥ गतेषु चतुरशीतिं । सहस्रान् दशभिर्भजेत् ॥ १३ ॥ ल-

ध्वानि चतुरशीतिः । शतानि तानि शोधयेत् ॥ भूतलव्यासतः शेषा । साहस्री मूर्ध्नि वि-
स्तृतिः ॥ १४ ॥ आम्नायोऽयं कर्णगत्या । मेरुनिम्नोन्नतत्वयोः ॥ ज्ञेयोऽभिवर्द्धनात्प्राग्व-न्मेख-
लायुग्मजातयोः ॥ १५ ॥ श्रियं श्रयत्ययमपि । चतुर्भिश्चारुकाननैः ॥ दंतैरैरावत इव । दै-
त्यारिरिव बाहुभिः ॥ १६ ॥ तत्र भूमौ भद्रसाल-वनं तरुलताघनं ॥ तरणित्रासितं ध्वांत-
मिवैतत्पादमाश्रितं ॥ १७ ॥ प्राच्यां प्रतीच्यां प्रत्येकं । तद्दीर्घं लक्षयोजनीं ॥ सहस्रान् सप्त
सैकोना-शीतीन्यष्टशतानि च ॥१८॥ प्राच्येऽथवा प्रतीचीने । दैर्घ्येऽष्टाशीतिभाजिते ॥ यल्लब्धं
सोऽस्य विष्कंभो । दक्षिणोत्तरयोः स च ॥ १९ ॥ योजनानां पंचविंशाः । शता द्वादश की-
र्त्तिताः ॥ एकोनसप्ततिश्चांशा । अष्टाशीतिसमुद्भवाः ॥ २० ॥

अष्टाशीत्या गुणिताया-मेतस्यां पुनराप्यते ॥ प्राच्यां प्रतीच्यां चायामो । यः प्रागस्य
निरूपितः ॥ २१ ॥ एवं प्रमाणविस्तारा-याममेतद्वनं पुनः ॥ गजदंतमंदराद्रि-नदीभिरष्टधा
कृतं ॥ २२ ॥ तच्च जंबूद्वीपभद्र-सालवन्नाख्यतां बुधैः ॥ तथैवैतद्वक्ष्यमाण-वनकूटादिक-
स्थितिः ॥ २३ ॥ अथोत्क्रम्य योजनानां । शतानि पंच भूतलात् ॥ कट्यां नंदनवन्मेरो । रा-

जते नंदनं वनं ॥ २४ ॥ तच्च चक्रवालतया । शतानि पंच विस्तृतं ॥ अनल्पकल्पफलद—ल-
तामंडपमंडितं ॥ २५ ॥ बहिर्विष्कंभोऽत्र मेरो—रुक्ताम्नायेन लभ्यते ॥ योजनानां सहस्राणि
। नवाब्धयर्द्ध शतत्रयं ॥ २६ ॥ तथाहि —भूक्रांतायाः पंचशत्या । दशभिर्भजने सति ॥ ल-
ब्धपंचाशतोऽधस्थ—व्यासात्त्यागे भवेदयं ॥ २७ ॥ बहिर्व्यासात्पंचशत्या—स्त्यागे चोभयतः पृ-
थक् ॥ अंतर्व्यासोऽष्टौ सहस्रा—स्त्रिशत्या सार्द्धयाधिकाः ॥ २८ ॥

सहस्राणि पंचपंचा—शतं पंचशतीं तथा ॥ अतिक्रम्य योजनाना—मूर्ध्वं नंदनकाननात्
॥ २९ ॥ अत्रांतरे सौमनसं । स्यात्पंचशतविस्तृतं ॥ चक्रवालतया मेरो—र्ग्रैवेयकमिवामलं ॥
॥ ३० ॥ बहिर्विष्कंभोऽत्र गिरे—र्गुरुभिर्गदितो मम ॥ योजनानां सहस्राणि । त्रीण्येवाष्टौ
शतानि च ॥ ३१ ॥ तथाहि——षट्पंचाशत्सहस्राणि । यान्यतीतानि भूतलात् ॥ एषां दश-
मभागः स्या—त्षट्पंचाशच्छतात्मकः ॥ ३२ ॥ असौ भूतलविष्कंभा—त्पूर्वोक्तादपनीयते ॥ त-
स्थुर्यथोदितान्येव—मष्टात्रिंशच्छतानि वै ॥ ३३ ॥ सहस्रापगमे चास्मा—त्स्यादंतर्गिरिविस्तृतिः
॥ द्वे सहस्रे योजनानां । शतैरष्टभिरन्विते ॥ ३४ ॥ अथैतस्माद्वनादूर्ध्व—मुत्क्रांतैर्मेरुमूर्द्धनि

॥ अष्टाविंशत्या सहस्रै- र्योजनैः पांडकं वनं ॥ ३५ ॥ चक्रवालतया तच्च । विस्तीर्णं वर्णितं जनैः ॥ चतुर्नवत्याभ्यधिकां । योजनानां चतुःशतीं ॥ ३६ ॥ तच्चैवं—

मेरुमस्तकविष्कंभा–त्सहस्रयोजनोन्मितात् ॥ मध्यस्थचूलिकाव्यासो । द्वादशयोजनात्मकः ॥ ३७ ॥ शोध्यते तच्छेषमर्द्धी–कृतं पंडकविस्तृतिः ॥ शेषा शिलादिस्थितिर्या । सा जंबूद्वीपमेरुवत् ॥ ३८ ॥ तथैवास्य मरकत–मयी शिरसि चूलिका ॥ नानारत्ननिर्मितेन । शोभिता जिनसद्मना ॥ ३९ ॥ एवं यदन्यदप्यत्र । कूटचैत्यादि नोदितं ॥ जंबूद्वीपमेरुवत्त–द्वक्तव्यं सुधिया धिया ॥ ४० ॥ एवं यथास्य द्वीपस्य । पूर्वार्द्धमिह वर्णितं ॥ पश्चिमार्द्धमपि तथा । विज्ञेयमविशेषितं ॥ ४१ ॥ गजदंतप्रमाणादौ । विशेषो यस्तु कश्चन ॥ स तु यत्तत्प्रकरणे । नामग्राहं निरूपितः ॥ ४२ ॥ किंच–विजये पुष्कलावत्यां । वप्राढ्ये विजये तथा ॥ वत्से च नलिनावत्यां । विहरंत्यधुना जिनाः ॥ ४३ ॥ प्राचीनेऽर्द्धे सुजातोऽर्हन् । स्वयंप्रभर्षभाननौ ॥ श्रीमाननंतवीर्यश्च । पश्चिमार्द्धे तु तेष्वमी ॥ ४४ ॥

सूरप्रभो जिनः श्रीमान् । विशालो जगदीश्वरः ॥ जगत्पूज्यो वज्रधर–श्चंद्राननः प्रभुः

क्रमात् ॥ ४५ ॥ एवं चात्र-श्रियं दधाते द्वौ मेरू । द्वीपस्यास्य कराविव ॥ नदस्तौ पृथुता-दर्पा-न्नभसो निजिघृक्षया ॥ ४६ ॥ यद्वोद्दंमकरौ बद्ध-कक्षौ च नंदनछलात् ॥ स्पर्द्धयासंमुखिनौ द्वौ । महामल्लाविवोच्छितौ ॥ ४७ ॥ स्थापयत्येकधात्मानं । मेर्वेकांगुलिसंज्ञया ॥ जंबूद्वीपेऽयमेतान्यां । द्विधा तं स्थापयन्निव ॥ ४८ ॥ अनलंभूष्णुनोद्धातुं । द्वीपेनानेन वार्द्धकात् ॥ धृतौ दंडाविवोद्दंमौ । मेरू द्वाविह राजतः ॥ ४९ ॥ वर्षाद्र्यो द्वादशाष्ट-षष्टिर्वैताढ्यभूधराः ॥ दीर्घा अष्टौ च वृत्तास्ते । कांचनाद्रिचतुःशती ॥ ५० ॥ वक्षस्काराद्र्यो द्वात्रिं-शदष्टौ गजदंतकाः ॥ द्वौ चित्रौ द्वौ विचित्रौ च । चत्वारो यमकाचलाः ॥ ५१ ॥ इषुकारद्वयं चैवं । सर्वाग्रेणात्र भूभृतां ॥ चत्वारिंशा पंचशती । चत्वारश्च महाद्रुमाः ॥ ५२ ॥

चतुर्दशात्र वर्षाणि । चतस्रः कुरवोऽपि च ॥ षट् कर्मभूमयोऽकर्म-भूमयो द्वादश स्मृताः ॥ ५३ ॥ दीर्घवैताढ्येषु कूटाः । प्राग्वन्नवनवोदिताः ॥ सक्रोशषड्योजनोच्चा । द्वादशा षट्शनीति ते ॥ ५४ ॥ रुक्मिमहाहिमवंतः । कूटैरष्टभिरष्टभिः ॥ सप्तभिश्च सौमनसौ । तथा च गंधमादनौ ॥ ५५ ॥ मेर्वोर्ध्वे नंदनवने । निषधौ नीलवद्गिरी ॥ विद्युत्प्रभौ माल्य-

वंतौ । नवकूटाः समेऽप्यमी ॥ ५६ ॥ हिमवंतौ शिखरिणौ । तैरेकादशभिर्युतौ ॥ वक्षस्कारगिरीणां च । प्रत्येकं तच्चतुष्टयं ॥ ५७ ॥ त्रयः शताः स्युर्द्वाविंशाः । कूटान्येतानि तत्र च ॥ षोडशा त्रिशती प्रोक्त–हिमवद्गिरिकूटवत् ॥ ५८ ॥ हरिकूटौ द्वयोर्विद्यु–त्प्रभयोर्यौ हरिस्सहौ ॥ माल्यवतोर्बलकूटौ । मेरुनंदनयोश्च यौ ॥ ५९ ॥

एते षडपि साहस्रा–स्त्रैधानामिति मानतः ॥ चतुस्त्रिंशाद्रिकूटाना–मेवं नवशती भवेत् ॥ ६० ॥ सहेषुकारकूटैर्द्वा–चत्वारिंशा शता नव ॥ तत्रेषुकारकूटानां । मानं तु नोपलभ्यते ॥ ६१ ॥ चतुःषष्टौ विजयेषु । भरतैरवतेषु च ॥ स्युरष्टषष्टिर्वृषभ–कूटा एकैकभावतः ।६२। धातक्यादिषु चतुष्के । द्वयोश्च भद्रसालयोः ॥ अष्टाष्टेति च सर्वाग्रे । भूकूटाः षोडशं शतं ॥ ६३ ॥ एतेषां वक्तुमुचिते । पर्वतत्वेऽपि वस्तुतः ॥ कूटत्वव्यवहारस्तु । पूर्वाचार्यानुरोधतः ॥६४॥ महाह्रदा द्वादशैव । विंशतिश्च कुरुह्रदाः ॥ श्रीह्रीधृतिकीर्त्तिबुद्धि–लक्ष्मीनां च द्वयं द्वयं ॥ ६५ ॥ सहस्रा द्वादशैकोन–त्रिंशल्लक्षाश्च कीर्त्तिताः ॥ तरंगिणीनामेतस्मिन् । द्वीपे मतांतरे पुनः ॥ ६६ ॥ पंचत्रिंशल्लक्षाणि । चतुरशीतिः सहस्रकाश्चैव ॥ इह संभवंति सरितां ।

तत्वं विदंति तत्वज्ञाः ॥ ६७ ॥ विदेहयुग्मे प्रत्येकं । स्युः कुंमान्यष्टसप्ततिः ॥ द्वे द्वे च शेष-
वर्षेषु । शतमेवमशीतियुक् ॥ ६८ ॥ एतेऽश्यो ह्रदाः कूटाः । कुंडान्येतान्यथापगाः ॥ स्यु-
र्वेदिकावनोपेता–स्तत्स्वरूपं तु पूर्ववत् ॥ ६९ ॥ एषां याम्योदीच्यवर्ष–सरिच्छैलादिवर्त्तिनां ॥
विजयस्वर्गिवत्प्रौढ–समृद्धीनां सुधाभुजां ॥ ७० ॥ दक्षिणस्यामुदीच्यां च । जंबूद्वीपस्थमेरु-
तः ॥ अन्यस्मिन् धातकीखंडे । राजधान्यो जिनैः स्मृताः ॥ ७१ ॥ श्रेण्यश्चतस्रः प्रत्येकं ।
वैताढ्येष्विति मीलिताः ॥ श्रेण्यो भवंति द्वीपेऽस्मिन् । द्विशती साष्टसप्ततिः ॥ ७२ ॥
दशोत्तरं पुरशतं । प्रतिवैताढ्यमित्यतः ॥ तेषां सहस्राः सप्त स्युः । साशीतिश्च चतुः-
शती ॥ ७२ ॥ जघन्यतोऽत्रेह जिना भवेयु–रुत्कर्षतस्ते पुनरष्टषष्टिः ॥ जघन्यतः केशवच-
क्रिरामा । अष्टावथोत्कृष्टपदे तु षष्टिः ॥ ७३ ॥ सद्वादशा स्युर्निधयोऽत्र षट्शती । प्रकर्षत-
स्तान्युपभोगभांजि तु ॥ द्विविंशतिः पंचशतानि च ध्रुवं । द्वासप्ततिस्तानि जघन्यतस्तथा ॥७४॥
विंशानि चत्वारि शतानि पंचे–काक्षाणि रत्नानि पृथग् भवेयुः ॥ उत्कर्षतस्तानि जघन्यतश्च । पंच-
चाशदाढ्या ननु षष्टिरेव ॥७४॥ द्वादशोष्णमहसः सुधांशवो । द्वादशग्रहसहस्रमन्वितं ॥ षड्युता-

ढ्शतकेन १०५६ स्तानि षट् । त्रिंशता समधिकं शतत्रयं ३३६ ॥ ७५ ॥

त्रिभिः सहस्रैरधिकानि लक्षा–ण्यष्टौ तथा सप्त शतानि चात्र ॥ स्युः कोटिकोट्यः कि-
ल तारकाणां । तमोंकुरोन्मूलनकारकाणां ॥ ७६ ॥ द्वीपोऽयमेवं गदितस्वरूपः । कालोदना-
म्नोदधिना परीतः ॥ विभाति दीप्रप्रधिनेव चक्र–मिवेभसेनावलयेन भूपः ॥ ७७ ॥ कालो म
हाकाल इतीह देवौ । प्राच्यप्रतीच्यार्द्धधृताधिकारौ ॥ तद्दैवतः श्यामतमोदकश्च । तदेष का-
लोद इति प्रसिद्धः ॥ ७८ ॥ लक्षाण्यष्टौ विस्तृतो योजनाना–मुद्विद्धोऽयं योजनानां सहस्रं ॥
आदावंते मध्यदेशे समानो–ऽधः सर्वत्रापि पूर्णह्रदाभः ॥ ७९ ॥ न चूला न वेला न च क्षो-
भितास्मिन् । न पातालकुंभादिका वा व्यवस्था ॥ सदंभोदमुक्तोदकस्वादुनीरः । प्रसन्नश्च सा-
धोर्मनोवद्गभीरः ॥ ८० ॥ लक्षाण्यथैकनवतिः परिधिः सहस्राः । स्यात् सप्ततिः षडिह पंच-
युताः शताश्च ॥ द्वारैश्चतुर्भिरयमप्यभितो विभाति । पूर्वादिदिक्षु विजयादिभिरुक्तरूपैः ॥८१॥
लक्षा द्वाविंशतिश्च द्विनवतिरुपरि स्युः सहस्राणि नूनं । षट्चत्वारिंशदाढ्या जिनपतिगदिता
षट्शती योजनानां ॥ पादोनं योजन चांतरमिह निखिल द्वार्षु तुल्यप्रमाणां २२०९६४६ क्रो

१ । कालोदे द्वारपानां विजयवदुदिता राजधान्योऽपरस्मिन् ॥ ७२ ॥ प्राक्प्रतीच्योर्दिशोर्द्वादश द्वादश । द्वादशेभ्यः सहस्रेभ्य एवांतरे ॥ संति कालोदधौ धातकीखंडतो–ऽत्रांतरीपा अमुष्यामृतोष्णत्विषां ॥ ७३ ॥ पुष्करद्वीपतोऽप्येवमत्रांबुधौ । तावता प्राक्प्रतीच्योः सुधोष्णत्विषां ॥ नेत्रवेदैर्मिता ४२ नेत्रवेदैर्मिता ४२ । एतदब्धिस्पृशामंतरीपाः स्थिताः ॥ ७४ ॥

अंतरीपा अमी गौतमद्वीपव–द्भावनीयाः स्वरूपप्रमाणादिभिः ॥ वेदिकाकाननालंकृताः सर्वतः । क्रोशयुग्मोच्छ्रिता वारिधेर्वारितः ॥ ७५ ॥ अथांभोधावस्मिन्नमृतरुचयस्तिग्मकिरणा । द्विचत्वारिंशत्स्युर्ग्रहगृहसहस्रत्रयमथ ॥ शतैः षड्भिर्युक्तं षण्णधिकनवत्या समधिकैः । सहस्रं षट्सप्तत्यधिकशतयुक् चात्र भगणः ॥ ७६ ॥ पंचाशदूना नियतं सहस्रा–स्त्रयोदशेन्द्राङ्कि २० मिताश्च लक्षाः ॥ स्युस्तारकाणामिह कोटिकोट्यः २०१२ ५५० शू १४ । कालोदधौ तीर्थकरोपदिष्टाः ॥ ७७ ॥ विश्वाश्चर्यदकीर्त्तिकीर्त्तिविजयश्रीवाचकेंद्रांतिष–द्राजश्रीतनयोऽतनिष्ट विनयः श्रीतेजपालात्मजः ॥ काव्यं यत्किल तत्र निश्चितजगत्तत्वप्रदीपोपमे । द्वाविंशो मधुरः समाप्तिमगमत्सर्गो निसर्गोज्ज्वलः ॥ ७८ ॥

॥ इति श्रीलोकप्रकाशे द्वाविंशतितमः सर्गः समाप्तः ॥ श्रीरस्तु ॥

॥ अथ त्रयोविंशतितमः सर्गः प्रारभ्यते ॥

वक्ष्येऽथ पुष्करनर–द्वीपं केकयदेशवत् ॥ विशेषितार्द्धमावेष्ट्य । स्थितं कालोदवारिधिं ॥ १ ॥ वक्ष्यमाणस्वरूपैर्य–ल्लांछितश्चारुपुष्करैः ॥ ततोऽयं पुष्करवर–इति प्रसिद्धिमीयिवान् ॥ २ ॥ चक्रवालतयैतस्य । विस्तारो वर्णितः श्रुते ॥ योजनानां षोडशैव । लक्षा न्यक्षार्थवेदिभिः ॥ ३ ॥ द्वीपस्यास्य मध्यदेशे । शैलोऽस्ति मानुषोत्तरः ॥ अन्विताख्यो नरक्षेत्र–सीमाकारितयोत्तरः ॥ ४ ॥ उभयोः पार्श्वयोश्चारु–वेदिकावनमंडितः ॥ योजनानामेकविंशान् । शतान् सप्त दशोच्छ्रितः ॥ ५ ॥ चतुःशतीं योजनानां । त्रिंशां क्रोशाधिकां भुवि ॥ मग्नो मूले सहस्रं च । द्वाविंशं किल विस्तृतः ॥ ६ ॥

त्रयोविंशानि मध्येऽयं । शतानि सप्त विस्तृतः ॥ चतुर्विंशानि चत्वारि । शतान्युपरि विस्तृतः ॥ ७ ॥ यथेष्टस्थानविष्कंभ–ज्ञानोपायस्तु साम्यतः ॥ ज्ञाप्यो वेलंधरावास–गोस्तुपादिगिरिवत्त्विह ॥ ८ ॥ अग्रेतनं पादयुग्मं । यथोत्तंभ्य निषीदति ॥ युताभ्यां केसरी पाद–

द्वयं संकोच्य पश्चिमं ॥ ९ ॥ ततः शिरःप्रदेशे स । विभाति भृशमुन्नतः ॥ तथा पाश्चात्यभागे च । निम्नो निम्नतरः क्रमात् ॥ १० ॥ तद्वदेष गिरिः सिंहो–पवेशनाकृतिस्ततः ॥ यद्वा यवार्द्धसंस्थान–संस्थितोऽयं तथैव हि ॥ ११ ॥ समभित्तिः सर्वतुंगो । जंबूद्वीपस्य दिश्ययं ॥ प्रदेशहान्या पश्चात्तु । निम्नो निम्नतरः क्रमात् ॥ १२ ॥ अत्रायं संप्रदायः—द्वे सहस्रे चतुश्चत्वा–रिंशे मूले सुविस्तृतं ॥ ॥ शतान्यष्टाष्टचत्वारिं–शानि मूर्ध्नि च विस्तृतं ॥ १३ ॥

एकविंशान् शतान् सप्त–दशोच्च वलयाकृतिं ॥ प्रकल्प्याद्रौ ततोऽस्यान्यं–तरार्द्धेऽपहृते सति ॥ १४ ॥ विस्तारमधिकृत्याथ । शेषस्तिष्ठति यादृशः ॥ तादृशोऽयं संप्रदायात् । प्रज्ञप्तो मानुषोत्तरः ॥ १५ ॥ वसंत्यस्योर्ध्वं सुपर्ण–कुमारा निर्जरा बहिः ॥ मध्ये मनुष्याश्चेत्येष । त्रिधा गिरिरलंकृतः ॥ १६ ॥ तथोक्तं जीवाभिगमसूत्रे–' माणुसुत्तरस्स णं पव्वयस्स अंतोमणुआ उप्पिं सुवन्ना बाहिं देवा इति ' जांबूनदमयश्चित्र–मणिरत्नविनिर्मितैः ॥ लतागृहैर्दीर्घिकाभि–र्मंडपैश्चैष मंडितः ॥ १७ ॥ कूटैः षोडशभिश्चैष । समंताद्भात्यलंकृतः ॥ नानारत्नमयै रम्यैः । प्राकारोऽट्टालकैरिव ॥ १८ ॥ त्रयं त्रयं स्यात्कूटानां । पंक्त्या दिशां चतुष्टये

॥ द्वादशाप्येकैकदेवा–धिष्ठितानि भवंत्यथ ॥ १९ ॥ उक्तं च स्थानांगवृत्तौ–पुव्वेण तिन्नि कूडा । दाहिणउ तिन्नि तिन्नि अवरेण ॥ उत्तरउ तिन्नि भवे । चउदिसिं माणुसनगस्सत्ति ॥ ॥ २० ॥ विदिक्षु चत्वारि तत्रा–ग्नेय्यां रत्नाभिधं भवेत् ॥ निवासभूतं तद्वेणु–देवस्य गरुडेशितुः ॥ २१ ॥

रत्नोच्चयाख्यं नैर्ऋत्यां । वेलंबस्यानिलेशितुः ॥ नाम्ना विलंबसुखद–मित्यप्येतन्निरूपितं ॥ २२ ॥ पूर्वोत्तरस्यां च कूटं । सर्वरत्नाभिधं भवेत् ॥ तत्सुपर्णकुमारेंद्र–वेणुदालेः किलास्पदं ॥ २३ ॥ तथा परोत्तरस्यां स्या–त्तद्रत्नसंचयाभिधं ॥ प्रभंजनपराख्यं च । प्रभंजनसुरेशितुः ॥ २४ ॥ अत्र यद्यपि रत्नादीनि चत्वारि कूटानि स्थानांगसूत्रे चतुर्दिशमुक्तानि, तथाहि–' माणुसुत्तरस्स णं पव्वयस्स चउद्दिसि चत्तारि कूडा प० तं० रयणे रयणुच्चये सव्वरयणे रयणसंचए इति ' तथाप्येतत्सूत्रं श्रीअभयदेवसूरिभिरेवं व्याख्यातं—तथाहि—इह च दिग्ग्रहणेऽपि विदिक्ष्विति द्रष्टव्यं, तथा एवं चैतद्व्याख्यायते, द्वीपसागरप्रज्ञप्तिसंग्रहण्यनुसारेणेत्यादि, चतुर्दिशमिहैकैकः । कूटे भाति जिनालयः ॥ दिशां चतसृणां रत्न–किरीट इव भासुरः

॥ १ ॥ तथोक्तं विरंजयक्षेत्रसमाससूत्रे—वक्खुवि वसुयारेसु । इक्किक्कं नरनगंमि चत्तारि ॥ कूडोवरि जिणभवणा । कुलगिरिजिणभवणपरिमाणा ॥ १ ॥ इति. साक्षान्न यद्यपि प्रोक्तः । सिद्धांतेऽत्र जिनालयः ॥ तथाप्यागमवाग्लिंगा—दनुमानात्प्रतीयते ॥ २५ ॥ यतो विद्याचारणर्षि—तिर्यग्गतिनिदर्शने ॥ विश्रामोऽत्र गिरौ प्रोक्त—श्चैत्यवंदनपूर्वकः ॥ २६ ॥ तथाह पंचमांगे—विज्जा चारणस्मणं भंते तिरियं केवतिए गतिविसए पन्नत्ते? गो० से णं इत्त एगेणं उप्पाएणं माणुसुत्तरे पव्वए समोसरणं करेइ माणु २ त्ता तहिं चेइयाइं वंदति.

एतच्चास्मिन् विना चैत्यं । कथमौचित्यमञ्चति ॥ ततोऽत्र जिनचैत्यानि । युक्तमूचुर्महर्षयः ॥ २७ ॥ एवं शाश्वतचैत्यानां । मान्यत्वं यो न मन्यते ॥ सोऽप्यनेनैव वाक्येनो—च्छातुं नेष्टे पराहतः ॥ २८ ॥ यश्चात्र चैत्यशब्दार्थं । विपर्यस्यति वातकी ॥ तस्याप्येतच्चारणर्षि—नमस्यावाक्यमौषधं ॥ २९ ॥ नहीदृशास्तपःशक्ति—लब्धैतादृशलब्धयः ॥ विना जिनादीन् वंदंते । सम्यक्त्वश्रद्धानीलुकाः ॥ ३० ॥ अथ प्रकृतं—अनेन पुष्करवर—द्वीपो द्वेधा व्यधीयत ॥ ततस्त्रेधैव गृह्यमस्यार्द्ध—द्वयं निर्दिश्यते ततः ॥ ३१ ॥ अभ्यंतरं पुष्करार्द्धं । बाह्यं तदर्द्ध

मेव च ॥ अर्वाचीनमांतरार्द्धं । बाह्यमर्द्धं ततः परं ॥ ३२ ॥ मानुषोत्तरशैलस्तु । बाह्यार्द्धक्षेत्ररोधकः ॥ इत्यांतरार्द्धं पूर्णाष्ट–लक्षयोजनसंमितं ॥ ३३ ॥ तथाहुर्ज्ञानचंदनमलयगिरयो मलयगिरयः—

अयं च मानुषोत्तरपर्वतो बाह्यपुष्करवरार्द्धभूमौ प्रतिपत्तव्य इति बृहत्क्षेत्रसमासवृत्तौ. कोटिरेका द्विचत्वारिं–शल्लक्षाणि सहस्रकाः ॥ चतुस्त्रिंशच्छतान्यष्टौ । त्रयोविंशानि चोपरि ३४ ॥ एतावद्योजनमितो । मानुषोत्तरभूभृतः ॥ स्यान्मध्ये परिधिर्मौलौ । त्वस्यायं परिधिर्भवेत् ॥ ३५ ॥ कोटिरेकाथ लक्षाणि । द्विचत्वारिंशदेव च ॥ द्वात्रिंशच्च सहस्राणि । द्वात्रिंशच्च शता नव ॥ ३६ ॥ पृथगुक्तौ परिक्षेपौ । यो मध्येऽस्य तथोपरि ॥ बहिर्भागापेक्षया तौ । पार्श्वेऽस्याभ्यंतरे पुनः ॥ ३७ ॥ समानभित्तिकतया । मूले मध्ये तथोपरि ॥ तुल्य एव परिक्षेपः । सर्वत्राप्यवसीयतां ॥ ३८ ॥ एका कोटिर्द्विचत्वारिं–शल्लक्षाणि सहस्रकाः ॥ षट्त्रिंशच्च शताः सप्त । त्रयोदशसमन्विताः ॥ ३९ ॥

इति बृहत्क्षेत्रसमासवृत्त्यभिप्रायेण, जीवाभिगमसूत्रे ' सत्त चोद्दसुत्तरे जोअणसए ,

८ ||

इत्युक्तं. एतावंति योजनानि । दृष्टानि जिननायकैः ॥ मानुषोत्तरशैलस्य । बाह्यस्य परिधे-
र्मितौ ॥ ४० ॥ द्विचत्वारिंशता लक्षै-रेककोटिसमन्विता ॥ त्रिंशत्सहस्त्राश्चैकोन-पंचाशा
द्विशती तथा ॥ ४१ ॥ मानुषोत्तरशैलस्यै-तावान् परिधिरांतरः ॥ एष एवाभ्यंतरस्य । पु-
ष्करार्द्धस्य चांतिमः ॥ ४२ ॥ नृक्षेत्रस्यापि परिधि-रेष एवावसानिकः ॥ अथास्य पुष्करार्द्ध-
स्य । मध्यमः परिधिस्त्वयं ॥ ४३ ॥ एका कोटी योजनानां । लक्षाः सप्तदशोपरि ॥
सप्तविंशत्यन्वितानि । चत्वार्येव शतानि च ॥ ४४ ॥ कालोदस्यांत्यपरिधि-र्यः पूर्वमि
ह दर्शितः ॥ स एव पुष्करार्द्धस्य । भवेत्परिधिरांतरः ॥ ४५ ॥ द्विधेदमिषुकाराभ्यां ।
धातकीखंडवत्कृतं ॥ अभ्यंतरं पुष्करार्द्धं । तस्थिवद्व्यामपागुदक् ॥ ४५ ॥ धातकीखडेषुकार
-सधर्माणाविमावपि ॥ चतुःकूटावंत्यकूट-स्थत्तोत्तुंगजिनालयौ ॥ ४६ ॥

एकेनांतेन कालोदं । परेण मानुषोत्तरं ॥ स्पृष्टवंतौ योजनानां । लक्षाण्यष्टायताविति ॥
॥ ४७ ॥ एवमभ्यंतरं पुष्क-रार्द्धं निर्दिश्यते द्विधा ॥ पूर्वार्द्धं पश्चिमार्द्धं च । प्रत्येकं मेरुणां-
चितं ॥ ४८ ॥ पूर्वापरार्द्धयोरत्र । कालोदवेदिकांततः ॥ पुरतः पुनरर्वाक् च । मानुषोत्तरप-

||

तोऽभवन्निह ॥ २५ ॥ केवलज्ञानिनामेव-मुत्कर्षान्नव कोटयः ॥ नवकोटिसहस्राणि । तथो-त्कर्षेण साधवः ॥ २६ ॥ जघन्यतो विंशतिः स्यु-र्भगवंतोऽधुनापि ते ॥ विदेहेष्वेव चत्वार-श्चत्वारो विहरंति हि ॥ २७ ॥ ते चामी-सीमंधरं १ स्तौमि युगंधरं २ च । बाहुं ३ सुबाहुं ४ च सुजातदेवं ५ ॥ स्वयंप्रभं ६ श्रीवृषभाननाख्य ७-मनंतवीर्यं ८ च विशालनाथं ९ ॥ ॥ २८ ॥ सूरप्रभं १० वज्रधरं ११ च चंद्रा-ननं १२ नमामि प्रभुभद्रबाहुं १३ ॥ भुजंग १४ ने-मिप्रभ १५ तीर्थनाथा-वधेश्वरं १६ श्रीजिनवीरसेनं १७ ॥ २९ ॥

स्तवीमि च महाभद्रं १८ । श्रीदेवयशसं १९ तथा ॥ अर्हंतमजितवीर्यं २० । वंदे विंश-तिमर्हतां ॥ ३० ॥ पंचस्वपि विदेहेषु । पूर्वापरार्द्धयोः किल ॥ एकैकस्य विहरतः । संभवा-ज्जगदीशितुः ॥ ३१ ॥ दशैव विहरंतः स्यु-र्जघन्येन जिनेश्वराः ॥ इत्यूचुः सूरयः केचित् । तत्वं वेत्ति त्रिकालवित् ॥ ३२ ॥ तथोक्तं प्रवचनसारोद्धारसूत्रे—' सत्तरिसयमुक्कोसं । जहन्न-विसा य दस य विहरंति ' इति. न्यूनाज्जघन्यादूनास्तु । विहरंतो भवंति न ॥ ततोऽन्येऽपि य-थास्थानं । स्युर्गार्हस्थ्याद्यवस्थया ॥ ३३ ॥ कोटिद्वयं केवलिनो । द्वे च कोटिसहस्रके ॥ सा-

विदेहविजयस्थानां । तासां विंशं शतत्रयं ॥ १८ ॥
अंतर्नद्यः षष्टिरिति । परिच्छदजुषामिह ॥ पंचाशा मुख्यसरितां । सर्वाग्रेण चतुःशती ॥
॥ १९ ॥ सा चैवं—गंगासिंधुरक्तवती—रक्ताः प्रत्येकमीरिताः ॥ पंचाशीतिस्तथा शीता—शी-
तोदारूप्यकूलिकाः ॥ २० ॥ स्वर्णकूला नरकांता । नारीकांता च रोहिता ॥ रोहितांशा ह-
रिकांता । हर्यादिसलिलापि च ॥ २१ ॥ द्वादशांतरनद्यश्च । पंचपंचाखिला इमाः ॥ परिच्छ-
दापगास्त्वासां । ज्ञेयाः पूर्वोक्तया दिशा ॥ २२ ॥
एवं द्विसप्ततिर्लक्षा । अशीतिश्च सहस्रकाः ॥ भवंति मनुजक्षेत्रे । नद्योऽन्यस्मिन्मते पु-
नः ॥ २३ ॥ एकोननवतिर्लक्षाः । सहस्राः षष्टिरेव च ॥ एतच्चांतरापगानां । पृथक्कृतविव-
क्षया ॥ २४ ॥ इदं च नदीसर्वाग्रं जंबूद्वीपगतमहानदीतुल्यपरिवाराणां धातकीखंडपुष्करा-
र्द्धगतमहानदीनां संभावनयोक्तं. धातकीखंडपुष्करार्द्धयोर्महानदीनां परिवारे जंबूद्वीपवर्त्तिम-
हानदीपरिवारापेक्षया द्वैगुण्यादिविशेषस्तु बृहत्क्षेत्रविचारादिषु क्वापि न दृष्टं, इति नोक्त-
मिति ज्ञेयं. उत्कर्षतो जिना अत्र । स्युः सप्तत्यधिकं शतं ॥ ते द्वितीयार्हतः काले । विहरं-

वंत्रयोदश ॥ ७ ॥ अष्टौ दाढाः पर्वताः स्युः । कूटास्त्विह चतुर्विधाः ॥ वैताढ्यशेषाद्रिमह्—स्रांकभूकूटभेदतः ॥ ८ ॥ तत्र च—सार्द्धं सहस्रं वैताढ्य—कूटानां त्रिंशताधिकं ॥ शेषाद्रि-कूटानामष्ट—शती षडधिका भवेत् ॥ ९ ॥ सहस्रांकाः पंचदशे—त्येवं कूटानि भूभृतां ॥ सर्वाग्रेणैकपंचाशे । द्वे सहस्रे शतत्रयं ॥ १० ॥

भद्रसालवने मेरो—र्यानि दिक्षु विदिक्षु च ॥ तानि दिग्गजकूटानि । चत्वारिंशद्भवेदिह ॥ ११ ॥ द्रूणां दशानामष्टाष्ट । यानि दिक्षु विदिक्षु च ॥ कूटानि तान्यशीतिः स्यु—र्नृक्षेत्रे सर्वसंख्यया ॥ १२ ॥ शतं वृषभकूटानां । सप्तत्याधिकमाहितं ॥ भवंत्येवं भूमिकूटा । नवत्याढ्यं शतद्वयं ॥ १३ ॥ महावृक्षा दश तत्र । पंच शाल्मलिसंज्ञकाः ॥ शेषा जंबूर्धातकी च । पद्मश्चांत्यौ महापरौ ॥ १४ ॥ महाह्रदास्त्रिंशदिह । पंचाशच्च कुरुह्रदाः ॥ भवत्यशीतितिरित्येवं । ह्रदानां सर्वसंख्यया ॥ १५ ॥ भरतादिक्षेत्रमहा—नदीकुंभानि सप्ततिः ॥ विदेहविजयस्थानि । तानि विंशं शतत्रयं ॥ १६ ॥ षष्टिरंतर्नदीनां स्यु—रित्येवं सर्वसंख्यया ॥ चतुःशतीह कुंडानां । पंचाशदधिका भवेत् ॥ १७ ॥ भरतादिक्षेत्रगता । महानद्योऽत्र सप्ततिः

एतत्सर्वमर्थतो जीवाभिगमसूत्रचतुर्थप्रतिपत्तौ. क्षेत्रेषु पंचचत्वारिं–शतीह भरतादिषु ॥ अंतर्द्वीपेषु षट्पंचा–शत्येव संभवेन्नृणां ॥ ९७ ॥ बाहुल्याज्जन्म मृत्युश्च । वार्द्धिवर्षधरादिषु ॥ शेषेषु तु नृणां जन्म । प्रायेण नोपपद्यते ॥ ९८ ॥ मृत्युस्तु संहरणतो । विद्यालब्धिबलेन वा ॥ गतानां तत्र तत्रायुः–क्षयात्संभवति क्वचित् ॥ ९९ ॥ अथैतस्मिन्नरक्षेत्रे । वर्षक्षेत्रादिसंग्रहः ॥ क्रियते सुखबोधाय । तदर्थोऽयं ह्युपक्रमः ॥ १०० ॥ अध्यर्द्धौ द्वाविह द्वीपौ । द्वावेव च पयोनिधी ॥ भरतान्यैरवतानि । विदेहाः पंच पंच च ॥ १ ॥ एवं पंचदश कर्म–भूमयोऽत्र प्रकीर्त्तिताः ॥ देवोत्तराख्याः कुरवो । हैरण्यवतरम्यके ॥ २ ॥

हैमवतं हरिवर्षं । पंच पंच पृथक् पृथक् ॥ सर्वाण्यपि त्रिंशदेवं । भवंत्यकर्मभूमयः ॥ ॥ ३ ॥ अंतर्द्वीपाश्च षट्पंचा–शदेवं युग्मिभूमयः ॥ षडशीतिर्नरस्थाना–न्येवमेकोत्तरं शतं ॥ ॥ ४ ॥ तथात्र मेरवः पंच । विंशतिर्गजदंतकाः ॥ वक्षस्काराश्चयोऽशीतिः । सहस्रं कांचनाचलाः ॥ ५ ॥ विचित्राः पंचचित्राश्च । पंचाथ यमकाचलाः ॥ दश त्रिंशद्वर्षधरा । इषुकारचतुष्टयं ॥ ६ ॥ विंशतिर्वृत्तवैताढ्याः । शतं दीर्घाः ससप्ततिः ॥ एकोनपंचाशान्यद्रि–शतान्ये-

णोदधिः ॥ ७६ ॥ एवं द्वाविंशतिर्लक्षा–एयेकतः परतोऽपि च ॥ मध्ये जंबूद्वीप एकं–ल-
क्षमायतविस्तृतः ॥ ७७ ॥ पंचचत्वारिंशदेवं । लक्षाण्यायतविस्तृतं ॥ नरक्षेत्रं परिक्षेपो । ऽ-
योऽस्य पुष्करार्द्धवत् ॥ ७८ ॥ एतावतो नरक्षेत्रात् । परतो न भवेन्नृणां ॥ गर्भाधानं ज-
न्ममृत्यू । संमूर्छिमनरोद्भवः ॥ ७९ ॥ आसन्नप्रसवां कश्चि–त्स्त्रियं नयति चेत्सुरः ॥ नरक्षे-
त्रात्परं नासौ । प्रसूते तत्र कर्हिचित् ॥ ८० ॥ यदि कंठगतप्राणो । मनुष्यक्षेत्रतः परं ॥ म-
नुष्यो नीयते नासौ । म्रियते तत्र कर्हिचित् ॥ ८१ ॥ अथावश्यम्भाविजन्म–क्षीणायुष्कौ च
तौ यदि ॥ तदा सुरस्य तन्नेतु–र्नवेच्छान्यस्य कस्यचित् ॥ ८२ ॥ मनस्तथैव येनैना–मास-
न्नप्रसवां स्त्रियं ॥ तं चाकंठगतप्राणं । नरक्षेत्रे पुनर्नयेत् ॥ ८३ ॥ एवं नातःपरमह–र्निशा-
दिसमयस्थितिः ॥ न बादराग्निर्न नदी । न विद्युद्गर्जिनीरदाः ॥ ८४ ॥ नार्हदाद्या न निधयो
। ः ायने नैव चाकराः ॥ नेंदुवृद्धिक्षयौ नोप– रागोऽर्कैंद्वोर्न वा गतिः ॥ ८५ ॥ तथाहुः–अ-
रिहंतसमयबायर–अग्गीविज्जूबलाहगाथणिआ ॥ आगरनइनिहिउवराग । निग्गमेवुढ्ढिअ-
यणं च ॥ ८६ ॥

शा । योजनानां चतुःशती ॥ अष्टाशीत्या योजनस्य । जक्तस्यांशाश्च सप्ततिः ॥ ७७ ॥ जप-
पत्तिस्त्वत्र प्राग्वत्.

शेषा त्वत्र नंदनादि–वनवक्तव्यताखिला ॥ धातकीखंडमेरुन्न्यां । पुनरुक्तेति नोच्यते ॥
॥ ७८ ॥ जंबूद्वीपो महामेरु–श्चतुर्भिर्मेरुभिः श्रियं ॥ धत्ते तीर्थंकर इव । चतुर्भिः परमेष्टि-
भिः ॥ ७९ ॥ प्रागुक्ताख्येषु पूर्वार्द्धे । विजयेष्वधुना जिनाः ॥ चंद्रबाहुर्भुजंगश्च–श्वरो नेमि-
प्रभोऽपि च ॥ ८० ॥ पश्चिमार्द्धे तु तेष्वेव । वीरसेनो जिनेश्वरः ॥ महाभद्रदेवयशो–जितवी-
र्या इति क्रमात् ॥ ८१ ॥ द्वीपार्द्धेऽस्मिन्नगादीनां । संग्रहः सर्वसंख्यया ॥ धातकीखंडवद् ज्ञे-
यो–ऽविशेषान्नोदितः पृथक् ॥ ८२ ॥ द्विसप्ततिः शशभृत–स्तावंत एव भास्कराः ॥ षट् स-
हस्राणि षट्त्रिंशा । त्रिशत्यत्र महाग्रहाः ॥ ८३ ॥ नक्षत्राणां सहस्रे द्वे । प्रज्ञप्ते षोडशोत्त-
रे ॥ प्रमाणमथ ताराणां । पुष्करार्द्धे निरूप्यते ॥ ८४ ॥ अष्टचत्वारिंशदिह । लक्षा द्वाविं-
शतिस्तथा ॥ सहस्राणि द्वे शते च । स्युस्ताराः कोटिकोटयः ॥ ८५ ॥ एवं च–

लक्षाण्यर्धं पुष्करार्द्धे । तावान्कालोदवारिधिः ॥ चत्वारि धातकीखंडो । द्वे लक्षे लव-

ट्यान्यैकैकं पुनः ॥ लक्षद्वयं योजनानां । चत्वारिंशत्सहस्रकाः ॥ ६६ ॥

शतानि नव चैकोन-षष्टीनि योजनस्य च ॥ सप्तकुरुस्यैकभाग-स्तत्रोपपत्तिरुच्यते ॥
॥ ६७ ॥ दैर्घ्यं ह्रदानां पंचानां । यत्सहस्राणि विंशतिः ॥ साहस्रयमकव्यास-युक्तं तत्कुरु-
विस्तृतेः ॥ ६८ ॥ विशोध्यतेऽथ यच्छेषं । तत्सप्तभिर्विभज्यते ॥ सप्तानां व्यवधानाना-मेवं
मानं यथोदितं ॥ ६९ ॥ उदक्कुरुषु पूर्वार्द्धे । पद्मनामा महातरुः ॥ पश्चिमार्द्धे महापद्म-
स्तौ जंबूवृक्षसोदरौ ॥ ७० ॥ पद्मनाम्नो भूमिरुहः । पद्मनामा सुरः पतिः ॥ महापद्मस्य तु
स्वामी । पुंडरीकः सुरोत्तमः ॥ ७१ ॥ स्युर्देवकुरवोऽप्येवं । किंत्वत्र निषधात्परौ ॥ विचित्र-
चित्रावचलौ । ततः पंच ह्रदाः क्रमात् ॥ ७२ ॥ पूर्वार्द्धे चापरार्द्धे च । स्यातां शाल्मलिनाविह
॥ जंबूवृक्षसधर्माणा-वेतावपि स्वरूपतः ॥ ७३ ॥ पुष्करार्द्धेऽथ यौ मेरू । स्यातां पूर्वापरार्द्ध-
योः ॥ धातकीखंडस्थमेरु-समानौ तौ तु सर्वथा ॥ ७४ ॥ किंत्वेतयोर्भद्रसाल-वनयोराय-
तिर्भवेत् ॥ लक्षद्वयं पंचदश । सहस्राणि शतानि तु ॥ ७५ ॥ अष्ट पंचाशानि सप्त । पूर्वप-
श्चिमयोर्दिशोः ॥ प्रत्येकं दक्षिणोदीच्यः । स्याद्व्यासस्त्वयमेतयोः ॥ ७६ ॥ द्विसहस्र्यैकपंचा-

पश्चिमार्द्धे विपर्यासो । धातकीखंडवत्स तु ॥ ५५ ॥ अष्टाप्येते गजदंता । नीलवन्निषधांतिके ॥ सहस्रद्वयविस्तीर्णाः । सूक्ष्माश्च मंदरांतिके ॥ ५६ ॥

विदेहमध्यविष्कम्भा–न्मेरुव्यासे विशोधिते ॥ शेषेऽर्द्धिते च विष्कंभः । प्रत्येतव्यः कुरुद्वये ॥ ५७ ॥ लक्षाः सप्तदश सप्त–सहस्राणि शतानि च ॥ चतुर्दशानि सप्तैव । योजनानां लवाष्टकं ॥ ५८ ॥ मेरुयुक्तभद्रसाला–यामात्प्रागुपदर्शितात् ॥ गजदंतद्वयहीना–च्छेषं जीवा कुरुद्वये ॥ ५९ ॥ लक्षाश्चतस्रः षट्त्रिंशत् । सहस्राणि शतानि च ॥ नवैव षोडशाढ्यानि । योजनानीति तन्मितिः ॥ ६० ॥ आयाममानयोः प्राच्य–प्रतीच्यगजदंतयोः ॥ योगे भवेद्धनुःपृष्ठं । कुरुद्वय इदं तु तत् ॥ ६१ ॥ लक्षाः षट्त्रिंशदेकोन–सप्ततिश्च सहस्रकाः ॥ शतत्रयं योजनानां । पंचत्रिंशत्समन्वितं ॥ ६२ ॥ धातकीखंडवद्दिहा–प्यग्रतो नीलवद्गिरेः ॥ यमकावुदक्कुरुषु । सहस्रं विस्तृतायतौ ॥ ६३ ॥ ततः परं ह्रदाः पंच । स्युर्दक्षिणोत्तरायताः ॥ सहस्रांश्चतुरो दीर्घा । द्वे सहस्रे च विस्तृताः ॥ ६४ ॥ नीलवतो यमकयो–स्ताभ्यामाद्यह्रदस्य च ॥ मिथो ह्रदानां क्षेत्रांत–सीम्नश्च पंचमह्रदात् ॥ ६५ ॥ सप्ताप्येतान्यंतराणि । तु-

तत्संकलना । स्युः सहस्राणि षोडश ॥ ४५ ॥ षसामंतनदीना तु । व्याससंकलना भवेत् ॥
सहस्राणि त्रीणि वन–मुखयोरुभयोस्त्वियं ॥ ४६ ॥ षट्सप्ततिस्पृक्त्रिशती । सहस्रास्त्र्यधि
२३ संमिताः ॥ द्वीपव्यासोऽष्ट लक्षाणि । सर्वसंकलने भवेत् ॥ ४७ ॥ अत्रापीष्टान्यविष्कंभ
–वर्जितद्वीपविस्तृतेः ॥ स्वस्वसंख्याविभक्ताया । लभ्यतेऽभीष्टविस्तृतिः ॥ ४८ ॥ भावना
धातकीखडवत्.

महाविदेहविष्कंभे । येष्टस्थानगोचरे ॥ शीताशीतोदान्यतर–व्यासहीनेऽर्द्धिते सति ॥
॥ ४९ ॥ विजयांतनदीवक्ष–स्कारांतिमवनायतिः ॥ ज्ञायते सा तत्र तत्र । स्थाने भाव्या स्व-
यं बुधैः ॥ ५० ॥ अथ देवकुरूणां यः । प्राच्यां सौमनसो गिरिः ॥ तथोत्तरकुरूणां यः । पूर्व-
स्यां माल्यवानिमौ ॥ ५१ ॥ त्रिचत्वारिंशत्सहस्रान् । लक्षा विंशतिमायतौ ॥ एकोनविंशां
द्विशतीं । योजनानामुभावपि ॥ ५२ ॥ देवोत्तरकुरुभ्यश्च । प्रतीच्यां यौ व्यवस्थितौ ॥ विद्यु-
त्प्रभगिरिगंध–मादनश्चायतावुभौ ॥ ५३ ॥ योजनानां षोडशैव । लक्षाः षड्विंशतिं तथा ॥
सहस्राणि शतमेकं । संपूर्णं षोडशोत्तरं ॥ ५४ ॥ इदं मानं पुष्करार्द्ध–प्राचीनार्द्धव्यपेक्षया ॥

हस्राणि योजनानां । एकोनविंशतिस्तथा ॥ सचतुर्नवतिः सप्त–शती क्रोशस्तथोपरि ॥३५॥ ।विष्कंभः प्रतिविजयं । प्रत्येकमर्द्धयोर्द्वयोः ॥ योजनानां द्वे सहस्रे । वक्षस्काराद्रिविस्तृतिः ॥ ॥ ३६ ॥ प्रत्येकमंतर्नद्यश्च । शतानि पंच निस्सृताः ॥ स्वरूपं सर्वमत्रान्य–धातकीखंडवद्भवेत् ॥ ३७ ॥ अष्टानां वनमुखानां । विस्तृतिः स्याल्लघीयसी ॥ एकोनविंशतिस्तथा–श्चत्वारो योजनांशकाः ॥ ३८ ॥ एकादश सहस्राणि । योजनानां शतानि षट् ॥ साष्टाशीतीनि चैतेषां । विस्तृतिः स्याद्गरीयसी ॥ ३९ ॥ नृपवर्षधरं गुर्वी । लघ्वी च सरिदंतिके ॥ तेषां चतुर्णां कालोद–बहिर्भागस्पृशां भवेत् ॥ ४० ॥

चतुर्णां तु नरनगा–सन्नानां विस्तृतिर्गुरुः ॥ शीताशीतोदांतिकेऽन्या । नीलवन्निषधांतिके ॥ ४१ ॥ पूर्वापरं भद्रसाल–वनायामः समन्वितः ॥ मेरुविष्कंभेण सह । गर्भभागात्मको भवेत् ॥ ४२ ॥ चत्वारिंशत्सहस्राणि । लक्षाश्चतस्र एव च ॥ योजनानां नवशती । निर्दिष्टा षोडशोत्तरा ॥ ४३ ॥ षोडशानां विजयानां । व्याससंकलना त्वियं ॥ तिस्रो लक्षा योजनानां । सहस्राणि च षोडश ॥ ४४ ॥ सप्तशत्यष्टोत्तराथ । वक्षस्कारमहीभृतां ॥ अष्टानां

क्मिपर्वतः ॥ २४ ॥ एतन्नवा रूप्यकूला । हैरण्यवतगामिनी ॥ रम्यकांतर्नरकांता । प्रयात्ये-
तत्समुन्नवा ॥ २५ ॥ ततोऽर्वाग् रम्यकक्षेत्रं । माल्यवद्वृत्त भूधरं ॥ केसरिह्रदवन्नील—वन्ना-
मा पर्वतस्ततः ॥ २६ ॥ प्रवर्त्तते विदेहांतः । शीतैतन्नगसंन्नवा ॥ नारीकांता रम्यकांतः । प्र-
सर्पत्येतदुन्नता ॥ २७ ॥

एषु क्षेत्रेषु पूर्वार्द्ध—नद्यो याः पूर्वसंमुखाः ॥ ता मानुषोत्तरं यांति । कालोदं पश्चिमा-
मुखाः ॥ २८ ॥ पश्चिमार्द्धात्तु कालोदं । प्रयांति पूर्वसंमुखाः ॥ पश्चिमान्निमुखास्तास्तु । प्र-
यांति मानुषोत्तरं ॥ २९ ॥ मध्ये क्षेत्रं विदेहाख्यं । नीलवन्निषधागयोः ॥ एकैकं मेरुणोपेतं
। न्नाति पूर्वापरार्द्धयोः ॥ ३० ॥ अष्टाचत्वारिंशदंशान् । लक्षाः षड्विंशतिं मुखे ॥ योजना-
न्येकषष्टिं स—हस्रान् साष्टशतं ततं ॥ ३१ ॥ २६६११०८ ५ ४८ तथा लक्षाश्चतुस्त्रिंश—योज-
नानां समन्विताः ॥ चतुर्विंशत्या सहस्रै—रष्टाविंशं शताष्टकं ॥ ३२ ॥ षोडशांशाश्च विस्ती-
र्णं । मध्ये तस्य च विस्तृतिः ॥ लक्षाण्यथैकचत्वारिं—शदष्टाशीतिरेव च ॥ ३३ ॥ सहस्रा-
णि सप्तचत्वा—रिंशा पंचशती तथा ॥ योजनानामंशशतं । षण्णवत्या समन्वितं ॥ ३४ ॥ स-

प्रोति मानुषोत्तरं ॥ १३ ॥ पश्चिमार्द्धगता सा तु । कालोदमुपसर्पति ॥ सर्वासां दिग्विनिमय
। एवं पूर्वापरार्द्धयोः ॥ १४ ॥ पूर्वार्द्धशीतोदा प्रत्य–ग्विदेहार्द्धविभेदिनी ॥ कालोदमन्यार्द्धस्था
तु । प्राप्नोति मानुषोत्तरं ॥ १५ ॥ एताश्चतस्रो विस्तीर्णा । द्वे शते ह्रदनिर्गमे ॥ चत्वार्युंडा
योजनानि । प्रांते दशगुणास्ततः ॥ १६ ॥ विस्तीर्णान्यायतान्यासां । कुंडानि च चतसृणां
॥ सविंशानि योजनानां । शतान्येकोनविंशतिं ॥ १७ ॥ एतत्कुंडांतर्गताश्च । द्वीपाः प्रोक्ता म-
हर्षिभिः ॥ षट्पंचाशे योजनानां । द्वे शते विस्तृतायताः ॥ १८ ॥ सर्वे कुंडगता द्वीपाः ।
क्रोशद्वयोच्छ्रिता इति ॥ तैर्जंबूद्वीपगैस्तुल्या । उच्छ्रयेण नगा इव ॥ १९ ॥
यथेदमर्द्धं व्याख्यातं । याम्य पूर्वापरार्द्धयोः ॥ तथा ज्ञेयमुदीच्यार्द्ध–मपि मानस्वरूपतः
॥ २० ॥ किंतूदीच्येषुकाराद्रेः । परतः पार्श्वयोर्द्वयोः ॥ स्यादेकैकमैरवत–क्षेत्रं भरतसन्निभं
॥ २१ ॥ पुंडरीकह्रदापेत–स्ततश्च शिखरी गिरिः ॥ तस्माद्रक्ता रक्तवती । स्वर्णकूला विनि-
र्ययुः ॥ २२ ॥ तत्रादिमे द्वे सरितौ । क्षेत्रमैरवतं गते ॥ जगाम हैरण्यवतं । स्वर्णकूला तु
वाहिनी ॥ २३ ॥ ततश्च हैरण्यवतं । विकटापातिनांकितं ॥ ततो महापुंडरीक–ह्रदवान् रु-

ऽंधापातिवैताढ्ये–नांचितं विस्तृतं मुखे ॥ ३ ॥

लक्षाणि षट् योजनानां । पंचषष्टिं सहस्रकान् ॥ द्वे शते सप्तसप्तत्या–धिके द्वादश चांशकान् ॥ ४ ॥ युग्मं ॥ अष्टौ लक्षाः सहस्राणि । षट्पंचाशच्छतत्रयं ॥ सप्तोत्तरं योजनानां । मध्येंशाश्चतुरस्ततं ॥ ५ ॥ सहस्रैः सप्तचत्वारिं–शताढ्या दश लक्षिकाः ॥ षट्त्रिंशं च योजनानां । शतमंशशतत्रयं ॥ ६ ॥ अष्टाद्यं विस्तीर्णमंते । स्वरूपमपरं पुनः ॥ जंबूद्वीपहरिवर्ष–वदिहापि विभाव्यतां ॥ ७ ॥ इतः परश्च निषधः । पर्वतः सर्वतः स्फुरन् ॥ ह्रदेनालंकृतो मूर्ध्नि । सद्भेन तिगिंछिना ॥ ८ ॥ सप्तषष्टिं सहस्राणि । साष्टषष्टिशतत्रयं ॥ योजनानां लवान् द्वात्रिं–शतं स्यादेष विस्तृतः ॥ ९ ॥ तिगिंछिस्तु योजनानां । सहस्राण्यष्ट विस्तृतः सहस्राणि षोडशैष । त्रवेदायामतः पुनः ॥ १० ॥

एतस्माद्धरिसलिला । शीतोदेति निरीयतुः ॥ दक्षिणस्यामुदीच्यां च । पर्वतोपर्यभून्नज्ञे ॥ ११ ॥ एकोनत्रिंशतं गत्वा । सहस्रान् षट् शतानि च ॥ योजनानां सचतुर–शीतीन् षोडश चांशकान् ॥ १२ ॥ पततः स्वस्वकुंडांत–र्हरिवर्षांतराध्वना ॥ पूर्वार्द्धाद्धरिसलिला । प्रा-

लक्षाण्यष्टायतो मौलो । महापद्मह्रदांकितः ॥ ९२ ॥ योजनानां सहस्राणि । षोडशाष्टौ शतानि च ॥ द्विचत्वारिंशदाढ्यानि । कलाश्चाष्टैव विस्तृतः ॥ ९३ ॥ महापद्मह्रदस्तत्रष्टौ । सहस्राण्यायतो भवेत् ॥ योजनानां सहस्राणि । चत्वारि चैव विस्तृतः ॥ ९४ ॥ दक्षिणस्यामुदीच्यां च । नद्यौ द्वे निर्गते इतः ॥ रोहिता हरिकांता च । ते भङ्क्त्वे पर्वतोपरि ॥ ९५ ॥ चतुःषष्टिं शतान्येक–विंशान्यंशचतुष्टयं ॥ अतीत्य स्वस्वकुंडांत–र्निपत्य निर्गते ततः ॥ ९६ ॥

पूर्वार्द्धाद् हैमवतगा । नराद्रिं याति रोहिता ॥ अपरार्द्धात्तु सा याति । कालोदनामवारिधिं ॥ ९७ ॥ हारिकांता पुनर्याति । कालोदं हरिवर्षगा ॥ पूर्वार्द्धादपरार्द्धात्तु । याति सा मानुषोत्तरं ॥ ९८ ॥ नद्योर्हरिसलिलयो–र्हरिकांताख्ययोरपि ॥ तयोर्नारीकांतयोश्च । तथैव नरकांतयोः ॥ ९९ ॥ इत्यष्टानामापगानां । विष्कंभो ह्रदनिर्गमे ॥ भवेच्छतं योजनाना–मुंडत्वं योजनद्वयं ॥ १०० ॥ विष्कंभायामतः कुंभा–न्येतासां जगदुर्जिनाः ॥ षष्ट्याढ्यानि योजनानां । शतानीह नव श्रुते ॥ १ ॥ अष्टाविंशं शतं द्वीपा–श्चैतासां विस्तृतायताः ॥ जिह्विकाविस्तृतोच्छ्रिता–श्चासां मूलप्रवाहवत् ॥ २ ॥ शैलात्ततः परं क्षेत्रं । हरिवर्षं विराजते ॥ त-

यामतो मूल—प्रवाहवच्च जिह्विका ॥ ७१ ॥ अस्याः कुडांतर्गतश्च । द्वीपो भवति यः स तु ॥
चतुःषष्टियोजनानि । विष्कंभायामतो मतः ॥ ७२ ॥ रूप्यकूले स्वर्णकूले । रोहिते रोहितां-
शिके ॥ अष्टाप्येतास्तुल्यरूपाः । स्वरूपपरिवारतः ॥ ७३ ॥ अथोत्तरं हिमवतः । क्षेत्रं हैमव-
तं स्थितं ॥ वृत्तवैताढ्येन शब्दा—पातिनालंकृतांतरं ॥ ७४ ॥ मुखे लक्षं योजनानां । षट्षष्टिं
च सहस्रकान् ॥ एकोनविंशा त्रिशतीं षट्पंचाशद्भवांस्ततं ॥ ७५ ॥ लक्षद्वयं योजनानां । स-
हस्राणि चतुर्दश ॥ एकपंचाशानि ततं । मध्येंशान् षष्टियुक् शतं ॥ ७६ ॥ अंते शतान् स-
चतुर—शीतीन् सप्तसहस्रकान् ॥ एकषष्टिं द्विलक्षीं च । द्वापंचाशद्भवांस्ततं ॥ ७७ ॥ जंबू-
द्वीपस्थायिवृत्त—वैताढ्यैः सदृशा यथा ॥ धातकीखंडस्थवृत्त—वैताढ्याः सर्वथा तथा ॥ ७८ ॥

अत्रापि वृत्ता वैताढ्याः । पूर्वोक्तैः सदृशाः समे ॥ शब्दापातिप्रभृतयः । प्रत्येतव्या म-
नस्विभिः ॥ ७९ ॥ द्वाभ्यां चतुर्भिरष्टाभि—र्योजनैरंतरं क्रमात् ॥ स्वापगाभ्यां शब्दगंधा
—पातिमेरुमहीभृतां ॥ ८० ॥ विकटापातिनोमाल्य—वतोस्तथांतरं क्रमात् ॥ स्वस्वक्षेत्राप-
गाभ्यां द्वे । योजने तच्चतुष्टयं ॥ ८१ ॥ अस्योत्तरस्यां च महा—हिमवान् वर्त्तते गिरिः ॥

॥ ७० ॥ विस्तीर्णे द्वे शते सार्द्धे । उच्छ्रिते पंचयोजनीं ॥ तत्र सिंधुः प्राच्यपुष्क-रार्द्धात्कालोदसंगति ॥ ७१ ॥ गंगा तु प्राप्य पूर्वस्यां । मानुषोत्तरभूधरं ॥ सुमतिर्दुष्टसंसर्गा-दिव तत्र विलीयते ॥ ७२ ॥ पश्चिमार्द्धात्पुनर्गंगा । याति कालोदवारिधौ ॥ सिंधुर्नरोत्तरनग-पादमूले विलीयते ॥ ७३ ॥ एवं नरोत्तरनगा-भिमुखाः सरितोऽखिलाः ॥ विलोयंत इह ततः । परं तासामभावतः ॥ ७४ ॥ गंगासिंधुप्रपाताख्ये । कुंडे विष्कंभतो मते ॥ चत्वारिंशत्समधिकं । योजनानां शतद्वयं ॥ ७५ ॥ तदंतर्वर्त्तिनौ द्वीपौ । प्रक्रमौ विस्तृतायतौ ॥ द्वात्रिंशद्योजनी मूल-प्रवाह इव जिह्विके ॥ ७६ ॥ गंगासिंधुरक्तवती-रक्तास्वेतन्निरूपणं ॥ षट्त्रिंशशतसंख्यासु । सर्वमप्यविशेषितं ॥ ७७ ॥

रोहितांशा योजनानि । पंचाशन्नदनिर्गमे ॥ विस्तीर्णैकयोजनं चो-च्छ्रितोदीच्यां नगोपरि ॥ ७८ ॥ एकादश योजनानां । शतान् पंचसमन्वितान् ॥ अंशान् द्वाविंशतिं गत्वा । कुंड प्राप्याथ पूर्ववत् ॥ ७९ ॥ क्षेत्र हैमवतं द्वेधा । स्वप्रवाहेण कुर्वती ॥ कालोदं याति पूर्वार्द्धे । परार्द्धे मानुषोत्तरं ॥ ८० ॥ अस्याः कुंडयोजनाना-मशीत्याढ्या चतुःशती ॥ विष्कम्भा-

एयेकचत्वारिं–शच्छतान्यं च विस्तृतं ॥ सैकोनाशीतीन्मुखेंश–शतं च सत्रिंनसतिः ॥ ६० ॥
त्रिपंचाशत्सहस्राणि । द्वादशा पंचशत्यपि ॥ शतं नवनवत्याढ्य–मंशाश्च मध्यविस्तृ-
तिः ॥ ६१ ॥ पंचषष्टिं सहस्राणि । योजनानां चतुःशतीं ॥ षट्चत्वारिंशां लवांश्च । त्रयोद-
शांतविस्तृतः ॥ ६२ ॥ मध्यभागेऽस्य वैताढ्यो । लक्षाण्यष्टौ स चायतः ॥ धातकीखंडवैता-
ढ्य–वच्चेष त्विह भाव्यतां ॥ ६३ ॥ अन्येऽपि दीर्घवैताढ्याः । स्युः सप्तषष्टिरीदृशाः ॥ भरतैर-
वतक्षेत्र–विदेहविजयोद्भवाः ॥ ६४ ॥ उत्तरार्द्धमध्यखंडे । गांगसैंधवकुंडयोः ॥ मध्ये वृषभ-
कूटोऽस्ति । जंबूद्वीपर्षभाद्रिवत् ॥ ६५ ॥ पर्यंतेऽस्य ततः शैलो । हिमवान्नाम वर्त्तते ॥ आ-
यामतोऽष्टौ लक्षाणि । विष्कंभतो भवेदियान् ॥ ६६ ॥ योजनानां द्विचत्वारिं–शच्छता दश-
सयुताः ॥ चतुश्चत्वारिंशदंशा–श्चतुरशीतिनिर्मिताः ॥ ६७ ॥ तस्योपरि पद्महृदः । प्राग्वत्प-
द्मालिमंडितः ॥ सहस्रांश्चतुरो दीर्घः । सहस्रद्वयविस्तृतः ॥ ६८ ॥ गंगासिंधुरोहितांशा–स्त-
तो नद्यो विनिर्ययुः ॥ प्राच्यां प्रतीच्यामुदीच्यां । क्रमात्तत्रादिमे उभे ॥ ६९ ॥
ह्रदोद्गमे योजनानि । विस्तीर्णे पंचविंशतिं ॥ उद्विद्धे च योजनार्द्धं । समुद्रसंगमे पुनः

योजनानामतीत्यास्ति । कुंडमेकै-
वंतात् ॥ ४९ ॥ सहस्रान्नवनवतिं । प्रत्येकं लक्षकतयं ॥ विस्तीर्णे विस्तीर्णांतरे । जाय-
कमद्भुतं ॥ ५० ॥ अधस्ते विस्तृतेस्तोक-मुपर्युपर्यनुक्रमात् ॥ विस्तीर्णे योजनान्यथ ॥ नद्विदे दशशुद्धांनो
माने शरावत् ॥ ५१ ॥ भुवस्तले द्वे सहस्रे । क्षेत्राणि पूर्ववत् ॥५३॥
—वीचीनिचयचारुणी ॥ ५२ ॥ षट् पट् वर्षधराः सप्त—सप्त ॥ ५४ ॥
द्वयोरप्यर्द्धयोरत्रै—कैकमंदरनिश्रया ॥ भवंत्यत्र वर्षधरा । उच्चत्वेन तु तैः समाः ॥ ५५ ॥
धातकीखंडस्थवर्ष—धरद्विगुणविस्तृताः ॥ विष्कम्भसंकलनया । नगरुद्धं भवेदियत् ॥ ५५ ॥
एवमत्रेषुकाराभ्यां । सह वर्षमहीभृतां ॥ सहस्राणि चतुरशी—त्यधिकानि शतानि षट्
तिस्रो लक्षा योजनानां । पंचपंचाशदेव च ॥ द्वादश द्विशतक्षुसे । कल्प्यंते प्राग्वद्-
॥ ५६ ॥ आद्यमध्यांत्यपरिधौ । प्राग्वदेतेन वर्जिते ॥ द्वादशद्विशतांशास्ते । ये-
शकाः ॥ ५७ ॥ वर्षवर्षधरभागकल्पना त्वत्र धातकीखंडवद् ज्ञेया. ॥ ५८ ॥ तत्र याम्येषुकार-
ऽत्रांशा योजनोपरि ॥ क्षेत्राणामविधदिश्यादि—रंतश्च नृगिरेर्दिशि ॥ ५९ ॥ सहस्रा-
स्यो—भयतोऽप्यर्द्धयोर्द्वयोः ॥ एकैकमस्ति भरतं । स्वस्वस्वर्णगिरेर्दिशि

घवः स्युर्जघन्येन । न्यूना इतो भवंति न ॥ ३४ ॥ यद्येकः केवली तेभ्यः । सिध्ध्येत्साधुर्दिवं व्रजेत् ॥ तदावश्यं भवेदन्यः । केवली प्रव्रजेत्परः ॥ ३५ ॥

चक्रिशार्ङ्गिशीरिणां च । शतं पंचाशताधिकं ॥ उत्कर्षतो जघन्येन । ते भवंतीह विंशतिः ॥ ३६ ॥ तथोक्तं प्रवचनसारोद्धारे—उक्कोसेणं चक्कीसयं । दिवड्ढं च कम्मभूमिसु ॥ वीसं जहन्नभावे । केसवसंखावि एमेव ॥ ३७ ॥ जंबूद्वीपप्रज्ञप्त्या अप्ययमेवाभिप्रायः, श्रीसमवायांगे तु—धायईसंडेणं दीवे अडसट्ठिं चक्किविजयाय अडसट्ठिं रायहाणीउ, तह णं उक्कोसपए अडसट्ठिं अरहंता समुप्पज्जिंसु वा, एवं चक्कवट्टी समुप्पज्जिंसु वा, एवं बलदेवा वासुदेवा समु० पुक्खरदीवड्ढेणं अडसट्ठि विजया, एवं अरिहंता समु०, जाव वासुदेवा, इत्युक्तमिति ज्ञेयं. स्यान्निधीनां पंचदश-शती त्रिंशात्र सत्तया ॥ जघन्यतश्चक्रिभोग्यं । तेषां शतमशीतियुक् ॥ ३९ ॥ उत्कर्षतश्चक्रिभोग्य—निधीनां पुनरेकदा ॥ पंचशताधिकानीह । स्युः शतानि त्रयोदश ॥ ४० ॥ उत्कर्षतोऽत्र रत्नानां । स्युः शतान्येकविंशतिः ॥ जघन्यतः पुनस्तेषां । द्विशत्यशीतिसंयुता ॥ ४१ ॥

पंचाढ्यैकाकरत्नानां । चत्वारिंशं शतं भवेत् ॥ जघन्येनोत्कर्षतश्च । सपंचाशं सहस्रकं ॥ ४२ ॥ शतं सप्तत्या समेतं । चक्रिजेतव्यभूमयः ॥ भरताद्या दशक्षेत्री । विजयाः षष्टियुक् शतं ॥ ४३ ॥ आभियोगिकविद्याभृ–च्छ्रेणीनां सर्वसंख्यया ॥ साशीतीनि षट् शतानि । विद्याभृतां पुराणि च ॥ ४४ ॥ अष्टादश सहस्राणि । शतानि सप्त चोपरि ॥ अयोध्यादिराजधान्यः । शतं सप्ततिसंयुतं ॥ ४५ ॥ द्वे पंक्ती इह चंद्राणां । द्वे च पंक्ती विवस्वतां ॥ एकांतरिता एवं । चतस्र इह पंक्तयः ॥ ४६ ॥ प्रतिपंक्ति च षट्षष्टि–संख्याकाः शशिभास्कराः ॥ सूचीश्रेण्या स्थिता जंबू–द्वीपेंदुरविभिः समं ॥ ४७ ॥ मृगयंत्य इवाशेष–वंचकं कालतस्करं ॥ एवं पंक्तयश्चतस्रोऽपि । पर्यटंति दिवानिशं ॥ द्वात्रिंशं शतमर्काश्च । शोभंतेऽदभ्रतेजसः ॥ ४८ ॥ द्वात्रिंश शतमित्येवं । नरक्षेत्रे हिमांशवः ॥ प्रतिपंक्ति च षट्षष्टिः । षट्षष्टिः ॥ ४९ ॥ नक्षत्राणां पंक्तयश्च षट्पंचाशद्भवेदिह ॥ प्रतिपंक्ति च षट्षष्टिः । पंक्त्या । चरंत्यमूनि च ॥ ५० ॥ जंबूद्वीपस्थतत्तद्भैः । पंक्त्या चरंत्यमून्यपि ॥ जंबूद्वीपग्रहैः पंक्त्या । चरंत्येवं ग्रहा अपि ॥ ५१ ॥ ग्रहाणां पंक्तयश्चात्र । षट्सप्तत्यधिकं शतं ॥ प्रतिपंक्ति च षट्षस्युरुडून्यपि ॥

ष्टिः । षटषष्टिः स्युर्ग्रहा अपि ॥ ५२ ॥ एवं च—ज्ञानां शतानि षट्त्रिंशत् । षसप्तत्यधिकान्यथ ॥ एकादशग्रहसहस्राः । शताः षोडशाश्च षट् ॥ ५३ ॥ स्युस्तारा: कोटिकोट्योऽत्रा—ष्टाशीत्या लक्षकैर्मिताः ॥ सहस्रैरपि चत्वारिं—शता शतैश्च सप्ततिभिः ॥ ५४ ॥

अथात्र यानि चैत्यानि । शाश्वतान्यथ तेषु याः ॥ अर्हतां प्रतिमा वंदे । ताः संख्याय श्रुतोदिताः ॥ ५५ ॥ शतास्त्रयोदशैकोन—पंचाशा ये पुरोदिताः ॥ गिरीणां तेषु ये पंच । मेरवः प्राग्निरूपिताः ॥ ५६ ॥ मेरौ मेरौ काननेषु । चतुर्षु दिकूचतुष्टये ॥ चैत्यमेकैकमेकं च । मूर्ध्नि सप्तदशेति च ॥५७॥ प्रतिमाः प्रतिचैत्यं च । विंशं शतमिहोदिताः ॥ त्रिद्वारेषु हि चैत्येषु । ज्ञवंतीयत्य एव ताः ॥५८॥ प्रतिद्वारंशा शाश्वतेषु । यच्चैत्येष्वखिलेष्वपि ॥ स्युः षट् षट् स्थानानि तथा । ह्येकः स्यान्मुखमंडपः ॥ ५९ ॥ ततो रंगमंडपः स्या—त्पीठं मणिमयं ततः ॥ स्तूप स्तदुपरि चतुः—प्रतिमालंकृतोऽन्वितः ॥ ६० ॥ ततोऽशोकतरोः पीठं । पीठं केतोस्ततः परं ॥ ततोऽप्यग्रे ज्ञवेद्वापी । स्ववापीवामलोदका ॥ ६१ ॥ एवं त्रयाणां द्वाराणां । प्रतिमा द्वादशाज्ञवन् ॥ अष्टोत्तरं शतं गर्भ—गृहे विंशं शतं ततः ॥ ६२ ॥ चतुर्द्वाराणां च तेषा—म-

चाष्टारेषु षोडश ॥ गजालये साष्टशतं । चतुर्विंशं शतं ततः ॥ ६३ ॥

नंदीश्वरे द्विपंचाश-त्कुंडले रुचकेऽपि च ॥ चत्वारि चत्वारि षष्टि-रित्येवं सर्वसंख्यया ॥ ६४ ॥ चतुर्द्वाराणि चैत्यानि । शेषाणि तु जगत्त्रये ॥ त्रिद्वाराण्येव चैत्यानि । विज्ञेयान्यखिलान्यपि ॥ ॥ ६५ ॥ ज्योतिष्कभवनाधीश-व्यंतरावसथेषु च ॥ सभार्चाभिस्सहैषु स्यात्साशीतिप्रतिमाशतं ॥ ६६ ॥ तत्रैव—

उपपाताभिषेकाख्ये । अलंकारसभापि च ॥ व्यवसायसुधर्माख्ये । भांति पंचाप्यमूः सभाः ॥ ६७ ॥ द्वारैस्त्रिभिस्त्रिभिर्द्वारे-द्वारेऽर्चाभिश्चतसृभिः ॥ भाति स्तूपः प्रतिसभं । द्वादश द्वादशेति ताः ॥ ६८ ॥ षष्टिः पंचानां सभाना-मिति प्रतिसुरालयं ॥ प्राग्वद्विंशं शतं चैत्ये । इत्यशीतियुतं शतं ॥ ६९ ॥ एवमाद्वादशस्वर्गं । साशीतिप्रतिमाशतं ॥ ग्रैवेयकादिषु शतं । विंशं चानुत्तरावधि ॥ ७० ॥ अथ प्रकृतं—पंचानामिति मेरूणां । पंचाशीतिर्जिनालयाः ॥ जिनार्चानां सहस्राणि । दशोपरि शतद्वयं ॥ ७१ ॥ शेषेषु सर्वगिरिषु । स्यादेकैको जिनालयः ॥ सहस्रं ते चतुश्चत्वा-रिंशैस्त्रिभिः शतैर्युतं ॥ ७२ ॥ सहस्रैरेकषष्ट्याढ्यं । लक्षमेकं

 श्री आगमोदयसमिति 







“ दयागुणः सर्वगुणप्रधानम् ”

वीर संवत. २४४४.